॥ श्रीः ॥


हरिदास-संस्कृत-ग्रन्थमाला

१३९




श्रीमद्भट्टिविरचित

# भट्टिकाव्यम्

'चन्द्रकला' 'विद्योतिनी' संस्कृत-हिन्दी-

व्याख्याद्वयोपेतम्

( द्वादशादि–द्वाविंशतिसर्गपर्यन्तम् )


व्याख्याता

साहित्यसुधाकर-काव्यतीर्थ—

पण्डित-श्रीशेषराजशर्मा शास्त्री





चौखम्बा-संस्कृत-पुस्तकालय, बनारस-१

वि० २००९ ] [ सन् १९५२

॥ श्रीः ॥

# उपोद्घातः

वैयाकरणशिरोमणेर्महाकवेर्भट्टेर्विषयेऽस्माभि स्वकीयचन्द्रकलाऽभिख्यव्याख्या-विलसितस्य भट्टिकाव्यस्य सर्गषट्कसमन्विते प्रथमभागे कतिपयानि वाक्यानि प्रकाशितानि। साम्प्रत च तस्यैव महाकाव्यस्यैकादशसर्गोपेते तृतीयभागे तस्य महाकवेस्तत्काव्यस्य च विषये प्रबन्धावसाननिबन्धन किमपि वक्तव्य तत्रभवतां महानुभावाना पुरत समुपस्थाप्यते।

रावणवधाऽपरपर्यायस्य लोकसस्तुतस्य प्रस्तुतस्य भट्टिकाव्यस्य कर्तुर्नाम्नि वर्तते महती विप्रतिपत्ति· कृतिजनेषु। शब्दकमलविकासनरविर्महाकविरयं "भट्टिर्भ-ट्टो भट्टपादो भट्टस्वामी स्वामिभट्टो भर्तृहरिश्चे"ति बहुभिर्नामधेयैर्विपश्चिद्भिर्व्यवहि-यते। तत्र पुरातनेषु कोविदेषु विद्वल्लामेन जयमङ्गलेन स्वकीयायां जयमङ्गलाऽभि-ख्याया व्याख्याया तथा महोपाध्यायेन कोलाऽचलमल्लिनाथसूरिणा तदीयायां सर्वपथीनाऽऽख्याया टीकायामस्य महाकवेर्भट्टिरिति नामोदलेखि। अर्वाचीनेषु विचक्षणेषु विद्याविनोदनारायणभट्टो निजनिर्मिताया भट्टिबोधिनीटीकायां, विद्वच्च-क्रवर्ती कन्दर्पचक्रवर्ती वैजयन्त्यभिधानायामात्मटीकाया, सुधीमतल्लिका भरतम-ल्लिको मुग्धबोधिनीटीकाया, पञ्चपाण्डुणादिवृत्तिकार· श्वेतवनवासी चैते सर्वेऽपि महानुभावा महाकवेरस्य "भर्तृहरि"रिति नामोररीचक्रुः।

पूर्वोक्तेष्वभिधानेपु "भट्टिर्भर्तृहरि"श्चेति द्वयोर्नामधेययोरेव विदुषां विसवादः। तदतिरिक्तनामान्तराणा प्रसिद्धिविरहात्तत्सत्ताया तदभावे वा नो काऽपि नो हानि। पर भट्टेर्भर्तृहरेश्चैकभूयत्वे महती विचिकित्सा। तत्र च भर्तृहरिरिति नाम्ना द्वौ विपश्चितौ परां ख्यातिमुपगतौ। तत्रैको भूपालकुलचूडामणेर्विक्रमादित्यस्य भ्राता, यो भर्तृहरिशतकत्रयकर्तृत्वेन लोकोत्तरा विश्रुतिं यातो यश्च सहस्रद्वयात्पूर्वं संभूतः। अमुष्य प्रस्तुतमहाकविना भट्टिना सम विद्यते सुतरा भेद इत्यथस्तनेन वाक्येन स्फुटीभविष्यति। अपरो भर्तृहरिः सुरभारतीपरिचरणपरेषु सूरिनिकरेषु लोकोत्तर-

वैयाकरणधुरन्धरत्वेन विख्यातः। येन महाभाष्यस्य महाभाष्यदीपिकाऽऽख्या व्याख्या, पाणिनीयसूत्राणां भागवृत्तिरिति वृत्तिर्भाष्यतात्पर्यमवलम्ब्य वाक्यपदीयाऽभिधानो भुवनविश्रुतो व्याकरणदर्शनप्रबन्धश्च व्यरचि। यश्चाऽनुपमविक्रमस्य विक्रमभूपालस्य सप्तोत्तरात्सप्तमशतकात्पूर्वं सम्भूत इति प्रत्नतत्त्वविदां कोविदानां परामर्शः। अयमेव भर्तृहरिर्भट्टयपरपर्यायो भट्टिकाव्यस्य कर्ता चेति भरतमल्लिकादीनां धीमतामभिमतम्। "नामैकदेशग्रहणेन नामग्रहणम्" इति नयेन भर्तृहरिपदस्यैकदेशो भर्तृपदं प्राकृतभाषायां भट्टिरूपे परिणमतीत्याकारकं स्वकीयराद्धान्तप्रकाशकं हेतुं च पण्डितमण्डलाऽऽखण्डलायमानास्ते न्यदर्शयन्। परं भट्टेर्भर्तृहरेश्चेत्युभयोरपि विदुषोर्वैयाकरणप्रकाण्डत्वेनाऽकाण्ड एव तदेकभूयत्वे विपश्चितां भ्रमस्योद्गमः समजनीति वयं ब्रूमः।

भट्टिकाव्यस्य द्वाविंशसर्गस्थस्य निम्नलिखितस्य—

'काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम्।
कीर्तिरतो भवतान्नृपस्य तस्य प्रेमकरः क्षितिपो यतः प्रजानाम्॥'

चरमस्याऽस्य श्लोकस्योल्लेखात्स्फुटतरमेतत्प्रतीयते यदयं महाकविर्गुर्जरस्थवलभीभूपालस्य श्रीधरसेनस्याश्रित आसीदिति। वलभीपुर्यां श्रीधरसेनाऽभिधानाश्चत्वारो नरेन्द्रा अभूवन्। तत्र च द्वितीयस्य श्रीधरसेनस्याऽयं महाकविरनुजीवीति वृत्तं तस्माद्भूपालाद्भट्टिकवये प्रतिपादितस्य भूमिदानस्य शिलालेखात्स्फुटतरमवसीयते। तस्य च भूदानस्य कालो विक्रमस्य सप्तषट्युत्तरा षट्शतीति ज्ञायते। वाक्यपदीयकर्ता भर्तृहरिश्चैतस्य पश्चाद्वर्ती बभूव। अत एव "आङो यमहनः (१।३।२८)" इति सूत्रस्य व्याख्याप्रसङ्गे वैयाकरणकेसरिणा भर्तृहरिणा "आहध्वं मा रघूत्तमम्" इति महाकवेर्भट्टेः प्रयोगः "प्रमाद एवाऽयम्" इति भागवृत्तौ खण्डितः। भर्तृहरिर्भट्टिरभविष्यच्चेत्तर्हि स्वोक्तेरेव स्वयं खण्डनं कथमकरिष्यत्। एतेन दृढतरप्रमाणेन भट्टिर्भर्तृहरेः पूर्ववर्ती तद्भिन्नश्चेति निश्चप्रचमधिगम्यते। केचित्तु मन्दसूर (मैसूर) उपलब्धस्य शिलालेखस्य रचयिता वत्सभट्टिरेव भट्टिकाव्यस्य कर्ता भट्टिरिति मन्वते, परं तस्य शिलालेखस्य च्युतसंस्कृतिदोषाक्रान्तत्वान्मतमेतदयुक्तमिति प्रतिभाति। साम्प्रतमस्य महाकाव्यस्य विषये किमपि वैशिष्ट्यं समुद्भास्यते। प्रबन्धोऽयं द्वाविंशतिसर्गनिबद्धः। अत्रत्यपद्यसंख्या च चतुर्विंशत्य-

धिका षोडशशती । छन्दांसि चाऽत्र प्रायेणाऽनुष्टुभः । तदनन्तरमुपजात्यार्यागीतिपुष्पिताग्राप्रहर्षिणीमालिन्यौपच्छन्दसिकमन्दाक्रान्ताशार्दूलविक्रीडितस्रग्धरादीनि वर्तन्ते ।

अत्र प्रकीर्णकाण्डोऽधिकारकाण्ड प्रसन्नकाण्डस्तिङन्तकाण्डश्चेति काण्डचतुष्टय वर्तते ।

तत्र सर्गपञ्चकाऽन्विते प्रकीर्णकाण्डे व्यामिश्ररूपाणि सामान्यविशेषकार्यप्रदर्शनपराणि तिङन्तरूपाणि प्रदर्शितानि ।

सर्गचतुष्टययुतेऽधिकारकाण्डे पाणिनीयाऽष्टकस्याऽधिकारसूत्राऽनुसारेण बहुप्रकाराणि लक्ष्यरूपाणि लोचनगोचरीकृतानि ।

सर्गचतुष्टयाऽलङ्कृते प्रसन्नकाण्डे समीचीनया विधया गुणाऽलङ्कारप्रदर्शन विहितम् ।

एव सर्गनवकविलसिते तिङन्तकाण्डे चतुर्थे लडादीनां नवानामपि लकाराणां विशिष्टरूपाणि प्रकृष्टमतिवैभवेन निदर्शितानि ।

अस्य महाकाव्यस्य द्वादश टीका श्रूयन्ते । तत्र जयमङ्गलीया जयमङ्गलाऽख्या मल्लिनाथकृता सर्वपथीनाऽभिख्या च व्याख्या प्राचीना सुप्रसिद्धा च । एव च व्याकरणलक्षणप्रतिपादितलक्ष्यरूपप्रदर्शनपरेऽप्यत्र ग्रन्थे रामचरितकथाभागस्याऽपि सर्वथाऽनवद्यरूपेण प्रकाशन प्रतिपादितम् ।

श्लेषाद्यलङ्कारप्रदर्शनपरे पद्यादौ कुत्रचिन्निरर्थकदोषाऽऽपादके पदे सत्यपि यथा दोषाऽङ्कुशरूपेण दोषाऽसद्भावस्तथैवाऽत्राऽपि कुत्रचिच्छ्रुतिकट्वादिदोषाणामाभासमानत्वेऽपि महाकवेर्लक्ष्यरूपनिदर्शनेऽप्यभिनिविष्टमानसत्वाद्दोषस्य प्रमोष सम्भाव्यत इति विदाङ्कुर्वन्तु गुणगणग्रहणपरा दूषणवाचयमा विचक्षणा इति सर्वं समञ्जसम् । अतोऽस्य महाकाव्यस्य रसास्वादने सख्यायां च व्याकरणश्रमरहितानां सख्यावतां नाऽधिकार इति प्रबन्धस्योपान्त्यरूपेण निबद्धाभ्यां द्वाभ्यां पद्याभ्यां निःशङ्कमवसीयते । ते च पद्ये यथा—

'दीपतुल्य प्रबन्धोऽय शब्दलक्षणचक्षुषाम् ।
हस्ताऽमर्ष इवान्धाना भवेद्व्याकरणादृते ॥

व्याख्यागम्यमिद काव्यमुत्सवः सुधियामलम् ।
हता दुर्मेधसश्चाऽस्मिन्विद्वत्प्रियतया मया ॥' इति ।

मर्यादापुरुषोत्तमस्याऽनुपमशमदमाऽऽदिविलसितस्य रघुकुलचन्द्रस्य भगवतः श्रीरामचन्द्रस्य जन्मत. प्रभृति रावणवध यावदनुष्ठीयमानस्य लोकोत्तरचरितस्याऽत्र निबध्यमानत्वादस्य महाकाव्यस्याऽऽदौ "रावणवधम्" इत्येवाऽभिधान स्यादिति सभाव्यते पश्चाद्भिट्टल्लोकललामस्य महाकवेरसाधारणप्रसिद्धेस्तस्यैव नाम्ना "भट्टि-काव्यम्" इत्यस्या एवाऽभिख्याया' साहित्यजगति परा ख्यातिः सञ्जातेत्यवगम्यते। भवति चाऽत्राऽपरमपि निदर्शन महाकवेर्माघस्य कृते शिशुपालवध माघकाव्यं चेति नामद्वयेन व्यपदेश. । अत्र महाकाव्ये यत्र तत्राऽप्यनल्पकविकल्पना समुपलभ्यत इति जल्पनमिह कृतश्रमाणा साहित्यरसाऽनुभूतिविदग्धमानसाना महानुभावानां पुरत' पौनरुक्त्य इवाऽनवीकृतदोषाऽऽविर्भाव इति स्फुटतर भवति। तत्राऽपि प्रसन्नकाण्डाऽभिधाने तृतीये प्रकरणे भामहप्रतिपादितसरण्या गुणाऽऽलङ्काराणामु-पनिबन्धनेन महाकविना कृतिना भट्टिना कमनीयकल्पनाकौशलविलास' प्रकाश-तामानीत ।

काश्मीरीयमहाकविना भट्टभौमकेन स्वप्रणीते रावणाऽर्जुनीयाख्ये महाकाव्ये तथा जैनाचार्येण हेमचन्द्रेण द्व्याश्रयमहाकाव्ये महाकवेर्भट्टेरनुकरण व्यधायि । एव च विद्वद्वरहलायुधेन स्वनिर्मिते कविरहस्ये तथा वासुदेवकविना वासुदेव-विजये काव्ये भट्टिकाव्यमन्वकारि। पर हलायुधवासुदेवाभ्यां तिङन्तभाग एव प्रायेणाऽऽत्मकौशल प्रदर्शितम् । इत्थ च सस्कृतसाहित्यससारे किमपि काव्यान्तरं भट्टिकाव्यकोटिं नाऽऽटीकत इत्ययमर्थं काव्याऽपाराऽकूपारपारीणानां विलक्षणधी-विभवानां विचक्षणानामतिरोहित. ।

वैयाकरणप्रवरेण भट्टिना शरद्वर्णनप्रसङ्गे स्वस्य लोकाऽतिशायिनी कवित्वपरि-पूर्णा शेमुषी प्रदर्शिता । तत्रापि—

"न तज्जल, यन्न सुचारुपङ्कज, न पङ्कज तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज य कल, न गुञ्जित तन्न जहार यन्मन ॥"

पद्यस्यैतस्येक्षणेन श्रवणेन वा कस्य सहृदयस्य हर्षप्रकर्षपरवशत्वान्मानसता-

मरसं सविकास न स्यात्। अत एव बहुभिरालङ्कारिकैः सूरिवरै' पूर्वोक्तः श्लोक एकावल्युदाहरणत्वेन स्वस्वग्रन्थेषु सग्रथित'।

अमुना महाकविना छद्मना वर्णिवेशधारिणो राक्षसराजस्य रावणस्याऽनितरसाधारण यादृशमालेख्य लिखित तेन तस्याऽतिविलक्षण कविकर्मनिर्वहणवैचक्षण्य प्रतीयते। अधस्तने पद्ये कविधुरीणेन कीदृशेनाऽसाधारणकौशलेन सहृदयहृदयावर्जक चक्रवालयमकं प्रदर्शितम्—

"अवसित हसित प्रसित मुदा विलसित हसित स्मरभासितम्।
न समदा प्रमदा हतसमदा॰ पुरहित विहित न समीहितम्॥" इति।

महाकविना त्रयोदशे सर्गे भाषावैचित्र्यस्याऽपि चित्र श्लाघनीयकल्पनया प्रदर्शितम्। सुरभारतीसाहित्ये तादृशभाषावैचित्र्ये भाषाश्लेषाऽभिधानोऽलङ्कारो भवति। तत्र च तेन प्राकृतभाषायामपि स्वस्याऽसामान्य विद्वन्निवहमान्य पाण्डित्य ख्यापितम्।

अस्य महाकाव्यस्य बहूनि वैलक्षण्योपेतानि वैशिष्ट्यानि विद्यन्ते, पर तेषां विस्तरवर्णने समुचिताऽवकाशाऽभावात्साम्प्रत परिमितेनैवैतेन दिग्दर्शनेन विरम्यते।

धर्माऽऽग्रहग्रहिलताविवशेन येन राज्यं तथा स्वपितरौ च सम प्रमुक्ता॰।
लोकाऽद्वितीयरघुवशनरेन्द्रचन्द्र श्रीरामचन्द्रमनिश प्रणमामि भक्त्या॥ १॥
येषां कृपाऽतिशयजन्यकृतिप्रयुक्तो मन्दो जनोऽयमधुनाऽस्ति मनाक्प्रबुद्ध'।
तत्तादृशोपकृतिसत्कृतिभारभुग्नस्ततातादिकान्गुरुजनान्प्रणमामि तास्तान्॥ २॥
धीमन्दता–प्रसितताविरह–त्वराश्च स्युर्मे कृतौ विविधदूषणबीजरूपाः।
क्षाम्यन्तु सद्गुणगणग्रहणप्रवीणा आर्या निवेदयति भूसुरशेषराजः॥ ३॥

पाशुपतक्षेत्रम्
( नक्साल–नेपाल॰ )
सवत् २००९ मिथुनसक्रान्ति'

विद्वदाश्रव
शेषराजशर्मा

## नायकादिपरिचयः ।

अत्र रघुकुलचन्द्रः श्रीरामचन्द्रो धीरोदात्तो नायकः, नायिका च स्वकीया मुग्धा सतीशिरोमणि सीता । धीरोद्धतः पापकारी परदारव्यसनी दशाननः प्रतिनायकः । विजेतव्या रावणादय आलम्बनविभावाः ।

विजेतव्यादीना रावणादीना चेष्टाद्या उद्दीपनविभावा, सहायाऽन्वेषणादयोऽनुभावा, धृतिमतिगर्वस्मृतितर्करोमाञ्चा सञ्चारिभावा । उत्साहः स्थायिभावः ।

वीररसोऽङ्गी । रसान्तराण्यङ्गानि । रीतिः प्रायेण वैदर्भी । कुत्रचित्स्थलविशेषेषु गौड्यादयोऽपि रीतयः ।

गुणः प्रायेण प्रसादः । कुत्रचिदोजो माधुर्यं च ।

# संस्कृतकथासारः

## अथ द्वादशः सर्गः ।

ततोऽनुष्ठितदेवपूजनं विभीषणं तन्मातोवाच । "हे पुत्र ! त्वं सुराऽऽनन्दप्रदः सन् रावणकृतदुर्नयस्य प्रतीकारं कुरुष्व यावत्प्रधने रामतो रावणस्य हननं न भवेत् तावदेव तादृग्व्यतिकरपरिहरणाऽर्थं यत्नमाचर । जनस्थानवासिनो रक्षोजनाः साकल्येन हता, लङ्कापुरी च जितभटोत्खातद्रुमा विहिता सभाभवनानि च दग्धानि, एतादृशे सङ्कटसमये रावणत्राणार्थं यतस्वे"ति ।

इत्थं पूर्वमेव स्वविधित्सितकृत्ये मातुरनुज्ञां समवाप्य विभीषणस्तत्सम्पादनाऽर्थं रावणनिकेतनं जगाम । दौवारिकैः सबहुमानं राक्षसराजाऽन्तिकमानीतो विभीषणोऽनुपमविक्रमसमन्वितं भीषणसंहननं रावणं ददर्श प्रणामोत्तरं तत्सिंहासनसविधे निशाचरैः समुपस्थापितमासनमध्यतिष्ठत् ।

ततो लङ्काऽधिराजो रावणः प्रकृतकृत्यनिर्धारणाऽर्थं सभास्थितान्निशाचरान् प्रक्रमे तत्प्रशंसनक्रमपुरःसरं बभाषे—"हे निशाचराः ! खरवालिप्रभृतयो वीरा व्यापादिताः, सपत्नाऽऽक्रमणशङ्कारहिता लङ्का दग्धा, सम्भृत्योऽक्षकुमारो निषूदितो विपक्षसैन्ये च सागरमुत्तितीर्षौ सत्यस्माकं यत्कार्यं तद्ब्रूते"ति अनन्तरमसमानाभिमानयुक्ता प्रहस्तप्रभृतयो वीरम्मन्याः सचिवाः, भुजाद्यङ्गानि कार्मुकादीनि शस्त्राऽस्त्राणि च परामृश्य प्रोचुः—"हे महाराज ! आखण्डलमानखण्डनपटुर्भवान् स्वभक्ष्यनराऽभियोगं किं गुरुत्वं नयते ? आज्ञया वयं सूर्यचन्द्रनिग्रहमपि करवाम, अस्माकं प्रातराशेऽप्यपर्याप्तेभ्यः सराघवेभ्यो वानरेभ्यः किं नाम भयम् ?" । इति । अथ विभीषणो भाषणमारभत । हे प्रहस्तप्रभृतयो राक्षसाः ! राज्ञो युद्धाऽधिकृतैर्भवद्भिः स्वयोग्यतासदृशमेवाऽभिहितं, परं कार्यविचारे प्रज्ञाऽधिकृता शौर्यं तु नाऽधिकृतम्" । इत्थं विभीषणेन नीतिविरहितं शौर्योद्योतनविलसितं प्रहस्तयुक्तिजालं स्वयुक्तिबलेन विध्वस्तं प्रकाशितश्च राजनीत्युद्भासितो वचननिचयः । एवं रावणाऽनुजो रिपो रामस्योत्कर्षं रावणस्य चाऽपकर्षं युक्तिप्रकर्षेणाऽनेकशः प्रतिपाद्य वालिनिहन्त्रा सुग्रीवमित्रेण रामेण सन्धौ निखिलनिशाचरकुलस्य संरक्षणं सुहृदुपार्जनेनाऽऽत्मबलसंवर्द्धनं च बहुधा प्रत्यपादयत् । विभीषणसंभाषणं निशम्य मातामहः परमधीमान् माल्यवानपि तत्समर्थनप्रयत्नं चकाराऽनुपमानं मानवाऽधिपरामममहिमानं चाविश्चकार । इत्थं प्रयुक्तदावप्रकलापेन सलापेन प्रबुद्धः कुम्भकर्णोऽपि नीतिसरणिमेव प्रादर्शयत्, अभ्यधाद्रावणाऽर्थे प्राणत्यागेऽपि कातर्याऽभाववचनाऽवसाने भूयोऽपि स्वापमेवाऽङ्गीचकार । तदनु नयनिपुणो विचक्षणो विभीषणो नैकप्रकारमुत्पातसङ्घातमभिहितवान् रावणायोपादिशच्च भव्यकर्तव्यम् ।

नितान्तदृप्तः क्रूरचित्तो दशानन नयवचननिशमनाऽसहन सन्नुक्तिविच्छित्त्या स्वविक्रम प्राशसन्निर्भर्त्सनसमनन्तर स्वाऽनुज विभीषण पार्ष्णिप्रहारेणाऽवाजानाच्च।

विभीषणश्च सहिष्णुतया कोप निगृह्य सचिवचतुष्टयेन सममासनादुदस्थाद् द्वित्राणि वाक्यान्यभिधाय रावणाय रामचरणप्रणतिमत्या सभाभवनममुञ्चच्च। अथ स्थिरचित्तोरामो हनूमद्वचनेन सच्चरित्रं ज्ञात्वा विभीषण लङ्काऽऽधिपत्येऽभिषिक्तवान् सन्तोषितवाश्च ॥ इति द्वादशः सर्गः ॥



## अथ त्रयोदशः सर्गः।

अथ मन्दप्रभञ्जनमनोहरे वेलामूले शशधरकरविलसिता रजनी मदनोद्दीपकत्वेन राममूर्च्छां जनयित्वा याता। प्रार्थनामनाद्रियमाण रत्नाकर रामः प्रभातेऽभिचुक्रोध। कोपाकुले गृहीतकार्मुके तस्मिन् समहीधरा सहविषधरा च समस्ता धरा सशयमारूढा। एवमेव जलनिधिजल च सशुष्कम्। ततः कपिनिकरक्षुब्धग्राहो रत्नाकरो मूर्तिमान् सभय जलतीरमारूढो गङ्गाऽवलम्बिबाहुः सन् राम प्रणम्याऽऽयतिहितसहित वचन जगाद। "हे राम! ससारहेतुभूता महती त्वदीया माया। हे नाथ! कोप नियच्छ, प्रलयाऽनलसदृश बाण सहर त्रिभुवनमनोरमस्वसहननाऽऽधार वारिराशि च सभज। भवदाज्ञया कपिनिकराः प्रस्तरस्तोमैर्मयि सेतु रचयन्तु तदनु विनायास पार च प्राप्नुवन्तु" इति। ततो रामाऽभिप्राय बुद्ध्वा कपिपृतना सेतुनिर्माणायाऽहार्याऽऽहरणतत्परा अभूवन्। इत्थ गिरिनिकरमुत्पाट्य त महार्णवे प्रवेश्य नीलादयः कपयः सेतु निर्ममुः। ततः पारावारसन्तरणोपकरण सेतु दृष्ट्वा रामलक्ष्मणौ कपयश्चात्यर्थं मुमुदिरे। प्रबल रामबलमतिवेलहर्षयुक्त सत् सुवेलाऽभिधान पर्वतमारुरोह, रावणसैन्येन सम रणोत्सुक च प्रववृते। रावणपृतनाऽपि तथैव समरोत्कण्ठिता समजायत। ततो रावणबलाऽवगमायाऽनुपमबलविलसिता कपयोऽट्टप्रभृतिषु स्थानेषु समारूढाः॥ इति त्रयोदश सर्गः॥



## अथ चतुर्दशः सर्गः।

ततः स्मरपरिपीडितो रावणः चारसञ्चाराऽवगतरिपुशक्तिः सन् मायामयराममस्तकेन सीता विमोह्य योद्धु सैन्यं प्रजिघाय। रावणसैनिका रणोपकरण सम्पाद्य युद्धाय सन्नद्धा बभूवुः। दशवदनादेशेन प्रहस्तः प्राच्य महापार्श्वमहोदरौ याम्य मेघनादः पश्चिम देवेन्द्रबारणो रावणश्च स्वयमुत्तर प्रतीहारमियाय। भीषणाक्षो विरूपाक्ष पुरमध्य समध्यासितुमिष्टवान्। रामस्तत्सर्वं श्रुत्वा सोपकरण रणाभिलाषेण प्रस्थितश्च। प्लवङ्गाश्च समराऽनुरागेण शुशुभिरे कूर्दनादिनोत्साह च प्रदर्शयाञ्चक्रिरे। एतस्मिन्नन्तरे नैकविधान्यपशकुनानि पुरत आविर्बभूवुः। रावणश्च प्रधनेच्छया

समुपस्थितानरातीन्निशम्य राक्षसोत्साहसवर्द्धनं कृतवान्। तदनन्तरं वानरनिशाचराणा दारुण समरः समजनि। राक्षसानामेकैक पुरद्वार कोटिसख्यकैर्मर्कटै रुद्धम्। षट्त्रिंशत्कोटिमितै कपिभि सुग्रीव सरक्षित । ततो वानराऽनीकपानां यातुधानसेनापतिभि सम समुद्धत द्वन्द्वयुद्ध सजातम्। पुरुभिर्वानराऽधिपैरनेके कौणपपृतनापतयोऽहन्यन्त। ततोऽङ्गदमेघनादयोर्विकटो विग्रह समजनि, प्रादर्शयच्च तस्मिन्नवसरे वालिज स्वीया रणनिपुणताम्। राघवधुरन्धरो वीरवरो रामचन्द्रश्च निर्दयतया यातुधानकदनमकरोत्। ईदृश व्यतिकर लक्ष्यीकृत्येन्द्रजिच्चुकोप सर्पाऽस्त्र चाऽऽजुहाव। ततश्च स तै सर्पाऽस्त्रै सकलबलीमुखैः सम रामलक्ष्मणावप्याच्छादयत। पाशबद्धौ तावुभावपि रामलक्ष्मणौ मुमुहतुर्वसुधाया च पेततु । अत्राऽन्तरे राघवयोस्तादृश्या दशया कपिकुल भृश शोकविकलमभूत्। बहवश्च कपयो मेघनादमार्गमपिनो विविदु । तत सुग्रीवस्य मन्त्रपूताभिरद्भिर्धौतचक्षुर्विभीषणस्तथैव सुग्रीवोऽपि व्योम्न्यवस्थित शत्रु विदाञ्चक्रतु । कपीनामधिपति सुग्रीव इन्द्रजित हन्तु शैलमुत्क्षिप्तवान्, स च युद्ध विहाय पितरमुपागमत् सर्वमुदन्त चाऽऽचचक्षे। शत्रुपराभवश्रवणसमनन्तर रावणश्च यातुधानै सममत्यर्थं प्रीतोऽभूत्। सलक्ष्मण राम तादृशलक्ष्मणाऽन्वित विवश दृष्ट्वा मैथिली मदनुकूला स्यादित्याशयवतो दुरात्मनो रावणस्यादेशेन यातुधाना अशोकवनिकान्त· पुष्पकमारोप्य सीता राम दर्शयाञ्चक्रिरे। तथाविधौ राघवौ दृष्ट्वा जानकी निमीलितलोचना सती पुष्पकोदरे मोहेन लुठिता, शोकाऽऽवेगेन भृशमवशात्मा प्रबुध्याऽश्रूणि मुमोच परिदेवितवती च। तादृशीमुत्कटकष्टां सीता रावणभगिनी त्रिजटाऽऽश्वासयाञ्चकाराऽशोकवनिकां च निनाय। अत्रान्तरे सविभीषणा कपय आलोचना चक्रु । ततो राम सज्ञा लब्ध्वा तच्छरबन्धदु ख विवेद शोकपरवशोभूत्वा "वत्स ! जीवसी"ति लक्ष्मणमाजुहाव, सुग्रीवमापप्रच्छे किष्किन्धागमनार्थ त वचसा प्रेरितवाश्च। सुग्रीवश्च राघवौ किष्किन्धां नेतुमङ्गदमादिदेश रक्षोवध च प्रतिजज्ञे। तदनु "नागाऽस्त्रमेतच्च शरा, एतद्विपक्षोनागान्तकध्यानं" विभीषणादिति निशाम्य रामो नागाऽराति निदध्यौ। ध्यानाऽनन्तर लोकाऽतिशायिना वेगेन गरुत्मानागत·। तदागमेन नागपाशा विशिश्लिषुर्योधा अक्षतवद्भ्रेजिरे, लक्ष्मण सज्ञा लेभे विभीषण "सम्पन्ना मे मनोरथा" इति मेने। गरुडस्पर्शमात्रेण रामलक्ष्मणौ सवृत्तौ व्यथारहितौ, स च यथाऽऽगत तथा गत । अनन्तर वानरनिकरा· परम प्रसादमासाद्य युद्धार्थं लङ्का जग्मु । रावणश्च राघवादीन् नागपाशोन्मुक्तान् बुबोध। तदनु रावणसम्मता निशाचरा अपि युद्धार्थं सन्नाह कृतवन्त । वानररात्रिञ्चरयोस्तुमुल कलहश्च समजनि। महाबलोऽनिलकुमारो रणे धूम्राऽक्षाऽभिधान राक्षस जघान। दशाननाऽऽदेशेनाऽकम्पनो हनूमता सार्धं युयोध विक्रमाऽतिशय च प्रदर्शयाञ्चकार। वेगवता हनूमता तालवृक्षप्रहारेणाऽकम्पनाभिधानो निशाचर शमनसदनाऽतिथिरकारि। प्रकम्पननि-

षूदनेन दशाऽऽननः साऽतिशय शोककोपाऽभिभूत सञ्जातः। ततो रावणज्ञसो महाशक्तिसम्पन्न प्रहस्तो युद्धार्थमुद्योग चकार, प्रारम्भे च ब्राह्मणपूजनादिक मङ्गलाचरण च विदधे। महासङ्कटकालेऽप्यविहस्तो राक्षससत्तम प्रहस्तो वानरनिकरसहारूपमद्भुतक्रम विक्रम प्रदर्शितवान्। सग्रामशीलो वानरपृतनापतिर्महाबलो नील कियन्तच्चित्काल प्रहस्तेन सत्रा सयुद्धय शिलाप्रहारेण त जघान। ततस्तुष्टा वानरा लङ्का भेजू राक्षसाश्च रावण "प्रहस्तो हत" इति सूचितवन्त.। इति चतुर्दश सर्ग।

## अथ पञ्चदश सर्ग।

ततो रावण प्रहस्तमारणमाकर्ण्य भीतोऽभूत्, स कुम्भकर्णप्रबोधनाय राक्षसान्प्रातिष्ठिपत्। ते च यातुधाना, आकारणदण्डप्रहरणाद्यनेकव्यापारैरतिभीषणवर्ण कुम्भकर्णं प्रबोधितवन्त। स च कुम्भकर्ण प्रबुध्य प्रबोधकारणमप्राक्षीत् ज्ञात्वा चाऽग्रजादेश स्नानभोजनपानादिक कृत्वा रावणाऽन्तिकमगात्। रावणश्च तमायान्त विलोक्याऽऽसनादीषदुदस्थादासन्नस्थ काञ्चन पीठ निरदिक्षच्च। कुम्भकर्ण आसनमुपविश्याऽऽकारणकारणमपृच्छत्। रावणश्च सक्रम समुद्रतरणोपक्रम सकलमपि रामपराक्रममवर्णयद्द्वेपेणनिषूदनार्थं च तमनुरुद्धवान्। ततः कुम्भकर्ण "मन्त्रणवेलाथा यदहमुक्तवास्तद्भवता न श्रुत, तस्येद फलमागतम्।" एतादृशानि परिणामहितकराणि वाक्यान्यब्रवीत्। कालचोदितो दशाननस्तादृशानि वाक्यानि श्रुत्वा कोपाक्रान्तस्वान्तोऽभवत्। तत कुम्भकर्णो दशवदनवचनाऽनुरोधार्थं गर्जितवान् युद्धसामग्रीमुपादाय निशाचरनिकरैः परिवृतो महताऽवष्टम्भेन लङ्कापुर्या निर्गत। कुम्भकर्णभरेणाऽनन्ता चाऽवनता तरवो निपतिता, भयाऽतिशयात्सिहा कान्दिशीकत्व भेजुः कुलाऽचलाश्च सचलिता.। तस्मिन्नवसरे परितोबहुविधाउत्पाता प्रादुरभूवन्। कुम्भकर्णोदर्पात्तानवज्ञाय गर्जितवान्शत्रूश्चाहवे आह्वास्त च। तत स आहवेऽपरिमिताना बलीमुखाना मास रुधिर चाऽभक्षयदपिबच्च। कुम्भकर्णतो वानराणा पलायनादिरूपा दुर्दशा ज्ञात्वाऽङ्गदोऽलज्जिष्ट पराक्रम च प्रतिपन्नवान्। अङ्गदपराक्रमक्रमेणोत्साहितेन प्लवङ्गकदम्बकेन सार्धं कुम्भकर्णस्य तुमुल युद्ध समजायत। तस्मिन्प्रसङ्गे विभीषणो रामलक्ष्मणाभ्या कुम्भकर्णस्य भीषणपराक्रममवर्णयत्। वनौकस सहत्य कुम्भकर्णमपीपिडन्, स च तान्घ्नन् नाऽश्रमत्। अथ रामेच्छया सुग्रीवो रणाऽर्थं कुम्भकर्णेन सगतो महता द्रुमेण त प्राहरच्च। कुम्भकर्णस्त प्रासहिष्ट सुग्रीवे रौद्रा शक्ति प्राहरत्ता च मारुतिर्वियद्गतामासवान्, खण्डितवाश्च। कुम्भकर्णो महता गिरिणा प्रहृत्य सुग्रीवं मूर्च्छित कृतवान् तमादायपलायिष्ट च। तदनु प्राप्तसज्ञ. सुग्रीव कुम्भकर्णस्य कर्णनासिक कृत्तवान्। कोपाक्रान्ताज्जिघासतः कुम्भकर्णात्कपीन्द्र आत्मान मोचयामास। तदनु वानरै सम कुम्भकर्णस्य रोमहर्षणो रण' समभवत्। तत्र च विवशाना वानराणा दुर्दशां दृष्ट्वा लक्ष्मण कुम्भकर्णस्य

मुकुटं कवचं च छिन्नवान् शरैर्देहमपि भिन्नवान्। ततः स्वेन योद्धुं स्पर्धमानस्य कुम्भकर्णस्योपरि रामो यैः खरो वाली मारीचस्तथा दूषणोऽघानि ताञ्छरान्प्राक्षिपत्। राघवो वायव्याऽस्त्रेण सहाऽऽयुधं कुम्भकर्णपाणिमच्छैत्सीत्, स इत्थमेव तस्य सवृक्षं करं छित्त्वा जङ्घे च गमनाऽसमर्थे कृतवान्। तदनु रामः ऐन्द्रेण शरेण कुम्भकर्णहृदये विद्धवान्, स च पतन्देहेन कपीनां सहस्रद्वितयं चूर्णितवान्। ततः सुरा रामस्तवमकार्षुः, निशाचरा भयद्रुताः संजाताः। रावणो भ्रातुर्वधमाकर्ण्य भृशं शोकपरवशोऽभवत् तद्गुणाश्चाऽपप्रथत्। अथ देवान्तकादयो रावणतनूजाश्चत्वारो रणाऽङ्गणं गताः। अङ्गदेन समं नरान्तकस्य जन्यमजनि। महाबलिना वालिसूनुना मुष्टिना नरान्तकप्राणा अहारिषत। तथैव मारुतात्मजो देवान्तकस्याऽन्तमकरोत्। एवं राजकुमाररक्षाऽर्थं प्रेरितो युद्धोन्मत्तोऽपि युद्धशीलेन नीलेन व्यापादितः। त्रिशिराश्च हनूमता शिरसि ताडितः सन् प्राणानौज्झीत्। ततो विभीषणोऽतिकायाऽभिधानस्य रावणकुमारस्य विक्रमं रामायाऽऽख्यातवान्। सौमित्रिणा सत्राऽतिकायस्याऽतिविचित्रं जन्यं समभूत्। लक्ष्मणः कियत्कालाऽनन्तरं ब्रह्मास्त्रेणाऽतिकायस्य कायं निर्जीवमकरोत्। ततो रावणः स्वनन्दननिषूदनमाकर्ण्याऽऽक्रन्दनं चकार, तमिन्द्रजिदाश्वासितवान्। इन्द्रजिच्च जगद्विधातारं विधातारं पूजयित्वा हवनेन हव्यवाहनं सतोष्याऽस्त्रमण्डलं च पूजितवान्। तदनु स ब्रह्मणो जयावहं शस्त्रं स्यन्दनं चाऽलब्ध। रावणिस्तमध्यास्य छन्नरूपः सन् यातुधानद्वेषणानां प्राणानपाहरत्। राक्षसः षष्टिकोटिपरिमितान् कपीन्व्यापादितवान् राघवौ च व्यमूमुहत्। इन्द्रजिल्लङ्कां गत्वा रावणं च स्वपराक्रमदर्शनाऽर्थं रणाङ्गणं प्रति प्रेषितवान्। ततो विभीषणो रामलक्ष्मणौ जीवितौ बुद्धवान् बहूनहतान्कपींश्चाऽवाबुद्ध। तदनु जाम्बवांश्च प्रबुद्धः। तौ च जाम्बवद्विभीषणौ हनूमन्तं मृतजीविनीं सन्धानकरणीं विशल्यकरणीं चौषधीमानेतुं प्रहितवन्तौ। हनूमांश्च यदौषधभेदं नोनिश्चितवांस्तदासहौषधिं शैलमानिनाय। औषधप्राप्त्याऽऽहताः सर्वेऽपि वानरभटाः जीवनमापुर्युद्धाऽर्थं पूर्ववत्प्रवृत्ताः। ततो निकुम्भकुम्भनामानौ कुम्भकर्णसुतौ लङ्कां लङ्कालयान्राक्षसांश्चाऽगोपिष्टां वानरकदनं च समारप्सातास्। अङ्गदेन रामः राक्षसानामतिभयङ्करं संग्रामं संजातः। रामाऽभिप्रायेण सुग्रीवो भ्रातृव्यं शत्रुसङ्कटाद्द्रुतमत्रास्त, मुष्टिना कुम्भकर्णपुत्रकुम्भं च हतवान्। कुम्भभ्रातरं निकुम्भं च भ्रातृवधप्रतिकारोद्यतं हनूमान्भग्नवान्। ततः प्रधानशत्रुभटहननेन सुग्रीवोऽवश्यभाविनीं सिद्धिं तर्कितवान्, रामबुद्धिः सपत्नच्छेवाऽरस्त मेघनादप्रभृतीनां यातुधानपृतनापतीनां चाविच्छिन्नः शोकोऽवर्द्धत॥ इति पञ्चदश सर्गः।

---

## अथ षोडश सर्गः।

ततो हतबान्धवो राक्षसराजो रावणः स्वतनयानतिकायादीन् भृत्यान्मत्तयुद्धोन्मत्तादींश्च मुहुर्मुहुः संस्मृत्य परिदेवयामास। एवमेव सोऽसभाव्यव्यापादनान्कु-

म्भकर्णादीन्स्मृत्वाऽनेकप्रकारैरात्मपराभूति वर्णितवान्। विफलाऽभिलाष स सविनय विभीषणप्रतिपादित नयनिचय चाऽस्मरत्। एव बहुधा विलप्य जाताऽमर्षो रजनीचरवर स नरवानरनिकरनिषूदनपरो भूत्वा समुत्साहाऽवलम्बन चकार। अरातिनिवारणप्रवणो लोकरावणो रावण· "प्राक् लङ्काऽभियोक्तॄन्सनिपात्य तदनु सहाऽमर पुरन्दर जेतुं गत्वा भूयो लङ्कामेष्यामी"ति व्यचिन्तयत्। अत्राऽन्तर इन्द्रजित्तदन्तिकमाययौ, प्राक् समनुष्ठित हरिहयपरिभवादि रूप स्वविक्रम वर्णयित्वाऽ"भिघातिघातन करिष्यामी"ति स्वोत्साह प्रादर्शयत्। इति षोडश सर्ग. ॥

## अथ सप्तदश सर्गः ।

इन्द्रजिद्योधा उपद्रवपरिहाराय शान्तिमभीष्टवन्त·, तदर्थं मङ्गलाचरण कृतवन्त। ते यथेष्टमभ्यवहृत्य युद्धाऽर्थं तत्परा बभूवु। इन्द्रजिच्च चतुर्वक्त्र विप्राश्च समर्च्य कवचमामुच्य शस्त्राऽस्त्रादिक प्रधनोपकरणगण परिगृह्य यान समारुह्य युद्धार्थं प्रचलित। तस्मिन्नवसरे योद्धारो युद्धवाद्यानि वादितवन्त। अत्राऽन्तरेऽनेकाऽपशकुनानि पुरत आविर्बभूवु। पर यातुधानास्तान्युपेक्ष्य महतोत्साहेन युद्ध चक्रु.। इत्थ च प्लवङ्गमकदम्बकेन सम रक्षोवीराणा लोमहर्षणो रणो बभूव। इन्द्रजिच्च जवाऽतिशयेन शरासने शरसन्धानमकरोत्। तस्य हस्तलाघव चाऽसामान्य समजनि। एव च तेन बहवो वानरा हता आहताश्च। किं बहुना ततोऽनिष्टाऽतिशयमाशङ्क्य सौमित्रिर्ब्रह्मास्त्रमाह्वातुमैच्छत्। पर विभीषणस्य निरपराधानामन्येषा च रक्षसा नाशमाशङ्क्य रामचन्द्रो न्यवारयत्। तत इन्द्रजिद्धियद्भुते मायामयी सीता करवालेन प्रच्छन्नदर्शयत। तस्या वध प्रतिहर्तुमिच्छु रञ्जनाऽऽनन्दजननो मेघनाद "हे पाप! पतिविरहनिपीडितामिमा मा वधी" रित्युक्तवान्। इन्द्रजिच्च पश्यतस्तस्य मायामय्या सीताया मूर्धानमच्छिनत्। हनूमान् तादृश शोकजनक वृत्तान्त रामलक्ष्मणाभ्यामब्रवीत्। ततस्तौ शोकाकुलौ सन्तौ भृश परिदेवितवन्तौ। विभीषण आगत्य ताभ्यां प्रकृतमुदन्तमाख्यत्—"सोऽस्मान्मोहयित्वा निकुम्भिलाऽभिधानमग्निगृहमगात्। तत्र हवनकार्ये समापिते ब्रह्मशिरोऽभिधानमस्त्र स्यन्दन च स प्राप्स्यति। तत्र कर्मण्यसमाप्त एव ब्रह्मा तस्य वध धारितवान्" इति। तदनु राघवादेशेनेन्द्रजितो हवनेऽन्तरायापादनाऽर्थं बहवो वानरा निकुम्भिलां प्रति प्रचलिता·। तत्र च रक्षकैर्बहुभी रक्षोभिस्ते न्यरुध्यन्त। इत्थ च तत्र राघवरावणयो· पृतनानां भयङ्कर युद्धमारब्धम्। ततस्तानि निकुम्भिलारक्षणपरायणानि रक्षासि निर्जित्य लक्ष्मणविभीषणौ द्रुतमन्तर जग्मतु·। गत्वा च तौ कृशानौ हव्य प्रक्षिपन्तमेकाग्रमानस मन्त्र चोच्चारयन्तमिन्द्रजित दृष्टवन्तौ। ततस्तत्र सौमित्रिस्तमाह्वयताऽगर्जच्च। तत्राऽऽह्वाने प्रकुपितो मृलेन्द्रजित्स्वपितृव्यं विभीषण कुलदूषकत्वेन बहुधा निरभर्त्सयत्। सत्पक्षाऽवलम्बनशीलः सुशीलो विभीषणश्च तदुदाहृतानि दूषणानि युक्तियुक्तैर्वचोभिर्निराकृतवान्,

प्रत्यपोपदच्च रावणस्यैव प्रमादजातम् । इन्द्रजिज्जनकस्य दोषप्रकाशनेन भृश प्रकुप्य शरनिकरै. पितृव्य लक्ष्मण चाऽताडयत् । राक्षसगणकदनप्रवणो लक्ष्मणो मेघनादसारथिमलुनात् स्यन्दनमभनक् । तदनु लक्ष्मणेन्द्रजितोर्भीत्यतिशयोत्पादक युद्ध प्रवृत्तम् । क्षणाऽनन्तरं लक्ष्मणेनेन्द्रजिदघानि । ततः सवानरा. सर्वे सुरा· समतुष्यन् रामचन्द्रश्च लक्ष्मणमालिङ्गितवान् मूर्ध्न्यजिघ्रच्च । राक्षसाऽनीकं रावणेन सहाऽरोदीत् । दुरात्मा रावण आतुरतया मैथिली हन्तु प्राक्रमत । ततस्त-दासा "अयुक्तमेतत्कर्मे"ति कथयित्वा त न्यवारयन्, बहुभिरुपदेशदेशनैस्त समा-श्वासयश्च । ततो रावणो महान्त युद्धोपक्रम चकार । राक्षसाश्च वैश्वानरपरिचरण शङ्करनमस्करण च विधाय शान्त्यै द्विजाश्चाऽप्रीणयन् । ततस्ते यातुधाना वारवा-णमामुच्य युद्धसामग्र्या विभूषिता गजादिक यान चाऽऽरुह्य युद्धार्थं प्रातिष्ठन्त । राक्षसाना वानरै सम लोकविश्रुत युद्ध समारब्धम् । तस्मिन्नवसरे पार्थिव रज प्रावर्धत, दश दिशो व्याश्नुत, येन कपिरक्षसा स्वपरविवेकोऽप्यपगत । गम्भीराः शोणितसरित. प्रावहन् । ततो विपदा विरामो राम. लोकाऽतिशायिन विचित्र क्रममवलम्ब्य यातुधानकदनाऽर्थ महान्त पराक्रम प्रादर्शयत् । कि बहुना स शैलैरिव बृहद्भीराक्षसैर्हतैर्भूमिमाचिनोत् । देवगन्धर्वा राममस्तुवन् प्लवङ्गमा व्यस्मयन्त राक्षस्यश्चोच्चै· प्रारुदन् रावण च प्राजुगुप्सन्त । ततो रावणोऽतिभयङ्कर स्यन्दनमास्थाय सग्रामाऽर्थमागमत् । तस्मिन्नवसरेऽशुभसूचकान्यपशकुनानि नयन-पथप्राप्तान्यभूवन् । उभयो पक्षयो. परमदारुणो रण. क्षणमलभत । तत्र सुग्रीवो विस्मयाऽतिशयद्योतिकां सग्रामकुशलतामाविरकरोत् । परमकोपनो निशाचरवरो रावणोऽपरिमितानां बलीमुखाना प्राणानपाहरत्, राक्षसानरक्षद्रामलक्ष्मणौ च मार्गणगणैरपीडयत् । रामश्च तत्प्रहित शरवर्षं भल्लैरपनीतवान् । ततश्च रामरावण-योरतिभीषणोऽतिप्रख्यातश्च दारुणो रण प्रावर्तत । दशाननो विविधायुधप्रक्षेपणै भृंश परिपीडयन्त रामाऽनुजमष्टघण्टाविलसितया महाशक्त्या व्यसुमकरोत् । ततो रामो हनूमदानीताभिरोषधीभि स्वमनुजमुदजीवयत् । ततो नितान्तमेव कोपाक्रान्तस्वान्तो बन्धुनाशेन भृशमशान्तो रावणो रामेण सह योद्धु प्रसितो-ऽभूत् । रथारूढेन रावणेन सम भूमिष्ठस्य रामस्य सग्रामोऽयुक्त इति मत्वा पुरन्दरेण सस्यन्दनो मातली रामसदेश प्रेषित । रामश्च पुरन्दरप्रहित रथमारुह्य दशाऽऽस्येन सार्धं योद्धु प्रसित· । सप्रवृत्तश्च महावीरयोरुभयोर्नरकर्बुरयोरसाधारणः सप्रहार । ततो रावणवधाय प्रजापतिर्यदस्त्र कल्पितवान्, तद्रामस्य धीशालिना मातलिना स्मारितम् । रामाऽस्त तदस्त्र रावणस्य प्राणानपाहरत् । दशवदन भूपतनसमनन्तर कपिगणो हर्षप्रकर्षपरवशोऽभवत्, सुरनिकरो जिताऽरिं रामं प्राशसत्, विभीषणश्च हतभ्रातृकत्वेन शोकाऽऽकुल. सवृत्त । इति सप्तदश सर्ग. ॥

---

अथाऽष्टादश सर्गः ।

ततो दशाननप्राणापहरणेन शोकपरायणो विभीषणो भृश परिदेवयामास । परिदेवनाऽवसरे दशवदनाऽवरजो नयाऽभावेनैवाऽग्रजस्येदृशी दशा समभूदिति प्रतिपादयामास, रावणप्रताप मुहुर्मुहु सस्मृत्य दैवमनूद्य भृशमुपालभत च । विभीषण आत्माग्रजाऽभावे भाविन शक्रादीना देवानामभ्युदय लङ्कालयाना विपत्ति रावणगुणगण च कृतवेदितया बहुशोऽवर्णयत् । अत्राऽन्तरे विदितवृत्तान्ता अन्त पुरललनाः पौराश्च भृशदु खितेन व्यलपन् । ततो रामो दशाऽऽस्यस्य शोच्यत्वा-ऽभाव प्रतिपाद्याऽनन्तरकर्तव्यमुपदिश्य रावणाऽनुज विभीषण समसान्त्वयत् ॥

इत्यष्टादश सर्ग ॥

अथोनविंश. सर्ग ।

ततो राघवसमाश्वासितो विभीषणो विलेपनलेपनाऽलङ्कारपरिधापनपुरःसर रावणदाहनाऽर्थं लङ्काया राक्षसान् समादिशत् । ते च तदादिष्ट सर्वं सपाद्य त शोकविमोकाऽर्थं समसान्त्वयन्, लङ्कापालनाऽर्थं तदुत्साहवर्द्धन चाऽकुर्वन् । ततश्च विभीषण. स्वाग्रजस्य दशाननस्याऽग्निजलक्रियामकार्षीत । रामश्च रुक्मकुम्भेन विभीषणस्य मूर्ध्नि जलानि सिञ्चन् नीत्यनुगुणान् राज्यशासनप्रकारानवर्णय-त्तत्समृद्धौ स्वीयामिच्छा चाऽसूचयत् । इत्यूनविंश सर्ग ।

अथ विंश सर्ग ।

अनन्तर पवनतनयो जनकनन्दिनीं समुपेत्य रावणाऽऽदिरक्षोवधमवर्णयत् तद्र-क्षणपरायणाना राक्षसीना निग्रहे च प्रस्तावमुपास्थापयत् । दयापरिपूर्णाशया सती सीता च प्रेष्यवधे स्वकीयामननुमति प्रतिपादितवती, "सीता भवद्दर्शनाऽभिला-षिणी" त्यविलम्बितमेव रामः सूच्यताम्" इति चाऽभिहितवती । पवमाननन्दनेन जनकतनयाऽभिलाषे प्रकाशिते रघुकुलचन्द्रो रामचन्द्रोऽङ्गुष्ठेन पृथिवी लिखित्वा विनि श्वस्य च "विभूषितां सीतामानये"ति विभीषण भाषितवान् । अपगतदूषणो गुणगणभूषणो विभीषणश्चाऽशोकवनिका गत्वा मैथिलीं प्रणम्य "हे देवि ! स्नानाऽ नुलेपनाऽलङ्करणपरिधानाऽनन्तर हैमीं शिबिकामारुह्य राजाऽन्तिक यातु भवती"ति निवेद्योत्तरकर्तव्य च प्रतिपादयामास । चन्द्रानना जनकतनया स्नानादिकमनुष्ठाय पट्टाऽशुकवृतानना सती यान समारूढवती, पत्युरन्तिकमुपेत्य रुदितवती च । भूपा-लकुलललामभूतो मर्यादापरिपालको राम. सीतायाश्चारित्र्ये सन्दिह्य तद्ग्रहणेऽनिच्छा संसूच्य यथेष्टगमनार्थं तामादिष्टवान् । सतीशिरोमणिर्जनकनन्दिनी चौजस्विन्या वाण्या स्वचारित्र्यविशुद्धि प्रतिपादितवती, स्वविशुद्धिद्योतनार्थं चितां विरचयितु सौमित्रिमादिदेश । ततो रामाऽनुज्ञातेन राममनुजातेन रचितायां चितायां जनक

दुहिता—"हे वह्ने ! यद्यहं दुष्टा, तर्हि मां दह यद्यहं चारित्र्यविशुद्धिमती सती, तर्हि मा सत्क्षे"ति कथयित्वा तत्र प्रविष्टवती ॥ इति विंशतितमः सर्गः ।



## अथैकविंशतितमः सर्गः ।

ततो वह्निः मैथिलीं समुत्क्षिप्य तस्या लोकोत्तरां चारित्र्यविशुद्धिं रामोपकण्ठमकथयत्, "स्त्रीसामान्येनेयं नो द्रष्टव्ये"ति प्रत्यपादयच्च । तस्मिन्नेवाऽवसरे भगवान् वृषभवाहनः कमलासनो विमानस्थो दशरथो नृपश्च समाययौ । ततो रामस्तान्प्रणतः । ते च सीतायाः लोकाऽतिशायि प्रयतवृत्तं वर्णितवन्तः । तत्रावसरे सुरवरः पुरन्दरोऽपि समाजगाम । रामेणाऽभिवन्दितस्य तस्य वरेण तदानन्दसम्पादनाऽर्थमाहवे मुक्तप्राणाः शाखामृगाः प्राणन्तः सञ्जाता यत्र तत्र तरुशाखासु समारूढाश्च।
इत्येकविंशतितमः सर्गः ।



## अथ द्वाविंशतितमः सर्गः ।

ततो निहतदशवदनो दशरथनन्दनो रामो हृष्टचित्तः वातात्मजं मातॄणां भरतस्याऽमात्यपौराणां च समाश्वासनार्थमयोध्याप्रयाणाय समादिदेश तत्र तत्र मार्गे सम्प्राप्यमाणानां देशविशेषाणां जनानां गङ्गादिसरितां च वर्णनं सविस्तरं चकार । कपिसार्थाध्यक्षे पवनतनये गृहीताऽर्थे याते सति राघवकुलधुरन्धरो रामः सुग्रीवविभीषणावपि श्वस्तने दिवसे "मया समं युवयो र्द्वयोरप्ययोध्यागमनमभिमतं नो वे"त्यपृच्छत् । तौ च रामाभिरुचौ स्वाभिमतिं प्रादर्शयताम् । तदनन्तरमेतादृशैः रालापै रात्रिं यापयित्वा रामादयः सैन्यैः समं पुष्पकमारुह्याऽयोध्यां यातुं सम्प्रस्थिताः । तत्र तत्र मार्गे आपततः सेतुं महेन्द्रं मलयं विन्ध्यं माल्यवन्तमृष्यमूकं दण्डकारण्यं पम्पां चेत्यादिकान्प्रदेशान् बहुविधवर्णनपुरःसरं सीतायै कथयन्रामोऽयोध्याऽभिमुखं जगाम । ततो हनूमत्सकाशात्समुपलब्धरामवृत्तान्तः सानन्दाश्रुविलोचनः परमशान्तो भरतोऽमात्यादिभिर्मातृभिरन्तःपुरेण च समं, रामसविधं सम्प्राप्तः । ससम्भ्रमपौरजनावृतो रामोऽनुजेः समं महतोत्सवेनाऽयोध्यां पुरीं प्राविशत् । ततश्च स्वस्य राज्याऽभिषेके भरतस्य च यौवराज्याऽभिषेके सवृत्ते रामोऽश्वमेधेन यष्टुं प्रववृते । महाकाव्यसञ्ज्ञकोऽयं प्रबन्धो वैयाकरणानां ( शब्दलक्षणचक्षुषाम् ) कृते दीपतुल्योऽनधीतव्याकरणानां कृते त्वन्धानां हस्तामर्ष इव भवेत् । काव्यमिदं श्रीधरसूनुना नरेन्द्रनाम्ना नृपेण पालितायां वलभीनामपुर्यां मया ( भट्टिकविना ) कृतम् । अत एव काव्यविधानाय या कीर्त्तिः सा तस्यैव राज्ञो भवतात् ॥

इति द्वाविंशतितमः सर्गः ।



# हिन्दी कथासार

## द्वादश सर्ग ।

तब देवपूजन किये हुए विभीषणको उनकी माताने कहा—"हे पुत्र ! तुम देवताओंको आनन्द देते हुए रावणसे की गई दुर्नीतिका प्रतीकार करो। सग्राममे रामसे रावणकी हत्या होनेके पहले ऐसे व्यवहारका परिहार करनेके लिए यत्नका आचरण करो। जनस्थानके रहनेवाले राक्षस सबके सब मारे गये, लङ्का पुरीके योद्धा जीते गये और वहाँके पेड़ उखाडे गये, सभाभवन भी जलाये गये ऐसे सङ्कटके समय रावणकी रक्षा करनेके लिए कोशिश करो"। इस तरह पहले ही अपने अभीष्ट कार्यमे माताकी आज्ञा पाकर विभीषण उसके सम्पादनके लिए रावणके भवनको चले गये। द्वारपालोंसे बहुत सम्मानके साथ राक्षसराजके समीप लाये गये विभीषणने अनुपम पराक्रमसे युक्त और भयङ्कर शरीरवाले रावणको देखा और वे उसके सिंहासनके समीपमे राक्षसोंसे उपस्थापित आसन पर बैठ गये। तदनन्तर लङ्काऽधिराज रावणने प्रस्तुत कार्यके निश्चयके लिए सभासद् राक्षसोंको आरम्भसे उनकी प्रशसा कर कहा—"हे राक्षसों ! खर और वाली आदि वीर मारे गये, शत्रुके आक्रमणकी शङ्कासे रहित लङ्का जलाई गई, भृत्योंके साथ अक्षकुमार मारा गया और शत्रुओंकी सेना समुद्रसन्तरणकी इच्छा कर रही है इस स्थितिमे हम लोगोंको जो करना चाहिए उसे कहो"। अनन्तर बेजोड़ अभिमानसे युक्त प्रहस्त आदि अपने को वीर माननेवाले मन्त्रियोंने बाहु आदि अङ्गोंका और धनु आदि शस्त्राऽस्त्रोंका भी परामर्श कर कहा—"हे महाराज ! इन्द्रके अभिमानका खण्डन करनेमें कुशल होकर आप अपने भक्ष्य मनुष्यके अभियोग को क्यों गौरव विशिष्ट बना रहे है ? आपकी आज्ञासे हम लोग सूर्य और चन्द्रको भी दण्ड दे, हमारे प्रातराश-( जलखई ) के लिए भी अपर्याप्त ( ना काफी ) राघवोंसे युक्त बन्दरोंसे क्या डर है ?"। तब विभीषणने भाषणका आरम्भ किया। "हे प्रहस्त आदि राक्षसों" ! राजाके युद्धमें अधिकृत आप लोगोंने अपनी योग्यताके सदृश ही कहा, परन्तु कार्यके विचारमें बुद्धिका अधिकार है शौर्यका नही।" इस प्रकार विभीषणने नीतिसे रहित और शौर्यके प्रकाशनसे भूषित प्रहस्तके युक्तिसमूहको अपने युक्ति बलसे विध्वस्त किया और राजनीतिसे उद्भासित वचनसमुदायको प्रकाशित किया। इस तरह रावणके भाई विभीषणने शत्रु रामके उत्कर्षको और रावणके अपकर्षको युक्ति प्रकर्षसे अनेक वार प्रतिपादन कर वालीको मारनेवाले सुग्रीवमित्र रामके साथ सन्धि करनेसे सपूर्ण राक्षस कुलके सरक्षणका और मित्रके उपार्जनसे अपने बलकी वृद्धिका भी बहुधा प्रतिपादन किया। विभीषणके संभाषण-को सुनकर परम बुद्धिमान् मातामह ( नाना ) माल्यवान्ने भी उसका समर्थन

करने का प्रयत्न किया और राजारामकी असाधारण महिमाका प्रकाशन भी किया। ऐसे प्रयोग किये गये वाक्यसमूहवाले परस्पर भाषणसे जगे हुए कुम्भकर्णने भी नीतिमार्गका ही प्रदर्शन कराया, रावणके लिए प्राणत्यागमें भी कातरताका अभाव कहा और वाक्यके अवसानमें फिर भी शयनका ही अङ्गीकार किया। उसके अनन्तर नीतिमें निपुण विचक्षण विभीषणने अनेक प्रकारके उत्पातसमूहको कहा और रावणके लिए भव्य कर्तव्यका उपदेश भी दिया। नितान्तदर्प युक्त क्रूरचित्त रावणने नीति वचनके श्रवणमें असहनशील होते हुए उक्ति वैचित्र्यसे अपने पराक्रमकी प्रशंसा की और निर्भर्त्सन करनेके अनन्तर अपने भाई विभीषणको पार्ष्णि (पैर के पिछले भाग) से प्रहार कर अवज्ञा की। विभीषणने भी सहनशील होनेके कारण क्रोधको वशमें कर चार मन्त्रियोंके साथ आसनसे उठकर रावणको दो तीन वाक्य कह कर रामचन्द्रजीके चरणोंको प्रणाम करनेकी बुद्धिसे सभाभवनको छोड़ा। अनन्तर स्थिरचित्तवाले रामने हनूमान्‌के वचनसे सच्चरित्र जानकर विभीषणको लङ्काके आधिपत्यमें अभिषिक्त और सन्तुष्ट भी किया।

इति द्वादश सर्ग।



## त्रयोदश सर्ग।

अनन्तर मन्द वायुसे मनको हरण करनेवाले वेला (समुद्र की तीर भूमि) के मूलमें चन्द्रकिरणसे शोभित रात्रि कामकी उद्दीपक होनेसे रामचन्द्रजीको मूर्च्छित कर बीत गई। प्रार्थनाका अनादर करने वाले समुद्रसे रामचन्द्रजी प्रातःकालमें कुपित हुए। कोपसे आकुल होकर रामचन्द्रजीके धनुर्ग्रहण करने पर पर्वत और सर्पोंके साथ समस्त पृथिवी संशयको प्राप्त हुई। इसी तरह समुद्रका जल भी सूख गया। तब वानर समूहसे क्षुब्ध गुफाओंसे युक्त समुद्रने मूर्ति धारण कर भयके साथ जलके तीरमें आरूढ होकर बाहुसे गङ्गाजीका अवलम्बन कर रामचन्द्रजीको प्रणाम कर उत्तर कालमें हितयुक्त वचन कहा—"हे राम! संसारका कारणभूत आपकी महती माया है। हे नाथ! आप कोप छोड़े, प्रलय कालके अग्निके सदृश बाणका आप उपशमन करे। आप तीन लोकमें सुन्दर अपने शरीरके आधार जलराशिका आश्रय ले। आपकी आज्ञासे बानरसमूह पत्थरोंसे मेरे ऊपर सेतु (पुल) की रचना करें, उसके अनन्तर विना आयासके पारको प्राप्त हों।" तब रामचन्द्रजीका अभिप्राय जानकर वानरोंकी सेनाएँ सेतुनिर्माणके लिए पर्वतोंको लानेके लिए तत्पर हुई। इस प्रकारसे पर्वतसमूहका उत्पाटन कर उसको महासागरमें प्रविष्ट करा कर नील आदि वानरोंने सेतुनिर्माण किया। तब समुद्रसन्तरणका साधन सेतु देखकर राम, लक्ष्मण और वानर लोग अतिशय प्रसन्न हो गये। रामचन्द्रजीकी

प्रबल सेनाने अतिशय हर्षसे युक्त हो कर सुवेल नामक पर्वत पर आरोहण किया और वह रावणकी सेनाके साथ युद्ध करनेके लिए उत्सुक भी हो गई। उसी तरह रावणकी सेना भी युद्धके निमित्त उत्कण्ठित हो गई। तब रावणके बलको जाननेके लिए अनुपम बलसे शोभित बन्दर अट्ट ( अटारी ) आदि स्थानोंके ऊपर चढ गये॥

इति त्रयोदश सर्ग।



## चतुर्दश सर्ग

अनन्तर कामपीडित रावण ने गुप्तचरों की गति से शत्रु की शक्ति जान कर माया से बने हुए राममस्तक से सीताजी को मोहित कर लडने के लिए सेना भेजी। रावण के सैनिक युद्ध सामग्री का सम्पादन कर युद्ध के लिए सन्नद्ध हो गये। रावण की आज्ञा से प्रहस्त पूर्वद्वार, महापार्श्व और महोदर दक्षिणद्वार, मेघनाद पश्चिम द्वार और देवेन्द्र को निवारण करने वाला रावण स्वयम् उत्तर द्वार को चला। भीषण नेत्रों वाले विरूपाक्षने शहरके बीचमें रहने की इच्छा की। रामचन्द्रजीने यह सब सुन कर रणके अभिलापसे सामग्रीके साथ प्रस्थान किया। बन्दर भी युद्धके अनुरागसे शोभित हुए और कूद फाँद इत्यादिसे उत्साह का भी प्रदर्शन करने लगे। इस बीचमें अनेक प्रकारके अपशकुन सामने प्रकट हुए। रावणने "युद्ध की इच्छासे शत्रु लोग उपस्थित हुए है" ऐसा सुन कर राक्षसों के उत्साह का सवर्द्धन किया। तदनन्तर बानरों और राक्षसों का दारुण सग्राम हुआ। राक्षसों का एक एक पुरद्वार कोटि ( करोड ) सख्यावाले बन्दरों ने रोका। छत्तीस करोड़ बन्दरों से सुग्रीव सरक्षित हुए। तब बानर सेनापतियों का राक्षस सेनापतियों के साथ समुद्धत द्वन्द्व युद्ध हो गया। प्रचुर बानरसेनापतियोंसे अनेक राक्षस सेनापति मारे गये। अनन्तर अङ्गद और मेघनाद का विकट सग्राम हुआ, उस अवसरमें वालिपुत्र अङ्गदने अपनी युद्ध निपुणता दिखाई। राघव धुरन्धर वीरवर रामचन्द्रजीने भी निर्दयतासे राक्षसों का सहार किया। ऐसी विपत्ति देख कर इन्द्रजित् कुपित हुआ और उसने सर्पास्त्र का आह्वान किया। तब उसने उन सर्पास्त्रों से समस्त बानरोंके साथ राम और लक्ष्मणको भी आच्छादित कर दिया। पाश बद्ध वे दोनों राम और लक्ष्मण मूर्च्छित हो गये और जमीनपर गिर पडे। इस बीचमें राम और लक्ष्मण की वेसी अवस्थासे बानर समूह अतिशय शोक विकल हुआ। बहुतेरे बन्दरोंने मेघनादके मार्ग को भी नहीं जाना। तब सुग्रीवके मन्त्रसे पवित्र जलसे नेत्रोंको धोकर बिभीषण और सुग्रीवने भी आकाशमें अवस्थित शत्रु ( मेघनाद ) को जान लिया। बानरोंके अधिपति सुग्रीवने इन्द्रजित् को मारनेके लिए पर्वत उठाया, इन्द्रजित् ने युद्धको छोडकर पिता ( रावण )

के पास जाकर सब वृत्तान्त कहा । शत्रुओंके पराजय को सुननेके अनन्तर रावण राक्षसोंके साथ बहुत प्रसन्न हुआ। लक्ष्मणके साथ रामको ऐसे लक्षणसे युक्त विवश देखकर सीता मेरी अनुकूल होगी ऐसे अभिप्राय वाले दुरात्मा रावणकी आज्ञासे राक्षसोंने अशोकवनिकासे पुष्पकमे चढ़ा कर सीताको रामका दर्शन कराया। वैसे ( नागपाश बद्ध ) राम और लक्ष्मणको देखकर सीता नेत्रोंको मूदती हुई पुष्पक विमानके बीचमे मूर्च्छासे गिर पड़ी । शोकके आवेगसे अतिशय विवश होकर सीताजी जागकर आँसुओं को गिराने तथा विलाप करने लगी । ऐसी उत्कट कष्टवाली सीताजी को रावण की बहन त्रिजटाने आश्वस्त किया ओर अशाक वनिकामे पहुँचाया। इस बीचमे विभीषणके साथ बानरोंने विचार किया । तब रामने होशमे आकर उस शरबन्धके दु खको जाना और शोकके अधीन होकर "वत्स ! जीवित हो ?" ऐसा कहकर लक्ष्मणको बुलाया, सुग्रीवको पूछा, किष्किन्धा जानेके लिए उनको बचनसे प्रेरणाभी की । सुग्रीवने राम और लक्ष्मणको किष्किन्धा पहुचानेके लिए अङ्गदको आज्ञा दी और राक्षस वधकी भी प्रतिज्ञा की । तदनन्तर "यह नागाऽस्त्र है, बाण नही, इसका प्रतिकार गरुडजी का ध्यान है।" विभीषणसे ऐसा बचन सुनकर रामने नागशत्रु ( गरुड़ ) का ध्यान किया । ध्यानके अनन्तर लोकाऽतिशायी वेगसे गरुड़जी आ पडे । उनके आगमनसे नागपाश विश्लिष्ट हो गये योद्धा लोग अक्षतके सदृश शोभित हुए, लक्ष्मणजी होशमे आ गये और विभीषणने "मेरे अभिलाष सम्पन्न हो गये" ऐसा विचार किया। गरुडके स्पर्श मात्रसे राम और लक्ष्मण दु.ख रहित हो गये, वे भी जैसे आये थे वैसे ही चले गये । अनन्तर बानरों के समूह अतिशय प्रसन्न होकर युद्ध करनेके लिए लङ्काको चले गये । रावणने भी राम आदिको नागपाशसे उन्मुक्त जाना। उसके बाद रावणके सम्मत राक्षसोने भी युद्धके लिए कवच धारण कर लिया । बानरों और राक्षसों का तुमुल कलह हुआ। महाबल वाले वायुपुत्र हनूमान् जीने रणमे धूम्राक्ष नामके राक्षसको मारा । रावणकी आज्ञासे अकम्पन नामक राक्षसने हनूमान् जीके साथ युद्ध का और अतिशय पराक्रम का भी प्रदर्शन किया । उसे वेगवान् हनूमान् जीने तालवृक्षके प्रहारसे यमभवन का अतिथि बना डाला। प्रकम्पनके बधसे रावण शोक ओर क्रोधसे अतिशय अभिभूत हो गया । तब रावणसे आज्ञा पाकर महाशक्तिसे सम्पन्न प्रहस्तने युद्धके लिए उद्योग किया और प्रारम्भमे ब्राह्मणपूजनादिक मङ्गलका भी आचरण किया । महासङ्कटके समयमे भी व्याकुल न होने वाले राक्षसश्रेष्ठ प्रहस्तने बानर समूहके संहार रूप अद्भुत क्रमवाले विक्रम का प्रदर्शन किया । सङ्ग्रामशील बानर सेनापति महाबल नीलने भी कुछ समय तक प्रहस्तके साथ युद्ध करके शिलाके प्रहारसे उसे मार डाला । अनन्तर सन्तुष्ट बानरोंने लङ्काका आश्रय लिया और राक्षसोंने रावणको प्रहस्तके मारे जानेकी सूचना दी । इति चतुर्दश सर्ग।

## पञ्चदश सर्ग ।

तब रावण प्रहस्तके वधको सुनकर भीत हुआ, उसने कुम्भकर्णको जगानेके लिए राक्षसोंको भेजा । उन राक्षसोंने बुलानेसे और दण्डसे प्रहार करने आदि अनेक व्यापारों से भीषण वर्ण वाले कुम्भकर्णको जगाया । कुम्भकर्णने जाग कर जगाने का कारण पूछा, वह जगाने का कारण जान कर स्नान, भोजन और पान आदि कर रावण समीप गया । रावणने आते हुए उसे देखकर आसनसे कुछ उठ कर निकटवर्ती सौवर्ण सिहासन का निर्देश किया । कुम्भकर्णने उस आसनपर बैठ कर बुलाने का कारण पूछा । रावणने भी क्रमके साथ समुद्र तरणसे आरम्भ कर सम्पूर्ण रामपराक्रम का वर्णन किया और शत्रुनाश करनेके लिए उससे अनुरोध किया । तब कुम्भकर्णने "सलाहके समयमें मैने जो कहा था वह आपने नही सुना, उसका यह फल आ गया है ।" ऐसे परिणाममे हितकर वाक्यों को कहा । कालसे प्रेरित रावण ऐसे वाक्यों को सुनकर क्रोधसे आक्रान्त चित्तवाला हो गया । तब कुम्भकर्ण रावणवचन का अनुसरण करनेके लिए गर्जन कर युद्धसामग्री साथ लेकर राक्षससमूहोंसे घिरा जा कर बडे अवष्टम्भसे लङ्कापुरीसे बाहर निकल पड़ा । कुम्भकर्णके भारसे पृथ्वी अवनत हुई, पेड़ गिर पडे, अतिशय भयसे सिंह भागने लगे और महेन्द्र आदि कुल पर्वत भी सञ्चलित हो गये । उस अवसरमे चारों ओर बहुतेरे उत्पात प्रकट हुए । कुम्भकर्ण दर्पसे उनकी अवज्ञा कर गर्जन करने तथा सङ्ग्राममें शत्रुओंको ललकारने लगा भी । तब उसने युद्धमे अपरिमित वानरोंका मास खाया और रुधिर का पान किया । कुम्भकर्णसे वानरोंकी पलायन ( भागना ) आदि रूप दुर्दशा जानकर अङ्गद लज्जित हुए और उन्होंने पराक्रम करने का विचार किया । अङ्गदके पराक्रमसे उत्साहित वानर समूहके साथ कुम्भकर्ण का तुमुल युद्ध हुआ । उस प्रसङ्गमे विभीषणने राम और लक्ष्मणको कुम्भकर्णके भीषण पराक्रमका वर्णन किया । वानर इकट्ठे हो कर कुम्भकर्ण को पीडित करने लगे, वह भी उन लोगों को मारता हुआ परिश्रान्त नही हुआ । तब रामचन्द्रजी की इच्छासे सुग्रीव युद्धके लिए कुम्भकर्णसे सगत हुए और उन्होंने बडे पेड़ से उसके ऊपर प्रहार भी किया । कुम्भ कर्णने उस ( पेड़ ) को सह लिया और सुग्रीवमें भयङ्कर शक्ति का प्रहार किया आकाशमे प्राप्त उस ( शक्ति ) को हनुमानूजीने पाकर खण्डित किया । कुम्भकर्णने बडे पेड़ से प्रहार कर सुग्रीवको मूर्च्छित किया उन्हें ले कर वह भागा भी । तदनन्तर होशमे आकर सुग्रीवने कुम्भकर्णके कान और नाक को काट डाला । कोपसे आक्रान्त तथा मारने की इच्छा करने वाले कुम्भकर्णसे कपीन्द्र सुग्रीवने अपने को छुडाया । तदनन्तर वानरोंके साथ कुम्भकर्ण का लोमहर्षण ( रोमाञ्च उत्पन्न करने वाला ) रण हुआ । उसमें विवश वानरों की दुर्दशा देखकर लक्ष्मणजी ने कुम्भकर्णके मुकुट और कवच को भी काटा और बाणोंसे उसके शरीर को भी

विदीर्ण कर डाला। तब अपने साथ युद्ध की स्पर्धा करने वाले कुम्भकर्णके ऊपर रामचन्द्रजीने जिन बाणोंसे खर, वाली, मारीच और दूषण मारे गये थे उन्ही बाणों को छोड़ा। रामचन्द्रजीने वायव्य अस्त्रसे आयुधके साथ कुम्भकर्णके हाथको काट डाला। उन्होंने इसी तरह उसके वृक्षयुक्त हाथको काटकर जङ्घाओंको भी चलनेमे असमर्थ बना डाला। तदनन्तर रामचन्द्रजीने ऐन्द्र बाणसे कुम्भकर्णके हृदयमें वेधन किया, गिरते हुए उसने अपने शरीरसे दो हजार बन्दरोंको चूर चूर कर डाला। तब देवताओंने रामचन्द्रजीकी स्तुति की, राक्षस भयसे भागने लगे। रावण अपने भाई ( कुम्भकर्ण ) के वधको सुनकर अत्यन्त शोक वश हो कर उसके गुणोंको फैलाने लगा। तब देवान्तक आदि रावणके चार पुत्र रणाऽङ्गणको गये। अङ्गदजीके साथ नारान्तक का युद्ध हुआ। महाबली वालिपुत्र ( अङ्गद ) ने मुष्टि-प्रहारसे नारान्तकके प्राणों का हरण किया। उसी तरह वायुपुत्र हनूमानूजीने देवा-न्तक नामक रावणके आत्मजका अन्त कर डाला। इसी प्रकारसे राजकुमारों की रक्षाके लिए भेजे गये युद्धोन्मत्तनामके राक्षसको भी युद्धशील नीलने मारा। हनू-मानूजीसे शिरमें ताडित त्रिशिराने भी प्राणोंको छोड़ा। तदनन्तर विभीषणने राम-चन्द्रजीको अतिकायनामक रावणकुमारके पराक्रम का वर्णन किया। लक्ष्मणजीके साथ अतिकाय का अति विचित्र युद्ध हुआ। लक्ष्मणजीने कुछ ही समयके अनन्तर ब्रह्माऽस्त्रसे अतिकायके काय ( शरीर ) को निर्जीव कर दिया। तब रावण अपने पुत्र का वध सुनकर रोने लगा, उसे इन्द्रजित्‌ने आश्वासन दिया। इन्द्रजित् ने जगत्‌के विधाता ( रचना करने वाले ) विधाता ( ब्रह्माजी ) की पूजा कर हवनसे अग्निको सन्तुष्ट कर अस्त्रमण्डल की भी पूजा की। तदनन्तर उसने ब्रह्माजीसे जय देने वाले शस्त्र और रथ को भी पाया। इन्द्रजित् उस ( रथ ) पर चढ़ कर अदृश्य रूप वाला होता हुआ राक्षसके शत्रुओंके प्राणोंका हरण करने लगा। उसने सडसठ करोड़ बन्दरों को मार डाला और राम लक्ष्मण को मूर्च्छित किया। इन्द्रजित्‌ने लङ्कामे जा कर रावण को अपना पराक्रम दिखाने के लिए रणाङ्गणमें भेजा। तब विभीषणने राम और लक्ष्मण को जीवित तथा बहुतेरे बानरों को मारे गये जान लिया। तदन्तर जाम्बवान् भी होशमे आये। जाम्बवान् और विभीषणने हनूमान्-जीको मृतजीविनी ( मरे हुए को जीवित करने वाली ), सन्धान करणी ( क्षतका सन्धान करने वाली ), और विशल्य करणी ( गडे हुए बाणको निकालने वाली ) इन ओषधियों को लानेके लिए भेजा। जब हनूमानूजी औषधोंके भेदका निश्चय नही कर सके तब वे औषधोंके साथ पर्वत को ले आये। औषधप्राप्तिसे आहत सब योद्धा वानरलोगों ने जीवन पाया और युद्धके लिए वे पहले की तरह प्रवृत्त हुए। तब निकुम्भ और कुम्भ नाम वाले कुम्भकर्णके पुत्रोंने लङ्का और वहा रहने वाले राक्षसों की रक्षा की और वे वानरोंका वध भी करने लगे। अङ्गदके साथ राक्षसोंका

अति भयङ्कर संग्राम हुआ। रामचन्द्रजीके अभिप्रायसे सुग्रीवने भ्रातृपुत्र ( अङ्गद ) की शत्रुसङ्कटसे शीघ्र रक्षाकी और मुष्टिप्रहारसे कुम्भकर्णके पुत्र कुम्भको मार डाला। भाई ( कुम्भ ) के वधके प्रतीकार ( बदला ) के लिए उद्यत कुम्भभ्राता निकुम्भको हनूमान्‌जीने मार दिया। अनन्तर प्रधान शत्रुभटोंके वधसे सुग्रीवने अवश्यम्भाविनी सिद्धिकी तर्कना की, रामचन्द्रजीकी बुद्धि सम्पन्न इच्छासे युक्तकी तरह प्रसन्न हुई और मेघनाद आदि राक्षस सेनापतियोंका अविच्छिन्न शोक बढ़ गया।

इति पञ्चदश सर्ग।

अथ षोडश सर्ग।

अनन्तर बान्धवोंके मारे जानेसे राक्षसराज रावण अतिकाय आदि अपने पुत्रों को और मत्त और युद्धोन्मत्त आदि अपने भृत्योंको भी वार वार स्मरण ( याद ) कर विलाप करने लगा। इसी प्रकारसे उसने जिनके मारे जानेकी सम्भावना भी नहीं की जा सकती है ऐसे कुम्भकर्ण आदियोंका भी स्मरण कर अनेक प्रकारोंसे अपने पराजयका वर्णन किया। निष्फल अभिलाष वाले उसने नम्रतापूर्वक विभीषणसे कहे गये नीति समूहका भी स्मरण किया। इस तरह अनेक प्रकारसे विलाप कर उस राक्षसराजने कोप उत्पन्न होनेसे नरों और वानरोंके समूहके वधमें तत्पर हो कर उत्साहका अवलम्बन किया। शत्रुनिवारणमें आसक्त तथा लोकको रुलाने वाले रावणने "पहले लङ्कामें आक्रमण करने वालों को मार कर तदनन्तर देवताओं के साथ इन्द्रको जीतनेके लिए जाकर फिर लङ्कामें आऊगा' ऐसा विचार किया। इस बीचमें इन्द्रजित्‌ने रावणके समीपमें आकर, पहले किये गये इन्द्रके तिरस्कार रूप अपने पराक्रमका वर्णन करके "शत्रुवध करूगा" कह कर अपने उत्साहका प्रदर्शन किया॥

इति षोडश सर्ग।

सप्तदश सर्ग।

अनन्तर इन्द्रजित्‌के योद्धाओंने उपद्रवपरिहारके लिए शान्तिकी इच्छाकी, और उसके लिए मङ्गलका आचरण किया। वे यथेष्ट भोजन कर युद्धके निमित्त तत्पर हो गये। इन्द्रजित् भी ब्रह्माजीकी और ब्राह्मणोंकी भी पूजा कर कवच पहनकर शस्त्र अस्त्र आदि युद्धके सामग्री समूहको लेकर सवारी पर चढ़कर युद्धके लिए चला। उस अवसरमें योद्धाओंने युद्धके वाद्योंको बजाया। इस बीचमें अनेक अपशकुन सामने प्रकाशित हुए। परन्तु राक्षसोंने उनकी उपेक्षा कर बड़े उत्साहके साथ युद्ध किया। इस प्रकारसे वानरसमूहके साथ राक्षस वीरोंका लोमहर्षण रण हुआ। इन्द्रजित्‌ने अतिशय वेगसे धनुमें बाणसन्धान किया। हस्तलाघव असाधारण हुआ। इस प्रकारसे उसने बहुतेरे वानरोंको हत और आहत किया। अधिक-

क्या उससे अतिशय अनिष्टकी आशङ्का कर लक्ष्मणजीने ब्रह्मास्त्रका आह्वान करनेकी इच्छा की। परन्तु विभीषणके और निरपराध दूसरे राक्षसोंके भी नाशकी आशङ्का कर रामचन्द्रजीने उनको रोका। तब इन्द्रजित् आकाशमे जाकर मायामयी सीता-को तलवारसे काटता हुआ दिखाई पड़ा। सीताजीके वधका प्रतिहार करनेके इच्छुक अञ्जनीनन्दन हनूमान्ने "हे पाप! पति विरहसे निपीडित इनको मत मारो" ऐसा कहा। उनके देखते देखते इन्द्रजित्ने मायामयी सीताके शिरको काट डाला। हनूमान्ने ऐसा शोकजनक वृत्तान्त राम और लक्ष्मणको कहा। तब वे दोनों शोकसे आकुल होते हुए अतिशय विलाप करने लगे। विभीषणजीने आकर उन दोनोंको प्रकृत वृत्तान्त बतलाया—"वह हम लोगोंको मोहित कर निकुम्भिला नामक अग्निशालाको चला गया है। वह वहाँ पर हवनकार्य समाप्त होनेपर ब्रह्मशिर नामका अस्त्र और रथ भी प्राप्त करेगा। उस कर्मके समाप्त न होनेपर ही ब्रह्माजीने उसके वधका निर्धारण किया है।" तब रामचन्द्रजीकी आज्ञासे इन्द्रजित्के हवनमे विघ्न उपस्थित करनेके लिए बहुतसे वानर निकुम्भिला-में चले। वहाँ पर उन लोगोंको बहुतेरे रक्षक राक्षसोंने रोका। इस प्रकारसे वहाँ राम और रावणकी सेनाओंका भयङ्कर युद्ध हुआ। तदनन्तर निकुम्भिलाके रक्षणके लिए तत्पर उन राक्षसोंको जीतकर लक्ष्मण और विभीषण शीघ्र भीतर घुस गये। जाकर उन दोनोंने अग्निमे हव्य ( चरु पुरोडास आदि पदार्थ ) का प्रक्षेप करते हुए, एकाग्रचित होकर मन्त्रोच्चारण करते हुए इन्द्रजित्को देख लिया। तब वहाँ पर लक्ष्मणजीने उसे ललकारा और गर्जन भी किया। उस ललकारमे कुपित होकर इन्द्रजित्ने अपने पितृव्य ( चाचा ) विभीषणकी कुलदूषक होनेसे अनेक प्रकारसे भर्त्सना की। सत्पक्षका अवलम्बन करने वाले सुशील विभीषणने भी उससे कहे गये दूषणोंको युक्ति सम्पन्न बचनोंसे निराकृत किया और रावणके ही प्रमाद समूह का प्रतिपादन किया। तब इन्द्रजित्ने अपने पिता ( रावण ) के दोष का प्रकाशन करनेसे अतिशय क्रुद्ध होकर बाण समूहोंसे विभीषण और लक्ष्मणको ताडित किया। राक्षसगणके सहारमें आसक्त लक्ष्मणजी ने मेघनादके सारथिको काट डाला और रथभी तोड़ दिया। तदनन्तर लक्ष्मण और इन्द्रजित् का अत्यन्त भयका उत्पादक युद्ध प्रवृत्त हुआ। कुछ क्षणके बाद लक्ष्मणजी ने इन्द्रजित् को मार डाला। तब बानरोंके साथ समस्त देवगण सन्तुष्ट हुए, रामचन्द्रजीने लक्ष्मणको आलिङ्गन किया और उनके शिरमें सूँघा भी। राक्षस सेना रावणके साथ रोने लगी। दुरात्मा रावण आतुरतासे सीताजी को मारनेके लिए उपक्रम करने लगा। तब उसके आप्तोंने "यह कर्म अनुचित है" ऐसा कहकर उसे रोका और बहुतेरे उपदेशोंसे उसे समाश्वस्त भी किया। तब रावण युद्ध का भारी आरम्भ करने लगा। राक्षसोंने अग्निकी परिचर्या और शङ्करजी

को नमस्कार कर शान्तिके लिए ब्राह्मणोंको भी प्रसन्न किया । तब उन राक्षसोंने कवच पहनकर युद्धसामग्रीसे विभूषित होकर हाथी आदि सवारी पर चढ़कर युद्धके निमित्त प्रस्थान किया । राक्षसों का बानरोंके साथ लोक प्रख्यात युद्धका आरम्भ हुआ । उस अवसरमे पृथ्वीकी धूलि बढ़ गई और उसने दशो दिशाओं को व्याप्त कर लिया, जिससे बानर और राक्षसों का अपना और पराया का विवेक भी चला गया । लोहूकी गम्भीर नदिया बहने लगी । तब विपत्तियों का अवसान करने वाले रामचन्द्रजीने लोकाऽतिशायी विचित्र क्रमका अवलम्बन कर राक्षसों का सहार करनेके लिए महान् पराक्रम दिखलाया । अधिकसे क्या, उन्होंने पहाडोंके सदृश बडे बडे मारे गये राक्षसोंसे पृथ्वीको व्याप्त कर दिया । देवता और गन्धर्व रामकी स्तुति करने लगे, बानर विस्मित हुए और राक्षसियाँ ऊँचे स्वरसे रोने लगी और रावणकी निन्दा करने लगीं । तब रावण अति भयङ्कर रथपर चढ़कर युद्धके लिए आया । उस अवसरमे अशुभसूचक अपशकुन नेत्रमार्गमें प्राप्त हुए । दोनों पक्षोंमें परम दारुण रणने क्षण ( अवसर ) पाया । वहां सुग्रीवने अतिशय आश्चर्य का द्योतन करने वाली सग्राम कुशलता का आविर्भाव किया । अतिशयकोप शील राक्षसश्रेष्ठ रावणने अपरिमित बानरोंके प्राणों को हर लिया, राक्षसों की रक्षाकी और राम और लक्ष्मणको बाणसमूहोंसे पीडित किया । रामचन्द्रजीने उससे प्रेरित बाण वृष्टिको भालोंसे अपनीत किया । तदनन्तर रामचन्द्र और रावणका अतिभीषण और अतिप्रख्यात दारुण रण प्रवृत्त हुआ । रावणने अनेक आयुधोंके प्रहारोंसे अतिशय पीडित करनेवाले लक्ष्मणजी को आठ घण्टाओंसे शोभित महाशक्तिसे प्रहार कर निष्प्राण कर डाला । तब रामचन्द्रजीने हनूमान्से लाये गये औषधोंसे अपने भाई ( लक्ष्मण ) को उज्जीवित किया । तदनन्तर नितान्तही कोपसे आक्रान्त चित्त वाला और बन्धु नाशसे अतिशय अशान्त रावण रामचन्द्रजीके साथ लडनेके लिए तत्पर हुआ रथमे आरूढ रावणके साथ पृथिवीमे रहे हुए रामचन्द्रजी का सग्राम अनुचित है" ऐसा जानकर इन्द्रजीने रथके साथ अपने सारथि मातलिको रामचन्द्रजीके पास भेजा । रामचन्द्र जीभी इन्द्रसे भेजे गये रथपर चढ़कर रावणके साथ लड़नेको तत्पर हुए । महावीर नर और राक्षस राम और रावण दोनों का असाधारण सग्राम प्रवृत्त हुआ । तदनन्तर रावणके वधके लिए ब्रह्माजीने जिस अस्त्रकी रचना की थी बुद्धि शाली मातलिने रामचन्द्रजी को उस अस्त्र का स्मरण कराया । रामचन्द्रजीसे प्रेरित उस अस्त्रने रावणके प्राणों का अपहरण कर डाला । रावणके पृथिवीमें गिरनेके अनन्तर बानरसमूह अतिशय हर्ष का परवश हुआ देवसमुदायने शत्रुओं को जीतने वाले रामचन्द्रजी की प्रशसा की और विभीषण भाईके मारे जानेसे शोकसे आकुल हो गये ॥ इति सप्तदश सर्ग ॥

## अष्टादश सर्ग ।

तदनन्तर रावणके प्राणाऽपहरणसे शोकपरायण विभीषणने अतिशय विलाप किया। विलापके अवसरमे रावणके भाई विभीषणने "नीतिके अभावसे ही बड़े भाई की ऐसी दशा हुई" ऐसा प्रतिपादन किया, रावणके प्रतापका वारं वार स्मरण कर भाग्यको उद्देश्य कर बहुत उपालम्भ (उलहना) भी दिया। विभीषणने रावणके अभावमें इन्द्र आदि देवताओंके भावी अभ्युदय और लङ्कामे रहने वाले राक्षसोंकी विपत्तिका और कृतज्ञ होनेसे रावणके गुणसमूहका भी अनेक प्रकारसे वर्णन किया। इस बीचमे वृत्तान्त जानकर अन्तःपुरकी स्त्रियां और पुरवासी भी अत्यन्त दुःखित होनेसे विलाप करने लगे। तब रामचन्द्रजीने "रावण शोक करने का योग्य नहीं है" ऐसा प्रतिपादन कर अनन्तर कर्तव्य का उपदेश कर रावणके भाई विभीषणको सान्त्वना दी।

इति अष्टादश सर्ग।



## ऊनविंश सर्ग ।

तब रामचन्द्रजीसे समाश्वासित विभीषणने विलेपन (चन्दन आदि) से लेपन और अलङ्कार पहनाकर रावणको जलानेके लिए लङ्कामे अनेक उपकरणों को इकट्ठा करनेके लिए राक्षसोंको आज्ञा दी। उन लोगोंने भी विभीषणके आज्ञानुसार सब वस्तुओं का सम्पादन कर शोक हटानेके लिए विभीषणको सान्त्वना दी और लङ्का को पालन करनेके लिए उनके उत्साह का सवर्द्धन भी किया। तब विभीषणने अपने बड़े भाई रावण का अग्नि सस्कार और जलदान आदि क्रिया की। रामचन्द्र जीने भी विभीषणके शिरमे सुवर्ण कलशसे जलको सीचते हुए नीतिके अनुकूल राज्य शासनके प्रकारों का वर्णन किया और विभीषण की समृद्धिमे अपनी इच्छा की सूचना की।

इति ऊनविंश सर्ग।



## विंश सर्ग ।

अनन्तर हनूमान् जीने सीताजीके पास जाकर रावण आदि राक्षसोंके वधका वर्णन किया और सीताजीके रक्षणमें तत्पर राक्षसियोंके दण्डित करनेके प्रस्तावको उपस्थित किया। दयासे परिपूर्ण अभिप्राय वाली सती सीताने प्रेष्यों (अनुचरों) के वधमें अपनी अनिच्छा का प्रतिपादन किया और "सीता आपके दर्शन का

अभिलाष करती है, इस बातकी बिना विलम्बके रामचन्द्रजी को सूचना दो" ऐसा भी कहा। रामचन्द्रजीके समीपमे हनूमान् जीके सीताजी का अभिलाष प्रकाशित करने पर रघुकुलके चन्द्रस्वरूप रामचन्द्रजीने अङ्गुष्ठ (अगूठे) से पृथिवी को लिखकर निःश्वास लेकर "अलङ्कृत सीताको ले आओ" विभीषणको ऐसी आज्ञा दी। दूषणसे रहित और गुण गण रूप भूषणवाले विभीषणने अशोक वनिकामें जाकर सीताजी को प्रणाम कर "हे देवि! स्नान और अनुलेपन कर अलङ्कार पहन कर सुवर्णमयी पालकी पर चढ़कर आप रामचन्द्रजीके समीप पधारें" ऐसा निवेदन कर उत्तर कर्त्तव्य का भी प्रतिपादन किया। चन्द्र सदृश मुखवाली सीताजी स्नानादि कर्म का अनुष्ठान कर रेशमी वस्त्रसे घूँघट डालकर सवारीमें आरूढ हुईं और पतिके समीप पहुंचकर रोने भी लगी। राजकुलके भूषण भूत मर्यादा परिपालक रामचन्द्रजीने सीताके चरित्रमें सन्देह कर उनके ग्रहणमें अनिच्छाकी सूचना कर यथेष्ट गमनके लिए उन्हें आज्ञा दी। सती शिरोमणि जनक नन्दिनीने ओजस्विनी बाणीसे अपने चरित्रकी पवित्रता का प्रतिपादन किया और अपनी पवित्रताको प्रकाशित करनेके लिए चिताकी रचनाके निमित्त लक्ष्मणको आज्ञा दी। तब रामचन्द्रजीसे अनुज्ञात लक्ष्मणजीके चिताकी रचना करने पर सीता—"हे अग्निदेव! मै दुष्ट हूँ तो मुझे जला डालो, इसके विपरीत यदि मै चरित्रकी पवित्रतासे सपन्न हू तो मुझे सरक्षित करो" ऐसा कहकर उसमें प्रवेश किया।

इति विंश सर्ग।



## एकविंश सर्ग।

तब अग्निने सीताजी को उठाकर रामचन्द्रजीके समीपमें उनके लोकोत्तर चरित्रकी पवित्रताको कहा और "सामान्य स्त्रीके समान इन्हें नहीं देखना चाहिए।" ऐसा भी प्रतिपादन किया। उसी अवसरमें भगवान् वृषभवाहन (महादेव), कमलासन (ब्रह्मा) और विमानमें स्थित महाराज दशरथ भी आ गये। तब रामने उन्हें प्रणाम किया। उन लोगोंने भी सीताजीके लोकोत्तर पवित्र चरित्र का वर्णन किया। उस अवसरमें सुरश्रेष्ठ इन्द्रजी भी आये। रामचन्द्रजीसे अभिवन्दित उनके वरसे उनके आनन्द सम्पादनके लिए युद्धमें प्राण छोड़ने वाले बानर जीवित हुए और यत्र तत्र पेड़ों की डालों में चढ़ने लगे भी।

इति एकविंश सर्ग॥



## अथ द्वाविंश सर्ग

तब रावणको मारनेवाले, दशरथके पुत्र रामचन्द्रजीने प्रसन्नचित्त हनूमानजीको माताओं, भरत, नौकरों, मन्त्रियों और पुरवासियोंको आश्वस्त करनेके निमित्त, अयोध्या जानेके लिये कहा। और जाते समय रास्तेमे जगह जगह पर प्राप्त होनेवाले देशविशेषों, मनुष्यों और गङ्गा आदि नदियोंका सविस्तर वर्णन किया। रामचन्द्रजीकी आज्ञा मानकर बानरोंके अध्यक्ष हनूमानूजीके प्रस्थान करनेपर रामजीने सुग्रीव और विभीषणको—"कल आप दोनों भी मेरे साथ अयोध्या जाना पसन्द करते है या नही" इस तरहसे पूछा। उन दोनोंने भी रामचन्द्रजीकी अभिरुचि देखकर अपनी इच्छा प्रकटकी। बादमे इस तरहकी बातचित करते हुए रामचन्द्रजी प्रभृतियोने रात बिताकर सैनिकोंके साथ पुष्पकविमानपर चढ़कर अयोध्या जानेके लिये प्रस्थान किया। रास्तेमे स्थान स्थानपर प्राप्त होनेवाले—सेतु, महेन्द्र, मलय, विन्ध्य, माल्यवान्, ऋष्यमूक, दण्डकारण्य, पम्पा, आदि प्रदेशोंका अनेकों प्रकार वर्णन पूर्वक सीताजीको कहते हुए रामचन्द्रजी अयोध्याके सामने पहुचे। तदनन्तर हनूमान्जीके द्वारा रामजीके वृत्तान्तको प्राप्तकर आनन्दसे अश्रुयुक्तनयनवाले शान्तचित्त भरतजी, मन्त्रियों, माताओ और अन्त पुरवासियोंके साथ श्रीरामचन्द्रजीके पास पहुचे। अत्यन्त चहलपहलके साथ पुरवासियोंसे घिरे हुए भगवान् रामचन्द्रजीने अपने छोठे भाइयोंके सहित, बड़े उत्सवके साथ अयोध्यापुरीमे प्रवेश किया। उसके बाद अपना राज्याभिषेक और भरतजीका यौवराज्याभिषेक कार्य सम्पन्न होनेपर रामचन्द्रजीने अश्वमेधयज्ञ करना आरम्भ किया।

इति कथासार समाप्त।



# विषयसूची ।



| सर्ग. | विषय | पृष्ठम् |
|---|---|---|




॥ श्री ॥

# भट्टिकाव्यम्

## चन्द्रकला–विद्योतिनी–टीकाद्वयोपेतम्

( उत्तरार्द्धम् )

## अथ द्वादशः सर्गः ।

भाविकत्वं नामाऽलङ्कार प्रबन्धविषय उक्तस्तल्लक्षणमुक्त भामहेन—

भाविकत्वमिति प्राहु प्रबन्धविषय गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्राऽर्था भूतभाविन' ॥
चित्रोदात्ताद्भुताऽर्थत्वं कथाया स्वभिनीतता ।
शब्दाऽनाकुलता चेति तस्य हेतु प्रचक्षते ॥ इति ।

तत्सर्वं मन्त्रनिर्णयप्रबन्धे द्रष्टव्यमिति दर्शयन्नाह—

**ततो विनिद्र कृतदेवताऽर्च दृष्ट्यैव चित्तप्रशम किरन्तम्**
**आविष्कृताऽङ्गप्रतिकर्मरम्यं विभीषणं वाचमुवाच माता ॥१॥**

अन्वय.—ततो माता विनिद्रं कृतदेवताऽर्च दृष्ट्या एव चित्तप्रशम किरन्तम् आविष्कृताऽङ्गप्रतिकर्मरम्य विभीषणं वाचम् उवाच ॥

व्याख्या—तत = प्रभातकालाऽनन्तर, माता = जननी, रावणादिजननी नैकषीति भाव । विनिद्रं = प्रबुद्ध कृतदेवताऽर्च = विहितेष्टदेवपूज, दृष्ट्या एव = दर्शनेन एव, स्निग्धेनेति शेष । चित्तप्रशम = चेत.शान्ति, किरन्त = प्रकाशयन्तम्, आविष्कृताङ्गप्रतिकर्मरम्य = प्रकाशितशरीरप्रसाधनसुन्दर, विभीषणं = तन्नामक स्वकनिष्ठपुत्र, वाच = वक्ष्यमाणप्रकारा वाणीम्, उवाच = कथितवती ॥

॥ व्युत्पत्ति ॥ विनिद्र = विगता निद्रा यस्य, तम् । कृतदेवताऽर्चं = कृता देवताया अर्चा येन स कृतदेवताऽर्चस्तम् । "पूजा नमस्याऽपचिति सपर्याऽर्चाऽर्हणा. समा ।" इत्यमर । दृष्ट्या = दर्शन दृष्टिस्तया, "स्त्रिया क्तिन्" इति भावे क्तिन् । आविष्कृताऽङ्गप्रतिकर्मरम्यम्=आविष्कृत यत् अङ्गस्य प्रतिकर्म, तेन रम्यस्तम् । "प्रतिकर्म प्रसाध-

नम् "इत्यमर । उवाच = ब्रूधातोर्लिट् , ब्रूधातोर्द्विकर्मकत्वात्" "विभीषण, वाचम्" इति कर्मद्वयम् । अस्मिन्सर्गेऽपि प्रायेण उपजातिवृत्तम् ॥

॥भाषाऽर्थः॥ तब ( प्रात.काल होनेके अनन्तर ) माता नैकषी जगे हुए, इष्ट देवता की पूजा किये हुए, स्निग्ध दर्शनमात्रसे चित्तकी शान्तिको प्रकाशित करने वाले तथा प्रकाशित शरीरके प्रसाधनसे सुन्दर विभीषणको ऐसी वाणी बोली ॥१॥

प्रबाधमानस्य जगन्ति धीमन् ! त्व सोदरस्याऽतिमदोद्धतस्य ॥
आनन्दनो नाकसदां प्रशान्ति तूर्णं विषस्याऽमृतवत् कुरुष्व ॥ २ ॥

अन्वयः—"हे धीमन् ! नाकसदाम् आनन्दन त्व जगन्ति प्रबाधमानस्य अतिमदोद्धतस्य सोदरस्य विषस्य अमृतवत् तूर्णं प्रशान्ति कुरुष्व ॥

व्याख्या—हे धीमन् = हे प्रशस्तबुद्धिसम्पन्न, नाकसदा = देवानाम्, आनन्दनः = प्रमोदयिता, त्व, जगन्ति = लोकान्, प्रबाधमानस्य = प्रपीडयत, अतिमदोद्धतस्य = अतिगर्वाऽविनीतस्य, सोदरस्य = भ्रातु , दशाननस्येत्यर्थः । विषस्य= कालकूटस्य, अमृतवत्=सुधया तुल्य, तूर्ण=सत्वर, प्रशान्ति=प्रशमन, कुरुष्व = विधेहि । यथाऽमृत जगत्पीडकस्य स्वाऽऽश्रयसमुद्रोत्पन्नस्य कालकूटविषस्य प्रशमनेन देवप्रमोदकमभवत् तथैव त्वमपि लोकपीडकस्य अतिगर्वोद्धतस्य सहोदरभ्रातू रावणस्योपदेशनेन प्रशान्ति, कुरु इति भाव ॥

॥व्युत्पत्ति॥ नाकसदां = नाके सीदन्तीति नाकसदस्तेषां, "सत्सूद्विषे"त्यादिना क्विप्प्रत्यय । ल्युप्रत्ययान्तस्य "आनन्दन" इति कृदन्तपदस्य योगे "कर्तृकर्मणो कृति" इति कर्मणि षष्ठी । जगन्ति="प्रबाधमानस्य" इति शानजन्तस्य कृदन्तपदस्य योगे प्राप्तायाः कर्मणि षष्ठ्या "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति निषेधाद् द्वितीया । सोदरस्य = उदरेण ( समानेन ) सह वर्तत इति सोदरस्तस्य "तेन सहेति तुल्ययोगे" इति बहुव्रीहि. "वोपसर्जनस्य" इति सहस्य वैकल्पिक सभाव , तदभावपक्षे "सहोदर" इत्यपि । उपमाऽलङ्कार ॥

॥भाषाऽर्थ॥ हे प्रशस्तबुद्धियुक्त ! देवताओंको आनन्दित करने वाले तुम ( विभीषण ) लोगोंको पीडित करने वाले, अतिशय गर्वसे अविनीत, अपने भाई विषरूप रावण को तुम अमृतके सदृश वनकर शीघ्र शान्त करो ॥ २ ॥

कुर्यास् तथा, येन जहाति सीता विषादनीहारपरीतमूर्तिम् ॥
स्थितां क्षितौ शान्तशिखाप्रतानां तारामिव त्रासकरीं जनस्य ॥३॥

अन्वयः—तथा कुर्या , येन विषादनीहारपरीतमूर्ति क्षितौ स्थिता शान्तशिखाप्रताना जनस्य त्रासकरीं ताराम् इव सीता जहाति ॥

व्याख्या—तथा=तेन प्रकारेण, कुर्याः=विदधीथाः कर्मेति शेषः । येन= प्रकारेण, विषादनीहारपरीतमूर्तिं-खेदावश्यायपरिगतदेहा, क्षितौ= पृथिव्या, स्थिता= निमग्ना, शान्तशिखाप्रतानाम्, तारापक्षे—निर्वाणज्वालासमूहा, सीतापक्षे—अनुज्ज्वलवेणीबन्धाम्, एवं च—जनस्य=तारापक्षे-लोकस्य, सीतापक्षे—लङ्कावासिजनस्य, त्रासकरी=भयहेतुभूता, ताराम् इव=तारकाम् इव, सीता=मैथिली, जहाति=त्यजति । अवश्यायपरिगता भूपतिता निर्वाणकिरणा तारका यथा लोकोत्पातसूचनेन त्रासकरी भवति तथैव विषादग्रस्ता भूमितलोपविष्टा अनुज्ज्वलवेणीबन्धा इय सीताऽपि लङ्कावासिजनाना भीत्युत्पादिकाऽस्ति अत एना रावणो यथा त्यजेत्तथैनमुपदिशेति भाव ।

ॐव्युत्पत्तिॐ कुर्याः=विध्यर्थे लिङ् । विषादनीहारपरीतमूर्तिं=तारापक्षे—विषाद इव नीहार., सीतापक्षे—विषादो नीहार इव, तेन परीता मूर्तिर्यस्या, ताम् । शान्तशिखाप्रताना=शान्ताः शिखाप्रताना यस्या, ताम् । त्रासकरीं=त्रासं करोतीति तद्धेतुस्त्रासकरी, ताम् । "कृञो हेतुताच्छील्याऽऽनुलोम्येषु" इति हेतौ ट । टित्वात् "टिड्ढाणञि"त्यादिना ङीप् । उपमाऽलङ्कारः ॥

ॐभाषाऽर्थॐ हे विभीषण ! हिमसे व्याप्त मूर्ति, पृथ्वीमें पडी हुई, शान्त ज्वालासमूहसे युक्त, लोगको त्रस्त करने वाली ताराके सदृश खेदसे व्याप्तमूर्ति भूमिमे बैठी हुई अनुज्ज्वल वेणीबन्धसे युक्त और लङ्का वासी जनको त्रास देनेवाली सीताको जिस प्रकार रावण छोड दे, वैसा करो ॥ ३ ॥

> यावन्न सत्रासितदेवसघ. पिण्डो विषस्येव हरेण भीष्म. ।।
> संग्रस्यतेऽसौ पुरुषाऽधिपेन, द्रुतं कुलाऽऽनन्द ! यतस्व तावत् ॥४॥

अन्वयः—सत्रासितदेवसङ्घो भीष्मो विषस्य पिण्डो हरेण इव यावत् असौ पुरुषाऽधिपेन न सग्रस्यते तावत् हे कुलाऽऽनन्द ! द्रुत यतस्व ॥

व्याख्या—सत्रासितदेवसङ्घो=समुद्वेजितसुरसमूहः, भीष्म=भयङ्कर, विषस्य=गरलस्य, कालकूटस्येति भाव । पिण्डः=कवलं, हरेण इव=शम्भुना इव, यावत्=यत्काल यावत्, असौ-रावण, पुरुषाऽधिपेन=रामेण, न सग्रस्यते= न विनाश्यते, तावत्=तत्काल यावत्, हे कुलाऽऽनन्द=हे वंशहर्षजनक, द्रुतं= शीघ्र, यतस्व=यत्न कुरु, सीतात्यागाऽर्थं रावण प्रबोधयेति भाव. ॥

ॐव्युत्पत्तिःॐ सत्रासितदेवसङ्घो=सत्रासितो देवसङ्घो येन स, "सङ्घसार्थौ तु जन्तुभि." इत्यमरः । कुलाऽऽनन्द=कुलानि आनन्दयतीति कुलाऽनन्दस्तत्सम्बुद्धौ, "कर्मण्यण्" इत्यण् । उपमाऽलङ्कारः ॥

❀भाषाऽर्थ❀ देवसमुदायको सन्त्रस्त करने वाले भयङ्कर विषपिण्डको जैसे महादेवने पान किया था उसी तरह जब तक रावणको रामचन्द्रजी नष्ट नहीं करते हैं तब तक हे कुलानन्द ! शीघ्र यत्न करो ॥ ४ ॥

हता जनस्थानसदो निकाया., कृता जितोत्खातभटद्रुमा पू॰ ॥
सदासि दग्धानि विधेयमस्मिन् यद् बन्धुना, तद् घटयस्व तस्मिन्॥५॥

अन्वय:—जनस्थानसदो निकाया हता , पू जितोत्खातभटद्रुमा कृता, सदासि दग्धानि । अस्मिन बन्धुना यत् विधेय, तत तस्मिन् घटयस्व" ॥

व्याख्या—जनस्थानसद = दण्डकारण्यवासिन॰, निकाया = खरदूषणादीना समूहा , हता = मारिता , पू: = नगरी, लङ्कत्यर्थ । जितोत्खातभटद्रुमा=जितयोधा उन्मूलितवृक्षा च, कृता = विहिता, सदासि=गृहाणि, दग्धानि = भस्मीकृतानि, अत अस्मिन्=विषये, बन्धुना = ज्ञातिना, यत् = कार्यम् , विधेयं = कर्तव्य, तत्=कार्य, तस्मिन् विषये=रावणविषये वा, घटयस्व = यतस्व ॥

❀व्युत्पत्ति❀ जनस्थानसद =जनस्थाने सीदन्तीति, क्विप्प्रत्यय । निकाया = "सघे चानौत्तराधर्ये" इति चिनोतेर्घञ् ककारश्चाऽन्तादेश । जितोत्खातभटद्रुमा = जितोत्खाता भटद्रुमा यस्या सा, यथासख्याऽलङ्कार । सदासि = सद शब्दस्य सभा-वाचकत्वेऽपि लक्षणया यौगिकत्वाऽनुसरणेन वा गृहवाचकत्वमवसेयम् ॥

❀भाषाऽर्थः❀ दण्डकारण्यमे रहने वाले खरदूषण आदियोंके समूह मारे गये, लङ्काके लडाके जीते गये और वृक्ष उन्मूलित किये गये एवम् घर जलाये गये । इस विषयमे बन्धुको जो करना उचित है वह रावणके विषयमे कर लो ॥ ५ ॥

चिकीर्षिते पूर्वतरं स तस्मिन् क्षेमकरेऽर्थे मुहुरीर्यमाण. ॥
मात्राऽतिमात्र शुभयैव बुद्ध्या चिर सुधीरभ्यधिक समाधात् ॥ ६ ॥

अन्वय॰—पूर्वतर चिकीर्षिते क्षेमङ्करे तस्मिन् अर्थे मात्रा शुभया बुद्ध्या एव अतिमात्र मुहु ईर्यमाण सुधी स चिरम् अभ्यधिक समाधात् ॥

व्याख्या—पूर्वतरं = पूर्वमेव, चिकीर्षिते = कर्तुमिष्टे, क्षेमङ्करे = कल्याणकारके, तस्मिन् = सीताप्रत्यर्पणलक्षणे, अर्थे=प्रयोजने, मात्रा = जनन्या, नैकष्येत्यर्थ । शुभया = कल्याण्या, बुद्ध्या एव = मत्या एव, अतिमात्रम् = अत्यर्थं, मुहु॰=पुन पुन , ईर्यमाण॰=प्रेर्यमाण , सुधी = विद्वान् , स.=विभीषण , चिर = बहुकाल यावत, अभ्यधिक=स्वाऽतिशय, समाधात्=चिन्तितवान्, इदमतिन्याय्यमिति शेषः ॥

❀व्युत्पत्तिः=क्षेमङ्करे=क्षेम करोतीति क्षेमङ्करस्तस्मिन् , "क्षेमप्रियमद्रेऽण् च"

इति चाऽऽच् । खित्वान्मुम् । समाधात्=सपूर्वकात् "डुधाञ् धारणपोषणयो" इति धातोर्लुङ् "गातिस्थाघुपाभूभ्य सिच परस्मैपदेषु" इति सिचो लुक् "अवधान समाधान प्रणिधान तथैव च" इत्यमर ।

॥भाषाऽर्थ॥ पहले ही करने को अभीष्ट, कल्याण कारक उस विषय ( सीताजीको लौटाने ) मे शुभ बुद्धिसे बारबार माताके प्रेरणा करने पर विद्वान् विभीषणजीने बहुत समय तक अतिशय विचार किया ॥ ६ ॥

इयता प्रबन्धेनोदात्ताऽर्थत्वमुक्तम् । इत उत्तर रावणविभीषणादीना कविनिबद्ध-वक्तृणा वचनप्रबन्धेषु चित्राद्भुताऽर्थत्व द्रष्टव्यम् । अतिशीलता शब्दाना कुशलता चेत्येतदुभय म त्रनिर्णयाख्याया द्रष्टव्यम् ।

दौवारिकाऽभ्याहतशक्रदूत सोपायनोपस्थितलोकपालम् ॥
साऽऽशङ्कभीष्माऽऽप्रविशन्निशाट द्वार ययौ रावणमन्दिरस्य ॥७॥

अन्वयः—( स ) दौवारिकाऽभ्याहतशक्रदूत सोपायनोपस्थितलोकपाल साऽऽ-शङ्कभीष्माऽऽप्रविशन्निशाट रावणमन्दिरस्य द्वार ययौ ।

व्याख्या— स = विभीषण ) दौवारिकाऽभ्याहतशक्रदूतं=द्वारपालताडितेन्द्र-सन्देशहर, सोपायनोपस्थितलोकपाल = सोपहारोपगतलोकपाल, साऽऽशङ्कभीष्माऽऽ-प्रविशन्निशाट=सभयभीषणप्रत्ययितप्रविशद्राक्षस, रावणमन्दिरस्य = रावणप्रासादस्य, द्वार = प्रतीहार ययौ=जगाम ॥

॥व्युत्पत्ति॥ दौवारिकाऽभ्याहतशक्रदूत=द्वारे नियुक्तादौवारिका , "तत्र नियुक्त" इति ठक् "द्वारादीना च" इत्यैच् । दौवारिकै अभ्याहता शक्रदूता यस्मिस्तत् । सोपायनोपस्थितलोकपाल=उपायनै सहिता सोपायना , "उपायनमुपग्राह्यमुपहा-रस्तथोपदा ' इत्यमर । सोपायना उपस्थिता लोकपाला यस्मिस्तत् । साऽऽशङ्कभी-ष्माऽऽप्रविशन्निशाट=साऽऽशङ्का भीष्मा आप्ता विशन्तो निशाटा यस्मिस्तत् । इन्द्रवज्रा वृत्तम् ॥

॥भाषाऽर्थ॥ विभीषणजी जहापर द्वारपालोंने इन्द्रदूतोको ताडित किया है, उपहारों ( सौगातो ) के साथ उपस्थित लोकपालोंसे युक्त, आशङ्कावाले भयङ्कर, विश्वस्त प्रवेश करने वाले राक्षसोंसे युक्त रावणप्रासादके द्वारपर गये ॥ ७ ॥

विशेषकम् ८–१० ।

दूरात् प्रतीहारनत स वार्ता पृच्छन्ननावेदितसप्रविष्ट ॥
सगौरव दत्तपथो निशाटैरैक्षिष्ट शैलाऽभ्रमिवेन्द्रशत्रुम् ॥ ८ ॥

अन्वय —दूरात् प्रतीहारनतो वार्ता पृच्छन् अनावेदितसप्रविष्ट निशाटै सगौ-रव दत्तपथ स शैलाऽभ्रम् इव इन्द्रशत्रुम् ऐक्षिष्ट ॥

व्याख्या—दूरात्=विप्रकृष्टदेशात्, प्रतीहारनत, द्वारपालनमस्कृत, वार्ता = प्रवृत्ति, पृच्छन्=अनुयुञ्जन्, "कुशली महाराज ?" इत्यादिवार्ता पृच्छन्नित्यर्थ । अनावेदितसप्रविष्ट = आवेदन विना कृतप्रवेश, निशाटै=राक्षसै, सगौरवं = सबहुमान, दत्तपथ = वितीर्णमार्ग, स =विभीषण, शैलाऽग्रम् इव= पर्वतशिखरम् इव, उच्चसिंहासनाऽधिष्ठितत्वादिति भाव । एतादृशम् इन्द्रशत्रुम्=रावण स्वाऽग्रजम् ऐक्षिष्ट = दृष्टवान् ॥

❀व्युत्पत्ति❀ प्रतीहारनत =प्रतिह्रियतेऽनेनेति प्रतीहार, "अकर्तरि च कारके सञ्ज्ञायाम्" इति घञ् "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घत्वम् । "द्वारि द्वास्थे प्रतीहार" इत्यमर । प्रतीहारेण नत । अनावेदितसप्रविष्ट =अनावेदित एव सप्रविष्ट । दत्तपथः=दत्त. पन्था यस्य स, "ऋक्पूरब्धू पथामानक्षे" इति अप्रत्यय । ऐक्षिष्ट ईक्षधातोर्लुङ् उपमाऽलङ्कार ॥

❀भाषाऽर्थ❀ दूरसे द्वारपालसे नमस्कृत, वार्ता ( खबर ) पूछते हुए, विना आवेदनके ही प्रविष्ट कराये गये और राक्षसोंसे मार्ग दिये गये विभीषणजीने पर्वतके शिखरके सदृश रावणको देखा ॥ ८ ॥

कृशानुवर्ष्मण्यधिरूढमुच्चै. सिंहासने संक्षयमेघभीमम् ।।
निसर्गतीक्ष्ण नयनस्फुलिङ्ग युगान्तवह्नेरिव धूमराशिम् ॥ ९ ॥

अन्वय —कृशानुवर्ष्मणि उच्चै सिंहासने अधिरूढ सक्षयमेघभीम निसर्गतीक्ष्ण नयनस्फुलिङ्ग युगान्तवह्ने धूमराशिम् इव ( इन्द्रशत्रुम् ऐक्षिष्ट ) ॥

व्याख्या—कृशानुवर्ष्मणि = अग्न्याकारे, उच्चै = उन्नते, सिंहासने = सिंहाकारसौवर्णासने, अधिरूढम् = उपविष्ट, संक्षयमेघभीम = प्रलयकालभवघनभयङ्कर निसर्गतीक्ष्णं = स्वभावरौद्रं, नयनस्फुलिङ्ग = नेत्राऽग्निकणम्, अत एव—युगाऽन्तवह्ने = प्रलयकालाऽग्ने., धूमराशिम् इव = धूमपुञ्जम् इव, इन्द्रशत्रुम् ऐक्षिष्टेति पूर्वश्लोकस्थपदाभ्या सम्बन्ध ।

❀व्युत्पत्ति❀ कृशानुवर्ष्मणि =कृशानोरिव वर्ष्म यस्य तत् कृशानुवर्ष्म, तस्मिन् । "वर्ष्म देहे प्रमाणे च सुन्दराऽऽकारयोरपि ।" इति विश्व. । सक्षयमेघभीम=सक्षयमेघ इव भीम सक्षयमेघभीमस्तम् । नयनस्फुलिङ्ग =नयनानि स्फुलिङ्गा इव यस्य स नयनस्फुलिङ्गस्तम् । अत्र वह्निसिंहासनयोर्धूमराशिरावणयोश्च उपमानोपमेयभावादुपमाऽलङ्कारः ॥

❀भाषाऽर्थ❀ विभीषणजीने अग्नितुल्य उज्ज्वल सिंहासनमें आरूढ, प्रलय कालके मेघके सदृश भयङ्कर, स्वभावसे तीक्ष्ण, अग्निकणोंके सदृश नेत्रोंसे युक्त अत एव प्रलयकालके अग्नि की धूमराशिके तुल्य रावणको देखा ॥ ९ ॥

प्रीत्याऽपि दत्तेक्षणसन्निपातं भयं भुजङ्गाऽधिपवद् दधानम् ॥
तमःसमूहाऽऽकृतिमप्यशेषानूर्जा जयन्तं प्रथितप्रकाशान् ॥ १० ॥

अन्वयः—प्रीत्या दत्तेक्षणसन्निपातम् अपि भुजङ्गाऽधिपवत् भयं दधानं तमःसमूहाऽऽकृतिम् अपि ऊर्जा अशेषान् प्रथितप्रकाशान् जयन्तम् (इन्द्रशत्रुम् ऐक्षिष्ट) ॥

व्याख्या—( स ) प्रीत्या = स्नेहेन, दत्तेक्षणसन्निपातम् अपि = समर्पितनेत्रसमूहम् अपि, भुजङ्गाऽधिपवत् = शेषवत्, भयं = भीतिं = दधानं = कुर्वन्तं, तमःसमूहाऽऽकृतिम् अपि = तिमिरनिवहाकारम् अपि, ऊर्जा = बलेन, अशेषान् = समस्तान्, प्रथितप्रकाशान् = विस्तारिततेजसः, सूर्यादीनिति भावः । जयन्तम् = अभिभवन्तम्, इन्द्रशत्रुमैक्षिष्ट ॥

ॐव्युत्पत्तिॐ दत्तेक्षणसन्निपातः = दत्तः ईक्षणानां सन्निपातो येन सः, तम् । भुजङ्गाधिपवत् = भुजङ्गाधिपेन तुल्यं, वतिप्रत्ययः । तमःसमूहाऽऽकृतिः = तमःसमूहस्येवाऽऽकृतिर्यस्य, तम् । ऊर्जा = "ऊर्ज बलप्राणनयोः" इति धातोः "भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्" इति क्विप् । अत्रोपमाद्वयस्य विरोधाभासस्य च मिथोऽनपेक्षया स्थितेः संसृष्टिः ॥

ॐभाषाऽर्थॐ स्नेहपूर्वक नेत्रसमूहोंसे देखने पर भी शेषनागकी तरह भयको उत्पन्न करने वाले, अन्धकारसमूहके सदृश आकारवाले होकर भी बलसे समस्त प्रख्यात प्रकाशवाले सूर्य आदियों को जीतने वाले रावणको विभीषणजीने देखा ॥१०॥

तं रत्नदायं जितमृत्युलोका रात्रिंचराः कान्तिभृतोऽन्वसर्पन् ॥
प्रमुक्तमुक्ताफलमम्बुवाहं संजाततृष्णा इव देवमुख्याः ॥ ११ ॥

अन्वयः—जितमृत्युलोकाः, कान्तिभृतः, सञ्जाततृष्णाः, रात्रिंचराः, रत्नदायं तम् अन्वसर्पन्, देवमुख्याः, प्रमुक्तमुक्ताफलम्, अम्बुवाहमिव ।

व्याख्या—जितमृत्युलोकाः = जितो मृत्युलोको यैस्ते, वशीकृतयमलोका इत्यर्थः । कान्तिभृतः = दीप्तिमन्तः, सञ्जाततृष्णाः = सञ्जाता तृष्णा येषान्ते, तृष्णाकुला इत्यर्थः । रात्रिंचराः = राक्षसाः, रत्नदायः = रत्नं दास्यतीति रत्नदायं, 'कर्मणि च' इत्यण्, 'आतो युग्' इति युक् । रत्नदातारमिति यावत् । तम् = विभीषणम्, अन्वसर्पन् = अन्वगच्छन्, देवमुख्याः = देवप्रधानाः, प्रमुक्तमुक्ताफलम् = प्रमुक्तानि मुक्ताफलानि येन तम्, त्यक्तमौक्तिकनामकमणिविशेषम् । अम्बुवाहमिव = यथा देवाः तृष्णाकुलाः मेघमुपगच्छन्ति, तथैव ते राक्षसाः विभीषणमुपासर्पन्निति भावः ।

ॐभाषाऽर्थॐ जैसे अमरताके कारण मृत्युलोकको जीतने वाले तेजस्वी देवगण तृष्णासे मोती वर्षाने वाले बादलके पास जाते है, उसी तरह यमलोकको वशमें

किये हुए राक्षस गण भी तृष्णाकुल होकर रत्नोंको देने वाले विभीषणके पास गये ॥ ११ ॥

स किङ्करैः कल्पितमिङ्गितज्ञैः सम्बाधकं पूर्वसमागतानाम् ॥
सिंहासनोपाश्रितचारुबाहुरध्यास्तपीठं विहितप्रणामः ॥१२॥

अन्वयः—विहितप्रणामः स इङ्गितज्ञैः किङ्करैः कल्पितं पूर्वसमागतानां सम्बाधकं पीठं सिंहासनोपाश्रितचारुबाहुः ( सन् ) अध्यास्त ॥

व्याख्या—विहितप्रणामः = कृतनमस्कारः, सः = विभीषणः इङ्गितज्ञैः = रावणाऽभिप्रायवेदिभिः, किङ्करैः = भृत्यैः, कल्पितम् = उपनीतं, पूर्वसमागतानां = प्रथमसमायातानां जनानां, सम्बाधकं = सङ्कोचकारकं पीठम् = आसनं, सिंहाऽऽसनोपाश्रितचारुबाहुः = रावणसिंहासनस्थितसुन्दरभुजः सन्, अध्यास्त = अधिरूढः ॥

ॐव्युत्पत्तिॐ इङ्गितज्ञैः = इङ्गितं जानन्तीति इङ्गितज्ञास्तैः, "आतोऽनुपसर्गे कः" इति कप्रत्ययः । सम्बाधकं = सम्बाधत इति, "ण्वुल्तृचौ" इति ण्वुल् । पीठम् = "अधिशीङ्स्थाऽऽसां कर्म" इति कर्मत्वम् । सिंहाऽऽसनोपाश्रितचारुबाहुः = सिंहाऽऽसनं उपाश्रितः चारुः बाहुः यस्य सः । अध्यास्त = अधिपूर्वकात् "आस उपवेशने" इति धातोर्लङ् ॥

ॐभाषाऽर्थॐ रावणको नमस्कार करने वाले विभीषणजी रावणके अभिप्रायको जानने वाले नौकरोंसे लाये गये और पहले आये हुए जनोंको सङ्कोच करने वाले सिंहासन पर सुन्दर बाहुको रखते हुए आसन पर, बैठ गये ॥ १२ ॥

ततो दशाऽऽस्यः क्षुभिताऽहिकल्पं दीप्राऽङ्गुलीयोपलमूढरत्नम् ॥
अनेकचञ्चन्नखकान्तिजिह्वं प्रसार्य पाणिं समितिं बभाषे ॥ १३ ॥

अन्वयः—ततो दशाऽऽस्यः क्षुभिताऽहिकल्पं दीप्राऽङ्गुलीयोपलम् ऊढरत्नम् अनेकचञ्चन्नखकान्तिजिह्वं पाणिं प्रसार्य समितिं बभाषे ॥

व्याख्या—ततः = विभीषणोपवेशनाऽनन्तरं, दशाऽऽस्यः = रावणः, क्षुभिताऽहिकल्पं = क्षुब्धसर्पसदृशं, क्रुद्धविस्तृतफणसर्पतुल्यमित्यर्थः । दीप्राऽङ्गुलीयोपलम् = दीपनशीलानामिकारत्नम्, अत एव—ऊढरत्नम् = धृतमणिम्, अनेन सर्पसादृश्यं द्योतितम् । अनेकचञ्चन्नखकान्तिजिह्वम् = बहुचलन्नखरच्छविरसनं, पाणिं = शयं, प्रसार्य = प्रसारितं कृत्वा, समितिं = सभां, लक्षणया—सभास्थान् जनान् = बभाषे = उवाच ॥

ॐव्युत्पत्तिॐ क्षुभिताऽहिकल्पम् = ईषदसमाप्तः क्षुभिताऽहिः = क्षुभिताऽहिकल्पस्तम्, "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः । दीप्राऽङ्गुलीयोपलः =

दीपनशीलो दीप्र, "नमिकम्पिस्म्यजसकमहिंसदीपो र" इति रप्रत्यय । अङ्गुलौ भवमङ्गुलीय, "जिह्वामूलाऽङ्गुलेश्छ" इति छ प्रत्यय । अङ्गुलीयस्योपल अङ्गुलीयोपल दीप्र स यस्मिन्, तम् । अनेकचञ्चन्नखकान्तिजिह्वम् = नखकान्तयो जिह्वा इव इति नखकान्तिजिह्वा, अनेका चञ्चन्त्यो नखकान्तिजिह्वा यस्य स, तम् ।

❀भाषाऽर्थ❀ विभीषण के बैठने के अनन्तर रावणने क्रुद्ध अत एव फणा विस्तृत करने वाले सर्पके सदृश दीपनशील अगूठीके रत्न वाले, धारण किये गये रत्नोंसे युक्त, अनेक चमकने वाली नखकान्तिरूप जिह्वासे सम्पन्न ( सर्प सदृश ) हाथको फैलाकर सभास्थ पुरुषोंको कहा ॥

शक्तैः सुहृद्भिः परिदृष्टकार्यैराम्नातिभि र्नीतिषु बुद्धिमद्भि ॥
युष्मद्विधैः सार्धमुपायविद्भि सिध्यन्ति कार्याणि सुमन्त्रितानि ॥१४॥

अन्वय —"शक्तै सुहृद्भि परिदृष्टकार्यै नीतिषु आम्नातिभि बुद्धिमद्भि" उपायविद्भि युष्मद्विधैः सार्धं सुमन्त्रितानि कार्याणि सिध्यन्ति ॥

व्याख्या —शक्तै = समर्थै, न मन्त्रमात्रकुशलैरिति भाव । सुहृद्भिः = मित्रे परिदृष्टकार्यै = अवलोकितकृत्यै, यत अपरिदृष्टकार्या विद्वांसोऽपि मुह्यन्ति इति तात्पर्यम् । नीतिषु = नयेषु, आम्नातिभि = अभ्यस्तै, न केवल दृष्टव्यवहारै, अभ्यस्तनीतिशास्त्रैरपीत्यभिप्राय । बुद्धिमद्भि = ज्ञानवद्भि, न केवल शुकादिवदधीतिभि, बुद्धिबलैरूहापोहकुशलैरित्याकूतम् । उपायविद्भि = सामाद्युपायवेदिभि, युष्मद्विधै = युष्मत्सदृश, सार्धं = सह, सुमन्त्रितानि = कृतसुमन्त्राणि, कार्याणि = कृत्यानि, सिध्यन्ति = सिद्धि प्राप्नुवन्ति ॥

❀व्युत्पत्ति❀ परिदृष्ट कार्यै = परिदृष्ट कार्य येस्त । नीतिषु = "आम्नातिभि" इति पदेन योगे "क्तस्येन्विषयस्य कर्मण्युपसख्यानम्" इति कर्मणि सप्तमी । आम्नातिभि = आम्नातमेभिरिति आम्नातिनस्तै "इष्टादिभ्यश्च" इतीनिप्रत्यय । युष्मद्विधै = युष्माकमिव विधा येषा ते युष्मद्विधास्तै, व्यधिकरणबहुव्रीहि । "सार्ध" पदेन योगे "सह युक्तेऽप्रधाने" इति तृतीया । अत्र परिकराऽलङ्कार, सोदाहरण तल्लक्षण यथा—"अलङ्कार परिकर साऽभिप्राये विशेषणे । सुधाऽशुकलितोत्तसस्ताप हरतु व शिव ॥" इति । इन्द्रवज्रा वृत्तम् ॥

❀भाषाऽर्थ❀ समर्थ, मित्र, कार्यो को देखने वाले, नीतियोंमें अभ्यस्त, बुद्धिमान्, साम, दान आदि उपायोंको जानने वाले तुम्हारे ऐसे लोगोंके साथ सुमन्त्रित कार्य सफल होते है ॥ १४ ॥

उपेक्षिते वालिखराऽऽदिनाशे, दग्धे पुरे, ऽक्षे निहते स-भृत्ये, ॥
सैन्ये द्विपा सागरमुत्तितीर्षावनन्तर ब्रूत, यदत्र युक्तम् ॥ १५ ॥

अन्वयः—वालिखरादिनाशे उपेक्षिते, पुरे दग्धे, सभृत्ये अक्षे निहते द्विषा सैन्ये सागरम् उत्तितीर्षौ अत्र यत् युक्तम् अनन्तरं ब्रूत ॥

व्याख्या—वालिखरादिनाशे = वालिखरादिवधे, उपेक्षिते = कृतोपेक्षे सति, पुरे = लङ्कानगरे, दग्धे = भस्मीकृते, सभृत्ये = सानुचरे, अक्षे = अक्षकुमारे, निहते = निषूदिते, एवं च—द्विषा = शत्रूणा, सैन्ये = सैनिके, सागरं = समुद्रम्, उत्तितीर्षौ = उत्तरीतुम् इच्छौ सति, अत्र = अस्मिन् विषये, यत्, युक्तम् = उचितम्, अनन्तरम् = अनन्तरकृत्यं ब्रूत = कथयत ।

❀व्युत्पत्तिः❀ सभृत्यै = भृत्यैः सहितः सभृत्यस्तस्मिन् । सैन्ये = सेना एव सैन्यं, तस्मिन् । "चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्" इति स्वार्थे ष्यञ् । उत्तितीर्षौ = उत्पूर्वकात् "तॄ प्लवनसन्तरणयोः" इति सन्नन्ताद्धातोः "सनाशंसभिक्ष उः" इति उप्रत्ययः । "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" इति पुंवद्भावात्पक्षे "इकोऽचि विभक्तौ" इति नुम् न ।

❀भाषाऽर्थः❀ वाली, खर आदियों का नाश उपेक्षित होने पर, शहरके जलाये जाने पर, नौकरोंके साथ अक्षयकुमारके मारे जाने पर और शत्रु सेनाके समुद्रपार जाने की इच्छा करने पर इस विषय में जो उचित है अनन्तर कार्य को बतलाओ ॥ १५ ॥

भुजांऽसवक्षःस्थलकार्मुकासीन् गदाश्च शूलानि च यातुधानाः ॥
परामृशन्तः प्रथिताऽभिमानाः प्रोचुः प्रहस्तप्रमुखा दशाऽऽस्यम् ॥१६॥

अन्वयः—भुजाऽसवक्षःस्थलकार्मुकाऽसीन् गदाः शूलानि च परामृशन्तः प्रथिताऽभिमानाः प्रहस्तप्रमुखाः यातुधानाः दशाऽऽस्यं प्रोचुः ।

व्याख्या—भुजाऽसवक्षःस्थलकार्मुकाऽसीन् = बाहुस्कन्धोरःस्थलचापखड्गान्, गदाः = आयुधविशेषान्, शूलानि च = आयुधविशेषांश्च, परामृशन्तः = स्पृशन्तः, प्रथिताऽभिमानाः = प्रख्याताऽहङ्काराः, प्रहस्तप्रमुखाः = प्रहस्तप्रधानाः, यातुधानाः = राक्षसाः, दशाऽऽस्यं = रावणं, प्रोचुः = प्रोक्तवन्तः ॥

❀व्युत्पत्ति❀ भुजाऽसवक्षःस्थलकार्मुकाऽसीन् = भुजश्च असश्च वक्षःस्थलं च कार्मुकं च असिश्चेति भुजाऽसवक्षःस्थलकार्मुकासयस्तान् । प्रथिताऽभिमानाः = प्रथितोऽभिमानो येषां ते । प्रहस्तप्रमुखाः = प्रहस्तः तन्नामा मन्त्री प्रमुखो येषां ते ॥

❀भाषार्थ❀ बाहु, स्कन्ध, छाती, धनु, खड्ग, गदा और शूलों का स्पर्श करते हुए प्रख्यात अभिमान वाले प्रहस्त आदि राक्षसोंने रावणको कहा ॥ १६ ॥

अखण्ड्यमानं परिखण्ड्य शक्रं त्वं पण्डितंमन्यमुदीर्णदण्डः ॥
नराऽऽभियोगं नृभुजां प्रधान ! मन्त्रोन्मुखः किं नयसे गुरुत्वम् ॥१७॥

अन्वय—"हे नृभुजा प्रधान ! उदीर्णदण्ड त्वम् अखण्ड्यमानं पण्डितमन्य शक्र परिखण्ड्य मन्त्रोन्मुख (सन्) नराभियोगं गुरुत्व किं नयसे ॥

व्याख्या—हे नृभुजा प्रधान = हे राक्षसश्रेष्ठ !, उदीर्णदण्ड = उद्रिक्तबल, त्वम्, अखण्ड्यमानम् = अखण्डनीयाऽहङ्कार, पण्डितमन्य = पण्डितमात्मान मन्यमानं, शक्रम् = इन्द्र, परिखण्ड्य = जित्वा, मन्त्रोन्मुख = मन्त्रप्रवण सन् 'सिध्यन्ति कार्याणि सुमन्त्रितानि' इत्युक्त्वेति भावः । नराभियोगं = मनुष्ययुद्धं, गुरुत्व = गौरव, किं = किमर्थं, नयसे = प्रापयसि ॥

※व्युत्पत्ति.※ नृभुजा = नॄन् भुञ्जन्तीति नृभुजस्तेषाम् । उदीर्णदण्ड = उदीर्णो दण्डो यस्य स, अखण्ड्यमानम् = अखण्ड्यो मानो यस्य स' । पण्डितम्मन्यं = "आत्ममाने खश्च" इति खश् खित्त्वात् "अरुर्द्विषदजन्तस्य मुम्" इति मुम् । नयसे = क्रियाफलस्य कर्त्रभिप्रायत्वादात्मनेपदम् ॥

※भाषाऽर्थ ※ हे राक्षसश्रेष्ठ ! बढ़े हुए बलवाले आप, अखण्डनीय अभिमानसे युक्त अपनेको पण्डित मानने वाले इन्द्रको भी जीत कर (अभी) मन्त्रमे तत्पर होते हुए मनुष्यके साथ होने वाले युद्धको गुरुत्वमे क्यों पहुँचाते है ? ॥ १७ ॥

निर्यत्स्फुलिङ्गाऽऽकुलधूमराशिं किं ब्रूहि भूमौ पिनषाम भानुम् ।
आदन्तनिष्पीडितपीतमिन्दुं ष्ठीवाम शुष्केक्षुलताऽस्थिकल्पम् ॥१८॥

अन्वय.—निर्यत्स्फुलिङ्गाऽऽकुलधूमराशिं भानुं किं भूमौ पिनषाम, आ दन्तनिष्पीडितपीत शुष्केक्षुलताऽस्थिकल्पम् इन्दुं किं ष्ठीवाम, ब्रूहि ॥

व्याख्या—निर्यत्स्फुलिङ्गाऽऽकुलधूमराशि = निर्गच्छदग्निकणाऽऽकुलधूमसमूह, भानु = सूर्य, किं, भूमौ = पृथिव्या, पिनषाम = चूर्णयाम, आः = कोपद्योतकमव्ययमेतत्, दन्तनिष्पीडितपीत = दशनबाधितपीतम, अत एव शुष्केक्षुलताऽस्थिकल्प = नीरसरसालव्रततिदृढभागसदृशम् इन्दु = चन्द्रमस, किं, ष्ठीवाम = निरस्याम, ब्रूहि = कथय, वाक्याऽर्थ कर्म ॥

※व्युत्पत्ति ※ निर्यत्स्फुलिङ्गाऽऽकुलधूमराशि = निर्यन् य स्फुलिङ्गस्तेन आकुलो धूमराशिर्यस्य, तम् । पिनषाम = "पिष्लृ सचूर्णने" इति धातो "लोट् च" इति प्रश्ने लोट् । "रुधादिभ्य श्नम्" इति श्नम् । आ "अस्तु स्यात्कोपपीडयो" इत्यमर । दन्तनिष्पीडतपीत = प्राक् दन्तनिष्पीडित' पश्चात्पीतो दन्तनिष्पीडितपीतस्तम् । "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽधिकरणेन" इति पूर्वकालसमास । शुष्केक्षुलताऽस्थिकल्प = शुष्का चाऽसौ इक्षुलता, "रसाल इक्षु." इत्यमर । शुष्केक्षुलताया अस्थि शुष्केक्षुलताऽस्थि, ईषदसमाप्त तत् । कल्पप्प्रत्यय. । ष्ठीवाम =

"ष्ठिवु निरसने" इति धातोर्लोट् "ष्ठिवुक्लमुचमां शिति", इति दीर्घत्वम् । अत्रोपमाऽलङ्कार । इन्द्रवज्रा वृत्तम् ।

॥भाषाऽर्थ॥ निकलते हुए अग्निकणोंसे आकुल धूमराशिसे युक्त सूर्यको क्या पृथ्वीमें पीस दे ? ओ ! पहले दातोंसे पीडित पीछे पीये गये अत एव सूखी हुई इक्षुलताके अस्थिके सदृश चन्द्रको क्या थूक दे ? बतलाइए ॥ १८ ॥

सराघवैः किं बत वानरैस्तैर्यैः प्रातराशोऽपि न कस्यचिन्न ॥
सस्थाणुकैलासधराऽभिधत्स्व, किं द्यौरधोऽस्तु क्षितिरन्तरिक्षे ॥१९॥

अन्वय —हे सस्थाणुकैलासधर ! तैः सराघवैः वानरैः किं ? बत ! यैः नः कस्यचित् प्रातराशोऽपि न । किं द्यौः अधः अस्तु ? क्षितिः किम् अन्तरिक्षे अस्तु ? अभिधत्स्व ॥

व्याख्या—हे सस्थाणुकैलासधर = हे रुद्रसहितकैलासधारक ! तैः = पूर्वोक्तैः, सराघवैः = राघवसहितैः, वानरैः = कपिभिः, किं प्रयोजनं, बत = खेदोऽस्ति । यैः = सराघवैर्वानरैः, नः = अस्माकं, कस्यचित् = एकस्य, प्रातराशोऽपि = प्रभातभोजनमपि, न = न भवति, किं, द्यौः =आकाशम्, अधः =निम्नस्थाने, अस्तु =भवतु, क्षितिः = पृथिवी अन्तरिक्षे = उपरिष्टात्, अस्तु = भवतु, अभिधत्स्व=ब्रूहि, रामादिवधरूपे तुच्छकार्ये वयं न प्रेरणीया इति भावः ॥

॥व्युत्पत्ति॥ सस्थाणुकैलासधर=स्थाणुना सहितः सस्थाणुः, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभावः । धारयतीति धरः, पचाद्यच् । सस्थाणुश्चाऽसौ कैलासस्तस्य धरः, तत्सम्बुद्धौ । कर्मणः शेषत्वविवक्षा । अभिधत्स्व = अभिपूर्वकात् "डुधाञ् धारणपोषणयोः" इति धातोर्लोट् । 'ब्रूतेऽभिधत्ते गदति व्याहरत्यपि जल्पति ।" इति आख्यातचन्द्रिका ॥

॥भाषाऽर्थ॥ महादेवके साथ कैलास पर्वतको धारण करने वाले हे महाराज ! राम और लक्ष्मणके साथ उन वानरोंसे क्या प्रयोजन है ? जिनसे किसी एक राक्षसका भी प्रातभोजन ( जलखई ) भी सम्पन्न नहीं होता है । क्या आकाश नीचे और पृथ्वी ऊपर हो जाय ? बतलाइए ॥ १९ ॥

युष्मत्प्रमादेनैव पुरदाहोऽपि, न शत्रुसामर्थ्येनेति सूचयति—

चापल्ययुक्तस्य हरेः कृशानुः समेधितो बालधिभाक् त्वदीयैः ॥
शत्रोर्वध्यस्य गलन्नधाक्षीद् राजन् ! प्रमादेन निजेन लङ्काम् ॥ २० ॥

अन्वय —हे राजन् ! निजेन प्रमादेन शत्रोर्वध्यस्य चापल्ययुक्तस्य हरेः बालधिभाक् कृशानुः त्वदीयैः समेधितः गलन् लङ्काम् अधाक्षीत् ॥

व्याख्या—हे राजन् = हे भूपाल !, निजेन = स्वकीयेन, प्रमादेन = अनवधानत्वेन शस्त्रेण = आयुधेन, वध्यस्य = वधाऽर्हस्य, चापल्ययुक्तस्य = चाञ्चल्योपेतस्य, हरे = वानरस्य, हनूमत इत्यर्थः । बालधिभाक् = पुच्छाऽग्रसमाश्रित, कृशानुः = अग्नि , त्वदीयैः = भवदीयै , भृत्यैरिति शेष । समेधित = सवर्द्धित , घृततैलादिभिरिति शेष । गलन् = पुच्छाग्रात्पतन् , गृहात्गृहान्तरगमनेनेति शेष । लङ्का = लङ्कानगरीम् , अधाक्षीत् = दग्धवान् । वधाऽर्हस्य शत्रुदूतस्य वधाऽनाचरणे नैवेदृशो व्यतिकर सवृत्त इति भावः ॥

॥व्युत्पत्ति॥ वध्यस्य = वधमर्हतीति वध्यस्तस्य, "दण्डादिभ्य" इति य । "वध्य· शीर्षच्छेद्य इमौ समौ" इत्यमर । चापल्ययुक्तस्य = चपलस्य भाव· कर्म वा चापल्य, "गुणवचनब्राह्मणादिभ्य कर्मणि च" इति ष्यञ् । पक्षे "हायनाऽन्तयुवादिभ्योऽण्" इत्यणि "चापलम्" इत्यपि । चापल्येन युक्तस्य । बालधिभाक् = बालधि भजतीति, "भजोण्वि" इति ण्विप्रत्यय । अधाक्षीत् = "दह भस्मीकरणे" इति धातोर्लुङ् । "एकाचो बशो भष् झषन्तस्य स्ध्वो" इति भष्भावेन धत्वम् । "वदव्रजहलन्तस्याऽच" इति वृद्धि । "दादेर्धातोर्घ" इति हस्य घत्वम् ॥

॥भाषाऽर्थ॥ हे महाराज ! अपने प्रमादसे शस्त्रसे मारनेके लायक, चाञ्चल्ययुक्त बानरके पुच्छाग्रमें आश्रित आपके भृत्योंसे घृत, तैल आदि पदार्थोंसे बढाया जाकर पूछके अग्र भागसे गिरते हुए अग्निने लङ्काको जला दिया ॥ २० ॥

अथाऽञ्चितोरस्कमुदीर्णदृष्टि कृत्वा विवक्षाप्रवणं शरीरम् ॥
विवृत्तपाणि र्विहितोत्तराऽर्थं विभीषणोऽभाषत यातुधानान् ॥ २१ ॥

अन्वय — अथ अञ्चितोरस्क शरीर विवक्षा प्रवण कृत्वा उदीर्णदृष्टि विवृत्तपाणि विभीषण यातुधानान विहितोत्तराऽर्थम् अभाषत ॥

व्याख्या—अथ = प्रहस्तवचनाऽनन्तरम् , अञ्चितोरस्क = पूजितवक्ष स्थल हाराऽलङ्कृतत्वादिति शेष । शरीर = देह, विवक्षाप्रवण = वचनेच्छाऽभिमुख, कृत्वा = विधाय, उदीर्णदृष्टि = प्रहस्ताऽभिमुखनयन , विवृत्तपाणि = प्रहस्ताऽभिमुखदक्षिणहस्त , विभीषण = रावणाऽनुज , यातुधानान् = राक्षसान् , विहितोत्तराऽर्थं = प्रतिपादितश्रेष्ठाऽभिधेयं यथा स्यात्तथा, अभाषत = भाषितवान् ॥

॥व्युत्पत्ति॥ अञ्चितोरस्कम् = अञ्चितम् उरो यस्मिस्तत् , "उर प्रभृतिभ्य कप्" इति समासाऽन्त कप्प्रत्यय । अत्र अञ्चधातो पूजाऽर्थत्वात् "अञ्चे· पूजायाम्" इतीट् "नाऽञ्चे पूजायाम्" इति नलोपप्रतिषेध । विवक्षाप्रवण=

वक्तुमिच्छा विवक्षा, सन्नन्तात् "वच परिभाषणे" इति धातोः "अ प्रत्ययात्" इति अप्रत्यय , टाप् । विवक्षाया प्रवणम् । विवृत्तपाणि.=विवृत्त. पाणिर्येन स । विहितोत्तराऽर्थं=विहित' उत्तर अर्थो यस्मिन्कर्मणि तद्यथा स्यात् तथा । "उपर्युदीच्यश्रेष्ठेष्वप्युत्तर स्यात् इति "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।" इत्यमर ॥

॥भाषाऽर्थ॥ प्रहस्तके भाषणके अनन्तर हारसे पूजित वक्ष स्थलवाले शरीर को बोलनेकी इच्छासे सम्मुख कर नेत्रोंको और दक्षिण हस्तको प्रहस्तके सम्मुख रख कर विभीषणजीने राक्षसों को जिस प्रकारसे श्रेष्ठ प्रतिपादन होता है उस प्रकार से कहा ॥ २१ ॥

'युद्धाय राज्ञा सुभृतैर्भवद्भि. संभावनायाः सदृशं यदुक्तम् ॥
तत् प्राणपण्यैर्वचनीयमेव प्रज्ञा तु मन्त्रेऽधिकृता न शौर्यम् ॥२२॥

अन्वय'—"राज्ञा युद्धाय सुभृतै' भवद्भि संभावनाया॰ सदृश यत उक्त, तत् प्राणपण्यै वचनीयम् एव, तु मन्त्रे प्रज्ञा अधिकृता, शौर्यं न ॥

व्याख्या—राज्ञा = भूपालेन, रावणेनेत्यर्थ , युद्धाय = समराय, सुभृतै. = संवर्द्धितै , भवद्भि = युष्माभि' प्रहस्तप्रभृतिभिरिति भाव । सभावनाया = प्रतिष्ठाया , सदृशं = तुल्य, यत् , "भान पिनषाम" इत्यादिकमिति भाव' । उक्तं = भाषित, तत् = भाषण, प्राणपण्यै = असुव्यवहार्यै , राजभृतत्वात्तद्रक्षणाऽर्थमिति शेष । भवादृशैरिति भाव । वचनीयम् एव=परिभाषणीयम् एव, उक्तमर्थं सपरिसख्यमाक्षिपति-प्रज्ञेति । तु = परन्तु, मन्त्रे = राजकीये कर्तव्याऽर्थनिर्णायके गुह्यवादे, प्रज्ञा=बुद्धि , अधिकृता=प्रधानत्वेन विहिता, शौर्यं = शूरता, न = न अधिकृतम्, यदि मन्त्रेऽपि शौर्यस्यैव प्राधान्य, तदा बुद्धिर्निरवकाशा स्यादिति भाव. ॥

॥व्युत्पत्ति॥ सभावनाया =तुल्यार्थकेन सदृशपदेन योगे "तुल्याऽर्थैरतुलोपमाभ्या तृतीयाऽन्यतरस्याम्" इति षष्ठी, पक्षे तृतीया च । प्राणपण्यै =प्राणा एव पण्या येषां, तैः । वचनीय=वक्तु योग्य, "तव्यत्तव्याऽनीयरः" इति अनीयर् । मन्त्रे="वेदभेदे गुह्यवादे मन्त्र " इत्यमर । अत्र तृतीयचरणे प्रयुक्तस्य "वचनीयम् एव" इत्यर्थस्य "प्रज्ञा तु मन्त्रेऽधिकृता" इत्यनेन प्रतिषेधाऽर्थस्य द्योतनात् आक्षेपाऽलङ्कार , सोदाहरण तल्लक्षण यथा—

"आक्षेपस्तु प्रयुक्तस्य प्रतिषेधो विचारणात् ।
चन्द्र ! सन्दर्शयाऽऽत्मानमथवाऽस्ति प्रियामुखम् ॥" इति ।

एव च मन्त्रे शौर्यस्याधिकरण निषिध्य प्रज्ञायानि यन्त्रणात्परिसख्याऽलङ्कारस्तल्लक्षमपि सोदाहरण यथा—

"परिसङ्ख्या निषिध्यैकमन्यस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षय प्रदीपेषु, स्वान्तेषु न नतभ्रुवाम् ॥" इति ।

तथा च द्वयोर्मिथोऽनपेक्षया स्थिते संसृष्टि । इन्द्रवज्रा वृत्तम् ॥

❀भाषाऽर्थ❀ महाराजसे युद्धके लिए संवर्द्धित आपलोगोंने अपनी प्रतिष्ठाके अनुरूप जो कहा, वह प्राणोंका व्यवहार करने वाले वीरपुरुषोंको कहना ही चाहिए। परन्तु मन्त्रमें बुद्धि प्रधान है, शौर्य नहीं ॥ २२ ॥

अथ "नराऽभियोग किं गुरुत्वं नयसे ?" इत्यस्योत्तर प्रतिपादयति—

**यच्चापि यत्नाऽऽद्दतमन्त्रवृत्तिर्गुरुत्वमायाति नराऽभियोगः ॥**
**वशीकृतेन्द्रस्य कृतोत्तरोऽस्मिन् विध्वंसिताऽशेषपुरो हनूमान् ॥२३॥**

अन्वय.—वशीकृतेन्द्रस्य यत्नाऽऽद्दतमन्त्रवृत्ति नराऽभियोग गुरुत्वम् आयाति (इति) यच्च उक्तम्, अस्मिन् विध्वंसिताऽशेषपुरो हनूमान् कृतोत्तर. ॥

व्याख्या—वशीकृतेन्द्रस्य = निर्जितशक्रस्य, यत्नाऽऽद्दतमन्त्रवृत्ति = उद्योगसत्कृतमन्त्रवृत्ति, नराऽभियोग = मनुष्येण युद्ध, गुरुत्व = गौरवम्, आयाति = आगच्छति, (इति = एवम्) यच्च, उक्तम् = अभिहितम्, अस्मिन्–अत्राऽर्थे, विध्वसिताऽशेषपुर = विनाशितसमस्तनगरीक, हनूमान् = रामदूत, कृतोत्तर = दत्तप्रतिवाक्य, अस्तीति शेष । यस्य दूत एतादृशो विक्रान्तः स स्वामी कीदृश स्यादिति विचारणीयोऽय विषय इति भावः ।

❀व्युत्पत्तिः❀ वशीकृतेन्द्रस्य = वशीकृत इन्द्रो येन, तस्य। यत्नाऽऽद्दतमन्त्रवृत्ति = यत्नेनाऽऽद्दता मन्त्रवृत्तिर्यस्मिन् स । विध्वसिताऽशेषपुर = विध्वसिता अशेषा पूर्येन स, "ऋक्पूरब्धू पथामानक्षे" इति समासाऽन्त. अ प्रत्यय । कृतोत्तर = कृतमुत्तर येन स । "प्रतिवाक्योत्तरे समे" इत्यमर ॥

❀भाषाऽर्थ❀ इन्द्रको जीतनेवाले रावणका जिसमे मन्त्रवृत्तिका यत्नसे आदर किया गया है ऐसा मनुष्य युद्ध गौरवको प्राप्त होता है ऐसा जो कहा गया है, इस अर्थमें समस्त लङ्कापुरीको विध्वस्त करनेवाले हनूमान्ने उत्तर दे दिया है ॥ २३ ॥

**अग्निः प्रमादेन ददाह लङ्कां वध्यस्य देहे स्वयमेधितश्चेत् ॥**
**विमृश्य तद् देवधियाऽभिधत्त ब्रह्माऽस्त्रबन्धोऽपि यदि प्रमाद. ॥२४॥**

अग्नि प्रमादेन लङ्कामधाक्षीदित्यत्रोत्तरमाह—

अन्वयः—वध्यस्य देहे स्वयम् एधित. अग्नि प्रमादेन लङ्का ददाह (इति) यदि चेत्, ब्रह्माऽस्त्रबन्धोऽपि (तर्हि) प्रमाद, तत् देवधिया विमृश्य अभिधत्त ॥

व्याख्या—वध्यस्य = वधार्हस्य, हनूमत इत्यर्थ, देहे = शरीरे, लक्षणया शरी-

रैकदेशे पुच्छाग्रे, स्वयम् = आत्मना, एधित =दीपित:, अग्नि =अनल , प्रमादेन= अनवधानत्वेन, लङ्का = लङ्कापुरीं, ददाह = दग्धवान् , ( इति=एवम् ) यदि चेत् , ब्रह्माऽस्त्रबन्धोऽपि = ब्रह्माऽऽयुधबन्धोऽपि, तर्हि, प्रमाद =अनवधानत्वम् , तत् देवधिया=प्रकाशमानबुद्ध्या, सात्विकबुद्ध्या इत्यर्थ । विमृश्य=विचार्य, अभिधत्त= ब्रूत, येन हनूमता तादृश ब्रह्माऽस्त्रबन्धन खण्डित, तस्य किमशक्य कुतो वा तद्वध इति भाव ॥

❀व्युत्पत्ति❀ एधित =णिजन्तात् "जिइन्धी दीप्तौ" इति धातोर्निष्ठाया क्तप्रत्यय । देवधिया=दीव्यतीति देवी, पचाद्यच् । देवट् इति टित्वात् "टिड्ढाणञि"-त्यादिना ङीप् । देवी चाऽसौ धीर्देवधीस्तया, "पुवत्कर्मधारयजातीयदेशीयेषु" इति पूर्वपदस्य पुवद्भाव । अभिधत्त = अभिपूर्वकधाधातोर्लोट् । "दधस्तथोश्च" इत्यभ्यास-दकारस्य भष् , धातोश्च खरि चर्त्वम् ॥

❀भाषाऽर्थ❀ वधके योग्य हनूमान् के शरीरमे सुलगाये हुए अग्निने प्रमादसे लङ्का जला दी है, उसी तरह ब्रह्माऽस्त्रसे बन्धन भी प्रमाद है, सो इसे सात्त्विक बुद्धिसे विचार कर कहो ॥ २४ ॥

पराऽभियोगस्य निरूपणीयत्वं दर्शयति—

**जगन्त्यमेयाऽद्भुतभावभाञ्जि जिताऽभिमानाश्च जना विचित्राः ॥**
**कार्ये तु यत्न कुरुत प्रकृष्ट मा नीतिगर्भान् सुधियोऽवमन्ध्वम् ॥२५॥**

अन्वयः—जगन्ति अमेयाद्भुतभावभाञ्जि, जनाश्च जिताऽभिमाना विचित्रा । कार्ये तु प्रकृष्ट यत्न कुरुत । नीतिगर्भान् सुधियो मा अवमन्ध्वम् ॥

व्याख्या—जगन्ति = भुवनानि, अमेयाद्भुतभावभाञ्जि = असख्यविचित्राऽ-भिप्राययुक्तानि, जना = तत्रत्या लोकाश्च, जिताऽभिमाना =जिताऽहङ्कारा , विचित्रा = अनेकप्रकारा:, शक्तिदेशकालवशादिति शेष । कार्ये तु = कर्मणि तु, प्रकृष्टम् = उत्तम, यत्नम्=उद्योग, कुरुत=विधत्त, नीतिगर्भान्=नयाऽभिज्ञानित्यर्थ , सुधिय = विदुष , मा अवमन्ध्व = नो तिरस्कुरुत, नीत्यैव कार्यं सिध्यत्यतो नीतिज्ञान्मा परिभूतेति भाव ॥

❀व्युत्पत्ति.❀ अमेयाऽद्भुतभावभाञ्जि = मातु योग्या मेया , "माङ् माने" इति धातो "अचो यत्" इति यत् , "ईद्यति" इत्यात ईत्वम्, "सार्वधातुकाऽऽर्धधातु-कयो " इति गुण । न मेया अमेया , एतादृशा ये अद्भुतभावास्तान् भजन्तीति, "भजो ण्वि " इति ण्वि । जिताऽभिमाना = जित ( अन्यैरिति शेषः ) अभिमानो येषा ते, "तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव ।" इति न्यायादिति भावः ।

तेनात्मन्यभिमानो न कर्तव्य इत्युक्त भवतीति तात्पर्यम् । नीतिगर्भान्=नीति-(षाड्गुण्यादिज्ञानम्) गर्भे येषा, तान् । मा अवमन्ध्व="माङि लुङ्" इति लुङ् । "धि च" इति सिचो लोप' ॥

※भाषाऽर्थ※ जगत् असंख्य आश्चर्य पूर्ण भावसे युक्त है, वहाँ रहनेवाले जन भी जीते गये अभिमानवाले और विचित्र है । कार्यमें उत्तम यत्न करो और नीतिसम्पन्न विद्वानोंका अपमान मत करो ॥ २५ ॥

विजिगीषोर्वर्तनप्रकारमुपदिशति—

वृद्धिक्षयस्थानगतामजस्र वृत्ति जिगीषुः प्रसमीक्षमाण ॥
घटेत सन्ध्याऽऽदिषु यो गुणेषु, लक्ष्मीर्न त मुञ्चति चञ्चलाऽपि ॥२६॥

अन्वय —यो जिगीषु वृद्धिक्षयस्थानगता वृत्तिम् अजस्रं प्रसमीक्षमाण (सन्) सन्ध्याऽऽदिषु गुणेषु घटेत, त लक्ष्मी चञ्चला अपि न मुञ्चति ॥

व्याख्या—य , जिगीषु =जयाऽभिलाषी राजा, वृद्धिक्षयस्थानगता = वृद्धिक्षयस्थानरूपफलप्राप्ता, वृत्ति = वर्तन, स्वस्य परस्य चेति शेष । अजस्र = सतत, प्रसमीक्षमाण = विचारयन् , सन्ध्यादिषु = सन्धिप्रभृतिषु, सन्धिविग्रहयानाऽऽसनसश्रयद्वैधीभावेषु इति भाव । गुणेषु, घटेत=चेष्टेत, तं = तादृश जिगीषु, लक्ष्मी = राज्यश्री , चञ्चलाऽपि = चपलाऽपि, न मुञ्चति = न त्यजति, गुणशृङ्खलाबद्धत्वादिति भाव ॥

※व्युत्पत्ति※ वृद्धिक्षयस्थानगता—वृद्धिश्च क्षयश्च स्थान च वृद्धिक्षयस्थानानि, एतानि त्रीणि क्षत्रियन्यायेन उदयपदवाच्यानि । वृद्धिक्षयस्थानानि गता वृद्धिक्षयस्थानगता, ताम् । "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्ताऽऽपन्नै" इति द्वितीयातत्पुरुष । घटेत="घट चेष्टायाम्" इति धातोर्लिङ् । अत्र लक्ष्म्या मोचनरूपस्य कार्यस्य चञ्चलत्वरूपे कारणे सत्यपि अनुत्पत्तेर्विशेषोक्तिरलङ्कार., सोदाहरण तल्लक्षण यथा—

"विशेषोक्तिरनुत्पत्ति कार्यस्य सति कारणे ।
नमन्तमपि धीमन्त न लङ्घयति कश्चन ॥" इति ॥

※भाषाऽर्थ※ जो जयाऽभिलाषी राजा वृद्धि, क्षय और स्थान इनमें प्राप्त अपनी और शत्रुकी वृत्तिको निरन्तर विचार करता हुआ सन्धि आदि गुणोंमे चेष्टा करेगा, उसको लक्ष्मी चञ्चल होती हुई भी नहीं छोड़ती है ॥ २६ ॥

क्वचिद्विजिगीषोरपि परवृद्ध्युपेक्षणीयत्व दर्शयति—

उपेक्षणीयैव परस्य वृद्धि. प्रनष्ट-नीतेरजितेन्द्रियस्य ॥
मदाऽदियुक्तस्य विरागहेतु., समूलघातं विनिहन्ति याऽन्ते ॥ २७ ॥

अन्वयः—प्रनष्टनीते अजितेन्द्रियस्य मदाऽदियुक्तस्य परस्य वृद्धि उपेक्षणीया एव, या विरागहेतु ( सती ) अन्ते समूलघात विनिहन्ति ॥

व्याख्या—प्रनष्टनीतेः = अपगतनयस्य, अत एव अजितेन्द्रियस्य = अवशीकृतहृषीकस्य, तत एव मदादियुक्तस्य = मदाऽदिवैरिषट्कोपेतस्य कामक्रोधलोभमोहमदमात्सर्ययुतस्येति भाव । एतादृशस्य परस्य = शत्रो , वृद्धि = उपचय , उपेक्षणीया एव = उपेक्षितुं योग्या एव या = तादृशशत्रो वृद्धि , विरागहेतु· = अप्रीतिकारणभूता सती, लोकस्येति शेष· । अन्ते = अवसाने, परिणाम इति भाव । समूलघात विनिहन्ति = मूलघातपुर·सर नाशयति ।

❀व्युत्पत्ति❀ प्रनष्टनीते· = प्रनष्टा नीतिर्यस्य, तस्य । प्रनष्टेत्यत्र "नशे षान्तस्य" इति णत्वनिषेधः । अजितेन्द्रियस्य=अजितानि इन्द्रियाणि येन, तस्य । मदाऽदियुक्तस्य= मद आदिर्येषां ते मदादय , तैर्युक्तस्य । विरागहेतु = विरागस्य ( अप्रीतताया ) हेतु । समूलघात = "समूलाऽकृतजीवेषुहन्कृञ्ग्रह " इति णमुल् । "कषादिषु यथाविध्यनुप्रयोग " इति "विनिहन्ती" त्येतस्य अनुप्रयोग । उपेन्द्रवज्रा वृत्तम् ॥

❀भाषाऽर्थ❀ नीतिभ्रष्ट अत एव इन्द्रियों को नहीं जीतने वाला इसी कारणसे मद आदि छ अन्त शत्रुओंसे युक्त शत्रुकी वृद्धिकी उपेक्षा करनी चाहिए, जो वृद्धि अप्रीति का कारण होती हुई परिणाममे मूलके साथ सबको नष्ट कर डालती है ॥ २७ ॥

क्वचिद्विजिगीषोरपि आत्मक्षयोपेक्षणीयत्व तथैव प्रतिपादयति—

जनाऽनुरागेण युतोऽवसाद· फलाऽनुबन्ध सुधियाऽऽत्मनोऽपि ॥
उपेक्षणीयोऽभ्युपगम्य सन्धि कामाऽऽदिषड्वर्गजिताऽधिपेन ॥ २८ ॥

अन्वयः—जनाऽनुरागेण युत फलाऽनुबन्ध आत्मन अवसादोऽपि कामाऽऽदिषड्वर्गजिता सुधिया अधिपेन सन्धिम् अभ्युपगम्य उपेक्षणीय ॥

व्याख्या—जनाऽनुरागेण = प्रजाप्रणयेन, युत = सम्बद्ध , अत एव—फलाऽनुबन्ध = फलाऽनुसारी, आत्मन = स्वस्य, अवसादोऽपि = क्षयोऽपि, कामाऽऽदिषड्वर्गजिता = कामाऽऽदिवैरिषट्काऽभिभाविना, सुधिया = विदुषा, अधिपेन = जिगीषुणा राज्ञा, सन्धि = पणबन्धम् , अभ्युपगम्य - स्वीकृत्य, उपेक्षणीय = उपेक्षितु योग्य । सन्धि विना स्वक्षये उपेक्षिते तु पराक्रमणशङ्का स्यादत पणबन्धाऽभ्युपगमपूर्वक कञ्चित्काल यावत् स्वाऽपचय समुपेक्ष्य इति भाव ॥

❀व्युत्पत्ति❀ फलाऽनुबन्ध· = फलमनुबध्नातीति, "कर्मण्यण्" इत्यण् । कामाऽऽदिषड्वर्गजिता = काम आदिर्यस्य स कामादि । षण्णां वर्ग· षड्वर्ग· । कामादि-

आऽसौ षड्वर्ग, त जयतीति कामाऽऽदिषड्वर्गजित्, तेन । क्विप्प्रत्ययः । अभ्युपगम्य = "अङ्गीकाराऽभ्युपगमप्रतिश्रवसमाधय ।" इत्यमर ॥

※भाषार्थ※ प्रजाओंके अनुराग ( प्रेम ) से युक्त अत एव फलका अनुसरण करने वाले अपने क्षयकी भी कामक्रोध आदि छ शत्रुओंके समूहको जीतने वाले विद्वान् जिगीषु राजाको सन्धि स्वीकार करके उपेक्षा करनी चाहिए ॥ २८ ॥

सन्धिविग्रहाभ्या फलादर्शने स्ववृद्ध्यर्थ विजगीषोरासनमुपदिशति—

यदा विगृह्णन् न च सन्दधानो वृद्धिं क्षय चाऽनुगुणं प्रपश्येत् ॥
आसीत राजाऽवसरप्रतीक्षस्तदा प्रयास वितथं न कुर्यात् ॥ २९ ॥

अन्वय'—राजा यदा विगृह्णन् सन्दधानश्च ( अनुगुणाम् ) वृद्धिम् अनुगुणं क्षय च न प्रपश्येत् तदा अवसरप्रतीक्ष ( सन् ) आसीत, प्रयास वितथ न कुर्यात् ॥

व्याख्या—राजा = विजिगीषुर्भूपाल , यदा = यस्मिन्काले, विगृह्णन्=विग्रह कुर्वन्, सन्दधानश्च = सन्धि कुर्वाणश्च, ( अनुगुणाम् = अनुकूलाम् ) वृद्धि = समृद्धिम्, आत्मन इति शेष । तथैव-अनुगुणम् = अनुकूल, क्षय च = अपचय च, परस्येति शेष । न प्रपश्येत् = न प्रेक्षेत, तदा = तस्मिन्काले, अवसरप्रतीक्ष = अनुकूलकालाऽपेक्षी सन्, आसीत = आसन कुर्यात्, स्ववृद्ध्यर्थं परक्षयाऽर्थं चेति शेष । प्रयास = आत्मन सन्धिविग्रहोद्यमं, वितथ = निष्फल, न कुर्यात् = नो विदधीत ॥

※व्युत्पत्ति※ विगृह्णन् = विगृह्णातीति, विपूर्वकात् "ग्रह उपादाने" इति धातोर्लट. शत्रादेश "ग्रहिज्ये"त्यादिना सम्प्रसारणम् । सन्दधान =सन्धत्त इति, सपूर्वकात् "डुधाञ् धारणपोषणयो·" इति धातोर्लट शानच् । अवसरप्रतीक्ष =अवसर प्रतीक्षत इति "कर्मण्यण्" इत्यण् ॥

※भाषाऽर्थ※ राजा जब विग्रह करता हुआ और सन्धि करता हुआ भी अनुकूल अपनी वृद्धि और अनुकूल शत्रुका क्षय नहीं देखे तो कालकी प्रतीक्षा करता हुआ आसनका अवलम्बन करे, अपने उद्यमको निष्फल नहीं करे ॥ २९ ॥

सन्धौ स्थितो वा जनयेत् स्ववृद्धि हन्यात् पर वोपनिषत्प्रयोगैः ॥
आश्रावयेदस्य जनं परैर्वा विग्राह्य कुर्यादवहीनसंधिम् ॥३०॥

अन्वय—सन्धौ स्थित· स्ववृद्धि जनयेत्, वा उपनिषत्-प्रयोगै परं हन्यात् । अस्य जनम् आश्रावयेत् वा परै विग्राह्य अवहीनसन्धि कुर्यात् ॥

व्याख्या—सन्धौ=पणबन्धे, स्थित = वर्तमान·, स्ववृद्धिम्, आत्मोन्नति, जनयेत् = उत्पादयेत्, वा = अथवा, उपनिषत्प्रयोगै· = रह प्रयोज्यै·, विषादिदानैरिति

भावः । परं = शत्रु, हन्यात् = नाशयेत्, सन्धिना विश्वस्तत्वादिति भाव । अस्य= परस्य, जन = कुलजनम् = आश्रावयेत्=आकर्षयेत्, देशाऽऽदिदानेनेति शेष । वा = अथवा परै = तदीयशत्रुभि, विग्राह्य = विग्रहं (कलहम्) कारयित्वा, अवहीनसन्धि = त्यक्तसन्धि, कुर्यात् = विदधीत, प्राक्येन सम सन्धिरासीत् पश्चात्तेन सह सन्धिभङ्ग कुर्यादिति भाव ॥

※व्युत्पत्ति※ उपनिषत्प्रयोगै =उपनिषद प्रयोगै, "भवेदुपनिषद्धर्मे वेदाऽन्ते च रहस्यपि ।" इति विश्व ॥

※भाषाऽर्थ※ सन्धिमे विद्यमान जिगीषु अपनी वृद्धिको उत्पन्न करे अथवा एकान्तमें प्रयोज्य विषाऽऽदिदानोंसे शत्रुको मारे। शत्रुके कुलजनको देशादिके दान से आकृष्ट करे अथवा उसके शत्रुओंके साथ उसका कलह कराकर सन्धिको भङ्ग कर दे ॥ ३० ॥

मण्डलभेदे सन्धिमुपदिशति—

सदर्शितस्नेहगुणः स्वशत्रून् विद्वेषयन् मण्डलमस्य भिन्द्यात् ॥
इत्येवमादि प्रविधाय संधिर्वृद्धेर्विधेयोऽधिगमाभ्युपाय ॥३१॥

अन्वय —सन्दर्शितस्नेहगुण स्वशत्रून् विद्वेषयन् अस्य मण्डलं भिन्द्यात्, इत्येवमादि प्रविधाय वृद्धे अधिगमाऽभ्युपाय सन्धि' विधेयः ॥

व्याख्या—सन्दर्शितस्नेहगुण = प्रकाशिताऽनुरागगुण, स्वशत्रून् = आत्म-रिपून्, विद्वेषयन् = विमुखान् उत्पादयन्, अस्मच्छत्रवोऽनेन सन्धि न कुर्युरिति भाव.। अस्य=शत्रो, मण्डलम् = अमात्यादिप्रकृति, भिन्द्यात् = भिन्न कुर्यात्, इत्येवमादि=उक्तप्रकारादि, प्रविधाय=कृत्वा वृद्धेः=समृद्धेः, अधिगमाऽभ्युपाय = प्राप्तिहेतु, सन्धि = पणबन्धः, विधेय = अनुष्ठेय ॥

※व्युत्पत्ति※ सन्दर्शितस्नेहगुण =सन्दर्शिता स्नेहगुणा येन स । इत्येवमादि= इत्येवम् आदिर्यस्मिंस्तत्, कार्यमिति शेष'। इन्द्रवज्रा वृत्तम् ॥

※भाषाऽर्थ※ स्नेहगुणोंको प्रकाशित कर अपने शत्रुओं को परस्परमे विमुख बनाकर शत्रुमण्डलको भिन्न करे, इत्यादि कार्य कर वृद्धिकी प्राप्तिके हेतुभूत सन्धि करनी चाहिए ॥ ३१ ॥

विग्रहस्य वृद्धिहेतुत्व प्रतिपादयति—

मत्वा सहिष्णूनपरोपजप्यान् स्वकानधिष्ठाय जलाऽन्तदुर्गान् ॥
द्रुमाऽद्रिदुर्लङ्घ्यजलाप्रधृष्यान् वर्धेत राजा रिपुविग्रहेण ॥ ३२ ॥

अन्वय'—राजा स्वकान् सहिष्णून् अपरोपजप्यान् मत्वा द्रुमाऽद्रिदुर्लङ्घ्यज-लाऽप्रधृष्यान् जलान्तदुर्गान् अधिष्ठाय रिपुविग्रहेण वर्द्धेत ॥

व्याख्या—राजा=जिगीषुर्भूप, स्वकान्=आत्मीयान्, अनुजीविन इति भाव, सहिष्णून् = समर्थान्, अपरोपजप्यान्=परैः अभेद्यान्, मत्वा = ज्ञात्वा, द्रुमाऽद्रिदुर्लङ्घ्यजलाऽप्रधृष्यान् = वृक्षपर्वतदुरतिक्रम्यतोयाऽगम्यान्, जलाऽन्तदुर्गान्=तोयाऽन्तदुर्गमप्रदेशान, अधिष्ठाय = अध्यास्य, जलाऽन्तदुर्गेषु स्थापयित्वेति भाव। रिपुविग्रहेण = शत्रुकलहेन, वर्द्धेत - वृद्धिं प्राप्नुयात् ॥

ॐव्युत्पत्ति ॐ अपरोपजप्यान्=उपजपितुमर्हा उपजप्या, "पोरदुपधात्" इति यत्। परैरुपजप्या परोपजप्या.। न परोपजप्या अपरोपजप्यास्तान्। उपजापो भेद। द्रुमाऽद्रिदुर्लङ्घ्यजलाऽप्रधृष्यान्=द्रुमाश्च अद्रयश्च दुर्लङ्घ्यजलानि च द्रुमाऽद्रिदुर्लङ्घ्यजलानि, तैरप्रधृष्यान्। जलाऽन्तदुर्गान्=दुःखेन गच्छन्ति एषु इति दुर्गा, "सुदुरोरधिकरणे" इति ड। जलाऽन्ते दुर्गास्तान्, अधिपूर्वकस्थाधातोर्योगे "अधिशीङ्स्थाऽऽसा कर्म" इत्याधारस्य कर्मत्वम्। रिपुविग्रहेण=रिपुणा सह विग्रहो रिपुविग्रहस्तेन ॥

ॐभाषाऽर्थ ॐ राजा अपने अनुजीवियों को समर्थ और शत्रुओं से अभेद्य जान कर वृक्ष, पर्वत और अलङ्घनीय जलों से अगम्य जलके समीपस्थ दुर्गम प्रदेशोंमें रख कर शत्रुके साथ विग्रह करके वृद्धि को प्राप्त करे ॥ ३२ ॥

आसनसमय प्रतिपादयति—

शक्नोति यो न द्विषतोऽभिहन्तुं, विहन्यते नाऽप्यबलैर्द्विषद्भिः ॥
स श्वावराहं कलहं विदध्यादासीत दुर्गाऽऽदि विवर्धयंश्च ॥ ३३ ॥

अन्वय.—यो द्विषतो निहन्तुं न शक्नोति, अबलैः द्विषद्भिः न विहन्यते अपि, स श्वावराहं कलहं विदध्यात्, दुर्गादि विवर्धयन् आसीत च ॥

व्याख्या—य = विजिगीषु, द्विषत = शत्रून्, निहन्तु = विनाशयितुं न शक्नोति = न समर्थो भवति, अबलै = शक्तिरहितैः, द्विषद्भि = शत्रुभि., न विहन्यते अपि = न विनाश्यते अपि, स = विजिगीषू राजा, श्वावराहं = कुक्कुरशूकरसम्बन्धिन, कलहं = विग्रह, विदध्यात् = कुर्वीत, कुक्कुरशूकरसदृशयोर्मिथोविरोधिनोर्द्वयोर्वैरिणो कलहमुत्पादयेदिति भाव। स्वय च दुर्गादि=दुर्गाऽऽद्यष्टवर्ग, विवर्धयन् = समेधयन्, आसीत च = आसन चाऽवलम्बेत ॥ यथा चण्डाला वराहं हन्तुमसमर्था सन्त श्वान विमुच्य योधयन्ति, तयोर्द्वयोरपि तेषा भक्ष्यत्वादेकतरस्य मरणे मिथ प्रहारेण द्वयोर्मरणेऽपि वा सर्वथा तेषा कार्यसिद्धि तद्वद्विजिगीषू राजा विद्विषतोर्द्वयोः कलहमुत्पादयेत् स्वय च दुर्गादिवर्धनपुरःसरमासीतेत्यभिप्राय. ॥

ॐव्युत्पत्ति.ॐ श्वावराह=श्वा च वराहश्च श्ववराह, "येषा च विरोध शाश्वतिकः"

इति समाहारद्वन्द्वः। श्ववराहस्याऽय श्वावराहस्तम्, "तस्येदम्" इत्यण्। "तद्धितेष्वचामादे" इत्यादिवृद्धिश्च। दुर्गादि = दुर्गमादिर्यस्य तत्, दुर्गाद्यष्टवर्गो यथा—

"कृषिर्वणिक्पथो दुर्गं सेतु कुञ्जरबन्धनम्।
खन्याकरधनाऽऽदान शुल्काना च निवेशनम्॥ इति॥

॥भाषाऽर्थ॥ जो जयाऽभिलाषी राजा शत्रुओं को मारनेमें असमर्थ है, और स्वयम् भी दुर्बल शत्रुओंसे नही मारा जाता है वह शत्रुओंसे परस्पर कुत्ते और सूअरों के जैसे कलह को उत्पन्न कर दे और स्वयम् दुर्ग आदियोंको बढ़ाता हुआ आसनका अवलम्बन करे॥ ३३॥

यानसमाश्रययो काल प्रतिपादयति—

**प्रयाणमात्रेण परे प्रसाध्ये वर्तेत यानेन कृताऽभिरक्षः॥**
**अशक्नुवन् कर्तुमरेर्विघात स्वकर्मरक्षा च परं श्रयेत॥ ३४॥**

**अन्वयः**—परे प्रयाणमात्रेण प्रसाध्ये कृताभिरक्ष (सन्) यानेन वर्तेत। अरे विघात स्वकर्मरक्षा च कर्तुम् अशक्नुवन् (सन्) पर श्रयेत॥

**व्याख्या**—परे = शत्रौ, प्रयाणमात्रेण = केवलेन यानेन, प्रसाध्ये = अभिभवनीये सति, कृताऽभिरक्ष = आत्मदेशस्य विहितपरिरक्ष सन्, यानेन = प्रयाणेन, वर्तेत = वर्तन कुर्यात्, स्वदेशरक्षाऽनपेक्षया प्रयाणे कृते सति स्वदेशे कस्यचिदन्यस्य शत्रोराक्रमणं सभवेत् अत इयमुक्ति। अरे = शत्रो, विघात - विनाश स्वकर्मरक्षा च = शत्रोराक्रमणादात्मदुर्गरक्षण च कर्तुं = विधातुम्, अशक्नुवन् = असमर्थो भवन् सन्, आत्मरक्षार्थं परम् = अन्य कश्चिद् बलवत्तरं राजान, श्रयेत = रक्षकत्वेन आश्रयेत, यतो वृद्धिमाप्नुयादिति भाव।

॥व्युत्पत्ति॥ प्रयाणमात्रेण = प्रयाणम् एव प्रयाणमात्र, तेन, "मयूरव्यसकादयश्चे"ति समास॥

॥भाषाऽर्थ॥ शत्रु प्रयाणमात्रसे जीता जानेवाला हो तो अपने देश की सर्वतोभावेन रक्षाकर प्रयाण का आचरण करे। शत्रु का नाश और शत्रुसे अपने दुर्ग आदि की रक्षा करने को असमर्थ हो तो बलवान् दूसरे राजाका समाश्रय करे॥ ३४॥

अथ द्वैधीभावप्रकार सूचयति—

**एकेन सधिः, कलहोऽपरेण कार्योऽभितो वा प्रसमीक्ष्य वृद्धिम्॥**
**एवं प्रयुञ्जीत जिगीषुरेता नीतीर्विजानन्नहिताऽऽत्मसारम्॥ ३५॥**

**अन्वयः**—वा अभितो वृद्धि प्रसमीक्ष्य एकेन सन्धि अपरेण कलह कार्य : जिगीषु एवम् अहिताऽऽत्मसार विजानन् एता नीती प्रयुञ्जीत॥

व्याख्या—वा = अथवा, अभित = उभयपार्श्वयो' वृद्धिं = समृद्धिं, सन्धिना विग्रहेण वेति शेष । प्रसमीक्ष्य=विमृश्य एकेन=शत्रुणा सन्धि =पणबन्ध , अपरेण= सहायाऽभियुक्तेन, कलह = विग्रह', कार्य = कर्तव्य । जिगीषु = जयाऽभिलाषी, एवम् = इत्थम् , अहिताऽऽत्मसार = शत्रोरात्मनश्च बलाऽबल, विजानन् = विदन् , एता = इमा , नीती =नयान् , षाड्गुण्यलक्षणानिति भाव । प्रयुञ्जीत=अनुतिष्ठेत् ॥

&नबsp;

*व्युत्पत्ति* अहितात्मसारम् = अहितश्च आत्मा च अहिताऽऽत्मानौ तयो सारस्तम् । इन्द्रवज्रा वृत्तम् ॥

*भाषाऽर्थ* अथवा दोनों ओर सन्धिसे वा विग्रहसे अपनी वृद्धिका विचार कर एक शत्रु के साथ सन्धि और उसके सहाय अभियुक्त के साथ विग्रह करना चाहिए । जयाऽभिलाषी इस प्रकारसे शत्रु का और अपना बलाऽबल जानता हुआ सन्धि विग्रह आदि छ नीतियों का प्रयोग करे ॥ ३५ ॥

साम्प्रत रावणमुपालभते—

त्वया तु लोके जनितो विरागः, प्रकोपित मण्डलमिन्द्रमुख्यम् ॥
रामे तु राजन् , विपरीतमेतत् पश्यामि, तेनाऽभ्यधिक विपक्षम् ॥३६॥

अन्वय'—हे राजन् ! त्वया तु लोके विरागो जनित , इन्द्रमुख्य मण्डलं प्रकोपितम् । रामे तु एतत् विपरीत ( तेन ) विपक्षम् अभ्यधिक पश्यामि ॥

व्याख्या—हे राजन् = हे राक्षसराज ! त्वया तु = भवता तु, लोके = जने, विराग = अप्रीतता, जनित = उत्पादित । अत एव—इन्द्रमुख्यम् = शक्रप्रधान, मण्डलं = राजसमूह , प्रकोपित = सजातकोप कृतम् , अतो भवद्वृद्धिर्न शुभोदकेति भाव' । रामे तु = रामचन्द्रे तु, एतत् = पूर्वोक्त, विपरीत = प्रतिकूलं, तेन लोकाऽनुरागस्य जनितत्वात् राजमण्डलस्य च सन्तोषितत्वादिति भाव । ( तेन = कारणेन ) विपक्ष = शत्रु, राममित्यर्थं, अभ्यधिक = भवद्विशिष्ट, पश्यामि = विलोकयामि, अत स्वकीयन्यूनता परिहर्तव्येति भाव ॥

*व्युत्पत्ति* इन्द्रमुख्यम् = इन्द्रो मुख्यो यस्मिस्तत् । "मुख्यवर्यवरेण्याश्च प्रवर्होऽनवराध्र्यवत् ।" इत्यमर ॥

*भाषाऽर्थ* हे महाराज ! आपने तो लोक में अप्रीति पैदा कर दी, और इन्द्र प्रधान राजमण्डलको प्रकुपित बनाया । राममें तो यह बात उलटी ही है, इसलिए शत्रुको आपसे अधिक देख रहा हूँ ॥ ३६ ॥

प्रागेव भवत्कार्यं विनष्टमिति दर्शयति—

एकेन वाली निहत' शरेण सुहृत्तमरते, रचितश्च राजा ।
यदैव सुग्रीवकपि' परेण, तदैव कार्यं भवतो विनष्टम् ॥ ३७ ॥

**अन्वय**—यदा एव परेण एकेन शरेण ते सुहृत्तमो वाली निहत सुग्रीवकपिश्च राजा रचित , तदा एव भवत कार्यं विनष्टम् ॥

**व्याख्या**—यदा एव=यस्मिन्काले एव, परेण=शत्रुणा, रामेणेति भाव'। एकेन= एककेन, शरेण=बाणेन, ते=तव, सुहृत्तम =श्रेष्ठ सखा, वाली=तदाख्यो वानरराजः, निहत' =मारित', तदा एव=तस्मिन्काल एव, भवत =तव, कार्यं = कृत्य, विनष्ट=प्रभ्रष्टम् । येन भवज्जेता नास्यप्रेदेन शरेण हत , तेन भवज्जयस्याऽपि सुकरत्वादिति भाव ॥

॥व्युत्पत्ति॥ सुहृत्तम' =शोभन हृदय यस्य स सुहृत् , "सुहृद्दुर्हृदौ मित्राऽमित्रयो " इति हृदयस्य हृद्भावो निपात्यते। अतिशयेन सुहृत , सुहृत्तम , "अतिशायने तमबिष्ठनौ" इति तमप्प्रत्यय । सुग्रीवकपि =सुग्रीवश्चासौ कपि ॥

॥भाषाऽर्थ॥ जब शत्रु ने एक बाण से आप के श्रेष्ठ मित्र वाली को मारा और वानर सुग्रीवको राजा बनाया उस समय मे ही आपका कार्य विनष्ट हो गया ॥३७॥

कथ नाम मम कार्यविनाश , मत्प्रतापादेव शत्रुनाश इति चेत् तदपि खण्डयति—

प्राकारमात्राऽऽवरणः प्रभाव. खराऽऽदिभिर्यो निहतैस्तवाऽभूत् , ।
लङ्काप्रदाहाऽक्षवधद्रुभङ्गैः क्लाम्यत्यसावप्यधुनाऽतिमात्रम् ॥ ३८ ॥

**अन्वय**—तव य प्रभाव निहतै' खराऽऽदिभि प्राकारमात्राऽऽवरण अभूत् , असौ अपि अधुना लङ्काप्रदाहाऽक्षवधद्रुभङ्गै' अतिमात्र क्लाम्यति ॥

**व्याख्या**—तव = भवत , य = त्रैलोक्यप्रमाथी, प्रभाव =प्रताप , निहतै = मारितै', खराऽऽदिभि = खरप्रभृतिभी राक्षसे , प्राकारमात्राऽऽवरण =वरणमात्र रोधन , अभूत् = जात , लङ्कायामेव समर्थत्वादिति भाव । असौ अपि = प्राकारमात्राऽऽवरण' प्रभावोऽपि, अधुना = सम्प्रति, लङ्काप्रदाहाऽक्षवधद्रुभङ्गै = लङ्काप्रदाहेन अक्षकुमारहननेन अशोकवनिकाभङ्गेन च, अतिमात्रम् = अत्यर्थ, क्लाम्यति = ग्लानिमुपगच्छति, प्रागिव न साम्प्रत ते लोकाऽतिशायी प्रभाव इति भावः ॥

॥व्युत्पत्ति॥ प्राकारमात्राऽऽवरण' प्राकार एव प्राकारमात्र, तत् आवरण यस्य सः। लङ्काप्रदाहाऽक्षवधद्रुभङ्गै' =लङ्काप्रदाहश्च अक्षवधश्च द्रुभङ्गश्च लङ्काप्रदाहाऽक्षवधद्रुभङ्गास्तै । क्लाम्यति="क्लमु ग्लानौ" इति दैवादिकधातोर्लट् , "शमामष्टाना दीर्घं श्यनि" इति दीर्घत्वम् ॥

॥भाषाऽर्थ॥ आप का जो प्रताप मारे गये खर आदियों से प्राचीर मात्र आवरण वाला हुआ था, वह भी अभी लङ्कादाह, अक्षकुमार का वध और अशोकवनिका के भङ्ग से अतिशय ग्लानिको प्राप्त कर रहा है ॥ ३८॥

रावणस्य रामेण युद्धाऽनौचित्य दर्शयति—षड्वर्गवश्य इति ।

षड्वर्गवश्य. परिमूढबन्धुरुच्छिन्नमित्रो विगणैरुपेतः ।
मा पादयुद्धं द्विरदेन कार्षी र्नम क्षितीन्द्रं प्रणतोपभोग्यम् ॥ ३९ ॥

अन्वय.—( हे राजन् ! ) षड्वर्गवश्य परिमूढबन्धु उच्छिन्नमित्रो विगुणै उपेतः ( त्वम् ) द्विरदेन पादयुद्धम् ( इव रामेण युद्धम् ) मा कार्षी., प्रणतोपभोग्यं क्षितीन्द्र नम ॥

व्याख्या—( हे राजन् ) षड्वर्गवश्य·=निद्रादिशत्रुषट्कायत्त , परिमूढबन्धु = मूर्खाऽमात्याऽदिपरिवार । उच्छिन्नमित्र =नष्टवाल्यादिसुहृत, एव च विगुणै = विगीतगुणै., क्वचित् "अरिगणै" इति पाठस्तस्य शत्रुसमूहैरित्यर्थ । उपेत = युक्त, त्वमिति शेष । रामश्च सर्वथाऽपि त्वदद्दुर्गुणरहित इति भाव । अत द्विरदेन= हस्तिना, पादयुद्धम् = चरणरणम् , इवेति शेष । मा कार्षीः = नाऽऽचर, रामेण सह युद्धमिति शेष । प्रत्युत—प्रणतोपभोग्य=नम्रजनोपभोगविषय, क्षितीन्द्र=राजान, राममित्यर्थ । नम = प्रणम, येन सर्वतोभावेन ते भीतिर्विनङ्क्ष्यतीति भाव । अनेन हीनसन्धिमाह, तथा चोक्तं—"प्रवृत्त मन्त्रिणाऽऽक्रान्तो राजा बलवताऽबल । सन्धिनोपनमेत्तूर्णं दण्डकोशाऽऽत्मभूमिभि ॥" इति ॥

❀व्युत्पत्ति❀ षड्वर्गवश्य =षण्णा वर्ग षड्वर्ग । वश गतो वश्य, "वश गत" इति यत् । षड्वर्गस्य वश्य षड्वर्गवश्य । परिमूढबन्धु =परिमूढा बन्धवो यस्य स । उच्छिन्नमित्र =उच्छिन्नानि मित्राणि यस्य स । मा कार्षी ="माङि लुङ्" इति लुङ्, "न माङ्योगे" इत्यडागमप्रतिषेध । प्रणतोपभोग्य=प्रणतैरुपभोग्यस्तम् । नम="णम प्रह्वत्वे शब्दे च" इति धातोर्लोट् ॥

❀भाषाऽर्थ❀ हे राजन् ! काम क्रोध आदि षड्वर्ग के अधीन, मूर्ख परिवारों से युक्त, जिसके मित्र नष्ट हो चुके है ऐसे और निन्दित गुणवाले जनों से युक्त आप हाथी के साथ पादयुद्ध के सदृश राम चन्द्र के साथ युद्ध मत करें। नम्र जनों से उपभोग्य राजा राम को नमस्कार कीजिए ॥ ३९ ॥

युवयो सन्धानकारणमस्त्येवेति दर्शयति-

रामोऽपि दाराऽऽहरणेन तप्तो, वय हतैर्बन्धुभिरात्मतुल्यैः ।
तप्तस्य तप्तेन यथाऽऽयसो नः सधि. परेणाऽस्तु, विमुञ्च सीताम् ॥४०॥

अन्वयः—रामो दाराऽऽहरणेन तप्त , वयम् अपि आत्मतुल्यै हते बन्धुभिः ( तप्ता ) । तप्तस्य अयस तप्तेन ( अयसा ) यथा न परेण सन्धि अस्तु, सीता विमुञ्च ॥

व्याख्या—राम = रामचन्द्र , दाराऽऽहरणेन = पत्न्यपहारेण, सीताऽपहरणेनेत्यर्थ । तप्त = तापयुक्तः, वयम् अपि = राक्षसा अपि, आत्मतुल्यै स्वसदृशै, हतै = मारितै , बन्धुभि = बान्धवै , अक्षकुमारादिभिरिति भाव । तप्ता इति शेष । अत तप्तस्य = तापयुक्तस्य अयस = लोहस्य, तप्तेन = तापयुक्तेन, अयसा इति शेष । यथा = इव, न = अस्माक, परेण = शत्रुणा, रामेणेति भाव । सन्धि = पणबन्ध , अस्तु = भवतु, तदर्थं—सीता = जानक , सन्धिनिमित्तभूतामित्यर्थ । विमुञ्च = त्यज, येन पक्षद्वयस्याऽपि सन्तापोऽपगच्छेदिति ॥ ४० ॥

ॐव्युत्पत्ति ॐ दाराऽऽहरणेन = दाराणामाहरण तेन । "भार्या जायाऽथ पुम्भूम्नि दारा" इत्यमर' । आत्मतुल्यै = आत्मना तुल्यै , "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति तृतीया षष्ठी च ॥

ॐभाषाऽर्थ ॐ रामचन्द्र पत्नीके हरण से सन्तप्त हैं, हम भी अपने समान अक्षकुमार आदि बान्धवों के मरण से सन्तप्त है । इस लिए सन्तप्त लोहे का सन्तप्त लोह के साथ जैसे सन्धि होती है, उसी तरह हमलोगो की शत्रु के साथ सन्धि हो, इस लिए आप सीता जी को छोड दे ॥ ४० ॥

सन्धि विनाऽस्माक जीवन न स्थास्यतीति दर्शयति सन्धुक्षितमिति ।

**सन्धुक्षित मण्डलचण्डवातैरमर्षतीक्ष्ण क्षितिपालतेज. ।**
**सामाऽम्भसा शान्तिमुपैतु राजन् ! प्रसीद, जीवाम सबन्धुभृत्या. ॥४१॥**

अन्वयः—मण्डलचण्डवातै सन्धुक्षितम् अमर्पतीक्ष्ण क्षितिपालतेज सामाम्भसा शान्तिम् उपैतु । हे राजन ! प्रसीद सबन्धुभृत्या ( वयम् ) जीवाम ॥

व्याख्या—मण्डलचण्डवातै. = इन्द्रादिमण्डलप्रचण्डवायुभि , सन्धुक्षित=सन्दीपितम्, अमर्षतीक्ष्ण = सीताहरणकोपेन असह्य, क्षितिपालतेजा. = रामप्रतापाऽनल., सामाऽम्भसा = सन्धिजलेन, शान्ति = शमम्, उपैतु = प्राप्नोतु, सपरिवारस्य स्वस्य रक्षणाऽर्थं भवान् सन्धिमवलम्पतामिति भाव. ॥

ॐव्युत्पत्ति ॐ मण्डलचण्डवातै' = मण्डलान्येव चण्डवातास्तैः । सामाऽम्भसा = सामैव अम्भ' सामाऽम्भस्तेन । रूपकालङ्कार' ॥

ॐभाषाऽर्थ ॐ इन्द्रादिमण्डलरूप प्रचण्डवायु से सन्दीपित और क्रोध से असह्य रामचन्द्र का तेजोरूप अग्नि सामरूप जल से शान्ति को प्राप्त करे, हे राजन् ! आप प्रसन्न हों, बन्धु और भृत्यों के साथ हम लोग जीवन धारण करें ॥ ४१ ॥

समयोरपि विग्रहो न युक्त. किमुत हीनाऽधिकयोरिति दर्शयति—

**अपक्वकुम्भाविव भङ्गभाजौ राजन्नियाता मरण समानौ, ।**

वीर्ये स्थितः किन्तु कृताऽनुरागो रामो भवांश्चोत्तमभूरिवैरी ॥४२॥

अन्वयः—हे राजन् ! अपक्वकुम्भौ इव भङ्गभाजौ समानौ मरणम् इयाताम् । किन्तु रामो वीर्ये स्थितः कृताऽनुरागश्च, भवान् उत्तमभूरिवैरी ॥

व्याख्या—हे राजन् = हे राक्षसेश्वर, अपक्वकुम्भौ इव = आमघटौ इव, भङ्गभाजौ=मिथोऽभिघातेन भङ्गयुक्तौ, समानौ = समबलौ युध्यमानौ, मरणं = मृत्युम्, इयाता = प्राप्नुयाताम्, किन्तु = परन्तु, राम =रामचन्द्र, वीर्ये = पराक्रमे, स्थितः= विद्यमान, उत्साहशक्तियुक्त इत्यर्थ । एव कृताऽनुरागश्च=विहितस्नेहश्च, अस्तीति शेष, अनुरक्तमण्डलत्वादिति भाव । भवान् = रावण, उत्तमभूरिवैरी = इन्द्राऽऽदिप्रचुरशत्रुयुक्त, अतो रामेण सन्धिरेवोचितो न विग्रह इति भाव ॥

॥व्युत्पत्ति॥ भङ्गभाजौ=भङ्ग भजत इति, "भजो ण्वि" इति ण्विप्रत्यय । राजन् इयाता=राजन्नियाताम्, "ङमो ह्रस्वादचि ङमुण्नित्यम्" इति ङमुट् । उत्तमभूरिवैरी=उत्तमा भूरि वैरिणो यस्य स । उपमाऽलङ्कार ॥

॥भाषाऽर्थ॥ हे राजन् ! दो कच्चे घड़ों के सदृश परस्पर अभिघात से भङ्ग होने वाले तुल्यबल लड़ने वाले दोनों शत्रु मृत्यु को प्राप्त हो जाय, परन्तु राम उत्साह शक्ति से युक्त और मण्डल को अनुरागयुक्त किये हुए है, इसके विपरीत आप उत्तम और बहुतेरे शत्रुओं से युक्त है ॥ ४२ ॥

वादितोषन्यायेन रामस्य हीनत्वेऽभ्युपगतेऽपि अधिकस्य हीनेन विग्रहो न युज्यत इति प्रतिपादयति ।

दण्डेन कोशेन च मन्यसे चेत् प्रकृष्टमात्मानमरेस्तथापि ।
रिक्तस्य पूर्णेन वृथा विनाश पूर्णस्य भङ्गे बहु हीयते तु ॥ ४३ ॥

अन्वयः—( हे राजन् ! ) दण्डेन कोशेन च आत्मानम् अरे प्रकृष्टं मन्यसे चेत् ? तथाऽपि रिक्तस्य पूर्णेन विनाशो वृथा, पूर्णस्य भङ्गे तु बहु हीयते ॥

व्याख्या—( हे राजन ! ) दण्डेन = चतुरङ्गबलेन, कोशेन च = हेमरूप्यादिना च, आत्मान = स्वम्, अरे = शत्रो, रामादिति भाव । प्रकृष्ट = श्रेयासं, मन्यसे चेत् = जानासि यदि, तथाऽपि = एन स्वीकृतेऽपि, रिक्तस्य = दण्डकोशहीनस्य, रामस्य, पूर्णेन = दण्डकोशाऽधिकेन भवता, विनाश = भङ्ग, वृथा = निष्फल, एत द्वैपरीत्येन-पूर्णस्य = दण्डकोशाऽधिकस्य भवत, भङ्गे तु = पराजये तु, बहु = अधिक, हीयते - नश्यति, अतो यस्मिञ्जिते किमपि फल नाऽस्ति तादृशेन हीनेनाऽपि सन्धिरुचित, वृथागङ्कटप्रवेशस्याऽनौचित्यादिति भाव ॥

॥व्युत्पत्ति॥ दण्डेन कोशेन="हेतौ" इति तृतीया ॥

⊛भाषाऽर्थ⊛ हे राजन् ? यदि आप चतुरङ्ग बल से और खजाने से अपने को शत्रु से अधिक मानते है, तो भी हीनका पूर्ण से विनाश निष्फल है इसके विपरीत पूर्ण का पराजय होने पर तो बहुत हानि हो जाती है ॥ ४३ ॥

रिक्तस्य भङ्गेऽपि विजयफलमस्तीतिचेत्तत्राऽऽह–

क्लिष्टाऽऽत्मभृत्य. परिमृग्यसम्पन् मानी यतेताऽपि ससशयेऽर्थे ।
सन्देहमारोहति य. कृताऽर्थो, नून रतिं तस्य करोति न श्री· ॥ ४४ ॥

अन्वयः—क्लिष्टाऽऽत्मभृत्य· परिमृग्यसम्पत् मानी ससशये अर्थे अपि यतेत, य कृताऽर्थ अपि सन्देहम् आरोहति तस्य श्री· नून रति न करोति ।

व्याख्या—क्लिष्टाऽऽत्मभृत्य =दु खितशरीराऽनुचर , परिमृग्यसम्पत् = अन्वेषणीयसम्पत्ति·, मानी = अभिमानी, कश्चिद्राजा, ससंशये = सन्दिग्धे, अर्थे = प्रयोजने, अपि, यतेत = यत्नं कुर्यात , पर, य = भवादृश , कृताऽर्थ = कृतकृत्य , अपि, सन्देहम् = आत्मसंशयविषयम् , आरोहति = अधितिष्ठति, तस्य = पुरुषस्य, श्री = राजलक्ष्मी , नूनम् = अवश्य, रतिं = प्रीति, न करोति = न विदधाति, दुर्विधो भूपाल सपत्नालसया स्वस्थितिसशयाऽऽधायकेऽपि कर्मणि काम प्रवर्तेत पर कृतकृत्यस्य भवादृशो राज्ञ एतादृशि कृत्ये प्रवृत्तिः सर्वथैवाऽनुचितेति भाव ॥

⊛व्युत्पत्ति·⊛ क्लिष्टाऽऽत्मभृत्य =आत्मा च भृत्यश्च आत्मभृत्यौ, "आत्मा यत्नो धृतिर्बुद्धि स्वभावो ब्रह्म वर्ष्म च" त्यमर । क्लिष्टौ आत्मभृत्यौ यस्य स । परिमृग्य सम्पत्=परिमृग्या सम्पत् यस्य स ॥

⊛भाषार्थः⊛ जिसका शरीर और भृत्य दु खित है, वह अन्वेषणीय सम्पत्तिवाला अभिमानी राजा सन्देहजनक प्रयोजनमें भी यत्न करे, परन्तु जो कृताऽर्थ होकर भी सशय जनक कर्म का अधिरोहण करता है उसकी लक्ष्मी निश्चय प्रीति नही करती है ॥ ४४ ॥

शक्यान्यदोषाणि महाफलानि समारभेतोपनयन् समाप्तिम् ॥
कर्माणि राजा विहिताऽनुरागो विपर्यये स्याद् वितथः प्रयास· ॥४५॥

अन्वयः—विहिताऽनुरागो राजा समाप्तिम् उपनयन् शक्यानि अदोषाणि महाफलानि कर्माणि समारभेत, विपर्यये प्रयासो वितथ स्यात् ॥

व्याख्या—विहिताऽनुराग =कृतप्रणय , अनुरक्तप्रकृतिमण्डल इत्यर्थ· । एतादृशो राजा =भूपाल , समाप्तिं = फलाऽन्तत्वम् , उपनयन्=उपगच्छन , शक्यानि= शक्तिसाध्यानि, अदोषाणि = दोषरहितानि, महाफलानि=बहुप्रयोजनानि, कर्माणि = कार्याणि, समारभेत = उपक्रमेत, विग्रहेणेतिभाव । विपर्यये = उक्तवैपरीत्ये,विरक्त-

प्रकृतिमण्डलो राजा यदि समाप्तिमकुर्वन् अशक्यानि सदोषाणि निष्फलानि कर्माणि समारभेतेतिभाव । तदा प्रयास = तादृश उद्यम , विग्रहरूप इति भाव । वितथ = निष्फलः, स्यात् = भवेत् ॥

॥व्युत्पत्ति॥ विहिताऽनुराग· = विहितोऽनुरागो येन स· । महाफलानि=महान्ति फलानि येषा तानि ॥

॥भाषाऽर्थ॥ प्रकृतिमण्डलको अनुरक्त करने वाला राजा फलके अन्तको प्राप्त करता हुआ शक्ति विषय, निर्दोष और अनेक प्रयोजन वाले कर्मोंका विग्रहसे आरम्भ करे, इसके विपरीत होने पर उसका प्रयास भी निष्फल हो जायगा ॥४५॥

ममाऽपि रामविग्रहेण एव स्यादिति चेत्तदाह—

जेतु न शक्यो नृपतिः सुनीतिर्दोष क्षयाऽऽदिः कलहे ध्रुवश्च ॥
फलं न किंचिन् न शुभा समाप्तिः कृताऽनुरागंभुवि संत्यजाऽरिम् ॥४६॥

अन्वयः—सुनीति नृपति· जेतु न शक्य , कलहे क्षयाऽऽदि दोष ध्रुवश्च । फलं न किञ्चित् , समाप्ति न शुभा , भुवि कृताऽनुरागम् अरि सत्यज ॥

व्याख्या—सुनीति = शोभननययुक्त , नृपति = राजा राम इत्यर्थ· । जेतुम् = अभिभवितुं, न शक्य = न शक्तिविषय , विग्रहेणेति शेषः । कलहे = विग्रहे, तेन सहेति शेष । क्षयादि· = नाशप्रभृति , दोष = दूषण, ध्रुवश्च=अवश्यम्भावी च । फल = सत्परिणाम , न किञ्चित् = न किमपि, समाप्ति =अवसान, न शुभा = न साध्वी, स्वबन्धुविनाशकारणत्वादितिभाव । अत भुवि = पृथिव्या, कृताऽनुराग=विहितप्रणयम् , अनुरक्तप्रकृतिमण्डलमित्यर्थ । अरिं = शत्रु, राममित्यर्थ । सत्यज = परिमुञ्च, येन समेषामप्यस्माकं कल्याण भविष्यतीति भाव· ॥

॥व्युत्पत्ति॥ सुनीति = शोभना नीतिर्यस्य स ॥

॥भाषाऽर्थ॥ हे राजन् ! उत्तम नीतिवाले राजा राम नही जीते जा सकते है, उनके साथ विग्रह करने मे क्षय आदि दोष अवश्यम्भावी है । फल कुछ भी नही, समाप्ति शुभ नही, अत पृथिवीमे प्रकृतिमण्डलको अनुरक्त करने वाले शत्रु रामको छोड़ दीजिए ॥ ४६ ॥

रामस्य सुनीति दर्शयति—

त्वन्मित्रनाशो निजमित्रलाभ समेतसैन्य स च मित्रकृच्छ्रे ॥
भोग्यो वशः पश्य शरेण शत्रो प्रसाधितो वालिवधे न कोऽर्थ· ॥४७॥

अन्वयः—त्वन्मित्रनाशो, निजमित्रलाभः, मित्रकृच्छ्रे समेतसैन्य स च भोग्यो वश· । शत्रो· शरेण वालिवधे क अर्थ· न प्रसाधित· ? पश्य ॥

व्याख्या—त्वन्मित्रनाश = भवन्मित्रस्य ( वालिन• ) नाश ( वध )। निजमित्रलाभ• = स्वसुहृत्प्राप्ति स्वस्य ( रामस्य ) सुग्रीवरूपमित्रप्राप्तिरिति भाव । मित्रकृच्छ्रे=सुहृत्सङ्कटे, समेतसैन्य•-सयुक्तसेन , रा च=सुग्रीवश्च, भोग्यः=उपजीव्य , वश = अनुकूलश्च । अत• शत्रो• = वैरिण रामस्येत्यर्थ शरेण = बाणेन, वालि-वधे = वालिविनाशे, क अर्थ = प्रयोजन, न प्रसाधित = न सम्पादित•, अपि तु सर्वोऽप्यर्थ सम्पादित एवेति भाव । पश्य = विलोकय, वाक्यार्थ कर्म ॥

ॐव्युत्पत्तिॐ त्वन्मित्रनाश = तव मित्र त्वन्मित्र, "प्रत्ययोत्तरपदयोश्चे"ति युष्म-च्छब्दस्य उत्तरपदे परे त्वदादेश• । त्वन्मित्रस्य नाश । समेतसैन्य = समेतानि सैन्यानि यस्य स , "निष्ठे"ति समेतपदस्य पूर्वनिपात• ॥

ॐभाषाऽर्थःॐ आपके मित्र ( वाली ) का नाश अपने मित्र ( सुग्रीव ) का ( राज्य ) लाभ, मित्र सङ्कटमे सैन्य सयुक्त सुग्रीव उपजीव्य और अनुकूल है । शत्रुके बाणने वालीके वधमे किस प्रयोजनका सम्पादन नही किया ? देखिए ॥४७॥

भेदेन सुग्रीवमनुकूलयिष्यामीति चेदाह—

लोभाद् भयाद् वाऽभिगत कपीन्द्रो न राघव, येन भवेद् विभेद्यः ॥
स्थित• सता वर्त्मनि लब्धराज्य• प्रतिप्रिय सोऽभ्यगमच्चिकीर्षु• ॥ ४८ ॥

अन्वय•—कपीन्द्रो लोभात् भयात् वा राघव न अभिगत , येन विभेद्यो भवेत् । सता वर्त्मनि स्थित लब्धराज्य स प्रतिप्रियं चिकीर्षु• अभ्यगमत् ॥

व्याख्या—कपीन्द्रः सुग्रीव , लोभात् = लोलुपत्वात् , भयात् = त्रासात , वा = अथवा, राघवं = राम, न अभिगत न सगत , येन = कारणेन, विभेद्य = भेदार्ह•, भवेत् = स्यात् , क्रुद्धलुब्धभीताऽवमानिताश्चत्वारो भृत्या परस्य भेद्यास्तत्र भेदस्य हेतुद्वितय निम्ननिर्दिष्टया सरण्या प्रतिषिध्यते । क्रोधावमानयोश्चाऽसम्भवादत्र न चर्चा विहिता । सता = सज्जनाना, वर्त्मनि = मार्गे, स्थित = विद्यमान•, लब्ध राज्य = प्राप्तराज्यः, सः = सुग्रीव , प्रतिप्रिय = प्रत्युपकारं, चिकीर्षु = कर्तुमिच्छुः सन् , अभ्यगमत् = अभिगत•, राममिति शेष । लब्धराज्यत्वेन लोभस्य रामाऽभिग-मनेन भयस्य च निरवकाशत्व द्योत्यते ॥

ॐव्युत्पत्तिॐ लोभात् , भयात् = "विभाषागुणेऽस्त्रियाम्" इति हेतौ पञ्चमी । लब्धराज्यः = राज्ञो भाव• कर्म वा राज्यं, "राजाऽसे" इति यक्प्रत्यय• । लब्ध राज्य येन सः ॥

ॐभाषाऽर्थःॐ सुग्रीव लोभसे अथवा भयसे रामको प्राप्त नहीं हुआ है, जिससे

कि भेद के योग्य हो । सज्जनों के मार्ग मे स्थित होकर राज्यको प्राप्त करने वाला वह प्रत्युपकार करने को इच्छुक होकर राम का अभिगत हुआ है ॥ ४८ ॥

सुग्रीवाऽनुजीविनामपि अभेद्यत्व दर्शयति—

फलाशिनो निर्झरकुञ्जभाजो दिव्याऽङ्गनाऽनङ्गरसाऽनभिज्ञाः ॥
न्यग्जातयो रत्नवरैरलभ्या मुख्याः कपीनामपि नोपजप्याः ॥४९॥

अन्वय —फलाशिनो निर्झरकुञ्जभाजो दिव्याऽङ्गनाऽनङ्गरसाऽनभिज्ञा न्यग्जातयो रत्नवरै अलभ्या कपीना मुख्या अपि न उपजप्या ॥

व्याख्या—फलाऽशिन = फलभक्षका॰, मिष्टाऽन्ननिरपेक्षा इति भावः । निर्झरकुञ्जभाज = झरनिकुञ्जाश्रयिण॰, न रम्यप्रासादाऽभिलाषुका इति तात्पर्यम् । दिव्याऽङ्गनाऽनङ्गरसाऽनभिज्ञा = देवललनासुरतरसज्ञानरहिता॰, न्यग्जातय = तिर्यग्योनय , अत एव—रत्नवरै = इन्द्रनीलपद्मरागादिश्रेष्ठमणिभि , अलभ्या = लब्धुमशक्या कपीना = वानराणा मुख्या अपि = श्रेष्ठा अपि, हनूमन्नीलकुमुदादयोऽपीति भाव । न उपजप्या = न उपजपितु शक्या॰, नो भेद्या इत्यर्थ ॥

❀व्युत्पत्ति❀ फलाऽशिन = फलमश्नन्तीति तच्छीला , "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनि । निर्झरकुञ्जभाज. = निर्झराश्च कुञ्जाश्च निर्झरकुञ्जा , तान् भजन्तीति, "भजो ण्वि " इति ण्वि । दिव्याऽङ्गनाऽनङ्गरसाऽनभिज्ञा = दिवि भवा दिव्या , "द्युप्रागपागुदक्प्रतीचो यत्" इति यत् । दिव्याश्च ता अङ्गना , दिव्याऽङ्गना , तासु योऽनङ्गरस , तस्मिन् अनभिज्ञा । न्यग्जातय = न्यञ्चतीति न्यङ् , निपूर्वकात् "अञ्चुगतौ" इति धातो "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इति क्विन् । नीचि जाति ( जन्म ) येषा ते । अलभ्या = लब्धु शक्या , "शकि लिङ् च" इति शक्याऽर्थे "पोरदुपधात्" इति यत् । न लभ्या अलभ्या । उपजप्या. = उपजपितु शक्याः, उपपूर्वकात् "जप व्यक्तायां वाचि" इति धातो पूर्ववद्यत्प्रत्यय । अत्र विशेषणाना साऽभिप्रायत्वात्परिकराऽलङ्कार , सोदाहरण तल्लक्षण यथा—

"अलङ्कार परिकर साऽभिप्राये विशेषणे ।
सुधाऽशुकलितोत्तसस्ताप हरतु व शिव ॥" इति ॥

❀भाषाऽर्थ❀ फल खाने वाले, जल प्रवाह समीप मे और लता गृह में रहने वाले, देवाऽङ्गनाओं के सुरतरस में अनभिज्ञ, तिर्यग्जाति पद्मराग आदि श्रेष्ठ रत्नों से भी प्राप्ति के अविषय हनूमान् और नील आदि श्रेष्ठ बानर भी भेद के पात्र नहीं है ॥ ४९ ॥

भवन्मित्रपुत्रोऽङ्गदोऽपि अभेद्य इति दर्शयति—

कृताऽभिषेको युवराजराज्ये सुग्रीवराजेन सुताऽविशेषम् ॥

तारविधेयेन कथं विकार तारासुतो यास्यति राक्षसार्थम् ॥ ५० ॥

अन्वय.—ताराविधेयेन सुग्रीवराजेन युवराजराज्ये सुताऽविशेष कृताऽभिषेक. तारासुतो राक्षसार्थं विकार कथं यास्यति ? ॥

व्याख्या—ताराविधेयेन = तारावचनस्थितेन, ताराया ज्येष्ठभ्रातृपत्नीत्वादिति भाव । सुग्रीवराजेन = कपिराजेन सुग्रीवेण, युवराजराज्ये = युवराजकर्मणि, सुताऽविशेष = पुत्रनिर्विशेष कृताऽभिषेक = अभिषिक्त, तारासुत = अङ्गद, राक्षसाऽर्थं= रक्षोनिमित्त, विकार = विकृति, भेदमित्यर्थ । कथ = केन प्रकारेण, यास्यति = गमिष्यति सुग्रीवेण सुतनिर्विशेषं पालितो यौवराज्येऽभिषिक्तश्चाऽङ्गदोऽपि भेद नो यास्यतीति भाव ॥

❀व्युत्पत्ति❀ ताराविधेयेन = ताराया विधेयेन, "विधेयो विनयग्राही वचने स्थित आश्रव ।" इत्यमर । सुग्रीवराजेन = सुग्रीवश्चाऽसौ राजा सुग्रीवराजस्तेन, "राजाऽह सखिभ्यष्टच्" इति समासाऽन्तष्टच । युवराजराज्ये = युवा चाऽसौ राजा युवराज पूर्ववत् टच्। युवराजस्य राज्ये । सुताऽविशेष=सुतोऽविशेषो यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम् । कृताऽभिषेक = कृतोऽभिषेको यस्य स । राक्षसाऽर्थं = राक्षसाय अय राक्षसाऽर्थस्तम्, "चतुर्थी तदर्थाऽर्थबलिहितसुखरक्षितै." इति "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति चतुर्थीतत्पुरुष. ॥

❀भाषाऽर्थ❀ ताराके आज्ञाकारी सुग्रीव से यौवराज्यमें पुत्र के सदृश अभिषिक्त तारापुत्र अङ्गद राक्षस के लिए भेद को कैसे प्राप्त होगा ? ॥ ५० ॥

अन्यसमाश्रयादपि रामाऽभिभव खण्डयति—

पश्यामि रामादधिकं सम वा नाऽन्य, विरोधे यमुपाश्रयेम ।
दत्त्वा वरं साऽनुशय' स्वयम्भूरिन्द्राऽऽदय. पूर्वतर विरुद्धा ॥ ५१ ॥

अन्वयः—( हे राजन् ! ) रामात् अधिकं सम वा अन्यं न पश्यामि विरोधे यम् उपाश्रयेम । स्वयम्भू' वर दत्त्वा साऽनुशय., इन्द्राऽऽदय. पूर्वतरं विरुद्धा' ॥

व्याख्या—( हे राजन् ! ) रामात् = रामचन्द्रात्, अधिक = ज्यायांसं, समं वा = रामसदृशं वा, अन्यम् = अपर, न पश्यामि = नो विलोकयामि, विरोधे = रामेण समं विग्रहे, यं=पुरुषम्, उपाश्रयेम=आश्रय गच्छेम, ययेन तर्हि देवा आश्रीयन्तामित्यत्राऽऽह—दत्त्वेति । स्वयम्भू' = ब्रह्मा वर = काङ्क्षित, दत्त्वा = वितीर्य, साऽनुशय = पश्चात्तापयुक्त, किमिदं मयाऽकार्यमनुष्ठितमिति अनुतप्तोऽभूदिति भाव । इन्द्रादय' = इन्द्रप्रभृतयो देवा । पूर्वतर = पूर्वकालमेव, विरुद्धा = विरोधयुक्ता, वर्तन्त इति शेष, अतोऽस्मत्सहायोऽत्रविषये न कोऽपीति भाव. ॥

ॐव्युत्पत्तिॐ वर = "देवाहृते वर , श्रेष्ठे त्रिषु, क्लीबे मनाक्प्रिये ।" इत्यमर । साऽनुशय = अनुशयेन सहित ॥

ॐभाषाऽर्थॐ हे राजन्! रामसे अधिक वा रामके सदृश किसी दूसरे को नही देख रहा हू । ब्रह्मा जी वर दे कर पश्चात्तापयुक्त है, इन्द्र आदि देवता पहलेसे ही विरुद्ध किये गये है ॥ ५१ ॥

दुर्गसमाश्रयस्याऽप्ययुक्तता प्रतिपादयति—

दुर्गाऽऽश्रितानां बहुनाऽपि राजन् ! कालेन पार्ष्णिग्रहणाऽऽदि हेतुः ।
दुर्गोपरोध न च कुर्वतोऽस्ति शत्रोश्चिरेणाऽपि दशास्य ! हानिः ॥ ५२ ॥

अन्वयः—हे राजन् ! दुर्गाऽऽश्रितानाम् अपि बहुना कालेन पार्ष्णिग्रहणाऽऽदि हेतु , हे दशाऽऽस्य ! दुर्गोपरोध कुर्वत शत्रोश्च चिरेण अपि हानि न ॥

व्याख्या—हे राजन् = हे राक्षसेश्वर ! दुर्गाश्रितानाम् अपि कृतदुर्गाश्रयाणाम् अपि, अस्माकमिति शेष । बहुना = अधिकेन, कालेन = समयेन, पार्ष्णिग्रहणाऽऽदि-हेतु —पृष्ठवर्तिवैर्यादिहानिहेतु , भविष्यतीति शेष , अस्माक जगद्वैरित्वादिति भाव । हे दशाऽऽस्य = हे राक्षसराज, दुर्गोपरोधम् = अस्मदुर्गाऽऽवरण, कुर्वत = विदधत , शत्रोश्च = वैरिणश्च, चिरेण अपि = बहु कालेन अपि, हानि = अपचय", न = न भविष्यति, अतो दुर्गसमाश्रयणमपि न श्रेयस्करमिति भाव ॥

ॐव्युत्पत्तिॐ दुर्गाऽऽश्रितानां = दुर्गमाश्रितास्तेषा "द्वितीया श्रिताऽतीतपतित-गताऽत्यस्तप्राप्ताऽऽपन्नै" इति समास । दशाऽऽस्य = दश आस्यानि यस्य स , तत्सम्बुद्धौ । इन्द्रवज्रा वृत्तम् ॥

ॐभाषाऽर्थॐ हे राजन् ! दुर्ग को आश्रय करने वालोका भी बहुत समय बीतने पर पार्ष्णिग्राह ( पृष्ठवर्ती शत्रु ) आदि हानिका कारण उत्पन्न होगा। हे दशानन ! दुर्गका उपरोध करने वाले शत्रु की बहुत समय बीतने पर भी हानि नही होगी॥५२॥

शस्त्रं तरूर्वीधरमम्बु पानं वृत्तिः फलैर्नो गजवाजिनार्यः ।
राष्ट्र न पश्चान्न जनोऽभिरक्ष्य , कि दु स्थमाचक्ष्व भवेत् परेषाम् ॥५३॥

अन्वय —तरूर्वीधरं शस्त्रम्, अम्बुपान, फलै वृत्ति गजवाजिनार्यो नो, राष्ट्र न पश्चात् , अभिरक्ष्यो जनो न, परेषा दु स्थ किं भवेत् ? आचक्ष्व ॥

व्याख्या—तरूर्वीधरं = वृक्षपर्वत, शस्त्रम् = आयुधम् , न शूलखड्गादीति भाव । अम्बु = जल, पान = पेयं, न मद्यादीति भाव । फलै = पनसादिभि , वृत्ति = जीविका, नौदनादिभिरिति भाव । गजवाजिनार्य = करितुरङ्गललना , नो= न भवन्ति, अत शरीरमात्रत्वान्निश्चिन्ता इति भाव । राष्ट्र =देशोऽपि, न पश्चात्=

नाऽनन्तरविमर्शनीयमिति भाव. । अत एव तदभिजनः अभिरक्ष्य = अभिरक्षणीयः, जन = पुरुष , न = न वर्तते, एव च सति विग्रहेणाऽपि परेषां = शत्रूणां, रामादीनामित्यर्थ , दु रथं = दु:ख, कि भवेत् = कि स्यात्, एतद्वैपरीत्येनाऽस्माकं तु विग्रहेण निरतिशय दुःख स्यादिति भाव । वद = कथय ॥

ॐव्युत्पत्ति ॐ तरूर्वीधर = धरन्तीति धरा , पचाद्यच् उर्व्या धरा उर्वीधरा । तरवश्च उर्वीधराश्च तरूर्वीधर, "जातिरप्राणिनाम्" इति समाहारद्वन्द्वः । गजवाजिनार्य = गजाश्च वाजिनश्च नार्यश्च, इतरेतरयोगद्वन्द्व ॥

ॐभाषाऽर्थ ॐ हे राजन् ! जिनके पेड और पर्वत शस्त्र जल पेय पदार्थ, फलोसे वृति है, और हाथी, घोडे और स्त्रियां नहीं है, इसी तरह देश भी पीछे विमर्श योग्य नही है अत एव रक्षा करने योग्य जन भी नही इस स्थितिमे युद्ध होने पर भी शत्रुओं को दु:ख क्या होगा ? कहिए ॥ ५३ ॥

सधानमेवाऽस्तु परेण तस्मान् , नाऽन्योऽभ्युपायोऽस्ति निरूप्यमाण. ।
नूनं विसन्धौ त्वयि सर्वमेतन्नेष्यन्ति नाशं कपयोऽचिरेण ॥ ५४ ॥

अन्वय:—तस्मात् परेण सन्धानम् एव अस्तु, निरूप्यमाण अन्य , अभ्युपाय. न अस्ति । त्वयि विसन्धौ कपय. सर्वम् एतत् नूनम् अचिरेण नाश नेष्यन्ति ॥

व्याख्या—तस्मात् = कारणात् , परेण = शत्रुणा, रामेणेत्यर्थ । सन्धानम् एव = सन्धि एव, अस्तु = भवतु । निरूप्यमाण = चिन्त्यमान', अन्यः = अपर , अभ्युपाय' = साधन, न अस्ति = नो वर्तते । त्वयि = भवति, विसन्धौ = सन्धिम् अकुर्वाणे सति, कपय = वानरा , सर्वं = सकलम् , एतत् = इद, स्वाम्यादिकं, नूनं= निश्चयेन, अचिरेण = अल्पकालेन, नाश = नेष्यन्ति = नाशयिष्यन्ति ॥

ॐव्युत्पत्ति ॐ विसन्धि = विगत. सन्धिर्यस्मात्तस्मिन् । इन्द्रवज्रा वृत्तम् ॥

ॐभाषाऽर्थ ॐ हे राजन् ! इस कारण से शत्रु के साथ सन्धि ही हो । विचार करने पर दूसरा उपाय नही है।आपके सन्धि न करने पर वानर लोग यह सब निश्चय नष्ट कर डालेगे ॥ ५४ ॥

विभीषणोक्तं बहु मन्यमान. प्रोन्नम्य देहं परिणामनम्रम् ।
स्खलद्वलिर्वार्धककम्प्रमूर्धा मातामहो रावणमित्युवाच ॥ ५५ ॥

अन्वय:—विभीषणोक्त बहु मन्यमानः परिणामनम्र देहं प्रोन्नम्य स्खलद्वलि. वार्धककम्प्रमूर्धा मातामहो रावणम् इति उवाच ॥

व्याख्या—विभीषणोक्तं विभीषणकथित वच , बहु = अधिक, मन्यमानः = जानन्, श्लाघमान इति भाव. । अत एव परिणामनम्र = वयःपरिपाकान्नमनशील,

देह = शरीरं, प्रोन्नम्य = उत्क्षिप्य, स्खलद्वलि = सचलज्जराश्लथचर्मा, वार्धककम्प्र, मूर्धा वृद्धभावेन कम्पनशीलमस्तक, मातामह = रावणमातृजनक, माल्यवा-नित्यर्थ । रावण = दशाननम्, इति = वक्ष्यमाणप्रकार वचनम्, उवाच = अब्रवीत ॥

॥व्युत्पत्ति॥ परिणामनम्र = नमनशीलो नम्र, "नमिकम्पिस्म्यजसकमहिस-दीपो र" इति रप्रत्यय । परिणामेन नम्र, तम् । स्खलद्वलि = स्खलन्ती वलिर्यस्य स । वार्द्धककम्प्रमूर्धा = वृद्धस्य भावो वार्धक, "द्वन्द्वमनोज्ञादिभ्यश्च" इति वुञ्, इति जयमङ्गल । कम्पनशील कम्प्र, "नमिकम्पी–"त्यादिना र । वार्द्धकेन कम्प्रो मूर्धा यस्य स । मातामह = मातु पिता, "पितृव्यमातुलमातामहपितामहा" इति "मातृ पितृभ्या पितरि डामहच्" इति डामहच्प्रत्ययान्तो निपात ॥

॥भाषाऽर्थः॥ विभीषणके वचनको अधिक मानकर बुढ़ापेसे नम्र शरीरको ऊँचा कर बुढ़ापेसे चलनेवाले शिथिल चर्मसे और काँपने वाले शिरसे युक्त मातामह माल्यवान् ने रावणको ऐसा कहा ॥ ५५ ॥

एक. पदातिः पुरुषो धनुष्मान् योऽनेकमायानि वियद्गतानि ॥
रक्ष सहस्राणि चतुर्दशाऽऽर्दीत् का तत्र वो मानुषमात्रशङ्का ॥५६॥

अन्वयः—"एक पदाति धनुष्मान् पुरुषो य अनेकमायानि वियद्गतानि चतुर्दश रक्ष सहस्राणि आर्दीत् तत्र व का मानुषमात्रशङ्का ?

व्याख्या—एक. = एकाकी, असहाय इति भाव, तत्राऽपि पदाति, न रथा-द्यारूढ. । धनुष्मान् = धनुर्मात्राऽऽयुध, पुरुष. = मनुष्य, न देवादिरिति भाव । यः = राम, अनेकमायानि = बहुमायायुक्तानि, वियद्गतानि = आकाशप्राप्तानि, हन्तुमशक्यानीति भाव । एतादृशानि चतुर्दश रक्षःसहस्राणि = चतुर्दशसहस्रस-ख्यानि रक्षासि आर्दीत् = हिंसितवान्, तत्र = तादृशे रामे, वः = युष्माक, का = कीदृशी, मानुषमात्रशङ्का = मानवमात्रसन्देह, रामो न मानव इति भाव ॥

॥व्युत्पत्ति॥ अनेकमायानि = अनेका माया येषा तानि अनेकमायानि, तानि । रक्ष.सहस्राणि = रक्षसा सहस्राणि, तानि । आर्दीत् = "अर्द्द हिंसायाम्" इति धातोर्लुङ् । मानुषमात्रशङ्का = मानुष एव मानुषमात्र, "मयूरव्यसकादयश्च" इति समास । मानुषमात्रस्य शङ्का । इन्द्रवज्रा वृत्तम् ॥

॥भाषार्थ॥ एकमात्र, पैदल, धनुर्धारी और मनुष्य होकर भी जिसने अनेक मायाओंसे युक्त और आकाशगत चौदह हजार राक्षसोंको मार डाला उस राम-चन्द्रमें तुम लोगोंको क्या मनुष्यमात्र होनेकी शङ्का है ? ॥ ५६ ॥

रामस्य दिव्यत्वं प्रदर्शयति—

ब्रह्मर्षिभिर्नूनमयं सदेवैः संतापितैः रात्रिचरक्षयाय ॥
नराऽऽकृतिर्वानरसैन्यशाली जगत्यजय्यो विहितोऽभ्युपायः ॥५७॥

अन्वय.—सन्तापितैः सदेवैः ब्रह्मर्षिभिः वानरसैन्यशाली जगति अजय्यः नराऽऽकृतिः अयं नूनं रात्रिचरक्षयाय अभ्युपायो विहितः ॥

व्याख्या—सन्तापितैः = सम्पीडितैः, त्वयेति शेषः । सदेवैः = सुरसहितैः, ब्रह्मर्षिभिः = ऋष्यश्रृङ्गादिभिः, वानरसैन्यशाली = कपिसेनासम्पन्नः, जगति=लोके, अजय्यः=जेतुमशक्यः, नराऽऽकृतिः=मनुष्याऽऽकारः, आकारमात्रेण मनुष्यो वस्तुतस्तु देवविशेष इति भावः । अयं=रामः, नूनं=निश्चयेन, रात्रिचरक्षयाय=राक्षसविनाशाय, अभ्युपायः=साधनभूतः, विहितः=कृतः ।

ॐव्युत्पत्तिॐ वानरसैन्यशाली=वानराणां सैन्यं, तेन शाडते (शालते=शोभते) तच्छीलः, सोपपदात् "शाडृ श्लाघायाम्" इति धातोर्णिनिः । अजय्यः=जेतुं शक्यो जय्यः, "क्षय्यजय्यौ शक्यार्थे" इति यान्ताऽऽदेशनिपातः । न जय्यः । नराऽऽकृतिः= नरस्येव आकृतिर्यस्य सः ।रात्रिचरक्षयाय=रात्रौ चरन्तीति रात्रिचराः, "चरेष्टः" इति टः "रात्रिञ्चरो रात्रिचरः कर्बुरो निकषाऽऽत्मजः ।" इत्यमरः । 'रात्रेः कृति विभाषा' इति मुम्पक्षे "रात्रिञ्चर" इत्यपि । रात्रिचराणां क्षयाय, तादर्थ्ये चतुर्थी ॥

ॐभाषाऽर्थॐ तुमसे सन्तप्त किये गये देवताओंके साथ ऋष्यश्रृङ्ग आदि ब्रह्मर्षियोंने वानर सेनासे सम्पन्न जगत्में जीतनेको अशक्य मनुष्यके आकारवाले ये राम निश्चय राक्षसोंके क्षयके लिए साधनरूप विहित किये गये है ॥ ५७ ॥

एतादृशमाचरणं देवानां मया दृष्टमिति दर्शयति—

वज्राऽभिघातैरविरुग्णमूर्तेः फेनैर्जलानामसुरस्य मूर्ध्नः ॥
चकार भेदं मृदुभिर्महेन्द्रो यथा तथैतत् किमपीति बोध्यम् ॥५८॥

अन्वयः- महेन्द्रो वज्राऽभिघातैः अविरुग्णमूर्तेः असुरस्य मूर्ध्नः मृदुभिः जलानां फेनैः यथा भेदं चकार तथा एतत् किमपि इति बोध्यम् ॥

व्याख्या—महेन्द्रः = देवराजः,वज्राऽभिघातैः = कुलिशताडनैरपि' अविरुग्णमूर्तेः =अचूर्णितकायस्य, असुरस्य = दैत्यस्य नमुचेरित्यर्थः । मूर्ध्नः = शिरसः, मृदुभिः = कोमलैः, जलानाम् = अम्बूनां, फेनैः = डिण्डीरैः, यथा येन प्रकारेण, भेदं = छेदं, चकार = कृतवान्, तथा = तेनैव प्रकारेण एतत्=इदं किमपि नराऽऽकृति वस्तु, इति = एवं बोध्यं=ज्ञेयम् देवकार्यसाधकमिति शेषः ॥

ॐव्युत्पत्तिःॐ अविरुग्णमूर्तेः=अविरुग्णा मूर्तिर्यस्य, तस्य । "मूर्तिः काठिन्यका-

ययो" इत्यमर.। मृदुभिः = "कोमल मृदुल मृदु" इत्यमर । फेनै.= "डिण्डीरोऽब्धिकफ फेन" इत्यमर ॥

ॐभाषाऽर्थ.ॐ इन्द्रने वज्रके प्रहारोंसे भी अचूर्णित शरीरवाले नमुचि नामक दैत्यके शिरका कोमल जलके फेनसे जैसे छेदन किया वैसे ही यह नराकार वस्तु भी देवताओंका कार्यसाधक है यह जानना चाहिए ॥ ५८ ॥

क स्त्रीविषह्याः करजाः क वक्षो दैत्यस्य शैलेन्द्रशिलाविशालम् ॥
संपश्यतैतद् द्युसदां सुनीतं बिभेद तैस्तन्नरसिंहमूर्तिः ॥ ५९ ॥

अन्वयः—स्त्रीविषह्याः करजाः क ? शैलेन्द्रशिलाविशालं दैत्यस्य वक्षः क ? द्युसदाम् एतत् सुनीतं संपश्यत नरसिंहमूर्तिः तैः तत् बिभेद ॥

व्याख्या—स्त्रीविषह्याः = ललनाभिरपि सोढुं शक्याः, करजाः = नखाः, क = कुत्र, शैलेन्द्रशिलाविशालं = पर्वतेन्द्रप्रस्तरपृथुलं, दैत्यस्य = हिरण्यकशिपोः, वक्षः = उरःस्थलं, क = कुत्र, उभयोर्महदन्तरमिति भावः । तथाऽपि द्युसदां = देवानाम्, एतत् = इदं, सुनीतं = सुनयं, संपश्यत = संविलोकयत, यतः, नरसिंहमूर्तिः = नृसिंहाकारः, हरिः तैः = तादृशैर्नखैः, स्त्रीविषह्यैरिति भावः । तत् = हिरण्यकशिपुवक्षःस्थलं, शैलेन्द्रशिलाविशालमिति तात्पर्यम् । बिभेद = विदारितवान्, तद्वन्मनुष्योऽपि रामो राक्षसान्हनिष्यतीति भावः ॥

ॐव्युत्पत्तिःॐ स्त्रीविषह्याः = विषोढुं शक्या विषह्या, विपूर्वकात् "षह मर्षणे" इति धातोः "शकिसहोश्च" इति यत् "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इति सस्य षः । स्त्रीभिर्विषह्या, पक्षे "कृत्यानां कर्तरि वा" इति षष्ठी च । करजाः = करे जाताः, "सप्तम्यां जनेर्डः" इति डः । शैलेन्द्रशिलाविशालं = शैलेन्द्रशिलेव विशालम् । अत्र अनौचित्यादनेकाऽन्वयकल्पनाद्विषमाऽलङ्कारः ।

ॐभाषाऽर्थॐ स्त्रियोंसे सहे जासकने वाले नख कहाँ ? और श्रेष्ठ पर्वतके पत्थरके तुल्य हिरण्यकशिपुकी छाती कहाँ ? तो भी देवताओं की इस सुनीतिको देखो, नृसिंहकी मूर्तिवाले हरिने वैसे नखों से वैसे वक्षःस्थल को फाड़ डाला ॥ ५९ ॥

रावणमुपालभते—

प्रमादवांस्त्वं क्षतधर्मवर्त्मा गतो मुनीनामपि शत्रुभावम् ॥
कुलस्य शान्तिं बहु मन्यसे चेत् कुरुष्व राजेन्द्र ! विभीषणोक्तम् ॥ ६० ॥

अन्वयः—हे राजन् ! प्रमादवान् क्षतधर्मवर्त्मा त्वं मुनीनाम् अपि शत्रुभावं गतः । कुलस्य शान्तिं बहु मन्यसे चेत् विभीषणोक्तं कुरुष्व ॥

व्याख्या—हे राजन् = हे राक्षसराज !, प्रमादवान् = अनवधानतोपेतः, अतः

एव—क्षतधर्मवर्त्मा = त्यक्ताचार , त्व मुनीनाम् अपि = शमे स्थितानाम् अपि किमुत अन्येषामिति भाव । शत्रुभावं = विरोध, गत = प्राप्तः, असीति शेष॰ । ईदृशोऽपि कुलस्य = वंशस्य, शान्तिं = शम कल्याणमिति भावः । बहु = अधिक यथा तथा, मन्यसे चेत् = विमृशसि यदि, तर्हि विभीषणोक्तं=विभीषणकथित कर्म, कुरुष्व = विधेहि ॥

॥व्युत्पत्तिः॥ क्षतधर्मवर्त्मा = क्षत धर्मवर्त्म येन स । उपेन्द्रवज्रा वृत्तम् ॥

॥भाषाऽर्थ.॥ हे राजन् ! प्रमाद करने वाले आचार का त्याग करने वाले तुम, मुनियोंके भी शत्रु भाव को प्राप्त हो गये हो । कुलकी शान्ति को कल्याण मानते हो तो विभीषण के कहे हुए कर्म को करो ॥ ६० ॥

घोषेण तेन प्रतिलब्धसंज्ञो निद्राऽऽविलाऽक्ष. श्रुतकार्यसारः ॥
स्फुरद्घन॰ साऽम्बुरिवाऽन्तरीक्षे वाक्यं ततोऽभाषत कुम्भकर्णः ॥६१॥

अन्वयः—तत तेन घोषेण प्रतिलब्धसंज्ञ॰ निद्राऽऽविलाऽक्ष श्रुतकार्यसारः कुम्भकर्ण अन्तरीक्षे साऽम्बु स्फुरद्घन इव वाक्यम् अभाषत ॥

व्याख्या—ततः = माल्यवद्वचनाऽनन्तरं, तेन = प्राक्सजातेन, घोषेण = ध्वनिना, प्रतिलब्धसज्ञ = प्राप्तचेतनः, विबुद्ध इत्यर्थ॰ । निद्राऽऽविलाऽक्षः = स्वापकलुषलोचन , श्रुतकार्यसार॰ = आकर्णितकृत्यसार , कुम्भकर्ण = रावणमध्यमभ्राता, अन्तरीक्षे = आकाशे, साऽम्बु = सजल॰, स्फुरद्घन इव = शब्दायमानमेघ इव, वाक्य = वक्ष्यमाणप्रकारकं पदसमूहम् , अभाषत = भाषितवान् ॥

॥व्युत्पत्ति.॥ प्रतिलब्धसंज्ञ॰ = प्रतिलब्धा संज्ञा येन स, "सज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना ।" इत्यमर॰ । निद्राऽऽविलाऽक्ष = निद्रया आविले ईक्षणे यस्य स, "बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात्षच्" इति समासाऽन्त षच् । श्रुतकार्यसारः = श्रुत कार्यसारो येन स । उपमाऽलङ्कार॰ ॥

॥भाषाऽर्थ॥ माल्यवान् के वचन के अनन्तर उस ध्वनि से होशमें आकर निद्रासे कलुष नेत्रोंवाला, कार्यसारको सुननेवाला कुम्भकर्ण आकाशमें जलयुक्त और शब्द करने वाले मेघ के सदृश हो वाक्य कहने लगा ॥ ६१ ॥

क्रियासमारम्भगतोऽभ्युपायो नृद्रव्यसम्पत् सहदेशकाला ॥
विपत्प्रतीकारयुताऽर्थसिद्धिर्मन्त्राङ्गमेतानि वदन्ति पञ्च ॥ ६२ ॥

अन्वयः—( हे राजन् ! ) । क्रियासमारम्भगत॰ अभ्युपाय सहदेशकाला नृद्रव्यसम्पत् विपत्प्रतीकारयुता अर्थसिद्धि॰ एतानि पञ्च मन्त्राऽङ्ग वदन्ति ॥

व्याख्या—( हे राजन् ! ) क्रियासमारम्भगतः = दुर्गादिकर्मोपक्रमप्राप्त , अ॰

भ्युपायः = साधनम् , कर्मणामारम्भोपाय इत्यर्थः । इदमेकमङ्गम् । सहदेशकाला = देशकालसहिता, नृद्रव्यसम्पत् = पुरुषद्रव्यसम्पत्ति । पुरुषद्रव्यसपत्ति । इदं द्वितीयमङ्गम् , एवं च देशकालविभाग', इद तृतीयमङ्गम् । अत्र नृद्रव्ययो' सहवचनमन्योन्योपयोगसूचनार्थम् । देशकालयो सहवचनमपि योगवाहित्वज्ञापनार्थम् । विपत्प्रतीकारयुता = आपत्प्रतीकारोपेता अर्थसिद्धिः = कार्यसिद्धि ) विपत्प्रतीकार इदं चतुर्थमङ्गम् । एव च अर्थसिद्धिरिदं पञ्चममङ्गम् । एतानि = इमानि, सम्प्रति कथितानि, पञ्च = क्रियारम्भगताऽभ्युपायादीनि, मन्त्राऽङ्ग = मन्त्राऽवयवं, वदन्ति = कथयन्ति, नीतिज्ञा इति शेषः । अत्र मन्त्राङ्गमिति एकवचनेन एतेषामभ्युपायादीना तृणारणिमणिन्यायेन पार्थक्येन न मन्त्राङ्गत्वमपि तु मिलितत्वेनैवेति सूच्यते ॥

ॐव्युत्पत्ति'ॐ क्रियासमारम्भगत. = क्रियाणां समारम्भस्त गत । सहदेशकाला= देशकालाभ्या सहितेति तुल्ययोगबहुव्रीहि । नृद्रव्यसम्पत्=नृणां द्रव्याणा च सम्पत् । विपत्प्रतीकारयुता=प्रतिकरण प्रतीकार, "भावे" इति घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति उपसर्गस्य दीर्घत्वम् । विपद् प्रतीकारेणयुता । मन्त्राऽङ्ग= मन्त्रस्याऽङ्गम् ॥

ॐभाषाऽर्थ'ॐ "हे राजन् ! दुर्ग आदि कर्मोंके आरम्भ को प्राप्त उपाय, देश और काल, मनुष्यद्रव्यसम्पत्ति, आपत्तिप्रतीकार और अर्थसिद्धि इन पाचों को मन्त्राङ्ग कहते हैं ॥ ६२ ॥

न निश्चिताऽर्थं समयं च देश क्रियाऽभ्युपायादिषु योऽतियायात् ॥
स प्राप्नुयान् मन्त्रफल न मानी काले विपन्ने क्षणदाचरेन्द्र ॥ ६३ ॥

अन्वय'—हे क्षणदाचरेन्द्र ! य क्रियाऽभ्युपायादिषु निश्चिताऽर्थं समय देश च न अतियायात् , स मन्त्रफल प्राप्नुयात् , मानी काले विपन्ने न ॥

व्याख्या—हे क्षणदाचरेन्द्र = हे राक्षसराज ! य = जिगीषु , क्रियाऽभ्युपायादिषु = क्रियाऽभ्युपाये, नृद्रव्यसम्पदि विपत्प्रतीकारे च सति, निश्चिताऽर्थं=निर्णीतकार्यं, समय = काल, देश च = स्थान च, न अतियायात् = न अतिक्रामेन् , स. = जिगीषु , मन्त्रफलम् = अर्थसिद्धि, प्राप्नुयात् = लभेत, एतद्वैपरीत्येन चरन् मानी= अभिमानी, भवादृश इति भाव' । काले = समये, विपन्ने = अतिक्रान्ते सति, न = मन्त्रफल न प्राप्नुयात् , देशकालाऽतिक्रमणादिति भाव । प्राक् सीताहरण एव मन्त्रणा प्राप्तकाला, मानित्वात्त्वया नाऽनुष्ठिता साम्प्रतं मन्त्रेण कि साध्यमित्याकूतम् ॥

ॐव्युत्पत्ति ॐ क्षणदाचरेन्द्र = क्षणदायां चरन्तीतिक्षणदाचरा , "चरेष्ट" इति ट. तेष्विन्द्रस्तत्सम्बुद्धौ । क्रियाऽभ्युपायादिषु = क्रियाभ्युपाय आदिर्येषा, तेषु ॥

॥भाषाऽर्थ.॥ हे राक्षसराज ! जो जिगीषु ( जयाऽभिलाषी ) क्रियाके उपाय आदियोंमे निश्चित कार्यवाले काल और देशका अतिक्रमण नही करता है, वह कार्य सिद्धिको प्राप्त करेगा । इसके विपरीत अभिमानी पुरुष कालके अतिक्रान्त होनेपर कार्यसिद्धिको प्राप्त नही करेगा ॥ ६३ ॥

औष्ण्य त्यजेन् मध्यगतोऽपि भानु. शैत्य निशायामथवा हिमांशुः ॥
अनर्थमूल भुवनाऽवमानी मन्ये न मान पिशिताशिनाथ ॥ ६४ ॥

अन्वय.—हे पिशिताऽशिनाथ ! भानुः मध्यगतोऽपि औष्ण्य त्यजेत् , अथ वा हिमांऽशु निशाया शैत्य त्यजेत् , भुवनाऽवमानी अनर्थमूल मान न त्यजेत् , ( इति ) मन्ये ॥

व्याख्या—हे पिशिताऽशिनाथ = हे राक्षसराज !, भानु = सूर्य , मध्यगतोऽपि = वियन्मध्यप्राप्तोऽपि, मध्याह्नेऽपीति भाव । औष्ण्यम् = उष्णता, त्यजेत् = मुञ्चेत् , अथ वा = उताहो, हिमांऽशु = चन्द्र , निशाया = रात्रौ, शैत्य = शीतता, त्यजेत् = मुञ्चेत् , पर भुवनाऽवमानी = जगत्तिरस्करणशील , भवादृश इति भाव । अनर्थमूलम् = अनिष्टकारण, मानम् = अभिमान, न त्यजेत् = न मुञ्चेत् , ( इति= एवम् ) मन्ये = जानामि, अहमिति शेष । साम्प्रत सीतासमर्पणादेव तव रक्षा, तच्च मानिना त्वया न विधास्यत इति तात्पर्यम् ॥

॥व्युत्पत्ति.॥ हे पिशिताऽशिनाथ = पिशितमश्नन्तीति तच्छीला पिशिताऽशिनः, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनि । पिशिताऽशिना नाथस्तत्सम्बुद्धौ । औष्ण्यम् = उष्णस्य भावः कर्म वा औष्ण्य, तत् । "गुणवचनब्राह्मणादिभ्य कर्मणि च" इति ष्यञ् । एव शैत्यमित्यत्राऽपि । भुवनाऽवमानी = भुवनमवमन्यते तच्छील इति, णिनि । त्यजेत् = सभावनायां लिङ् ॥

॥भाषाऽर्थ.॥ हे राक्षसराज ! सूर्य मध्याह्नमें उष्णताका अथवा चन्द्र रातमें शैत्यको भले ही छोड़ें, परन्तु लोकका तिरस्कार करनेवाला पुरुष अनर्थमूल अभिमानका त्याग नही करेगा मै ऐसा जानता हू ॥ ६४ ॥

तथाऽपि वक्तु प्रसभ यतन्ते यन् मद्विधाः सिद्धिमभीप्सवस्त्वाम् ॥
विलोमचेष्ट विहिताऽवहासा. परैर्हि तत् स्नेहमयैस्तमोभि ॥ ६५ ॥

अन्वय'—तथाऽपि सिद्धिम् अभीप्सवो मद्विधा परैः विहिताऽवहासाः (सन्त॰) विलोमचेष्ट त्वा प्रसभ वक्तु यत यतन्ते, तत् स्नेहमयै तमोभि हि ॥

व्याख्या—तथाऽपि = एवमपि, सिद्धि = कार्यसाफल्यम् , अभीप्सव॰ = आप्तुमेषणशीला॰ मद्विधा = मादृशा॰ विभीषणादय इति शेषः । परै॰ = अन्यै॰, प्रह-

स्तादिभिरुद्धतैर्जनैः शत्रुभिर्वा । विहिताऽवहासा = कृतोपहासा सन्तोपि, विलोम-चेष्ट = प्रतिकूलचेष्टितं, त्वा = भवन्त, प्रसभं = बलात् , वक्तुं=परिभाषितु , यतन्ते= प्रयत्नं कुर्वन्ति, तत् = वचनाऽर्थं प्रयतनं, स्नेहमयैः = प्रीतिस्वभावैः, तमोभि = अज्ञानैः, हि = निश्चयेन । एव सत्यपि वचनाऽर्थमस्माकं प्रवर्तन स्नेहमयाऽज्ञानमूल मिति भाव ॥

※व्युत्पत्तिः※ मद्विधाः = ममेव विधा ( प्रकार ) येषा ते । विहिताऽवहासा = अवहसनमवहास , "भावे" इति घञ् । विहित अवहासो येषा ते । विलोमचेष्ट= विलोमा चेष्टा यस्य, तम् ॥

※भाषाऽर्थ※ ऐसा होनेपर भी कार्यसाफल्यको प्राप्त करनेकी इच्छा रखनेवाले मेरे ऐसे पुरुष और पुरुषोंके उपहास करने पर भी प्रतिकूल चेष्टावाले आपसे बलपूर्वक बोलनेके लिए जो यत्न करते हैं, वह प्रचुरस्नेहसे सम्पन्न अज्ञानोंके कारणसे है ॥ ६५ ॥

क्रूराः क्रिया. ग्राम्यसुखेषु सङ्गः पुण्यस्य य. सक्षयहेतुरुक्त. ॥
निषेवितोऽसौ भवताऽतिमात्र फलत्यवल्गु ध्रुवमेव राजन् ॥ ६६ ॥

अन्वय - हे राजन् ! क्रूरा क्रिया , ग्राम्यसुखेषु सङ्ग य पुण्यस्य सक्षयहेतुः उक्त । असौ भवता अतिमात्र निषेवित ( सन् ) अवल्गु ध्रुवम् एव फलति ॥

व्याख्या—हे राजन्=हे भूपाल !, क्रूरा =कठोरा क्रियाः=कर्माणि, परहिंसादय , ग्राम्यसुखेषु = सुरतेषु, परदारोपभोगादिषु इति भाव सङ्ग. = आसक्तिः, य , पुण्यस्य = तपसोपार्जितस्य धर्मस्य, सक्षयहेतु = विनाशकारणम् , उक्त = अभिहित , विद्यावृद्धैरिति शेष. । असौ = पुण्यसक्षयहेतु , परहिंसादि ग्राम्यधर्मश्चेति भाव । भवता = त्वया, अतिमात्रम् = अत्यर्थं, निषेवित. = आचरित सन , अवल्गु = अमनोहर, ध्रुवम् एव = नियतम् एव, फलति = फल दास्यति, अत आत्मरक्षणाऽभिलाषिणा भवता पूर्वोक्तं व्यसन सर्वथैव परिहर्तव्यमिति भावः ॥

※व्युत्पत्ति※ अवल्गु = न वल्गु यथा स्यात्तथेति क्रियाविशेषणम् ॥

※भाषाऽर्थ※ हे राजन् ! परहिंसा आदि क्रूर क्रियामें और परस्त्रीगमन आदियोंमें आसक्ति इनको विद्वानोंने पुण्यक्षय का कारण बतलाया है, आपसे अतिशय सेवित होकर ये अमनोहर रूपसे निश्चय दुष्टफल देंगे ॥ ६६ ॥

एव स्थितेऽपि त्वदर्थं प्राणत्यागेऽपि नाऽह पश्चात्पद इति प्रतिपादयति—

दत्त न किं, के विषया न भुक्ताः स्थितोऽस्मि वा क परिभूय नोच्चैः ॥
इत्थं कृताऽर्थस्य मम ध्रुव स्यान्मृत्युस्त्वदर्थे यदि किं न लब्धम् ॥ ६७॥

अन्वयः—( हे राजन् ! ) किं न दत्तं ? के विषया न भुक्ता ? वा क परिभूय उच्चै स्थितो न अस्मि ? इत्थ कृताऽर्थस्य मम त्वदर्थे मृत्यु ध्रुव स्यात् यदि, किं न लब्धम् ? ॥

व्याख्या—( हे राजन् ? ) किं = वस्तु न दत्त = नो वितीर्णम् अर्थिभ्य इति शेष । के, विषया = उपभोग्या पदार्थाः, स्रक्चन्दनवनिताऽऽदय इति भाव , न भुक्ता = न अनुभूता , सर्वे एवाऽनुभूता इति भाव । वा – अथवा, क = जन, परिभूय = तिरस्कृत्य, उच्चै = महति पदे, स्थित = विद्यमान , न अस्मि = नो वर्ते, इत्थम् = अनेन प्रकारेण, कृताऽर्थस्य=कृतकृत्यस्य, प्राप्तजन्मफलस्येति भाव । त्वय्येति शेष । एतादृशस्य मम = कुम्भकर्णस्य, त्वदर्थे=भवदर्थे, मृत्यु = मरणं, ध्रुव = नियत, स्यात् यदि=भवेत् यदि, तर्हि किं = किं फलं, न लब्ध = न प्राप्त, इत उत्तर भवदर्थं प्राणत्यागेन मया सर्वं जन्मफल लप्स्यत इति भाव ॥

❀व्युत्पत्ति❀ विषया = "रूप शब्दो गन्धरसस्पर्शाश्च विषया अमी । गोचरा इन्द्रियाऽर्थाश्च" इत्यमर. । इत्थम् = "इदमस्थमु" इति थमुप्रत्यय ॥

❀भाषाऽर्थ❀ हे राजन् ! याचकोंको क्या नही दिया ? किन विषयोंका अनुभव नही किया ? अथ वा , किसको तिरस्कार करके उन्नतपदमे बैठा नही हू ? इस प्रकारसे कृतकृत्य मेरी आपके लिए मृत्यु नियत हो तो मेने क्या नहीं पाया ? ॥६७॥

किं दुर्नयैस्त्वय्युदितैर्मृषाऽर्थैर्वीर्येण वक्ताऽस्मि रणे समाधिम् ॥
तस्मिन् प्रसुप्ते पुनरित्थमुक्त्वा विभीषणोऽभाषत राक्षसेन्द्रम् ॥६८॥

अन्वयः—( हे राजन् ! ) त्वयि उदितै मृषाऽर्थै दुर्नयै किं ? रणे वीर्येण समाधि वक्तास्मि इत्थम् उक्त्वा तस्मिन् प्रसुप्ते विभीषण राक्षसेन्द्रम् पुन अभाषत ॥

व्याख्या—( हे राजन् ! ) त्वयि = भवद्विषये, उदितै = उक्तै , प्रहस्तादिभिरिति शेषः । मृषाऽर्थै = मिथ्याऽभिधेयै "किं यौरधोऽस्तु" इत्यादिरूपैरिति भाव । दुर्नये = दुर्नीतिभि , किं = किं फल, न किञ्चिदिति भाव । रणे = युद्धे, वीर्येण = पराक्रमेण, रामसम्बन्धिनेति शेष । समाधिं = प्रतिकारं, ऐषा वा व्याख्यानामिति शेष । वक्तास्मि = वदितास्मि, इत्थम् = एवम् , उक्त्वा = कथयित्वा, तस्मिन = कुम्भकर्णे, प्रसुप्ते – निद्रिते सति, विभीषण = रावणकनिष्ठाऽनुज , राक्षसेन्द्र = रावणम् , पुन = भूय , अभाषत = भाषितवान् ॥

❀व्युत्पत्ति❀ मृषाऽर्थै = मृषेत्यव्ययम् । मृषाऽर्थो येषां, तै । दुर्नयै = दुष्टा नया दुर्नयास्तै., "कुगतिप्रादय" इति समासः ॥

❀भाषाऽर्थः❀ हे राजन् ! आपको कहे गये मिथ्या अर्थवाले दुर्नयोंसे क्या फल

होगा ? युद्धमें रामके पराक्रमसे उनका प्रतीकार बतलाऊंगा ऐसा कहकर कुम्भकर्णके सोनेपर विभीषणने रावण को फिर कहा ॥ ६८ ॥

साम्प्रतमपशकुनं प्रतिपादयति—

निमित्तशून्यैः स्थगिता रजोभिर्दिशो, मरुद्भिर्विकृतैर्विलोलैः ॥
स्वभावहीनैर्मृगपक्षिघोषैः क्रन्दन्ति भर्तारमिवाऽभिपन्नम् ॥ ६९ ॥

अन्वयः—निमित्तशून्यैः रजोभिः विकृतैः विलोलैः मरुद्भिः स्थगिता दिशः स्वभावहीनैः मृगपक्षिघोषैः अभिपन्नं भर्तारं क्रन्दन्ति इव ॥

व्याख्या—निमित्तशून्यैः =कारणरहितैः स्वतः उत्पन्नैरिति भावः । रजोभिः = धूलिभिः, एवं च—विकृतैः =विकारयुक्तैः कठोरैरित्यर्थः । विलोलैः = चञ्चलैः, अनियतदिग्वर्तिभिरिति भावः, एतादृशैः मरुद्भिः = वायुभिः, स्थगिताः = सञ्छादिताः, दिशः = काष्ठाः, स्वभावहीनैः = निसर्गभ्रष्टैः मृगपक्षिघोषैः = पशुविहगशब्दैः, अभिपन्नं = मृतं, भर्तारं=पतिं, क्रन्दन्ति इव=आह्वयन्ति इव, इत्थं प्रतीयन्ते इति शेषः ।

॥व्युत्पत्तिः॥ निमित्तशून्यैः =निमित्तेन शून्यानि, तैः । स्थगिता =“स्थग संवरणे” इति धातोः क्तप्रत्ययः इति जयमङ्गलः । क्रन्दन्ति=“क्रदि आह्वाने रोदने च” इति धातोर्लट् । अत्र क्रियोत्प्रेक्षा ॥

॥भाषाऽर्थ॥ हे राजन् ! विना कारणके उत्पन्न धूलियोंसे तथा कठोर और चञ्चल वायुयोंसे आच्छादित दिशायें अस्वाभाविक मृग और पक्षियोंके शब्दोंसे मृत पतिको बुला रहे जैसे प्रतीत हो रहे है ॥ ६९ ॥

उत्पातजं छिद्रमसौ विवस्वान् व्यादाय वक्त्राऽऽकृति लोकभीष्मम् ॥
अत्तुं जनान् धूसररश्मिराशिः सिंहो यथा कीर्णसटोऽभ्युदेति ॥७०॥

अन्वयः—धूसररश्मिराशिः असौ विवस्वान् कीर्णसटः सिंहो यथा वक्त्राऽऽकृति लोकभीष्मम् उत्पातजं छिद्रं व्यादाय जनान् अत्तुम् अभ्युदेति ॥

व्याख्या—धूसररश्मिराशिः = ईषत्पाण्डुकिरणसमूहः, असौ = विप्रकृष्टदेशवर्ती विवस्वान् = सूर्यः, कीर्णसटः = प्रसारितकेसरकलापः, सिंहो यथा = केसरी इव, वक्त्राकृति = मुखाकारं, लोकभीष्मं = भुवनभयङ्करम्, उत्पातजम् = औत्पातिकं, छिद्रं = रन्ध्रं, व्यादाय = प्रसार्य, जनान् = लोकान्, अत्तुं = भक्षयितुम्, अभ्युदेति= उद्गच्छति ॥

॥व्युत्पत्तिः॥ धूसररश्मिराशिः = धूसरो रश्मिराशिर्यस्य सः । कीर्णसटः =कीर्णा सटा यस्य सः । वक्त्राऽऽकृति = वक्त्रस्येव आकृतिर्यस्य तत् । उत्पातजं=उत्पाताज्जा-

त, "पञ्चम्यामजातौ" इति डप्रत्यय । व्यादाय = व्याङ्पूर्वात् ददातेः, क्त्व "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यप् । उपमाऽलङ्कार । इन्द्रवज्रा वृत्तम् ॥

ॐभाषाऽर्थ ॐ धूसर किरणसमूहोंसे युक्त सूर्य फैले हुए केसरोंवाले सिंहके सदृश हो मुख की आकृतिवाले, लोकमें भयको उत्पन्न छिद्र को फैलाकर जनोंको खाने के लिए उग रहा है ॥ ७० ॥

मार्गं गतो गोत्रगुरुर्भृगूणामगस्तिनाऽध्यासितविन्ध्यश्रृङ्गम् ॥
सदृश्यते शक्रपुरोहितोऽह्नि क्ष्मा कम्पयन्त्यो निपतन्ति चोल्का. ७१॥

अन्वय —भृगूणा गोत्रगुरु अगस्तिना अध्यासितविन्ध्यश्रृङ्ग मार्गं गत । अह्नि शक्रपुरोहित सदृश्यते । उल्काश्च क्ष्मां कम्पयन्त्यो निपतन्ति ॥

व्याख्या—भृगूणा = भृगवपत्याना, गोत्रगुरु. = कुलगुरु, शुक्र इत्यर्थ । अगस्तिना = अगस्त्यमुनिना, अध्यासितविन्ध्यश्रृङ्गम् = अधिष्ठितविन्ध्यपर्वतशिखर, तदेव मार्गं = पन्थान, गत = प्राप्त, दक्षिणमार्गचारी शुक्र इत्यर्थं । स च अनिष्टहेतुरिति ज्यौतिषशास्त्रप्रसिद्धि । एव च—अह्नि = दिवसे, शक्रपुरोहित = इन्द्रपुरोधा, बृहस्पतिरित्यर्थ । सदृश्यते = समवलोक्यते, तथव—उल्काश्च = निर्गतज्वालाश्च, क्ष्मा = पृथिवीं, कम्पयन्त्यः = वेपयन्त्य, निपतन्ति = निपतन कुर्वन्ति, सर्वं चैतन्महाऽनिष्टहेतुरिति भाव ॥

ॐव्युत्पत्ति ॐ भृगूणा = भृगूणा गोत्राऽपत्यानि पुमांसो भृगवस्तेषाम्, "ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यण "अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च" इति लुक् "निमित्ताऽपायेनैमित्तिकस्याऽप्यपाय" इति न्यायेन आदिवृद्धेर्निवृत्तिश्च । अध्यासितविन्ध्यश्रृङ्गम् = अध्यासित च तत् विन्ध्यश्रृङ्ग, तत् ॥

ॐभाषाऽर्थःॐ भृगुवशमें उत्पन्न पुरुषोंके कुलगुरु शुक्र अगस्त्यसे अधिष्ठित विन्ध्यपर्वतके शिखर रूप मार्ग को गये हैं, दिनमें बृहस्पति दिखाई देते हैं और उल्कायें पृथ्वी को कम्पित करती हुई गिर रही हैं ॥ ७१ ॥

मासं हतानामिव राक्षसानामाशासव. क्रूरगिरो रुवन्त. ॥
क्रव्याऽशिनो दीप्तकृशानुवक्त्रा भ्राम्यन्त्यभीता. परितः पुर नः॥७२॥

अन्वय'—हतानाम् राक्षसाना मासम् आशासव इव क्रूरगिरो रुवन्तो दीप्तकृशानुवक्त्रा क्रव्याऽशिन अभीता ( सन्त. ) न पुरं परित' भ्राम्यन्ति ॥

व्याख्या—हतानाम् = मारितानाम्, राक्षसाना = यातुधानाना, मास = क्रव्यम्, आशासव इव = आकाङ्क्षन्त' इव, क्रूरगिर. = कठोरस्वना, रुवन्त = नदन्त, दीप्तकृशानुवक्त्रा = प्रज्वलिताऽग्निमुखा, क्रव्याऽशिन = मासभुज., श्रृगालादय

इत्यर्थः । अभीताः = अत्रस्ताः सन्तः, नः = अस्माकं, पुरं परितः = लङ्का सर्वतः, भ्राम्यन्ति = भ्रमणं कुर्वन्ति ॥

॥व्युत्पत्तिः॥ आशसवः = आशंसितुमिच्छवः, "सनाशंसभिक्ष उः" इति उप्रत्ययः । क्रूरगिरः = क्रूरा गीर्येषां ते । दीप्तकृशानुवक्त्राः = दीप्तकृशानुरिव वक्त्रं येषां ते । क्रव्याऽशिनः = क्रव्यमश्नन्तीति तच्छीलाः, ताच्छील्ये णिनिः । पुरं = "परितः" इति पदेन योगे "अभितः परितः समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । भ्राम्यन्ति = "भ्रमु अनवस्थाने" इति धातोर्लट् ।" वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः" इति श्यन् वा । तदभावे शपि भ्रमन्ति । इन्द्रवज्रावृत्तम् ॥

॥भाषाऽर्थ॥ मारे गये राक्षसोंके मांस की इच्छा करते हुएके सदृश, कठोर शब्द वाले, चिल्लाते हुए, प्रदीप्त अग्निके सदृश मुखवाले मांसभक्षक शृगाल आदि जन्तु निर्भीक होते हुए हम लोगों की लङ्काके चारों ओर घूम रहे हैं ॥ ७२ ॥

**पयो घटोध्नीरपि गा दुहन्ति मन्दं विवर्णं विरसं च गोपाः ।**
**हव्येषु कीटोपजनः सकेशो न दीप्यतेऽग्निः सुसमिन्धनोऽपि ॥ ७३ ॥**

अन्वयः—गोपाः घटोध्नीः अपि गाः मन्दं विवर्णं विरसं च पयो दुहन्ति । हव्येषु सुसमिन्धनोऽपि अग्निः कीटोपजनः सकेशः ( सन् ) न दीप्यते ॥

व्याख्या—गोपाः = गोपालाः, घटोध्नीः अपि = पीवरस्तनीः अपि, गाः = धेनूः, मन्दम् = अल्पं, विवर्णं = स्वाभाविकवर्णरहितं, विरसं च = अस्वादु च, पयः = दुग्धं, दुहन्ति = प्रपूरयन्ति, हव्येषु = हवनीयपदार्थेषु, घृतादिषु सत्सु इति भावः । सुसमिन्धनोऽपि = अतिशोभनकाष्ठयुक्तोऽपि, अग्निः = अनलः, कीटोपजनः = कीटोत्पत्तियुक्तः, सकेशः=शिरोरुहसहितः सन्, न दीप्यते=नो ज्वलति ॥

॥व्युत्पत्तिः॥ गोपाः = गाः पान्तीति, "आतोऽनुपसर्गे कः" इति कः । घटोध्नीः = घट इव ऊधो यासान्ता घटोध्न्यः, ताः । "ऊधसोऽनङ्" इत्यनङादेशः, "बहुव्रीहेरूधसो ङीष्" इति ङीष् । गाः = "अकथितं च" इति कर्मसंज्ञा । विवर्णं = विगतो वर्णो यस्मात्तत् । हव्येषु = हूयन्त इति हव्यानि, तेषु "अचो यत्" इति यत् । सुसमिन्धनः=समीचीनानि इन्धनानि यस्य स समिन्धनः, अत्यन्तं समिन्धनः सुसमिन्धनः । कीटोपजनः = उपजननम् उपजनः "भावे" इति घञ् । "जनिवध्योश्च" इति न वृद्धिः । कीटानामुपजनोऽस्येति ॥

॥भाषाऽर्थ॥ ग्वाले पुष्टस्तनोंसे युक्त गायोंसे भी थोड़ा, स्वाभाविक वर्णसे रहित और अस्वादु दूध दूहते हैं । हवनीय घृत आदियोंमें उत्तम काष्ठ सम्पन्न अग्नि भी कीड़ा और केशसे युक्त होता हुआ नहीं जल रहा है ॥ ७३ ॥

तस्मात् कुरु त्वं प्रतिकारमस्मिन् स्नेहान्मया रावण ! भाष्यमाणः ।
वदन्ति दुःखं ह्यनुजीविवृत्ते स्थिताः पदस्थं परिणामपथ्यम् ॥ ७४ ॥

अन्वयः—तस्मात् हे रावण ! त्वं मया स्नेहात् भाष्यमाण ( सन् ) अस्मिन् प्रतिकारं कुरु । हि अनुजीविवृत्ते स्थिताः पदस्थं दुःखं परिणामपथ्यं वदन्ति ॥

व्याख्या—तस्मात् = ततः, यतः एवंविधान्यपशकुनानि दृश्यन्ते तस्मात्कारणादिति भावः, त्वं, मया = अनुजेन, स्नेहात् = प्रणयात्, भाष्यमाणः = कथ्यमानः सन्, अस्मिन् = अत्र विषये, प्रतिकारं = सङ्कटनिवृत्त्युपायं, सीताप्रत्यर्पणरूपमिति भावः । कुरु = विधेहि । अप्रियत्वेन दुःखजनकमेतादृशं वाक्यं कुतः प्रकाश्यते इति चेद्वदन्तीति—हि = यतः, अनुजीविवृत्ते = सेवककर्मणि, स्थिताः = विद्यमाना जनाः, पदस्थम् = उन्नतपदाधिरूढं स्वामिनं, दुःखं = आदौ क्लेशजनकमपि, परिणामपथ्यम् = उत्तरकाले हितावहं वाक्यं वदन्ति=भाषन्ते ।

✽व्युत्पत्तिः✽ प्रतिकारः=प्रतिकरणं प्रतिकारस्तं, भावे घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्यत्र बहुलग्रहणात् पक्षे दीर्घाऽभावः । अनुजीविवृत्ते=अनुजीवन्तीति तच्छीला अनुजीविनः, ताच्छील्ये णिनिः । अनुजीविनां वृत्ते । पदस्थं=पदे तिष्ठतीति पदस्थस्तं, "सुपि स्थः" इत्यत्र योगविभागात् कः प्रत्ययः । वदधातोर्ब्रूञ् धातोः समानाऽर्थकत्वेन "अर्थनिबन्धनेयं सञ्ज्ञा" इत्यतः पदस्थपदस्य "अकथितं च" इति कर्मसञ्ज्ञा । परिणामपथ्यं=पथोऽनपेतं पथ्यं, "धर्मपथ्यर्थन्यायादनपेते" इति यत् । परिणामे पथ्यम् ॥

✽भाषाऽर्थ✽ इस कारण से हे रावण ? आप मुझसे स्नेह पूर्वक कहे जाते हुए इस विषय में प्रतिकार कीजिए। क्यों कि सेवक के कार्य में अवस्थित पुरुष स्वामी के स्थान में विद्यमान पुरुष को आरम्भ में दुःख जनक प्रतीत होते हुए भी परिणाम में हितकारक वाक्य कहते हैं ॥ ७४ ॥

विरुग्णसंकीर्णविपन्नभिन्नैः प्रक्षुण्णसंक्षीणशिताऽस्त्रवृक्णैः ।
यावन्नराऽशैर्न रिपुः शवाऽशान् सन्तर्पयत्यानम तावदस्मै ॥ ७५ ॥

अन्वयः—यावत् रिपुः विरुग्णसंकीर्णविपन्नभिन्नैः प्रक्षुण्णसंक्षीणशिताऽस्त्रवृक्णैः नराऽशैः शवाऽशान् न सन्तर्पयति, तावत् अस्मै आनम ॥

व्याख्या—यावत् = यं कालं यावत्, रिपुः = शत्रुः, रामः इत्यर्थः । विरुग्णसंकीर्णविपन्नभिन्नैः = भग्नाऽङ्गविक्षिप्तमृतविदारितदेहैः, प्रक्षुण्णसंक्षीणशिताऽस्त्रवृक्णैः = सञ्चूर्णितसलज्जिततीक्ष्णाऽऽयुधच्छिन्नैः, एतादृशैः नराऽशैः = मनुष्यभक्षकैः, राक्षसैरित्यर्थः । शवाऽशान्=मृतशरीरभक्षकान् गृध्रशृगालादीनित्यर्थः । न सन्तर्प-

यति = न प्रीणयति, तावत् = तत्कालपर्यन्तम्, अस्मै = शत्रवे रामायेत्यर्थः । "अस्ये"ति पाठे सम्बन्धसामान्ये षष्ठी, शत्रोरित्यर्थः । आनम = प्रणम, चरणयोरिति शेषः ॥

❀व्युत्पत्तिः❀ विरुग्णसकीर्णविपन्नभिन्नैः = विपूर्वकात् "रुजो भङ्गे" इति धातोर्निष्ठायां क्तप्रत्यये विरुग्णपदसिद्धिः । "ओदितश्चे"ति निष्ठानत्वम् । अवशिष्टेषु सकीर्णादिषु "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति नत्वम्। विरुग्णाश्च सकीर्णाश्च विपन्नाश्च भिन्नाश्च, तैः । प्रक्षुण्णसह्रीणशिताऽस्त्रवृक्णैः = प्रपूर्वकात् "क्षुदिर् सचूर्णने" इति धातोः क्तप्रत्यये "रदाभ्यामि"त्यादिना नत्वे च प्रक्षुण्णपदसिद्धिः । अवृश्च्यन्तेति वृक्णाः, "ओव्रश्चू छेदने" इति धातोः क्तप्रत्यये "ग्रहिज्यावयिव्यधिवष्टिविचति वृश्चति पृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणं, सयोगादिलोपः, कुत्वमोदित्वात् "ओदितश्चे"ति नत्वं च । शिताऽस्त्रेण वृक्णा शिताऽस्त्रवृक्णाः । प्रक्षुण्णाश्च सह्रीणाश्च शिताऽस्त्रवृक्णाश्च, तैः । नराशैः = नरान् अश्नन्तीति नराशास्तैः, "कर्मण्यण्" इत्यण् । शवाऽशान् = शवमश्नन्तीति शवाशास्तान्, पूर्ववदण् । अस्मै = "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति सम्प्रदानत्वेन चतुर्थी ॥

❀भाषाऽर्थ❀ जब तक शत्रु भग्न अङ्गों वाले, बिखरे गये मरे हुए और फाड़े गये शरीर वाले एवम् चूर्णित, लज्जित और तीक्ष्ण शस्त्र से काटे गये राक्षसों से मर्दों को खाने वाले गृध्र और शृगाल आदियों को तृप्त नहीं करता है तब तक उसको नमस्कार कीजिए ॥ ७५ ॥

भ्रूभङ्गमाधाय विहाय धैर्यं विभीषणं भीषणरूक्षचक्षुः ।
गिरं जगादोग्रपदामुदग्रः स्वं स्फावयन् शक्ररिपुः प्रभावम् ॥ ७६ ॥

अन्वयः—भीषणरूक्षचक्षुः उदग्रः शक्ररिपुः भ्रूभङ्गम् आधाय धैर्यं विहाय स्वं प्रभावं स्फावयन् विभीषणम् उग्रपदां गिरं जगाद ॥

व्याख्या—भीषणरूक्षचक्षुः = भयानककठोरलोचनः, उदग्रः = उन्नतः, शक्ररिपुः = इन्द्रशत्रुः, रावण इत्यर्थः । भ्रूभङ्गम् = भ्रुकुटिम्, आधाय = आबद्ध्य, धैर्यं = धीरतां, विहाय = त्यक्त्वा, स्वम् = आत्मीयं प्रभावं विक्रमं, स्फावयन् = दर्शयन्, विभीषणं = स्वकनिष्ठभ्रातरम्, उग्रपदां = परुषशब्दां, गिरं=वाणीं, वक्ष्यमाणस्वरूपामित्यर्थः । जगाद=अब्रवीत् ॥

❀व्युत्पत्तिः❀ भीषणरूक्षचक्षुः = भीषणानि रूक्षाणि चक्षूंषि यस्य सः । स्फावयन् = स्फावयतीति, "स्फायी वृद्धौ इति णिजन्तस्य धातोः" स्फायो वः इति वत्वम् । लटः शतृप्रत्ययः । उग्रपदाम् = उग्राणि पदानि यस्याः, ताम् ॥

❀भाषाऽर्थ❀ भयङ्कर और कठोर नेत्रोंसे युक्त, उन्नत रावण भ्रुकुटि बाँधकर

धैर्य छोडकर अपने पराक्रमको बढ़ाता हुआ विभीषणसे कठोरपदोंसे युक्त वाणीको कहने लगा ॥ ७६ ॥

शिला तरिष्यत्युदके न पर्णं ध्वान्तं रवेः स्यन्त्स्यति वह्निरिन्दोः ॥
जेता परोऽहं युधि जेष्यमाणस्तुल्यानि मन्यस्व पुलस्त्यनप्तः ॥७७॥

अन्वयः—हे पुलस्त्यनप्तः ! उदके शिला तरिष्यति पर्णं न, रवेः ध्वान्तं स्यन्त्स्यति, इन्दोः वह्निः स्यन्त्स्यति परः जेता अहं युधि जेष्यमाणः तुल्यानि मन्यस्व ॥

व्याख्या—हे पुलस्त्यनप्तः=हे पुलस्त्यपौत्र, विभीषण इति भावः । पुलस्त्यनप्तृपदेन विभीषणस्य ब्राह्मणसदृशं भीरुत्वं ध्वन्यते । उदके-जले, शिला = पाषाणः, तरिष्यति=सतरणं करिष्यति, पर्णं-पत्रं, न-न तरिष्यति । रवेः=सूर्यात्, ध्वान्तम्=अन्धकारः, स्यन्त्स्यति = प्रस्रविष्यति, इन्दोः =चन्द्रात्, वह्निः =अग्निः, स्यन्त्स्यति= प्रस्रविष्यति, एवं च— परः =उत्कृष्टः, जेता=जयशीलः, अहं=रावणः, युधि=सङ्ग्रामे जेष्यमाणः=अभिभविष्यमाणः भविष्यामीति शेषः । एतानि चत्वारीति शेषः । तुल्यानि=समरूपाणि मन्यस्व=अवगच्छ । यथोदके शिलाप्लवनतरणं, रवेर्ध्वान्तप्रस्रवणमिन्दोर्वह्निप्रस्रवणं च असम्भवं तथैव जेतुर्मम पराजयोऽपि असम्भाव्य इति भावः ॥

॥व्युत्पत्तिः॥ पुलस्त्यनप्तः=पुलस्त्यस्य नप्ता, तत्सम्बुद्धौ । पर्णं न=आर्थी परिसङ्ख्येयम् । ध्वान्तम् "अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।" इत्यमरः । स्यन्त्स्यति = "स्यन्दू प्रस्रवणे" इति धातोः "न वृद्भ्यश्चतुर्भ्यः" इतीडभावः "खरि चे"ति चर्त्वम् । जेता = जयशीलः, "तृन्" इति ताच्छील्ये तृन् ॥

॥भाषाऽर्थः॥ हे पुलस्त्यके पोते ! ( विभीषण ! ) जलमें पत्थर तरे, पत्ता नहीं । सूर्यसे अन्धकार और चन्द्रसे अग्नि प्रस्रुत हो और श्रेष्ठ जयशील मैं भी सङ्ग्राममें दूसरेसे जीता जाऊँ तो इन चारोंको तुल्यरूप मान लो ॥ ७७ ॥

अनिर्वृतं भूतिषु गूढवैरं सत्कारकालेऽपि कृताऽभ्यसूयम् ॥
विभिन्नकर्माऽऽशयवाक् कुले नो मा ज्ञातिचेलं भुवि कस्यचिद्भूत् ॥७८॥

अन्वयः—भूतिषु अनिर्वृतं गूढवैरं सत्कारकाले अपि कृताऽभ्यसूयं विभिन्नकर्माऽऽशयवाक् ज्ञातिचेलं भुवि नः कुले कस्यचित् मा भूत् ॥

व्याख्या—( हे विभीषण ! ) भूतिषु = सम्पत्तिषु, ज्ञातिसम्बन्धिनीष्विति शेषः । अनिर्वृतं=सुखरहितं, गूढवैरं-गुप्तविरोधं, काले हनिष्यामीति धियेति शेषः । सत्कारकाले अपि=आदरसमये अपि, कृताऽभ्यसूयं=विहितदोषाऽऽविष्करणं, नाऽहं यथाऽर्हं सत्कृत इति धियेति शेषः । विभिन्नकर्माऽऽशयवाक्=अन्यकृत्याऽभिप्रायवाणीकं, "मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनः ।" इत्यनुसारादिति भावः । एता-

दृश ज्ञातिचेलं=गर्हितज्ञातिः, भुवि=पृथिव्या, नः=अस्माकं, कुले=वंशे, कस्यचित्=कस्यापि जनस्य, मा भूत्=न भवेत्, त्वमेतादृशो दुर्वृत्तोऽसीति ध्वनिः।

※व्युत्पत्तिः※गूढवैर=गूढं वैरं यस्य तत्। कृताऽभ्यसूय=कृताऽभ्यसूया येन तत्। गुणेषु दोषाऽऽविष्करणमसूया। विभिन्नकर्माऽऽशयवाक्=कर्म च आशयश्च वाक् च कर्माऽऽशयवाचः। विभिन्नाः कर्माऽऽशयवाचो यस्य तत्। ज्ञातिचेल=ज्ञातिरेव चेलं, यद्यपि "चेलं वस्त्रेऽधमे त्रिषु" इत्यमराऽनुशासनाच्चेलशब्दोऽधमे विशेष्यनिघ्नस्तथाऽपि "गर्हितेऽप्यवसाने च चेलमाचक्षते बुधैः" इति कोशाऽन्तराऽनुशासनात्क्लीबत्वं च चेलशब्दस्य बोध्यम्। माभूत्="माङि लुङ्" इति लुङ्। "न माङ्योगे" इत्यडागमप्रतिषेधः॥

※भाषाऽर्थ※ ज्ञातियोंकी सम्पत्तियोंमे सुखरहित, गुप्तरूपसे विरोधी, सत्कार कालमे भी दोषका आविष्कार करने वाला, भिन्नरूपके कर्म, आशय और वचनसे युक्त अधम ज्ञाति ( नातेदार ) पृथिवीमे हमारे कुलमे किसीका न हो ॥ ७८ ॥

इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम्।
नमन्ति शत्रून् न च बन्धुवृद्धिं सन्तप्यमानैर्हृदयैः सहन्ते ॥ ७९ ॥

अन्वयः—ज्ञातयः आत्मनोऽपि अभीक्ष्णं क्षयम् इच्छन्ति, तुल्यकुलस्य लक्ष्मीं न इच्छन्ति। (ज्ञातयः) शत्रून् नमन्ति सन्तप्यमानैः हृदयैः बन्धुवृद्धिं च न सहन्ते।

व्याख्या—ज्ञातयः = बान्धवाः, आत्मनोऽपि = स्वस्याऽपि, अभीक्ष्णं = निरन्तरं, क्षयं = विनाशम्, इच्छन्ति = वाञ्छन्ति, परं तुल्यकुलस्य = समानवंशस्य भ्रात्रादेः, लक्ष्मीं = श्रियं न इच्छन्ति = न वाञ्छन्ति। ज्ञातयः =बान्धवाः, शत्रून्= रिपून्, नमन्ति = प्रणमन्ति, परं सन्तप्यमानैः = ईर्ष्यया दह्यमानैः, हृदयैः = चित्तैः, बन्धुवृद्धिं = ज्ञातिसमृद्धिं, च, न सहन्ते = न मर्षन्ति, त्वमपि तादृश एव बन्धुसमृद्धेरसहिष्णुर्ज्ञातिरिति भावः॥

※व्युत्पत्तिः※ ज्ञातय ="सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः।" इत्यमरः। तुल्यकुलस्य=तुल्यं कुलं यस्य, तस्य॥

※भाषाऽर्थ※ बान्धवलोग अपने भी निरन्तर भले ही क्षय की इच्छा करते है, परन्तु तुल्य कुलके भाई आदिकी लक्ष्मीको नहीं चाहते है। बान्धव भले ही शत्रुओं से झुकते हैं परन्तु ईर्ष्यासे जलने वाले हृदयोंसे अपने बन्धुकी समृद्धिको नही सहते हैं ॥ ७९ ॥

त्वयाऽद्य लङ्काऽभिभवेऽतिहर्षाद् दुष्टोऽतिमात्रं विवृतोऽन्तरात्मा॥
धिक् त्वां मृषा ते मयि दुस्थबुद्धिर्वदन्निदं तस्य ददौ स पार्ष्णिम् ॥ ८० ॥

अन्वयः—( हे विभीषण! ) लङ्काऽभिभवे त्वया अद्य अतिहर्षात् दुष्टः अन्त-

रात्मा अतिमात्रं विवृत मयि ते दु स्थबुद्धि मृषा, त्वा धिक् । इद वदन् स तस्य पार्ष्णि ददौ ॥

**व्याख्या**—( हे विभीषण ! ) लङ्काऽभिभवे=लङ्कापरिभवे, दाहादौ विषय इति भाव , त्वया = विभीषणेन, अद्य = अस्मिन् दिने, अतिहर्षात्=अतिशयाऽऽनन्दात् , दुष्ट = दोषयुक्त , अन्तरात्मा = अन्त करणम्, अतिमात्र = भृश, विवृत =प्रकाशित , एतावन्त काल दूषितस्त्वदीयोऽन्तरात्माऽस्फुट आसीत् , कथाप्रसङ्गेनाऽद्य अतिरोहित सञ्जात इति भाव । मयि = मद्विषये, ते = तव, दु स्थबुद्धि = अयं दु स्थ ( शत्रुभिराक्रान्त ) इति मति , मृषा=मिथ्या, अत त्वा=दुष्टाऽन्तरात्मान विभीषण-धिक् , इदम=एतत् , वदन्=कथयन्, स - रावण , तस्य विभीषणस्य, शिरसीति शेष । पार्ष्णि=पादपश्चाद्भाग, ददौ = दत्तवान्, विभीषणशिरसि पार्ष्णिना प्रहृतवानिति भाव ॥

**॥व्युत्पत्ति॥** दु स्थबुद्धि =दु स्थश्चाऽसौ बुद्धि । त्वा=धिक्पदेन योगे "धिगुपर्यादिषु त्रिषु" इति वचनाद्द्वितीया ॥

**॥भाषाऽर्थ॥** हे विभीषण ! लङ्काके दाह आदि विषयमें तुमने आज अत्यन्त हर्षसे अन्त करणका अच्छी तरहसे प्रकाश किया । मेरे विषयमें "यह शत्रुसे आक्रान्त है" ऐसी तुम्हारी बुद्धि मिथ्याभूत है । तुम्हें धिक्कार है ? "ऐसा कहते हुए रावणने विभीषणके शिरमें एड़ीसे मारा ॥ ८० ॥

तत स कोप क्षमया निगृह्णन् धैर्येण मन्यु विनयेन गर्वम् ॥
मोह धियोत्साहवशादशक्ति सम चतुर्भि सचिवैरुदस्थात् ॥ ८१ ॥

**अन्वयः**—तत स क्षमया कोप, धैर्येण मन्यु, विनयेन गर्व, धिया मोहम् उत्साहवशात् अशक्ति च निगृह्णन् चतुर्भिः सचिवै समम् उदस्थात् ॥

**व्याख्या**—तत = पार्ष्णिप्रहाराऽनन्तरं, स = विभीषण, क्षमया = क्षान्त्या, कोपं = क्रोधं पादप्रहारजनितमिति शेष । एवमनन्तरमपि धैर्येण = धीरतया, मन्यु= शोकं, विनयेन=नम्रतया, गर्वं=दर्पं, धिया बुद्धया, मोह वैचित्यम् , उत्साहवशात्= अध्यवसायवशात् , अशक्तिं च=असामर्थ्यं च, निगृह्णन्=वशीकुर्वन , अपमानेन कोपादीना संभवादिति भाव । चतुर्भि =चतु सङ्ख्यकै , सचिवै =मन्त्रिभि, समं=सह, उदस्थात्=उत्थित , आसनादिति शेष ॥

**॥व्युत्पत्तिः॥** तत = तस्मादिति, "पञ्चम्यास्तसिल्" इति तसिल् । उत्साहवशात् = उत्साहस्य वशात् , "उत्साहोऽध्यवसाय स्यात्" इत्यमर । सचिवै = सहाऽर्थेन "सम" पदेन योगे "सहयुक्तेऽप्रधाने" इति तृतीया । उदस्थात् = उत्पूर्वकात्

स्थाधातोर्लुङ्, "गातिस्थाघुपाभूभ्य सिच परस्मैपदेषु" इति सिचो लुक्। अत्र ओजो नाम गुणविशेष, सोदाहरण तल्लक्षण यथा—

"ओज स्यात्प्रौढिरर्थस्य सक्षेपो वाऽतिभूयस ।
रिपु हत्वा यश कृत्वा त्वदसि कोशमाविशत् ॥" इति ।

ॐभाषाऽर्थ – रावणके पार्ष्णिप्रहारके अनन्तर विभीषण क्षमासे क्रोधको धैर्यसे शोकको, नम्रतासे गर्वको, बुद्धिसे मोहको और उत्साहवशसे असामर्थ्यको भी अपने वशसे रखकर चार मन्त्रियोंके साथ आसनसे उठे ॥ ८१ ॥

उवाच चैन क्षणदाचरेन्द्र सुख महाराज ! विना मयाऽऽस्स्व ॥
मूर्खातुर पथ्यकटूननश्नन यत्साऽऽमयोऽसौ भिषजां न दोषः ॥८२॥

अन्वय —एन क्षणदाचरेन्द्रम् उवाच च—हे महाराज ! मया विना सुखम् आस्स्व । मूर्खाऽऽतुर पथ्यकटून् अनश्नन् यत् साऽऽमय , असौ भिषजा न दोष ॥

व्याख्या—एन = प्राग्भाषमाण, क्षणदाचरेन्द्र = राक्षसराज, रावणमित्यर्थ । उवाच च = जगाद च । हे महाराज = हे भूपाल !, मया विना = मत् ऋते सुख = साऽऽनन्द यथा तथा, आस्स्व = तिष्ठ । स्वीय दोषाऽभाव सूचयति—मूर्खाऽऽतुर इति । मूर्खाऽऽतुर = मूढरोगी, पथ्यकटून् = हितकारककटुपदाऽर्थान्, अनश्नन् = अभक्षयन्, यत्, सामय = रोगयुक्त, असौ = अय, तस्य रुग्णभाव इति भाव । भिषजा = वैद्याना, न दोष = नो दूषणम्, अपि तु तस्यैव मूर्खाऽऽतुरस्य दोष इति भाव । मदुपदिष्ट हितमनाचरतस्तत्र या हानिस्तत्र तवैव दोषो न ममेति भाव ।

ॐव्युत्पत्ति ॐ क्षणदाचरेन्द्र = क्षणम् ( अवसरम् ) ददातीति क्षणदा, "आतोऽनुपसर्गे क" इति क । क्षणदाया चरन्तीति क्षणदाचरा, "चरेष्ट" इति टप्रत्यय । क्षणदाचराणामिन्द्रस्तम् । मया = 'विना' पदेन योगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति तृतीया, पक्षे द्वितीया पञ्चमी च । आस्स्व = "आस उपवेशने" इति धातोर्लोट् । पथ्यकटून् = पथोऽनपेता पथ्या "धर्मपथ्यर्थन्यायादनपेते" इति यत् । पथ्याश्च ते कटवस्तान् । साऽऽमय = आमयेन सहित, "स्त्री रुग्रुजा चोपतापरोगव्याधिगदाऽऽमया ।" इत्यमर ॥

ॐभाषाऽर्थ ॐ विभीषणने राक्षसराज रावणको कहा भी—"हे महाराज ! आप मेरे विना सुखपूर्वक रहे । मूर्ख रोगी पथ्यभूत कटु पदार्थोंको नहीं खाता हुआ जो रोगयुक्त होता है, वह वैद्यों का दोष नहीं है ॥ ८२ ॥

करोति वैरं स्फुटमुच्यमान प्रतुष्यति श्रोत्रसुखैरपथ्यै ॥
विवेकशून्य प्रभुरात्ममानी महाननर्थ सुहृदा बतायन् ॥ ८३ ॥

अन्वयः—विवेकशून्य आत्ममानी प्रभु स्फुटम् उच्यमानो वैरं करोति, श्रोत्रसुखै अपथ्यै प्रतुष्यति । बत अयं सुहृदा महान् अनर्थ ।

व्याख्या—विवेकशून्य = निर्विवेक , सदसद्विवेचनारहित इति भाव । आत्ममानी = आत्मश्लाघी, "नाऽस्ति मत्सदृशो लोके न भूतो न भविष्यती' ति धियेति भाव । एतादृश प्रभु = स्वामी, स्फुट = व्यक्त, यथार्थमित्यर्थ । उच्यमान॰ = भाष्यमाण सन् , वैर = विरोध, करोति = विदधाति, न तु स्नेहमिति भाव । एव च श्रोत्रसुखे = कर्णद्वारा सुखोत्पादके , अपथ्ये = परिणामेऽहितकारिभिर्वचनै , प्रतुष्यति = प्रहृष्यति, बत = खेदोऽस्ति, अयम्=एष , सुहृदा = हितचिन्तकानामाश्रिताना, महान् = साऽतिशय , अनर्थ = अनर्थहेतु , अस्तीति शेष ॥

*व्युत्पत्ति* विवेकशून्य॰ = विवेकेन शून्य , "विवेक पृथगात्मता ।" इत्यमर । आत्ममानी = आत्मान मन्यत इति "आत्ममाने खश्च" इति चाणिनि । बत = खेदद्योतकमव्ययमेतत्। उपेन्द्रवज्रा वृत्तम् ॥

*भाषाऽर्थ* विवेकरहित, आत्माऽभिमानी स्वामी यथार्थ वचन कहने पर विद्वेष करता है, कर्णके द्वारा सुखके उत्पादक परिणाममे अहितकारक वचनोंसे सन्तुष्ट होता है । खेद है ! यह हितचिन्तक आश्रितोंका महान् अनर्थका हेतु हे ॥८३॥

क्रीडन् भुजङ्गेन गृहाऽनुपातं कश्चिद्यथा जीवति सशयस्थ ॥
ससेवमानो नृपति प्रमूढं तथैव यज्जीवति सोऽस्य लाभ ॥ ८४ ॥

अन्वय—यथा कश्चित् गृहाऽनुपात भुजङ्गेन क्रीडन् संशयस्थो जीवति, तथैव प्रमूढ नृपतिं ससेवमानो यत् जीवति स अस्य लाभ ॥

व्याख्या—यथा = येनप्रकारेण, कश्चित्=कोऽपि, सर्पग्राहीति भाव । गृहाऽनुपातं = गृह गृहमनुपत्य, भुजङ्गेन=सर्पेण, क्रीडन्=क्रीडा कुर्वन् , सशयस्थ = आशङ्कमान॰, "किमयं दङ्क्ष्यति नो वे"ति धियेति भाव । जीवति=प्राणधारण करोति, तथैव = तेनैव प्रकारेण, प्रमूढम्=अतिमूर्खं, नृपतिं = राजान, ससेवमान = आश्रयन् , सेवक इति शेष , यत्, जीवति = प्राणान् धारयति, स = प्राणधारणाऽनुकूलव्यापार , अस्य = सेवकस्य, लाभ॰ = प्राप्ति॰, एतेन मूर्खस्य तव सेवनेन यन्मम जीवन नाऽपगत स एव लाभो लाभान्तरस्य वार्ता आस्तामिति भाव॰ ॥

*व्युत्पत्तिः* गृहाऽनुपात = "विशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयो" "इति णमुल् "कृन्मेजन्त" इत्यव्ययत्वम् । भुजङ्गेन="साधकतम करणम्" इति करणत्वम् । अत्र निदर्शनाऽलङ्कार॰, सोदाहरण तल्लक्षणं यथा—

"वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना ।
या दातुः सौम्यता, सेयं सुधांऽशोरकलङ्किता ॥"

॥भाषाऽर्थ.॥ जैसे कोई मदारी घर घरमे जाकर सर्पसे क्रीडा करता हुआ आशङ्का करता हुआ जीता है, वैसे ही अतिशय मूर्ख राजाकी सेवा करता हुआ सेवक जो जीता है वही उसका लाभ है ॥ ८४ ॥

दत्तः स्वदोषैर्भवता प्रहारः पादेन धर्म्ये पथि मे स्थितस्य ॥
स चिन्तनीयः सह मन्त्रिमुख्यैः कस्याऽवयोर्लाघवमादधातु ॥८५॥

अन्वयः—भवता स्वदोषैः धर्म्ये पथि स्थितस्य मे ( यः ) पादेन प्रहारो दत्तः, स आवयोः कस्य लाघवम् आदधातु ( इति ) मन्त्रिमुख्यैः सह चिन्तनीयः ॥

व्याख्या—( हे राजन् ! ) भवता = त्वया, स्वदोषैः = आत्मदोषैः, अविवेकित्वादिभिरिति भावः । धर्म्ये = धर्मादनपेते, पथि = मार्गे, स्थितस्य = विद्यमानस्य, मे = मम, ( यः ) पादेन = चरणेन, प्रहारः = ताडनं, दत्तः = कृतः इति भावः । सः = पादप्रहारः, आवयोः = भ्रात्रोर्मध्ये, कस्य = कतरस्य, लाघवं = लघुत्वम्, आदधातु = करोतु, ( इति = इत्थम् ) मन्त्रिमुख्यैः = सचिवप्रधानैः, एतैरिति भावः । सह = समं, विचिन्तनीयः = विचारणीयः, सुनिरूपणे कृते सति तवैव लाघवं प्रकाश्येतेति भावः ॥

॥व्युत्पत्तिः॥ धर्म्ये = "धर्मपथ्यर्थन्यायादनपेते" इति यत् । मन्त्रिमुख्यैः = मन्त्रिषु मुख्यैः, सहयोगे "सह युक्तेऽप्रधाने" इति तृतीया । चिन्तनीयः = चिन्तयितुमर्हः, अनीयर् ॥

॥भाषाऽर्थ ॥ हे राजन् ! आपने अपने दोषोंसे धर्मसे अनपेत मार्गमें विद्यमान मेरे प्रति जो पादप्रहार किया वह हम दोनों के बीचमें किसकी लघुताको प्रकाशित करेगा यह मुख्य मन्त्रियोंके साथ विचार करना चाहिए ॥ ८५ ॥

इति वचनमसौ रजनिचरपतिं बहुगुणमसकृत्प्रसभमभिदधत् ॥
निरगमदभयः पुरुषरिपुपुरान् नरपतिचरणौ नवितुमरिनुतौ ॥८६॥

अन्वयः—रजनिचरपतिं बहुगुणम् इति वचनम् असकृत् प्रसभम् अभिदधत् अभयः असौ अरिनुतौ नरपतिचरणौ नवितुं पुरुषरिपुपुरात् निरगमत् ॥

व्याख्या—रजनिचरपतिं = राक्षसेश्वरं, रावणमित्यर्थः । बहुगुणम् = औदार्याद्यनेकगुणसम्पन्नम्, इति = उक्तप्रकारं, वचनं = वचः, असकृत् = वारं वारं, प्रसभं = बलात्, अभिदधत् = ब्रुवन्, अभयः = निर्भयः, असौ = विभीषणः, अरि-

नुतौ = शत्रुभिरपि स्तुतौ, नरपतिचरणौ = रामपादौ, नवितु = स्तोतु, पुरुषरिपु-पुरात् = राक्षसनगर्या, लङ्काया इति भाव, निरगमत् = निष्क्रान्त ॥

※व्युत्पत्ति.※ रजनिचरपति = रज्यन्ति ( अनुरक्ता भवन्ति ) कामिनोऽस्यामिति रजनि, "क्षिपे किच्चेऽ"ति उणादिसूत्रे चकाराद्नि । "अनिदितां हल उपधाया क्ङिति" इति नलोप । रजनौ चरन्तीति रजनिचरा, "चरेष्ट" इति ट । रजनि-चराणां पतिम् । एव स्थिते रजनीशब्दस्यैव "ङ्यापो सञ्ज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वत्वमिति कष्टकल्पना समाश्रयन्तो जयमङ्गला उपेक्षणीया. । पूर्वोक्तप्रकारेण निष्प-न्नस्य रजनिशब्दस्य "कृदिकारादक्तिन" इति ङीषो वैकल्पिकत्वेन रजनीति इका-रान्त पद निष्पद्यते । बहुगुणं = बहवो गुणा यस्मिंस्तत् । अभिदधत् = अभिद-धातीति, अभिपूर्वकधाधातोर्लट॰ शत्रादेश । "नाऽभ्यस्ताच्छतुः" इति नुम्प्रतिषेध । अरिनुतौ = अरिभिर्नुतौ । नुतावित्यत्र "णु स्तुतौ" इति धातो॰ क्तप्रत्यय "श्रयुक॰ किति" इति इट् प्रतिषेध । नरपतिचरणौ = नरपतेश्चरणौ । नवितु = "णु स्तुतौ" इति णोपदेशात् सेट्कादादादिकाद्धातोस्तुमुन् इडागमश्च । पुरुषरिपुपुरात् = पुरुषरिपो॰ पू पुरुषरिपुपुर, तस्मात् "ऋक्पूरब्धू. पथामानक्षे" इति समासाऽन्त. अप्रत्यय. । अत्र प्रहरणकलिका वृत्तम् ।

※भाषाऽर्थ※ रावणको औदार्य आदि अनेक गुणोंसे सम्पन्न ऐसे वचनको वारवार बलपूर्वक कहते हुए निर्भीक विभीषणजी शत्रुओं से भी स्तुत रामचन्द्रजीके चरणोंकी स्तुति करनेके लिए लङ्कासे निकल गये ॥ ८६ ॥

**अथ तमुपगतं विदितसुचरितं पवनसुतगिरा गिरिगुरुहृदय॰ ॥**
**नृपतिरमदयन् मुदितपरिजन स्वपुरपतिकरै. सलिलसमुदयैः ॥८७॥**

अन्वय॰—अथ गिरिगुरुहृदयो नृपति उपगत पवनसुतगिरा विदितसुचरितं मुदितपरिजनं त स्वपुरपतिकरै सलिलसमुदयै अमदयत ॥

व्याख्या—अथ=विभीषणकर्तृकलङ्कापरित्यागाऽनन्तरं, गिरिगुरुहृदय =शैलाऽ-प्रकम्पचेता, यद्वा शङ्करध्याता, नृपति = राजा, रामचन्द्र इत्यर्थ । उपगत=समीप-प्राप्तं, पवनसुतगिरा = हनूमद्वचनेन विदितसुचरितं=ज्ञातसद्वृत्त, मुदितपरिजनं = हृष्टाऽनुचरं, स्वस्वाम्यभ्युदयेनेति शेष । तं=विभीषण, स्वपुरपतिकरै = लङ्काऽ-धिपतिं कुर्वद्भि, सलिलसमुदयै =घटस्थितैर्जलसमूहै॰, अमदयत् = हर्षितवान्, रामो लङ्काराज्येऽभिषेचनेन विभीषण समतोषयदिति भाव ॥

※व्युत्पत्ति※ गिरिगुरुहृदय॰ = गुरुहृदय यस्य स गुरुहृदय॰, गिरिरिव गुरुहृदय॰। यद्वा गिरि ( हिमालयपर्वतः ) गुरु. ( पूज्यः, श्वशुरत्वेनेति भाव ) यस्य स गिरि-गुरुः शङ्कर इत्यर्थ. । स हृदये यस्य स, इष्टदेवत्वेनेति भावः । रामस्य शिवभक्तत्व

प्रसिद्धमेव । विदितसुचरित = विदित सुचरित यस्य, तम् । मुदितपरिजनं = मुदिता परिजना ( चत्वार सचिवा ) यस्य तम् । स्वपुरपतिकरै = स्वपुरपति कुर्वन्तीति तद्धेतव. स्वपुरपतिकरास्तै , "कृञो हेतुताच्छील्यानुलोम्येषु" इति ट । अमदयत् = "मदी हर्षे" इति णिजन्ताद्धातोर्लङ् । घटादित्वान्मित्त्वे ह्रस्वत्वम् । प्रहरणकलिकावृत्तम् ॥

॥भाषाऽर्थ॥ अनन्तर पर्वतके सदृश अप्रकम्प हृदयवाले अथवा शिवजीका ध्यान करने वाले महाराज रामचन्द्रने निकट आये हुए, हनुमान्जीके वचनसे जिनका सच्चरित्र जाना गया है, ऐसे और प्रसन्न मन्त्रियोंसे युक्त विभीषणजीको लङ्काके अधिपति बनाने वाले कलशस्थित जलोंसे प्रसन्न किया ॥ ८७ ॥

इति श्रीचन्द्रकलाव्याख्यामण्डिते भट्टिकाव्ये प्रसन्नकाण्डे
भाविकत्वप्रदर्शनस्तृतीय परिच्छेद ।

---

# अथ त्रयोदशः सर्गः ।

संस्कृतप्राकृताऽपभ्रंशभेदात्त्रिविध काव्यम् । तत्र देशीयसंस्कृतभवयो· प्राकृतयोरपभ्रंशस्य च धर्मजनकताऽवच्छेदकत्वाऽभावात् कृतोपक्रमे महाकाव्यात्मके संस्कृतप्रबन्धे समावेशाऽसम्भवात् शब्दसमाया प्राकृतभाषाया समावेशो विधीयते । अय च भाषाश्लेष । शब्दश्लेषस्य भेदाऽष्टके अन्यतमो भाषाश्लेष । स च यथा साहित्यदर्पणे—

"वर्णप्रत्ययलिङ्गाना प्रकृत्यो पदयोरपि ।
श्लेषाद्विभक्तिवचनभाषाणामष्टधा च स ॥" इति ।

तत्रैकादशे सर्गे कृतोपक्रमस्य प्रभातवर्णनस्य परिशिष्टाऽशस्य समापन विधाय सेतुबन्धन वर्ण्यते ।

**चारुसमीरणरमणे हरिणकलङ्ककिरणावलीसविलासा ॥**
**आबद्धराममोहा वेलामूले विभावरी परिहीणा ॥ १ ॥**

**अन्वय.**—चारुसमीरणरमणे वेलामूले हरिणकलङ्ककिरणाऽऽवलीसविलासा आबद्धराममोहा विभावरी परिहीणा ।

**व्याख्या.**—चारुसमीरणरमणे = रुचिरवाताऽऽनन्दने, वेलामूले=समुद्रतटसमीपे, हरिणकलङ्ककिरणाऽऽवलीसविलासा=चन्द्रमयूखपङ्क्तिसविभ्रमा, आबद्धराममोहा=जनितराममूर्च्छा, विभावरी=रात्रि , परिहीणा = क्षीणा ।

ॐव्युत्पत्ति.ॐ चारुसमीरणरमणे=रमयतीति रमण, णिजन्तात् "रमु क्रीडायाम्" इति धातो "नन्दिग्रहिपचादिभ्यो ल्युणिन्यच" इति ल्यु "युवोरनाकौ" इत्यनादेश । चारुसमीरणेन रमणे । "समीरमारुतमरुज्जगत्प्राणसमीरणा" इत्यमर. । हरिणकलङ्ककिरणाऽऽवलीसविलासा=हरिण कलङ्को यस्य स हरिणकलङ्क, "ग्लौर्मृगाऽङ्क कलानिधि" इत्यमर । हरिणकलङ्कस्य किरणाऽऽवल्या सविलासा । आबद्धराममोहा=आबद्धो राममोहो यया सा । अत्राऽऽर्यागीतिस्तल्लक्षण यथा-

"आर्यापूर्वार्ध यदि गुरुणैकेनाऽधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिल भवति यदीयमुक्तेयमार्यागीति ॥" इति ।

अस्या एव प्राकृतभाषाया स्कन्धक इति नामधेयम् ॥

ॐभावार्थ ॐ मनोहर वायुसे आनन्दकारक समुद्रतट के समीपमें चन्द्र किरणों की पङ्क्तिसे विलासयुक्त और रामकी मूर्च्छाको उत्पन्न करने वाली रात बीती ॥ १॥

**बद्धो वासरसङ्गे भीमो रामेण लवणसलिलावासे ।**
**सहसा संरम्भरसो दूरारूढरविमण्डलसमो लोले ॥ २ ॥**

**अन्वय.**—वासरसङ्गे लोले लवणसलिलाऽऽवासे रामेण भीमो दूराऽऽरूढरविमण्डलसम सरम्भरस सहसा बद्ध ॥

**व्याख्या**—वासरसङ्गे = दिवससम्बन्धे प्रात काले इति भाव । लोले = चञ्चले, रामभीत्या प्रभातवायुना सक्षोभ्यमाणत्वादिति भाव । लवणसलिलाऽऽवासे = लवणसमुद्रे, रामेण = रामचन्द्रेण, भीम = भयङ्कर, दूराऽऽरूढरविमण्डलसम = मध्याह्नस्थसूर्यमण्डलतुल्य , सरम्भरस = कोपरस , वीराख्य इति शेष । "कृतोपवासेऽपि मयि नाऽसौ समुद्र उत्थित" इति धियेति भाव । सहसा = तत्क्षणे, बद्ध = कृत ॥

ॐव्युत्पत्तिःॐ—वासरसङ्गे=वासरस्य सङ्गो यस्मिंस्तस्मिन् । लवणसलिलावासे= आ समन्तात् वसन्ति अस्मिन् स. आवास , अधिकरणे घञ् । सलिलानामावास सलिलावास. । लवणश्चाऽसौ सलिलाऽऽवासस्तस्मिन् । दूराऽऽरूढरविमण्डलसम =दूरमारूढो यो रविस्तस्य मण्डल, तेन सम , अतितीक्ष्णत्वादिति भाव । सहसा="अतर्किते तु सहसा" इत्यमर ॥

ॐभावाऽर्थःॐ प्रात काल में चञ्चल लवण समुद्र में रामने भयङ्कर और मध्याह्न में वर्तमान सूर्य के मण्डल तुल्य क्रोधरस को सहसा प्रकाशित किया ॥ २ ॥

**गाढगुरुपुङ्खपीडासधूमसलिलाऽरिसंभवमहाबाणे ।**
**आरूढा सदेहं रामे समहीधरा मही सफणिसभा ॥ ३ ॥**

अन्वयः—गाढगुरुपुङ्खपीडासधूमसलिलाऽरिसम्भवमहाबाणे रामे समहीधरा सफणिसभा मही सन्देहम् आरूढा ॥

व्याख्या—गाढगुरुपुङ्खपीडासधूमसलिलाऽरिसम्भवमहाबाणे = दृढगुरुबाणमूलपीडनेन धूमसहिताऽग्निसम्भवमहाशरे, एतादृशे रामे = रामचन्द्रे, समहीधरा = पर्वतसहिता, सफणिसभा = सर्पसमूहोपेता, मही = पृथ्वी, सन्देह = संशयम्, आरूढा= प्राप्ता, रामे कोपाऽऽविष्टे पृथिव्या स्थितावपि सशय सञ्जात इति भाव ।

**❀व्युत्पत्ति❀ गाढगुरुपुङ्खपीडासधूमसलिलाऽरिसम्भवमहाबाणे गाढोगुरुर्यः पुङ्खः ( बाणमूलम् ), तस्य पीडया ( अङ्गुष्ठाभ्यामाकर्षणेनेति शेष ) सधूमस्य सलिलाऽरे ( जलशत्रोः, अग्नेरित्यर्थ ) सभवः ( उत्पत्ति ) यस्मिन्, तादृशो महाबाणो यस्य सः, तस्मिन् । समहीधरा = धरन्तीतिधरा, पचाद्यच् । मह्याधरा इति महीधरा, तैः सहिता । अत्र पदमुखे वर्तमानस्य धकारस्य हकारो न भवति । प्राकृते पदमध्यान्तयोर्विधीयमानत्वात् । स फणिसभा = फणिसभया सहिता ॥**

**❀भाषाऽर्थ❀ दृढ और गुरु बाणमूलको अगूठोंसे आकर्षण करने से धूमयुक्त अग्निकी उत्पत्ति करने वाले महा बाणसे युक्त रामचन्द्रमे पर्वतोंसे और सर्पसमूहसे युक्त पृथ्वी सन्देहको प्राप्त हो गई ॥ ३ ॥**

घोरजलदन्तिसकुलमट्टमहापङ्ककाहलजलावासम् ।

आरीण लवणजल समिद्धफलबाणविद्धघोरफणिवरम् ॥ ४ ॥

अन्वय—घोरजलदन्तिसङ्कुलम् अट्टमहापङ्ककाहलजलाऽवास समिद्धफलबाणविद्धघोरफणिवर लवणजलम् आरीणम् ।

व्याख्या—रामेणाऽऽग्नेये बाणे प्रहिते—घोरजलदन्तिसङ्कुल = भीषणतोयगजव्याप्तम्, अट्टमहापङ्ककाहलजलाऽऽवास = शुष्कमहाकर्दमविह्वलमत्स्यादिकं, समिद्धफलबाणविद्धघोरफणिवर = दीप्तफलशरताडितभीषणसर्पश्रेष्ठ, लवणजल = सामुद्रतोयम्, आरीण = समन्तात् शुष्कम् ॥

**❀व्युत्पत्ति❀ घोरजलदन्तिसङ्कुल = घोरा ये जलदन्तिन, तैः सङ्कुलम् । अट्टमहापङ्ककाहलजलाऽऽवासम् = अट्यत इत्यट्टः, 'अट्ट अतिक्रमहिंसनयो' इति धातो कर्मणि घञ् । "अट्ट भग्ने शुष्के च क्षौमेऽत्यर्थे गृहान्तरे ।" इति विश्व । अट्टो यो महापङ्कस्तस्मिन् काहलाः ( विह्वलाः ) जलावासा यस्मिस्तत् । समिद्धफलबाणविद्धघोरफणिवर = समिद्ध ( प्रदीप्तम् ) फलम् ( अग्रभाग ) येषा ते, ते च ते बाणाः स्तैर्विद्धा घोरा फणिवरा यस्मिस्तत् । आरीणम् = आङ्पूर्वकात् "रीङ् स्रवणे" इति धातोर्निष्ठातकारस्य "स्वादय ओदित" इति धातोरोदित्वाऽतिदेशात् "ओदितश्च" इति नत्वम् । "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति णत्व च ॥**

❀भाषाऽर्थ❀ रामके आग्नेय बाण छोड़ने पर भयङ्कर जलहस्तियोंसे व्याप्त, सूखे महापङ्कमे विह्वल मत्स्य आदि जल जन्तुओंसे युक्त, प्रदीप्त फल ( अग्रभाग ) वाले बाणोंमे ताडित और भयङ्कर श्रेष्ठ सर्पो से युक्त समुद्रका जल सूख गया ॥४॥

सभय परिहरमाणो महाऽहिसचारभासुर सलिलगणम् ।
आरूढो लवणजलो जलतीर हरिबलागमविलोलगुहम् ॥ ५ ॥

अन्वय—लवणजलो महाऽहिसचारभासुर सलिलगण सभय परिहरमाणो हरिबलाऽऽगमविलोलगुह जलतीरम् आरूढ ॥

व्याख्या—लवणजल = समुद्र , महाहिसञ्चारभासुर = महासर्पसञ्चलनदीप्यमान, सलिलगण = जलसमूह, सभय = भीतिपूर्वकं, परिहरमाण = परित्यजन् , हरिबलाऽऽगमविलोलगुह = वानरसेनाऽऽगमनव्याकुलकन्दर, जलतीर = तोयतटम्, आरूढ = सप्राप्त , मूर्तिमान् भूत्वेति शेष ॥

❀व्युत्पत्ति❀ लवणजल = लवण जल यस्य स । महाऽहिसञ्चारभासुर = महान्तश्च ते अहयो महाहय, "आन्महत. समानाऽधिकरणजातीययो" इत्यात्वम् । महाऽहीना सञ्चारस्तेन भासुरस्तम् । सभय = भयेन सहित यथा तथेति क्रियाविशेषणम् । "तेन सहेति तुल्ययोगे" इति बहुव्रीहि, "वोपसर्जनस्य" इति सहस्य सभाव । हरिबलाऽऽगमविलोलगुह = हरीणा ( वानराणाम् ) बलेन विलोला गुहा यस्मिस्तत् ॥

❀भाषाऽर्थ❀ समुद्र बड़े बड़े सर्पों के सञ्चरणसे दीप्यमान जलसमूहको भय के साथ त्याग करते हुए बानरों की सेनाके आगमनसे व्याकुल गुहासे युक्त जलतट को प्राप्त हुए ॥ ५ ॥

चञ्चलतरुहरिणगण बहुकुसुमाबन्धबद्धरामावासम् ।
हरिपल्लवतरुजालं तुङ्गोरुसमिद्धतरुवरहिमच्छायम् ॥ ६ ॥

अन्वय—( लवणजल ) चञ्चलतरुहरिणगण बहुकुसुमाऽऽबन्धबद्धरामाऽऽवास हरिपल्लवतरुजाल तुङ्गोरुसमिद्धतरुवरहिमच्छायम् ( जलतीरम् आरूढ. ) ॥

व्याख्या—( लवणजल = समुद्र ) चञ्चलतरुहरिणगण = चपलवानरसमूह बहुकुसुमाऽऽबन्धबद्धरामाऽऽवास = बहुलपुष्पमिथ राश्लेषघटितरामवासस्थान, हरिपल्लवतरजाल = पिङ्गलकिसलयवृक्षसमूह, तुङ्गोरुसमिद्धतरुवरहिमच्छायम् = उन्नतविस्तीर्णमण्डलोज्ज्वलश्रेष्ठवृक्षशीतलच्छायम् । ( जलतीरम् आरूढ ) ॥

❀व्युत्पत्ति❀ चञ्चलतरुहरिणगण—चञ्चल तरुहरिणाना शाखामृगाणां, वानराणामित्यर्थं. गणो यस्मिस्तत् । बहुकुसुमाऽऽबन्धबद्धरामाऽऽवास = बहूनि कुसु-

मानि येषा तेषाम् ( वृक्षाणाम् ) आबन्धेन ( परस्परसश्लेषेण ) बद्धो रामस्य आवासो यस्मिस्तत्। हरिपल्लवतरुजाल = हरय ( पिङ्गला ) पल्लवा यस्मिस्तत् हरिपल्लव, तत् तरुजाल यस्मिस्तत्। "पल्लवोऽस्त्री किसलयम्" इत्यमर। तुङ्गोरुसमिद्धतरुवरहिमच्छाय = तुङ्गा उरव समिद्धा ये तरुवरा, तैर्हिमा छाया यस्मिस्तत्। "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमर। जलतीरमित्यस्य विशेषण चैतत्॥

※भाषार्थ※ समुद्र चञ्चल वानरसमूहसे युक्त, बहुत फूलोंवाले वृक्षोंके परस्पर सश्लेषसे बने हुए रामचन्द्रजीके वासस्थानसे युक्त, पिङ्गल पल्लवोंवाले वृक्ष समूहसे सम्बद्ध और उन्नत, विस्तीर्ण और उज्ज्वल श्रेष्ठ वृक्षों से ठण्डी छायावाले जलतट को प्राप्त हुए॥ ६॥

वरवारण सलिलभरेण गिरिमहीमण्डलसवरवारणम्।
वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम्॥ ७॥

**अन्वयः—**( लवणजल ) वरवारण सलिलभरेण गिरिमहीमण्डलसवरवारणं वसुधारय तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम् ( जलतीरम् आरूढ )॥

**व्याख्या—**( लवणजल = समुद्र ) वरवारण = श्रेष्ठहस्तियुक्तं, सलिलभरेण = जलसमूहेन, गिरिमहीमण्डलसंवरवारण = पर्वतभूमण्डलाऽऽवरणनिषेधक, वसुधारय = द्रव्यधारक, तुरङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम् = उच्चोर्मिसश्लेषनष्टचञ्चलभूमिवेगम्, जलतीरम् आरूढ॥

※व्युत्पत्ति※ वरवारण = वरा वारणा यस्मिस्तत्, "मतङ्गजो गजो नाग कुञ्जरो वारण करी।" इत्यमर। गिरिमहीमण्डलसवरवारण = गिरीणा महीमण्डलस्य च य सवरस्तस्य वारणम्। वसुधारय = धारयतीति धारयम्, णिजन्तात् "धृञ् धारणे" इति धातो "अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च" इति शप्रत्यय। वसूना धारयम्। तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारय = तुङ्गा ये तरङ्गा, तेषा सङ्गात् परिहीणो लोलो वसुधाया रयो यस्मिस्तदिति जलतीर विशेषणम्। एतानि सप्तसङ्कीर्णानि, सस्कृतप्राकृतयो सामान्यस्वरूपत्वात्। अत्र पद्यस्य द्वयोरर्द्धयोराद्यन्तयोर्यमकम्॥

※भाषाऽर्थ※ समुद्र श्रेष्ठ हाथियोंसे युक्त, जलसमूहसे पर्वत और भूमण्डलके आवरणको रोकनेवाले, द्रव्य के धारक जहाँ पर उन्नत तरङ्गोंके सम्बन्धसे चञ्चल पृथिवीमें वेग नष्ट हो गया है ऐसे जलतट को प्राप्त हुए॥ ७॥

प्रणिपत्य ततो वचन जगाद हितमायतो पतिर्गरीणाम्॥
गङ्गाऽवलम्बिबाहू राम बहलोरुहरितमालच्छायम्॥ ८॥

अन्वय.—ततो गङ्गाऽवलम्बिबाहु वारीणा पति बहलोरुहरितमालच्छायं राम प्रणिपत्य आयतौ हित वचनं जगाद् ॥

व्याख्या—तत = जलतटप्राप्त्यनन्तर, गङ्गाऽवलम्बिबाहु =जाह्नव्यवलम्बनशीलभुज , वारीणा=जलाना, पति =स्वामी, समुद्र इत्यर्थ । बहलोरुहरितमालच्छाय= निबिडमहाहरिततापिच्छकान्ति, राम, प्रणिपत्य = नमस्कृत्य, आयतौ = आगामिनि काले, हित = पथ्य, स्वस्य रामस्य चेति शेष । एतादृश वचन = वच , वक्ष्यमाणरूपमिति भाव । जगाद = उक्तवान् ॥

॥व्युत्पत्ति॥ गङ्गाऽवलम्बिबाहु = गङ्गामवलम्बेते तच्छीलाविति गङ्गाऽवलम्बिनौ, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनि । गङ्गाऽवलम्बिनौ बाहू यस्य स गङ्गाऽवलम्बिबाहु , "रामम्" इति उत्तरपदे परे सस्कृते "ढ्लोपे पूर्वस्य दीर्घोऽण" इति दीर्घत्वम् । प्राकृते तु पुलिङ्गो उकारस्य दीर्घत्वमेव । बहलोरुहरितमालच्छायम् = उरुर्हरिर्यस्तमालस्तस्य छाया उरुहरितमालच्छाया । बहला उरुहरितमालच्छाया यस्य, तम् । आयतौ = "उत्तरः काल आयति." इत्यमर । अत्र पूर्वार्द्धे प्राकृतस्याऽभावात् निरवद्यम्, उत्तरार्ध तु सङ्कीर्णम् । उपमालङ्कारः ॥

॥भाषाऽर्थ॥ जल तटमे पहुचनेके अनन्तर गङ्गाका अवलम्बन करने वाले बाहुओंसे युक्त जलस्वामी समुद्र महान् हरितवर्णवाले तमाल वृक्षके सदृश घनी छायावाले रामचन्द्रजीको नमस्कार कर उत्तर कालमे हितकारक वचन बोले ॥८॥

तुङ्गा गिरिवरदेहा अगमं सलिल समीरणो रसहारी ॥
अहिमो रविकिरणगणो माया ससारकारण ते परमा ॥ ९ ॥

अन्वयः—गिरिवरदेहा तुङ्गा । सलिलम् अगमम् समीरणो रसहारी रविकिरणगण अहिम ससारकारण ते परमा माया ॥

व्याख्या—( हे राम ! ) गिरिवरदेहा = श्रेष्ठपर्वतकाया , तुङ्गा = उन्नता , सलिल = जलम् , अगमम् = अगम्यम् । समीरण = वायु , रसहारी = जलशोषक , रविकिरणगण = सूर्यरश्मिसमूह , अहिम = उष्ण , ससारकारण = लोकहेतु , ते= तव = परमा = उत्कृष्टा, माया = शाम्बरी ॥

॥व्युत्पत्ति॥ अगमम् = न गम्यत इति, "ग्रहवृहनिश्चिगमश्चे"त्यप् । रसहारी= रस हरतीति तच्छील ॥

॥भाषाऽर्थ॥ हे राम ! श्रेष्ठ पर्वतों के शरीर ऊँचे, जल अगम्य, वायु जलशोषक और सूर्यका किरणसमूह उष्ण, ससारका कारण आपकी श्रेष्ठ माया है ॥ ९ ॥

आयाससंभवारुण ! सहर सहारहिमहरसमच्छायम् ॥
बाणं वारिसमूह सगच्छ पुराणचारुदेहावासम् ॥ १० ॥

अन्वयः—हे आयाससम्भवारुण ! संहारहिमहरसमच्छाय बाण संहर । पुराणचारुदेहाऽऽवास वारिसमूहं सगच्छ ॥

व्याख्या—हे आयाससम्भवाऽरुण = हे कोपोत्पत्तिरक्तवर्ण ! संहारहिमहरसमच्छाय = प्रलयसूर्यतुल्यतेजस, बाण = शर, संहर = उपशमय, पुराणचारुदेहाऽऽवास = पुरातनसुन्दरशरीराऽवस्थान, वारिसमूह = जलसमूह, सगच्छ = अङ्गीकुरु, रक्षेति भाव ॥

❀व्युत्पत्ति.❀ आयाससभवाऽरुण = आयासस्य सभवेनाऽरुणस्तत्सम्बुद्धौ । संहारहिमहरसमच्छाय = हिम हरन्तीति हिमहरा सूर्या अग्नयो वा, "हरतेरनुद्यमनेऽच्" इत्यच्प्रत्यय । सहारे हिमहरास्तै समा छाया यस्य स, तम् । पुराणचारुदेहाऽऽवास=पुराणश्चारुर्यो देहस्तस्य आवासस्तम्, "पुराणे प्रतनप्रत्नपुरातनचिरन्तना ।" इत्यमर । सगच्छ = सकर्मकत्वात् "समो गम्यृच्छिभ्याम्" इत्यात्मनेपद न भवति ॥

❀भाषाऽर्थ❀ क्रोधकी उत्पत्तिसे लाल वर्णवाले हे भगवन् ! प्रलयकालके सूर्यके सदृश तेजसे युक्त बाणको शान्त कीजिए । प्राचीन सुन्दर शरीरके अवस्थान रूप जलसमूहकी रक्षा कीजिए ॥ १० ॥

असुलभहरिसचार जलमूल बहलपङ्करुद्धायामम् ॥
भण कि जलपरिहीणं सुगमं तिमिकम्बुवारिवारणभीमम् ॥ ११ ॥

अन्वय —जलमूलं जलपरिहीणम् ( अपि ) बहलपङ्करुद्धाऽऽयाम तिमिकम्बुवारिवारणभीमम् असुलभहरिसचार ( सत् ) किं सुगम ? भण

व्याख्या—जलमूल = तोयाऽवस्थान, जलपरिहीण = तोयरहितमपि, आग्नेयाऽस्त्रेणेति शेष । बहलपङ्करुद्धाऽऽयाम = सान्द्रकर्दमनिवारितदैर्घ्यं, तिमिकम्बुवारिवारणभीम = मत्स्यविशेषशङ्खजलहस्तिभयङ्करम्, अत एव—असुलभहरिसचारं = दुर्लभवानरपर्यटनं सत्, कि सुगम = किं सुगमनीयं ?, भण = ब्रूहि, नैव सुगम, प्रत्युत सुतरा दुर्गममिति भाव ।

❀व्युत्पत्ति❀ बहलपङ्करुद्धाऽऽयाम = बहलो य पङ्कस्तेन रुद्ध आयामो यस्मिस्तत् । तिमिकम्बुवारिवारणभीम = तिमयश्च कम्बवश्च वारिवारणाश्च तिमिकम्बुवारिवारणास्तैर्भीमम् । "तिमिर्मीन" इति हलायुध । "अस्ति मत्स्यस्तिमिर्नाम दशयोजनविस्तृत ।"इत्यन्ये । असुलभहरिसचार = न सुलभोऽसुलभस्तादृशो हरिसचारो यस्मिस्तत् । भण = वाक्यार्थ. कर्म ॥

❀भाषाऽर्थ❀ जलाधार आग्नेय अस्त्रसे जलरहित होता हुआ भी गाढ़ कीचड़से रुद्ध दैर्ध्यवाला और बडे मत्स्य, शङ्ख और जल हस्तियोंसे भयङ्कर अत एव वानरों के पर्यटनका अविषय होता हुआ क्या सुगम है ? कहिए ॥ ११ ॥

गन्तु लङ्कातीरं बद्धमहासलिलसंचरेण सहेलम् ॥
तरुहरिणा गिरिजालं वहन्तु गिरिभारसंसहा गुरुदेहम् ॥ १२ ॥

अन्वय—बद्धमहासलिलसंचरेण सहेलं लङ्कातीरं गन्तुं गिरिभारससहा तरुहरिणा गुरुदेहं गिरिजालं वहन्तु ॥

व्याख्या—बद्धमहासलिलसंचरेण = घटितमहाजलसेतुना, सहेलं = सकौतुकं, लङ्कातीरं = लङ्कासम्बन्धितटं, गन्तुं = यातुं, गिरिभारससहा =पर्वतभारवहनसमर्थाः, तरुहरिणाः = शाखामृगाः, वानरा इत्यर्थः । गुरुदेहं = महाशरीरं, गिरिजालं = पर्वतसमूहं, वहन्तु = प्रापयन्तु ॥

ॐव्युत्पत्तिॐ बद्धमहासलिलसंचरेण = संचरन्त्यनेनेति संचरो मार्गः, "गोचरसंचरवहव्रजव्यजापणनिगमाश्च" इति घप्रत्ययान्तो निपातः । अत्र संचरशब्दो लक्षणया सेत्वर्थाऽभिधायकः । बद्धो महासलिले यः संचरस्तेन । सहेलं = हेलया सहितं यथा तथेति क्रियाविशेषणम् । गिरिभारससहाः=संसहन्त इति संसहाः, पचाद्यच् । गिरिभारस्य संसहाः । तरुहरिणाः = तरुचारिणो हरिणाः, मध्यमपदलोपी समासः । गुरुदेहं = गुरुर्देहो यस्य तत् ॥

ॐभाषाऽर्थॐ हे राम ! जलसमूहमें बनाये गये पुलसे कौतुकपूर्वक लङ्कासम्बन्धी तीरमें जानेके लिए पर्वतका भार ढोने में समर्थ वानर महाशरीरवाले पर्वत समूहको ले जायँ ॥

हरहासरुद्धविगमं परकण्ठगणं महाहवसमारम्भे ।
छिन्दन्तु रामबाणा गम्भीरे मे जले महागिरिबद्धे ॥ १३ ॥

अन्वय—गम्भीरे मे जले महागिरिबद्धे ( सति ) महाऽऽहवसमारम्भे रामबाणाः हरहासरुद्धविगमं परकण्ठगणं छिन्दन्तु ॥

व्याख्या—गम्भीरे = अगाधे, मे = मम, समुद्रस्य, जले = तोये, महागिरिबद्धे = महापर्वतबद्धे सति, महाऽऽहवसमारम्भे = महासमरोपक्रमे, रामबाणाः = रामचन्द्रशराः, हरहासरुद्धविगमं = शिवहास्यनिवारिताऽपायं, परकण्ठगणं = शत्रुग्रीवासमूहं, छिन्दन्तु = द्वैधीकुर्वन्तु । रावणो हरप्रीतिसम्पादनाऽर्थं स्वशिरांसि छिन्नवान् तेन प्रीतो हरो जहासेति प्रसिद्धिमनुसृत्य उक्तमिदं वचनम् ॥

ॐव्युत्पत्तिॐ महागिरिबद्धे = महागिरिभिः बद्धे । महाऽऽहवसमारम्भे = महाऽऽहवस्य समारम्भे । हरहासरुद्धविगमं = हरतीति हरः, पचाद्यच् । हरस्य हासेन रुद्धो विगमो यस्य तम् । परकण्ठगणं = परस्य ( शत्रोः, रावणस्येत्यर्थः ) कण्ठानां गणम् । छिन्दन्तु = "छिदिर् द्वैधीकरणे" इति धातोर्लोट् ॥

ॐभाषाऽर्थ.ॐ गम्भीर मेरे जल के महापर्वतों से बद्ध होने पर महासमर के आरम्भ मे रामचन्द्र जी के बाण महादेव के हास्य से जिसका विनाश रुक गया है। ऐसा शत्रु का कण्ठ समूह काट दे ॥ १३ ॥

गच्छन्तु चारुहासा वीररसाबन्धरुद्धभयसबन्धम् ।
हन्तु बहुबाहुबलं हरिकरिणो गिरिवरोरुदेहं सहसा ॥ १४ ॥

अन्वय —चारुहासा हरिकरिण वीररसाऽऽबन्धरुद्धभयसम्बन्ध गिरिवरोरुदेह बहुबाहुबल सहसा हन्तु गच्छन्तु ॥

व्याख्या—चारुहासा = सुन्दरहास्ययुक्ता, हरिकरिण = कपिकुञ्जरा, वीररसाऽऽबन्धरुद्धभयसम्बन्ध = शौर्यसततप्रवर्तननिवारितत्राससम्पर्क, गिरिवरोरुदेह = शैलश्रेष्ठविशालशरीर, बहुबाहुबल = प्रचुरभुजसैन्य, रावणसैन्यमिति भाव । सहसा= अतर्कित एव, हन्तु = व्यापादयितु, गच्छन्तु = यान्तु ॥

ॐव्युत्पत्ति ॐ चारुहासा = चारुर्हासो येषा ते । हरिकरिण = हरय करिण इव, "उपमित व्याघ्रादिभि सामान्याऽप्रयोगे" इति समास । वीररसाऽऽबन्धरुद्धभयसम्बन्ध = वीररसस्य ( शौर्यस्य ) य आबन्ध, तेन रुद्धो भयसम्बन्धो यस्य तत् । गिरिवरोरुदेहम् = उरुर्देहो यस्य तत् उरुदेह गिरिवर इव उरुदेहम् । बहुबाहुबल= बहवो बाहवो यस्य स बहुबाहुः, रावण इत्यर्थस्तस्य बलम् । एतानि षट् सङ्कीर्णानि, सस्कृतप्राकृतयोस्तुल्यत्वात् ॥

ॐभाषाऽर्थ ॐ मनोहर हास्य वाले श्रेष्ठ वानर शौर्य की निरन्तर प्रवृत्ति से निवारित भयसम्बन्ध से युक्त, श्रेष्ठ पर्वत के सदृश महाशरीरवाले रावण सैन्यको सहसा मारने के लिए जाय ॥ १४ ॥

जिगमिषया सयुक्ता बभूव कपिवाहिनी मते दाशरथे ।
बुद्धजलालयचित्ता गिरिहरणारम्भसभवसमालोला ॥ १५ ॥

अन्वय.—दाशरथे मते बुद्धजलालयचित्ता गिरिहरणारम्भसम्भवसमालोला कपिवाहिनी जिगमिषया सयुक्ता बभूव ॥

व्याख्या—दाशरथे = रामस्य, मते = अभिप्राये सति, बुद्धजलालयचित्ता = ज्ञातसमुद्राऽभिप्राया, गिरिहरणाऽऽरम्भसम्भवसमालोला = पर्वताऽऽनयनाऽनुष्ठानचञ्चला, कपिवाहिनी = वानरसेना, जिगमिषया = गमनेच्छया, संयुक्ता=युक्ता, बभूव= सञ्जाता ॥

ॐव्युत्पत्ति ॐ दाशरथे = दशरथस्याऽपत्य पुमान् दाशरथिस्तस्य, "अत इञ्" इति इञ् । बुद्धजलाऽऽलयचित्ता= बुद्ध जलाऽऽलयस्य चित्त यया सा । गिरिहरणाऽऽरम्भसम्भवसमालोला = गिरीणा यत् हरण तस्य य आरम्भसम्भवः ( अनुष्ठानम् ),

तेन समालोला। जिगमिषया = गन्तुमिच्छया, सन्नन्तात् गम् धातो "अ प्रत्ययात्" इति अ प्रत्यय। ततष्टाप्। अत्र पूर्वार्द्धे प्राकृताऽभावात् निरवद्यम् ॥

॥भाषाऽर्थः॥ राम का अभिप्राय होने पर समुद्र के अभिप्राय को जानने वाली, पर्वतों के लाने के अनुष्ठान से अतिशय आकुल वानर सेना जाने की इच्छा से युक्त हो गई ॥ १५ ॥

गुरुगिरिवरहरणसहं सहारहिमारिपिङ्गलं रामबलम्।
आरूढ सहसा ख वरुणालयविमलसलिलगणगम्भीरम् ॥ १६ ॥

अन्वय —गुरुगिरिवरहरणसह सहारहिमाऽरिपिङ्गलं रामबल वरुणाऽऽलयविमलसलिलगणगम्भीर खम् सहसा आरूढम् ॥

व्याख्या—गुरुगिरिवरहरणसह = दुर्वहश्रेष्ठपर्वताऽऽनयनसमर्थं, सहारहिमाऽरिपिङ्गल = प्रलयाऽग्निकपिल, रामबल = रामचन्द्रसैन्यं, वरुणाऽऽलयविमलसलिलगणगम्भीर = समुद्रनिर्मलजलसमूहदुरवगाह, खम् = आकाश, सहसा = तत्क्षणम्, आरूढम् = आरुरोह ॥

॥व्युत्पत्ति॥ गुरुगिरिवरहरणसह = गुरवो ये गिरिवरास्तेषां हरण सहते इति, कप्रकरणे "मूलविभुजादिभ्य उपसंख्यानम्" इति क। यद्वा सहत इति सह, पचाद्यच्। तस्य सहम्। सहारहिमाऽरिपिङ्गल-सहारे यो हिमाऽरिः (अग्नि) स इव पिङ्गलम्। वरुणाऽऽलयविमलसलिलगणगम्भीर = वरुणाऽऽलयस्य (समुद्रस्य) विमलो य सलिलगण स इव गम्भीर, तत्। आरूढ = कर्तरि क्तप्रत्यय। उपमाऽलङ्कार ॥

॥भाषाऽर्थः॥ दुर्वह श्रेष्ठ पर्वतों को लाने मे समर्थ, प्रलय काल के अग्नि के सदृश पिङ्गल, राम की सेना समुद्र के निर्मल जल समूह के सदृश गम्भीर आकाश को उसी क्षण आरूढ हो गई ॥ १६ ॥

कलापक चतुर्भि १७—२०।

अवगाढ गिरिजाल तुङ्गमहाभित्तिरुद्धसुरसंचारम् ॥
अभयहरिरासभीम करिपरिमलचारुबहलकन्दरसलिलम् ॥१७॥

अन्वय.—(रामबलेन) तुङ्गमहाभित्तिरुद्धसुरसञ्चारम् अभयहरिरासभीमं करिपरिमलचारुबहलकन्दरसलिल गिरिजालम् अवगाढम् ॥

व्याख्या—तुङ्गमहाभित्तिरुद्धसुरसञ्चार = प्रांशुबृहत्कुड्यनिवारितदेवसञ्चारम्, अभयहरिरासभीम = निर्भयसिंहशब्दभयङ्करं, करिपरिमलचारुबहलकन्दरसलिल = हस्तिसमर्दगन्धमनोहरघनगुहाजलं, गिरिजाल = पर्वतसमूह, अवगाढम् = अवलम्बितम्, खमारुह्य रामबलेनेतिशेष ॥

ॐव्युत्पत्तिॐ तुङ्गमहाभित्तिरुद्धसुरसञ्चार = तुङ्गा महत्यो या भित्तय., ताभिः रुद्ध सुरसञ्चारो यस्मिस्तत् । अभयहरिरासभीमम्=अविद्यमान भय येषां ते अभया., ते च ते हरय ( सिंहाः ) तेषां रास ( शब्द ), तेन भीमम् । करिपरिमलचारु बहलकन्दरसलिल = करिणा य परिमल ( समर्दजनितमदगन्ध ), तेन चारु बहल कन्दरसलिल यस्मिस्तत् । अवगाढम् = अवपूर्वकात् "गाहू विलोडने" इति धातो क्तप्रत्यय. ॥

ॐभाषाऽर्थॐ रामचन्द्रकी सेनाने उन्नत महाभित्तिसे जहा पर देवताओंका सञ्चार रुद्ध हो गया है, निर्भय सिंहोके शब्दसे भयङ्कर, हाथियोंके विमर्दनमे उत्पन्न मदगन्धसे मनोहर और घन गुहाजलसे युक्त पर्वत समूहका अवलम्बन किया ॥१७॥

अलिगणविलोलकुसुमं सकमलजलमत्तकुररकारण्डवगणम् ।
फणिसकुलभीमगुह करिदन्तसमूढसरसवसुधाखण्डम् ॥ १८ ॥

अन्वय.—( रामबलेन ) अलिगणविलोलकुसुमं सकमलजलमत्तकुररकारण्डवगण फणिसङ्कुलभीमग्रह करिदन्तसमूढसरसवसुधाखण्डम् ( अवगाढम् ) ।

व्याख्या—अलिगणविलोलकुसुम = भ्रमरसमूहचञ्चलपुष्प, सकमलजलमत्तकुररकारण्डवगण = सपद्मतोयक्षीवोत्क्रोशहसविशेषसमूह, फणिसङ्कुलभीमगुह=सर्पव्याप्तभयङ्करकन्दरं, करिदन्तसमूढसरसवसुधाखण्डं = हस्तिदशनसमुत्क्षिप्ताऽऽर्द्रभूमिखण्ड, गिरिजाल रामबलेन अवगाढमिति अध्याहार ॥

ॐव्युत्पत्तिॐ अलिगणविलोलकुसुमम् = अलिगणैर्विलोलानि कुसुमानि यस्मिस्तत् । सकमलजलमत्तकुररकारण्डवगण = सकमलानि यानि जलानि, तेषु मत्ता कुरराणा कारण्डवाना च गणा. यस्मिस्तत् । फणिसङ्कुलभीमगुह = फणिभि सङ्कुला अतो भीमा गुहा यस्मिस्तत् । करिदन्तसमूढसरसवसुधाखण्ड = करिदन्तै समूढ सरसं वसुधाखण्ड यस्मिस्तत् ॥

ॐभाषाऽर्थॐ रामकी सेनाने भ्रमरसमूहसे चञ्चल फूलोंसे युक्त, कमलोंसे युक्त जलमें मत्त कुरर और कारण्डव नामके पक्षिगणसे सम्पन्न, सर्पोंसे व्याप्त भयङ्कर गुहाओंवाले और हाथियोंके दातोंसे समुन्नत सरस पृथिवीखण्डसे युक्त पर्वतसमूहका अवलम्बन किया ॥ १८ ॥

अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम् ।
रविमणिसभवहिमहरसमागमाबद्धबहुलसुरतरुधूपम् ॥ १९ ॥

अन्वय.—( रामबलेन ) अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलं रविमणिसभवहिमहरसमागमाऽऽबद्धबहुलसुरतरुधूपम् ( गिरिजालम् अवगाढम् ) ॥

व्याख्या—अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम् = कमलपराग-

पिङ्गलसारसशब्दमनोहरनिर्मलप्रचुरसुन्दरतोयं, रविमणिसंभवहिमहरसमागमाऽऽबद्धबहुलसुरतरुधूप = सूर्यकान्तजानलसगमजनितबहुदेवदारुधूप, गिरिजाल रामबलेन अवगाढमिति अध्याहार ॥

*व्युत्पत्तिः* अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम् = अरविन्दानां रेणुभिः पिञ्जरा ये सारसा' ( पुष्कराह्वा , पक्षिविशेषा ) तेषा रवेण ( शब्देन ) हारि-विमल बहु चारु जल यस्मिस्तत् । "पुष्कराह्वस्तु सारस'" इत्यमर'। रविमणिसभव-हिमहरसमागमाऽऽबद्धबहुलसुरतरुधूप = रविमणिसभव ( सूर्यकान्तमण्युत्पन्न' ) यो हिमहर' ( अग्नि ), तेन य समागम , तेन आबद्ध ( जनित ) बहुल. सुरतरु-धूपो यस्मिस्तत् ॥

*भाषाऽर्थ* रामकी सेनाने कमलोंके परागसे पिङ्गल सारसोंके शब्दसे मनोहर निर्मल अधिक सुन्दर जलसे युक्त और सूर्यकान्तमणिसे उत्पन्न अग्निके समागमसे उत्पन्न प्रचुर देवदारुवृक्षोंके धूपसे सम्पन्न पर्वतसमूहका अवलम्बन किया ॥ १९ ॥

हरिरवविलोलवारणगम्भीराबद्धसरसपुरुसरावम् ।
घोणासंगमपङ्काविलसुबलभरसहोरुवराहम् ॥ २० ॥

अन्वय —( रामबलेन ) हरिरवविलोलवारणगम्भीराबद्धसरसपुरुसंराव घोणा-संगमपङ्काऽऽविलसुबलभरसहोरुवराहम् ( गिरिजालम् अवगाढम् ) ।

व्याख्या—हरिरवविलोलवारणगम्भीराऽऽबद्धसरसपुरुसरावं = सिहशब्दचञ्चल-हस्तिमन्द्रजनितभयानकरसमहाशब्दं, घोणासङ्गमपङ्काऽऽविलसुबलभरसहोरुवराहं = नासिकासम्पर्ककर्दमकलुषमहाशक्तिभरसमर्थविशालसूकरं, गिरिजालम् अवगाढम् इति अध्याहार ॥

*व्युत्पत्ति* हरिरवविलोलवारणगम्भीराऽऽबद्धसरसपुरुसराव = हरीणा ( सिंहानाम् ) योरवस्तेन विलोला ये वारणास्तै गम्भीर आबद्ध. सरस. पुरु' सरावो यस्मिस्तत् । घोणासङ्गमपङ्काऽऽविलसुवलभरसहोरुवराह = घोणाया' सङ्गमात् समुद्धृत इति शेष', एतादृशो य पङ्कस्तेन आविला सुबलाः भरसहा उरवो वराहा यस्मिस्तत् "घोणा नासा च नासिका" इत्यमर' ॥

*भाषाऽर्थ* रामचन्द्रजीकी सेनाने सिंहोंके शब्दसे डरनेवाले हाथियोंके गम्भीर और उत्पन्न भयानक रसवाले महान् शब्दसे युक्त और नासिकाके सम्पर्कसे उद्धृत कीचड़से मैले बलवान् और भार सहनेवाले विशाल वराहोंसे युक्त पर्वतसमूहका अवलम्बन किया ॥ २० ॥

उत्खन्नु' परिरब्धान् कपिसङ्घा बाहुभिस्ततो भूमिभृतः ।
निष्पिष्टशेषमूर्ध्न' शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान् ॥ २१ ॥

**अन्वय**—तत कपिसङ्घा बाहुभि परिरब्धान निष्पिष्टशेषमूर्ध्न शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान् भूमिभृत उच्चख्नु ॥

**व्याख्या**—तत = अवगाहाऽनन्तर, कपिसङ्घा = वानरसमूहा, बाहुभि = भुजै, परिरब्धान् = समाश्लिष्टान्, निष्पिष्टशेषमूर्ध्न = चूर्णिताऽनन्तमस्तकान्, व्याप्तपातालमूलत्वादिति, शेष । शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान् = शिखरविक्षिप्तसूर्यतारासमूहान्, भूमिभृत = पर्वतान्, उच्चख्नु = उत्खातवन्त ॥

ॐव्युत्पत्तिॐ निष्पिष्टशेषमूर्ध्न = निष्पिष्टा शेषस्य मूर्धानो यैस्ते निष्पिष्टशेषमूर्धानस्तान्। "शेषोऽनन्त" इत्यमर। शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान्=शृङ्गैः विकीर्ण उष्णरश्मि नक्षत्रगणश्च यैस्ते शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणास्तान्। भूमिभृत = भूमि बिभ्रति इति भूमिभृतस्तान्, क्विप्रत्यय.। उच्चख्नु. = उत्पूर्वकात् "खनु अवदारणे" धातोर्लिट्। "गमहनजनखनघसा लोप क्ङित्यनङि" इत्युपधालोप.। प्राकृतस्य अडायुक्तत्वादत्र सर्वं निरवद्यम् ॥

ॐभाषाऽर्थ.ॐ पर्वतसमूहका अवलम्बन करनेके अनन्तर वानरसमूहोंने भुजोंसे परिगृहीत, शेषनागके मस्तकको चूर्णित करनेवाले, जहापर शिखरोंसे सूर्य और नक्षत्रगण विक्षिप्त हो गये है ऐसे पर्वतोंको खोदा ॥ २१ ॥

**तुङ्गमहागिरिसुभरा बाहुसमारुद्धभिदुरटङ्का बहुधा ।**
**लवणजलबन्धकामा आरूढा अम्बरं महापरिणाहम् ॥ २२ ॥**

**अन्वयः**—तुङ्गमहागिरिसुभरा बाहुसमारुद्धभिदुरटङ्का बहुधा लवणजलबन्धकामा (कपिसङ्घा महापरिणाहम् अम्बरम् आरूढा ॥

**व्याख्या**—तुङ्गमहागिरिसुभरा = उन्नतविशालशैलजातभारा, बाहुसमारुद्धभिदुरटङ्का = भुजगृहीतविदारणशीलोन्नतप्रदेशा, बहुधा = अनेकप्रकारै, लवणजलबन्धकामा = समुद्रबन्धनसाऽभिलाषा, कपिसङ्घा इति शेष । महापरिणाह = बृहद्विशालतोपेतम्, अप्रमेयदिग्विभागमिति भाव । अम्बरम् = आकाशम्, आरूढा = आरोहन् ॥

ॐव्युत्पत्ति.ॐ तुङ्गमहागिरिसुभराः ॥ तुङ्गा महान्तो ये गिरय, तै सुभरा । शोभनो भरो येषां ते सुभरा.। बाहुसमारुद्धभिदुरटङ्काः = भेदनशीला भिदुरा, "विदिभिदिच्छिदे कुरच्" इति कुरुचप्रत्यय । बाहुभि समारुद्धा भिदुरा टङ्का यैस्ते। बहुधा = बहुभि प्रकारै, बहुशब्दस्य "बहुगणवतुडतिसख्या" इति सख्यासज्ञत्वात् "सख्याया विधार्थे धा" इति धाप्रत्यय.। लवणजलबन्धकामा = लवणजलस्य बन्धं कामयन्त इति, "शिलिकामिभक्षयाचरिभ्यो ण" इति अणोऽपवादो ण । महापरिणाह= महान् परिणाहो यस्य, तत्, "परिणाहो विशालता" इत्यमर ॥

❀भाषाऽर्थ❀ उन्नत विशाल पर्वतोंसे भारवाले, विदारणशील उन्नत प्रदेशोंको बाहुओंसे ग्रहण करनेवाले और अनेक प्रकारोंसे समुद्रको बांधनेकी इच्छा करनेवाले वानरसमूह विशाल परिमाणवाले आकाशमे चढ़ गये ॥ २२ ॥

बहुधवलवारिवाहं विमलायसमहासिदेहच्छायम् ।
बद्धविहङ्गमालं हिमगिरिमिव मत्तकुररवसबद्धम् ॥ २३ ॥

अन्वयः—( कपिसङ्घा ) बहुधवलवारिवाहं विमलाऽऽयसमहाऽसिदेहच्छायं बद्धविहङ्गममालं मत्तकुररवसम्बद्धं हिमगिरिम् इव ( अम्बरम् आरूढा ) ॥

व्याख्या—बहुधवलवारिवाह=प्रचुरश्वेतमेघयुक्त, विमलाऽऽयसमहासिदेहच्छाय = निर्मललोहविकारमहाखड्गकायकान्ति, बद्धविहङ्गममाल = विरचितपक्षिपङ्क्ति, मत्तकुररवसम्बद्ध =क्षीबोत्क्रोशशब्दयुक्त, हिमगिरिम् इव – हिमालयम् इव, अम्बरं कपिसङ्घा आरूढा इति प्राक्तनस्य पदत्रयस्य परामर्श ॥

❀व्युत्पत्ति❀ बहुधवलवारिवाह = बहवो धवला वारिवाहा यस्मिंस्तत् । विमलाऽऽयसमहाऽसिदेहच्छाय=अयसो विकार आयस, "तस्य विकार" इत्यण् । विमल आयसो महान् योऽसि, तद्देहस्येव छाया यस्य तदिति व्यधिकरणबहुव्रीहि । बद्धविहङ्गममाल = बद्धा विहङ्गमाना माला यस्मिंस्तत् । मत्तकुररवसम्बद्धं = मत्ता ये कुररा, तेषा रवेण सम्बद्धम्, "उत्क्रोशकुररौ समौ" इत्यमर ॥

❀भाषाऽर्थ❀ वानरसमूह बहुत सफेद मेघोंसे युक्त, निर्मल लोहविकारके खड्ग के शरीरके सदृश कान्तिवाले, पक्षियोंकी पङ्क्तिसे सम्बद्ध, मत्त उत्क्रोश पक्षियोंके शब्दसे सम्बद्ध हिमालयके सदृश आकाशमे चढ गये ॥ २३ ॥

चारुकलहंससकुलमचण्डसंचारसारसाबद्धरवम् ।
सकुसुमकणगन्धवहं समयागमवारिसङ्गविमलायामम् ॥ २४ ॥

अन्वय —( कपिसङ्घा ) चारुकलहंससङ्कुलम् अचण्डसञ्चारसारसाऽऽबद्धरवं सकुसुमकणगन्धवहं समयाऽऽगमवारिसङ्गविमलाऽऽयामम् ( अम्बरम् आरूढा ) ॥

व्याख्या—चारुकलहंससङ्कुल=सुन्दरकादम्बव्याप्तम्, अचण्डसञ्चारसारसाऽऽबद्धरव = शनै सञ्चारिपुष्कराह्वजनितशब्दं, सकुसुमकणगन्धवह = परागसहितवातयुक्तं, समयाऽऽगमवारिसङ्गविमलाऽऽयाम = वर्षाऽऽगमनजलसम्पर्कनिर्मलदैर्ध्यम्, अम्बरं कपिसङ्घा आरूढा इति प्राक्तनस्य पदत्रयस्य अध्याहार ॥

❀व्युत्पत्ति❀ चारुकलहंससङ्कुल = चारवो ये कलहंसास्तै सङ्कुल, "कादम्बः कलहंसः स्यात्" इत्यमर । अचण्डसञ्चारसारसाऽऽबद्धरवम् = अचण्डसञ्चारो येषा ते अचण्डसञ्चारा, एतादृशा ये सारसा "पुष्कराह्वस्तु सारस" इत्यमरः । अचण्डसञ्चा-

रसारसै. आबद्धो रवो यस्मिस्तत् । सकुसुमकणगन्धवह = कुसुमकणै सहित· सकुसुमकण । वहतीति वह, पचाद्यच् । गन्धस्य वहो गन्धवह·, "पृषदश्वो गन्धवहो गन्धवाहाऽनिलाऽऽशुगा ।" इत्यमर । सकुसुमकणो गन्धवहो यस्मिस्तत् । समयाऽऽगमवारिसङ्गविमलाऽऽयाम = समयस्य ( वर्षाकालस्य ) आगमेन यो वारिसङ्गस्तेन विमला आयामा यस्मिस्तत् ॥

❀भाषाऽर्थ❀ वानर समूह सुन्दर कादम्ब हसोंसे व्याप्त, धीरे धीरे उडने वाले सारसोंके शब्द से युक्त, परागयुक्त वायु वाले, वर्षाके आगमन से जलसम्पर्कसे निर्मल दीर्घतासे युक्त आकाश में चढ गये ॥ २४ ॥

सहसा ते तरुहरिणा गिरिसुभरा लवणसलिलबन्धारम्भे ।
तीरेगिरिमारूढा रामागमरुद्धसभयरिपुसंचारम् ॥ २५ ॥

अन्वयः—लवणसलिलबन्धाऽऽरम्भे गिरिसुभरा ते तरुहरिणा रामाऽऽगमरुद्धसभयरिपुसञ्चार तीरे गिरिम् सहसा आरूढा ॥

व्याख्या—लवणसलिलबन्धाऽऽरम्भे = समुद्रबन्धनोपक्रमे, गिरिसुभरा = पर्वतमहाभाराऽन्विता, ते = पूर्वोक्ता, तरुहरिणा = वानरा, रामाऽऽगमरुद्धसभयरिपुसञ्चार = रामाऽऽगमननिरस्तभीतशत्रुसञ्चरण, तीरे = तटेस्थितमिति शेष । गिरिं = पर्वतम्, सहसा = तत्क्षणम्, आरूढा = आरुरुहु ॥

❀व्युत्पत्ति❀ लवणसलिलबन्धाऽऽरम्भे = लवणसलिलस्य बन्धस्तस्याऽऽरम्भे । गिरिसुभरा = शोभनो भरो येषा ते सुभरा·, गिरिभि· सुभरा । रामाऽऽगमरुद्धसभयरिपुसञ्चार = रामस्याऽऽगमेन रुद्ध· सभयाना रिपूणा सञ्चारो यस्मिस्तत् । अत्र "आरूढास्तीरगिरिम्" इति पाठे प्राकृते विसर्गलोपात् सङ्कीर्णत्व न स्यात् । "आरूढा तीरगिरिम्" इति पाठे च्युतसस्कृतिदोष । "तीरगिरिमारूढा इति जयमङ्गलसम्मतपाठेऽपि छन्दोभङ्गदोषोऽत· प्राचीना विद्वास· "तीरे गिरिमारूढा" इति पाठं पठन्ति एतानि चत्वारि सङ्कीर्णानि ॥

❀भाषाऽर्थ❀ समुद्र बन्धन के आरम्भमें पर्वतोंसे अधिक भारवाले वे वानर जहा पर रामके आगमनसे भीत शत्रुओंका भ्रमण निरुद्ध हो गया है ऐसे तटपर स्थित पर्वतपर सहसा चढ गये ॥ २५ ॥

ततः प्रणीताः कपियूथमुख्यैर्न्यस्ता· कृशानोस्तनयेन सम्यक् ।
अकम्प्रबध्नाऽग्रनितम्बभागा महार्णव भूमिभृतोवगाढाः ॥ २६ ॥

अन्वय.—तत कपियूथमुख्यै प्रणीता कृशानो तनयेन सम्यक् न्यस्ता· अकम्प्रबध्नाऽग्रनितम्बभागा भूमिभृत महार्णवम् अवगाढा ॥

व्याख्या—तत =आरोहणाऽनन्तर, कपियूथमुख्यै =वानरसमूहप्रधानै, नीला-

दिभिरिति भाव॰ । प्रणीता = अर्पिता , कृशानो = अग्ने , तनयेन = पुत्रेण, नलेने-त्यर्थ । सम्यक् = समीचीन यथा तथा, न्यस्ता = अर्पिता , अकम्प्रब्रध्नाऽग्रनितम्ब-भागा = स्थिरमूलशिखरमध्याऽशा , भूमिभृत = पर्वता , महार्णवं = महासागरम् , अवगाढा = आच्छादयामासु ॥

**ॐव्युत्पत्ति.ॐ अकम्प्रब्रध्नाऽग्रनितम्बभागाः = कम्पनशीला॰ कम्प्रा॰, "नमिक-म्पिस्म्यजसकमहिसदीपो र" इति रप्रत्यय. । न कम्प्रा अकम्प्रा. । ब्रध्नश्च अग्रश्च नितम्बश्च ब्रध्नाऽग्रनितम्बा , तेषां भागा ब्रध्नाऽग्रनितम्बभागा । "मूल ब्रध्नोऽङ्घ्रि नामक" इत्यमर । अकम्प्रा ब्रध्नाऽग्रनितम्बभागा येषा ते । भूमिभृत = भूमि बिभ्रतीति, क्विप्प्रत्यय । पद्यमिद तिङन्तपदाऽभावात् निराख्यात प्राकृताऽभावात् निरवद्य च । उपजातिवृत्तम् ॥**

**ॐभाषाऽर्थ.ॐ अनन्तर नील आदि वानरसेनापतियों से अर्पित, अग्नि पुत्र नल से अच्छी तरह से समर्पित, अकम्पनशील मूल, शिखर और मध्य भाग वाले पर्वतों ने महासागर को आच्छादित किया ॥ २६ ॥**

तेनेऽद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः ।
तत्रास शत्रुर्ददृशे सुवेलः प्रापे जलान्तो, जहृषु. प्लवङ्गाः ॥ २७ ॥

**अन्वयः**—अद्रिबन्ध तेने । पयोधि ववृधे । राम तुतोष । कपीन्द्रो मुमुदे । शत्रु तत्रास । सुवेलो ददृशे । जलाऽन्त प्रापे । प्लवङ्गा जहृषु ॥

**व्याख्या**—अद्रिबन्ध = पर्वतबन्ध , तेने = विस्तारित , वानरैरिति शेष । पयोधि = समुद्र , ववृधे = एधाञ्चक्रे, अद्रिभि पूर्यमाणोदरत्वात्पयोधिस्तीर प्लावितवानिति भाव । राम = रामचन्द्र , तुतोष = तुष्ट । शत्रुवध॰ सुकर इति धियेति शेष । कपीन्द्र = सुग्रीव , मुमुदे = हृष्टवान् , सुहृत्प्रत्युपकारकाल समायात इति धियेति शेष । शत्रु = रिपु , रावण इत्यर्थ । तत्रास = त्रस्त , राम सेतु बद्ध्वा लङ्कामायास्यति इति धियेति शेष । सुवेल = त्रिकूटपर्वत , ददृशे = दृष्ट । जलाऽन्त = तोयाऽन्त., प्रापे = प्राप्त., एवं च प्लवङ्गा = वानरा , जहृषु. = हृष्टा , स्वाम्यादेश सम्पादित इति धियेति भाव ॥

**ॐव्युत्पत्ति ॐ पयोधि = पयांसि धीयन्ते अत्रेति, "कर्मण्यधिकरणे च" इति किप्रत्यय । तत्रास = "त्रसी उद्वेगे" इति धातोर्लिट् । सुबन्तपदैर्व्यवधानादेतत्पद्यमेकाऽन्तराख्यात प्राकृताऽभावान्निरवद्य च । उपजाति वृत्तम् ॥**

**ॐभाषाऽर्थ ॐ पर्वत का बन्ध विस्तार को प्राप्त हुआ । समुद्र बढा । रामचन्द्रजी सन्तुष्ट हुए । वानरराज सुग्रीव प्रसन्न हुए । शत्रु रावण त्रस्त हुआ । त्रिकूट पर्वत दिखाई पड़ा । जल का अन्त प्राप्त हुआ । वानर प्रसन्न हो गये ॥ २७ ॥**

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगु: समुत्पुप्लुविरे निषेदुः ।
आस्फोटयाचक्रुरभिप्रणेदू रेजुर्ननन्दुर्विययुः समीयुः ॥ २८ ॥

**अन्वय**—भ्रेमु , ववल्गु , ननृतु , जजक्षु , जगु , समुत्पुप्लुविरे, निषेदु:, आस्फोटयाञ्चक्रु , अभिप्रणेदु , रेजु , ननन्दु , विययु , समीयु ॥

**व्याख्या**—भ्रेमु = भ्रान्ता , सेतुना पारं प्राप्य उत्सुका केचिदिति शेष , एवं परत्राऽपि । केचित् ववल्गु = गता , कञ्चित्प्रदेशमिति शेष । सातत्येनाऽनियत देशपर्यटन भ्रमण, नियतदेशगमन वल्गनमिति भेद । केचित् ननृतु = नृत्यं कृतवन्त , अतिहर्षादिति शेष । केचित् जजक्षु - भक्षितवन्त , फलानीति शेष:, अथ वा हर्षाऽतिशयाद्धसितवन्त । केचित् जगु = गीतवन्त: । केचित् समुत्पुप्लुविरे= समुत्प्लुत्य गता । केचित् निषेदु = निषण्णा , भ्रमणपरिश्रान्त्येति शेष । केचित् आस्फोटयाञ्चक्रु = वय युध्माम इति अहङ्कार चक्रु , केचित् अभिप्रणेदु: = लङ्कोप कण्ठे नादं चक्रु , केचित् रेजु = दीप्तवन्त , पुष्पादिनेति शेष । केचित् ननन्दु = आनन्द प्राप्ता:, केचित् विययु = यूथाद्वियुज्य गता , एवञ्च केचित् समीयु = एकत्र सम्भूय स्थिता ॥

**❀व्युत्पत्ति❀ भ्रेमु = "भ्रमु अनवस्थाने" इति धातोर्लिट् । जजक्षुः = "जक्ष भक्षहसनयो:" इति धातोर्लिट् । पुष्पतुल्यानाम् आख्यातानां ( तिङन्तपदानाम् ) सुबन्तपदव्यवधानादृते गुम्फनादियमाख्यातमाला । उपजातिवृत्तम् ॥**

**❀भाषाऽर्थ:❀सेतुसे पारको प्राप्तकर उत्सुक होकर कुछ वानरोंने भ्रमण किया । कोई किसी स्थानमे गये । किसीने नृत्य किया । किसीने कुछ खाया वा कोई हसने लगे । किसीने गाना गाया । कोई कूदने लगे । कोई थककर बैठ गये । कोई "हम लड़ते है" इस प्रकारसे अहङ्कार करने लगे । कोई लङ्काके समीपमे शब्द करने लगे । कोई पुष्प आदिसे शोभित हुए । कोई आनन्दित हो गये और कोई एक स्थानमे मिलकर रहने लगे ॥ २८ ॥**

गिरिपङ्कचारुदेह कक्कोललवङ्गबद्धसुरभिपरिमलम् ॥
बहुबहलोरुतरङ्गं परिसरमारूढमुद्धर लवणजलम् ॥ २९ ॥

**अन्वय.**—गिरिपङ्कचारुदेह कक्कोललवङ्गबद्धसुरभिपरिमल बहुबहलोरुतरङ्गम् उद्धर लवणजल परिसरम् आरूढम् ॥

**व्याख्या**—गिरिपङ्कचारुदेह = पर्वतगैरिककर्दमसुन्दरशरीर, कक्कोललवङ्गबद्धसुरभिपरिमल = कोलकदेवकुसुमजनितविमर्दगन्धं, बहुबहलोरुतरङ्ग=प्रभूतस्थूलो-

अतभङ्गम्, उद्धरम् = उद्धृत, लवणजलं = समुद्रतोयं, परिसरं = पर्यन्तभुवं तटम्, आरूढम् = आरुरोह ॥

❀व्युत्पत्तिः❀ गिरिपङ्कचारुदेह = गिरीणां य पङ्क ( गैरिकादिधातुकर्दम ) तेन चारुर्देहो यस्य तत्। कक्कोललवङ्गबद्धसुरभिपरिमल = कक्कोलानि च लवङ्गानि च कक्कोललवङ्गानि, तैर्बद्ध सुरभि परिमलो यस्मिस्तत्। "अथ कोलकम् कक्कोलक कोशफलम्" इत्यमर। बहुबहलोरुतरङ्ग=बहवो बहला उरवस्तरङ्गा यस्य तत्। उद्धर = धरामुत्क्रान्तम्, "अत्यादय क्रान्ताद्यर्थे द्वितीयया" इति समास। परिसर = पर्यन्तभू परिसर" इत्यमर॥

❀भाषाऽर्थ❀ पर्वतोंके गैरिक आदि धातुके कीचडसे सुन्दर देहवाला, ककोल और लवङ्गोंसे विमर्दज सुगन्धिसे युक्त, अधिक, स्थूल और उन्नत तरङ्गोंसे सपन्न पृथ्वीके अतिक्रान्त समुद्रका जल निकटके तटको आरूढ हुआ ॥ २९ ॥

लोलं कूलाभिगमे खे तुङ्गामलनिबद्धपुरुपरिणाहम् ॥
सुरगङ्गाभरणसहं गिरिबन्धवरेण लवणसलिल रुद्धम् ॥ ३० ॥

अन्वय.—कूलाऽभिगमे लोल खे तुङ्गाऽमलनिबद्धपुरुपरिणाहं सुरगङ्गाभरणसह लवणसलिलं गिरिबन्धवरेण रुद्धम् ॥

व्याख्या—कूलाऽभिगमे = तटगमने, लोलं = चञ्चल, खे = आकाशे, तुङ्गाऽमलनिबद्धपुरुपरिणाह = प्रांशुनिर्मलसंयुक्तमहाविशालत्वं, सुरगङ्गाभरणसहं=मन्दाकिनीपूरणसमर्थ, लवणसलिलं=समुद्रजलं, गिरिबन्धवरेण=सेतुना, रुद्धं=प्रतिरुद्धम्।

❀व्युत्पत्तिः❀ तुङ्गाऽमलनिबद्धपुरुपरिणाह = तुङ्ग तत् अमल तुङ्गाऽमल, तद्यथा तथा निबद्ध पुरु परिणाहो यस्य तत्। सुरगङ्गाभरणसह=सुरगङ्गाया भरणे सहम् ॥

❀भाषाऽर्थ❀ तटके सम्मुख जानेमे चञ्चल, आकाशमे उन्नत और निर्मलता पूर्वक महती विशालतासे सयुक्त, और मन्दाकिनीको पूर्ण करनेको समर्थ समुद्रका जल सेतुसे रुद्ध किया गया ॥ ३० ॥

कुलकम् ३१-४२।

आरूढं च सुवेलं तरुमालाबन्धहारिगिरिवरजालम् ॥
रावणचित्तभयङ्करमापिङ्गललोलकेसर रामबलम् ॥ ३१ ॥

अन्वय—रावणचित्तभयङ्करम् आपिङ्गललोलकेसर रामबल तरुमालाबन्धहारिगिरिवरजाल सुवेलम् आरूढम् ॥

व्याख्या—रावणचित्तभयङ्कर = दशाऽऽननमानसभयजनकम्, आपिङ्गललोलकेसरम् = आकपिलचञ्चलकेश, रामबल = दाशरथिसैन्य, तरुमालाऽऽबन्धहारिगि-

रिवरजालं = वृक्षपङ्क्तिवेष्टनसुन्दरपर्यन्तपर्वतसमूहं, सुवेलं = त्रिकूटपर्वतम्, आरूढम् = आरुरोह ॥

❀व्युत्पत्ति❀ रावणचित्तभयङ्करं = भय करोतीति भयङ्कर, "मेघर्तिभयेषु कृञ" इति खच्, खित्त्वात् "अरुर्द्विषदजन्तस्य मुम्" इति मुम् । रावणचित्तस्य भयङ्करम् । आपिङ्गललोलकेसरम् = आपिङ्गलानि लोलानि केसराणि यस्य तत् । तरुमालाऽऽबन्धहारिगिरिवरजाल = तरुमालाया य आबन्ध, तेन हारि गिरिवराणा जाल यस्य, तम् ॥

❀भाषाऽर्थ❀ रावणके चित्तमे भय उत्पन्न करने वाली, पिङ्गल और चञ्चल केशोंसे युक्त रामचन्द्रकी सेना वृक्षपंक्तिके वेष्टनसे सुन्दर, पर्यन्तपर्वतोंके समूहसे सम्पन्न सुवेल ( त्रिकूट ) पर्वत पर चढ गई ॥ ३१ ॥

लङ्कालयतुमुलारवसुभरगभीरोरुकुञ्जकन्दरविवरम् ॥
वीणारवरससङ्गमसुरगणसंकुलमहातमालच्छायम् ॥ ३२

अन्वय —लङ्काऽऽलयतुमुलाऽऽरवसुभरगभीरोरुकुञ्जकन्दरविवरं वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छायम् ( सुवेल रामबलम् आरूढम् ) ॥

व्याख्या—लङ्काऽऽलयतुमुलाऽऽरवसुभरगभीरोरुकुञ्जकन्दरविवर = राक्षसमहाशब्दपरिपूर्णगम्भीरमहानिकुञ्जदरीच्छिद्र, वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छाय = वल्लकीशब्देच्छासमागमदेवसमूहव्याप्तबृहत्तापिच्छाऽनातप, सुवेलं रामबलम् आरूढमिति पूर्वस्थपदानामध्याहार ॥

❀व्युत्पत्ति❀ लङ्काऽऽलयतुमुलाऽऽरवसुभरगभीरोरुकुञ्जकन्दरविवर=लङ्का आलयो येषा ते लङ्काऽऽलया (राक्षसा ), तेषा तुमुलो य आरव, तेन सुभराणि गभीरोरुकुञ्जाकन्दरविवराणि च गभीरोरुकुञ्जकन्दरविवराणि । लङ्काऽऽलयतुमुलाऽऽरवसुभराणि गभीरोरुकुञ्जकन्दरविवराणि यस्मिन्, तम् । वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छाय = वीणाया रवे यो रसस्तेन सङ्गमो येषा ते वीणारवरससङ्गमा, एतादृशा ये सुरगणास्तै सङ्कुला महातमालच्छाया यस्मिस्तम् ॥

❀भाषाऽर्थ❀ राक्षसोंके महाशब्दसे परिपूर्ण गम्भीर महानिकुञ्ज और गुहाके बिलसे युक्त तथा वीणाके शब्द सुननेकी इच्छासे सङ्गत देवसमूहसे व्याप्त महतापिच्छ की छाया वाले सुवेल पर्वत पर रामचन्द्रजीकी सेना चढ गई ॥ ३२ ॥

सरसबहुपल्लवाविलकेसरहिन्तालबद्धबहलच्छायम् ।
ऐरावणमदपरिमलगन्धवहाबद्धदन्तिसंरम्भरसम् ॥ ३३ ॥

अन्वयः—सरसबहुपल्लवाऽऽविलकेसरहिन्तालबद्धबहलच्छायम् ऐरावणमदपरिमलगन्धवहाबद्धदन्तिसरम्भरसम् ( सुवेलं रामबलम् आरूढम् ) ॥

व्याख्या—सरसबहुपल्लवाऽऽविलकेसरहिन्तालबद्धबहलच्छायं = आर्द्राऽधिककिसलयाऽन्धकारितपुन्नागस्थूलतालजनितनिबिडच्छायम् , ऐरावणमदपरिमलगन्धवहाऽऽवद्धदन्तिसरम्भरसम् = ऐरावतदानसुरभिवायुजनितहस्तिकोपरसम् , एतादृशं सुवेलं रामबलम् आरूढमिति पूर्वपदानामध्याहार ॥

❀व्युत्पत्ति.❀ सरसबहुपल्लवाऽऽविलकेसरहिन्तालबद्धबहलच्छाय = सरसा ये बहव पल्लवास्तै आविला ये केसरहिन्तालास्तै बद्धा बहला छाया यस्मिस्तं, "पल्लवोऽस्त्री किसलयम्" इत्यमरः। "हिन्ताल स्थूलतालश्चे"ति राजनिघण्टु । ऐरावणमदपरिमलगन्धवहाऽऽबद्धदन्तिसरम्भरसम् = ऐरावणमदस्य परिमलो यस्मिन् एतादृशो यो गन्धवहस्तेन आबद्धो दन्तिना सरम्भरसो यस्मिंस्तम् ॥

❀भाषाऽर्थ❀ स्निग्ध अधिक पल्लवोंसे अन्धकारित केसर और हिन्ताल वृक्षों के गाढ छायासे युक्त और जहा पर ऐरावत हाथी के मद जलसे सुरभि वायुसे अन्य हाथियों का कोपरस उत्पन्न हो गया है ऐसे सुवेल पर्वतपर रामचन्द्रकी सेना चढ गई ॥ ३३ ॥

तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजालम् ।
हरिणभयकरसकुसुमदावसमच्छविविलोलदाडिमकुञ्जम् ॥ ३४ ॥

अन्वय—तुङ्गतरुच्छायारुट्कोमलहरिहारिलोलपल्लवजाल हरिणभयङ्करसकुसुमदावसमच्छविविलोलदाडिमकुञ्जम् ( सुवेल रामबलम् आरूढम् ) ॥

व्याख्या—तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजाल = प्राशुवृक्षच्छायोत्पन्नमृदुहरितसुन्दरचञ्चलकिसलयसमूह, हरिणभयङ्करसकुसुमदावसमच्छविविलोल दाडिमकुञ्ज = मृगभीतिकरसपुष्पदावाऽनलतुल्यकान्तिचञ्चलकरकनिकुञ्जं, सुवेलं रामबलम् आरूढम् इति पूर्वपदानामध्याहार ॥

❀व्युत्पत्ति❀ तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजाल = तुङ्गतरूणा या छाया तस्या रोहतीति तुङ्गतरुच्छायारुहम्, "इगुपधज्ञाप्रीकिर. क." इति क प्रत्यय । एतादृश कोमल हरि ( हरितवर्णम् ) हारि लोल पल्लवजाल यस्मिस्तम् । हरिणभयङ्करसकुसुमदावसमच्छविविलोलदाडिमकुञ्ज = हरिणभयङ्करा सकुसुमा, ( अतएव ) दावसमच्छवयः ( दवाऽनलतुल्यकान्तय ) विलोला दाडिमकुञ्जा यस्मिस्तम् । उपमाऽलङ्कार ॥

❀भाषाऽर्थ❀ उन्नत वृक्षों की छायामें उत्पन्न, कोमल हरितवर्ण, सुन्दर और चञ्चल पल्लवों के समूहसे युक्त एवम् मृगो को भय उत्पन्न करने वाले, फूलों से युक्त ( अतएव ) दवाग्निकी सदृश कान्तिवाले चञ्चल दाडिम कुञ्जोंसे सम्पन्न सुवेल पर्वत पर रामचन्द्रकी सेना चढ गई ॥ ३४ ॥

**कलहरिकण्ठविरावं सलिलमहाबन्धसंकुलमहासालम् ।**
**चलकिसलयसंबद्धं मणिजालं सलिलकणमयं विवहन्तम् ॥ ३५ ॥**

**अन्वयः**—कलहरिकण्ठविराव सलिलमहाबन्धसङ्कुलमहासालं चलकिसलयसम्बद्ध सलिलकणमय मणिजाल विवहन्तम् ( सुवेल रामबलम् आरूढम् )

**व्याख्या**—कलहरिकण्ठविराव = मनोहरसिहगलशब्दयुक्तं, सलिलमहाबन्धसङ्कुलमहासाल = जलमहाबन्धनव्याप्तबृहत्सालवृक्षं, चलकिसलयसम्बद्ध = चञ्चलपल्लवसलग्न, सलिलकणमय = जलकणस्वरूपं, मणिजालं = रत्नसमूहं, विवहन्त = धारयन्त, सुवेल रामबलम् आरूढम् इति पूर्वपदानामध्याहार ॥

**ॐव्युत्पत्ति ॐ** कलहरिकण्ठविराव = कलो हरीणा ( सिहानाम् ) कण्ठविरावो यस्मिस्तम् । सलिलमहाबन्धसङ्कुलमहासाल = सलिलस्य यो महाबन्धस्तेन सङ्कुला महान्तः साला ( सालवृक्षा ) यस्मिस्तम् । चलकिसलयसम्बद्ध = चलन्तीति चलानि, पचाद्यच् । चलानि यानि किसलयानि, तेषु सम्बद्धस्तम् । सलिलकणमय= स्वरूपाऽर्थे मयट् ॥

**ॐभाषाऽर्थ ॐ** सिहोंके सुन्दर कण्ठ ध्वनिवाले, सेतुबन्धसे जलव्याप्त बडे साल वृक्षों से युक्त चञ्चलपल्लवों मे सलग्न जलकणरूप मणिसमूहको धारण करते हुए सुवेलपर्वतपर रामचन्द्रजीकी सेना चढ गई ॥ ३५ ॥

**तुङ्गमणिकिरणजाल गिरिजलसंघट्टबद्धगम्भीररवम् ।**
**चारुगुहाविवरसभ सुरपुरसममरचारणसुसरावम् ॥ ३६ ॥**

**अन्वयः**—तुङ्गमणिकिरणजाल गिरिजलसंघट्टबद्धगम्भीररव चारुगुहाविवरसभम् अमरचारणसुसरावं सुरपुरसमम् ( सुवेल रामबलम् आरूढम् ) ॥

**व्याख्या**—तुङ्गमणिकिरणजाल = प्रांशुरत्नाऽशुसमूह, गिरिजलसंघट्टबद्धगम्भीररव = निर्झरतोयमिथ संश्लेषजनितगम्भीरशब्द, चारुगुहाविवरसभ = सुन्दरगह्वरच्छिद्रगोष्ठीजम् , अमरचारणसुसरावं = गन्धर्वमनोहरगानयुक्तम् , अत एव—सुरपुरसमं = स्वर्गसदृशम् , सुवेल रामबलम् आरूढमिति पूर्वपदानामध्याहार ॥

**ॐव्युत्पत्ति ॐ** तुङ्ग मणिकिरणाना जाल यस्मिस्तम् । गिरिजलसघट्टबद्धगम्भीररवं= गिरिजलाना सघट्टेन बद्धो गम्भीरो रवो यस्मिस्तम् । चारुगुहाविवरसभ = चारुगुहाविवरमेव सभा यस्मिस्तम् । अमरचारणसुसरावम् = अमरचारणाना शोभन सरावो यस्मिस्तम् । "आरवारावसरावविरावा" इत्यमर ॥

**ॐभाषाऽर्थः ॐ** मणिकिरणोंके उन्नत समूह से सम्पन्न, झरनोंके जलों के परस्पर सम्बन्ध से उत्पन्न गम्भीर शब्दसे युक्त, सभा के सदृश सुन्दर गुफाके छिद्रवाले,

गन्धर्वों के सुन्दर गानसे युक्त, अतएव देवनगर स्वर्ग के सदृश। सुवेल पर्वतपर रामचन्द्रजीकी सेना चढ गई ॥ ३६ ॥

विमलमहामणिटङ्कं सिन्दूरकलङ्कपिञ्जरमहाभित्तिम् ।
वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीहम् ॥ ३७ ॥

**अन्वय**—विमलमहामणिटङ्क सिन्दूरकलङ्कपिञ्जरमहाभित्ति वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीहम् ( सुवेल रामबलम् आरूढम् ) ॥

**व्याख्या**—विमलमहामणिटङ्क = निर्मलमहारत्नच्छेद, सिन्दूरकलङ्कपिञ्जरमहाभित्ति = नागसभवलाञ्छनपिञ्जरमहाकुड्य, वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीह = शूरसिंहगजसमागमभीतिनिवारितरात्रिक्रीडेच्छम् , सुवेल रामबलम् आरूढमिति पूर्वपदानामध्याहार ॥

**❀व्युत्पत्तिः❀** विमलमहामणीनां ( पद्मरागादीनाम् ) टङ्का यस्मिंस्तम् । सिन्दूरकलङ्कपिञ्जरमहाभित्ति = सिन्दूरकलङ्केन पिञ्जरा महाभित्तयो यस्य, तम् । "सिन्दूरं नागसंभवम्" इत्यमर । वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीह = हरयश्च दन्तिनश्च हरिदन्तिन., "सिंहो मृगेन्द्रः पञ्चाऽऽस्यो हर्यक्ष केसरी हरि ।" इत्यमर । वीरा ये हरिदन्तिन तेषा य सङ्गमस्तस्माद्भय, तेन रुद्धा विभावर्या विहारसमीहा यस्मिंस्तम् ॥

**❀भाषाऽर्थ❀** निर्मल पद्मराग आदि महारत्नोंके छेदोंसे युक्त, सिन्दूरके चिह्नसे पिञ्जर महाभित्तियोंसे सम्पन्न, वीर सिंहों और हाथियोंके समागमके भयसे जहापर रातमे क्रीडाकी इच्छा निवारित हो गई है ऐसे सुवेल पर्वतपर रामजीकी सेना चढ़ गई ॥ ३७ ॥

समहाफणिभीमबिल भूरिविहङ्गमतुमुलोरुघोरविरावम् ।
वारणवराहहरिवरगोगणसारङ्गसकुलमहासालम् ॥ ३८ ॥

**अन्वयः**—समहाफणिभीमबिल भूरिविहङ्गमतुमुलोरुघोरविराव वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासालम् ( सुवेलं रामबलम् आरूढम् ) ॥

**व्याख्या**—समहाफणिभीमबिल = सबृहत्सर्पभयङ्करविवरं, भूरिविहङ्गमतुमुलोरुघोरविराव = प्रचुरपत्‍त्यनेकप्रकारमहारौद्रशब्द, वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासाल = हस्तिसूकरसिंहवरधेनुसमूहमृगव्याप्तबृहत्सालवृक्ष, सुवेल रामबलम् आरूढमिति पूर्वपदाना परामर्श ॥

**❀व्युत्पत्ति❀** समहाफणिभीमबिल = महाफणिभि सहितानि समहाफणीनि अत एव भीमानि बिलानि यस्मिंस्तम्। भूरिविहङ्गमतुमुलोरुघोरविराव = भूरयो ये विहङ्गमास्तेषां तुमुल उरुः घोरो विरावो यस्मिंस्तम्। वारणवराहहरिवरगोगणसारङ्ग

सङ्कुलमहासाल=वाणाश्च वराहाश्च हरिवराश्च गोगणश्चेति सारङ्गाश्च वारणवराहहरिवरगोगणसारङ्गाः, तैः सङ्कुला महासाला यस्मिंस्तम् ॥

**ॐभाषाऽर्थःॐ** बड़े सर्पोंसे युक्त अत एव भयङ्कर बिलों वाले, प्रचुर पक्षियोंके अनेक प्रकारके महाभयङ्कर शब्दोंसे युक्त, हाथी, सूअर, श्रेष्ठ सिंह, गायों का समूह और मृगोंसे व्याप्त बडे बडे साल वृक्षोंसे सम्पन्न सुवेल पर्वत पर रामचन्द्रजी की सेना चढ़ गई ॥ ३८ ॥

**चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधम् ।**
**सकुसुमकेसरबाणं लवङ्गतरुतरुणवल्लरीवरहासम् ॥ ३९ ॥**

**अन्वयः**—चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधं सकुसुमकेसरबाणं लवङ्गतरुतरुणवल्लरीवरहासम् ( सुवेलं रामबलम् आरूढम् ) ॥

**व्याख्या**—चलकिसलयसविलासं=चञ्चलपल्लवप्रारब्धनृत्यं, चारुमहीकमलरेणुपिञ्जरवसुधं = सुन्दरस्थलकमलपरागपीतवसुन्धरं, सकुसुमकेसरबाणं = सपुष्पपुन्नागझिण्टीकं, लवङ्गतरुतरुणवल्लरीवरहासं = लवङ्गवृक्षनवमञ्जरीश्रेष्ठहास्यं, सुवेलं रामबलम् आरूढम् ॥

**ॐव्युत्पत्तिः ॐ** चलकिसलयसविलासं=चलानि यानि किसलयानि, तैः सविलासं, प्रारब्धनृत्यमिति भावः । चारुमहीकमलरेणुपिञ्जरवसुधं=चारूणि यानि महीकमलानि, तेषां रेणुभिः पिञ्जरा वसुधा यस्मिंस्तम् । सकुसुमकेसरबाणं=सकुसुमाः केसरा बाणाश्च यस्मिंस्तम् । लवङ्गतरुतरुणवल्लरीवरहासं=लवङ्गतरोः तरुण्यो या वल्लयस्ता एव वरो हासः ( विकासरूपः ) यस्मिंस्तम् ॥

**ॐभाषाऽर्थःॐ** चञ्चल पल्लवोंसे विलास वाले, सुन्दर स्थल कमलोंके परागोंसे पीली पृथ्वीसे युक्त, फूलोंसे संयुक्त केसर और झिण्टी वृक्षोंसे सम्पन्न, लवङ्ग वृक्षके नवीन मञ्जरीरूप उत्तम हास्यसे युक्त सुवेल पर्वत पर रामचन्द्रजीकी सेना चढ़ गई ॥ ३९ ॥

**अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमम् ।**
**अमराऽऽरूढपरिसरं मेरुमिवाविरलसरसमन्दारतरुम् ॥ ४० ॥**

**अन्वयः**—अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमम् अमराऽऽरूढपरिसरम् अविरलसरसमन्दारतरुं मेरुम् इव ( सुवेलं रामबलम् आरूढम् ) ॥

**व्याख्या**—अमलमणिहेमटङ्कं = निर्मलरत्नसुवर्णच्छेदं, तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमम् = उन्नतबृहत्कुड्यनिवारितमृगविशेषकर्दमगमनम्, "पङ्कगमम्" इत्यत्र "वङ्कगमम्" इति पाठाऽन्तरे कुटिलगमनमित्यर्थः । अमराऽऽरूढपरिसरं=देवाऽऽरू-

ढपर्यन्तभुवम् , अविरलसरसमन्दारतरुं=घनस्निग्धदेववृक्षं, मेरुम् इव = हेमाऽद्रिम् इव, सुवेल रामबलम् आरूढमिति पूर्वपद्यस्थपदानामध्याहार ।

॥व्युत्पत्तिः॥ अमलमणिहेमटङ्कम्, मणयश्च हेमानि च मणिहेमानि, अमलानि यानि मणिहेमानि, तेषा टङ्का यस्मिस्तम् । तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमम् तुङ्गामहती या भित्तिस्तया रुद्धो रुरूणा ( मृगाणाम् ) पङ्कगमः ( पङ्के गम. ) यस्मिंस्तम् । "गम" इत्यत्र "ग्रहवृहनिश्चिगमश्च" इत्यप् । "वङ्कगमम्" इति पाठान्तरे वङ्कते इति वङ्क , "वकि कौटिल्ये" इति धातो. पचाद्यच् । वङ्को गमो यस्मिस्तम् । अमरा-ऽऽरूढपरिसरम्=अमरैराऽऽरूढा परिसरा यस्मिस्तम् । अविरलसरसमन्दारतरुम्= अविरला सरसा मन्दारतरवो यस्मिस्तम् । उपमाऽलङ्कार ॥

॥भाषाऽर्थ॥ निर्मल मणि और सुवर्णोके टुकडोंसे युक्त, जहाँ पर ऊँची महा-भित्तिसे रुरुमृगोंका पङ्कमें गमन रुद्ध हो गया है, देवताओंसे आरूढ पर्यन्त भूमिसे युक्त, घने और स्निग्ध मन्दार वृक्षोंसे सम्पन्न सुमेरु पर्वतके तुल्य सुवेल पर्वतपर रामचन्द्रजीकी सेना चढ गई ॥ ४० ॥

फलभरमन्थरतरुवरमविदूरविरूढहारिकुसुमापीडम् ।
हरिणकलङ्कमणिसभवबहुवारिभरसुगम्भीरगुहम् ॥ ४१ ॥

अन्वयः—फलभरमन्थरतरुवरम् अविदूरविरूढहारिकुसुमाऽऽपीड हरिणक-लङ्कमणिसभवबहुवारिभरसुगम्भीरगुहम् , ( सुवेल रामबलम् आरूढम् ) ॥

**व्याख्या**—फलभरमन्थरतरुवर = फलभारेषन्नतवृक्षश्रेष्ठम् , अविदूरविरूढहारि-कुसुमाऽऽपीडं = समीपोत्पन्नसुन्दरपुष्पशेखर, हरिणकलङ्कमणिसभवबहुवारिभरसुग-म्भीरगुह = चन्द्रकान्तोत्पन्नाऽधिकजलपरिपूर्णगभीरगह्वरं, सुवेलं रामबलमारूढमिति पूर्वपदाना परामर्श ॥

॥व्युत्पत्ति॥ फलभरमन्थरतरुवर=फलाना भरेण मन्थरास्तरुवरा यस्मिस्तम् । अविदूरविरूढहारिकुसुमाऽऽपीडम्=अविदूरे विरूढा हारिण. कुसुमाऽऽपीडाः ( कुसुमान्येव आपीडा· ) यस्मिस्तम् । हरिणकलङ्कमणिसभवबहुवारिसुभरगम्भीरगुह = हरिण. कलङ्को यस्य स हरिणकलङ्क· (चन्द्र ) स चाऽसौ मणिः ( चन्द्रकान्तमणि· ) तस्मात् सभव. ( उत्पत्ति ) येषां तानि हरिणकलङ्कमणिसभवानि, तादृशानि यानि बहुवारीणि, तै· सुभरा· परिपूर्णाः गम्भीरा गुहा यस्मिंस्तम् ॥

॥भाषाऽर्थ॥ फलोंके भारसे कुछ झुके हुए श्रेष्ठवृक्षोंसे युक्त, समीपमें उत्पन्न सुन्दर पुष्परूप शिरोभूषणोंसे सम्पन्न, चन्द्रकान्त मणिसे उत्पन्न बहुत जलोंसे परिपूर्ण गम्भीर गुहाओंसे युक्त सुवेल पर्वतपर रामचन्द्रजी की सेना चढ़ गई ॥४१॥

जलकासदन्तिसकुलसहेमरसचारुधवलकन्दरदेहम् ।
अङ्कुररोहसमच्छन्नरुरुगणासलीढतरलहरिमणिकिरणम् ॥ ४२ ॥

**अन्वयः**—जलकामदन्तिसङ्कुलसहेमरसचारुधवलकन्दरदेहम् अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरिमणिकिरणम् ( सुवेलं रामबलम् आरूढम् ) ॥

**व्याख्या**—जलकामदन्तिसङ्कुलसहेमरसचारुधवलकन्दरदेह = तोयाऽर्थिहस्तिव्याप्तससुवर्णरससुन्दरशुक्लगुहासन्निवेशम्, अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरिमणिकिरणम्=अङ्कुरोत्पन्नशस्यतुल्यकान्तिरुरुसमूहसमास्वादितचञ्चलेन्द्रनीलरश्मि, सुवेल रामबलमारूढमिति पूर्वपदाना परामर्श ॥

**ॐव्युत्पत्ति ॐ** जलकामदन्तिसङ्कुलसहेमरसचारुधवलकन्दरदेह = जलं कामयन्त इति जलकामा', "शीलिकामिभक्ष्याचरिभ्यो ण" इत्यणोपवादो ण । जलकामाश्च ते दन्तिन, तै' सङ्कुला सहेमरसा चारवो धवला' कन्दरदेहा यस्मिस्तम् । अङ्कुररोहसमच्छविरुरुगणसलीढतरलहरिमणिकिरणम् = अङ्कुरात् रोह ( उत्पत्ति ) यस्य ( शस्यस्य ), तेन समा छविर्येषा ते अत एव रुरुगणै सलीढा तरला हरिमणिकिरणा यस्मिस्तम् ।

**ॐभाषाऽर्थ ॐ** जलकी इच्छा करने वाले हाथियोंसे व्याप्त सुवर्णरस युक्त सुन्दर और सफेद गुहारूप शरीर वाले एवम् रुरुमृगोंसे आस्वादित अङ्कुरसे उत्पन्न होने वाले शस्यके सदृश कान्तियुक्त मरकतमणियोंके किरणोंसे सपन्न सुवेल पर्वत पर रामचन्द्रजीकी सेना चढ़ गई ॥ ४२ ॥

**गाढसमीरणसुसहं भीमरवोत्तुङ्गवारिधरसघट्टम् ।**
**धवलजलवाहमालासबन्धाबद्धहिमधराधरलीलम् ॥ ४३ ॥**

**अन्वय'**—गाढसमीरणसुसह भीमरवोत्तुङ्गवारिधरसघट्ट धवलजलवाहमालासम्बन्धाऽऽबद्धहिमधराधरलीलम् ( सुवेलं रामबलम् आरूढम् ) ॥

**व्याख्या**—गाढसमीरणसुसहं = महावातमर्षकं, भीमरवोत्तुङ्गवारिधरसंघट्टं = भयङ्करशब्दोन्नतमेघाऽन्योन्यविमर्दयुक्तं, धवलजलवाहमालासम्बन्धाऽऽबद्धहिमधराधरलील शुक्लमेघपङ्क्तिसम्बन्धकृतहिमालयविभ्रमं, सुवेल रामबलमारूढमिति पूर्वपदाना परामर्श ।

**ॐव्युत्पत्ति ॐ** गाढसमीरणसुसहं = गाढो य' समीरणस्तं सुसहत इति "कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्" इति कप्रत्यय । भीमरवोत्तुङ्गवारिधरसघट्ट= भीमरवा उत्तुङ्गा ये वारिधरा, तेषा सघट्टो यस्मिस्तम् । धवलजलवाहमालासम्बन्धाऽऽबद्धहिमधराधरलील = जल वहन्तीति जलवाहा', "कर्मण्यण्" इत्यण् । धरतीति धर, पचाद्यच् । धराया धरो धराधरः, हिमाना धराधरो हिमधराधर' । धवला ये जलवाहास्तेषां मालाया य' सम्बन्धस्तेन आबद्धा हिमधराधरस्य लीला येन, तम् । उपमाऽलङ्कार' ॥

**❀भाषाऽर्थ❀ महान् वायुको सहने वाले, भयङ्कर शब्दवाले उन्नत मेघोंके परस्पर विमर्दसे युक्त सफेद मेघोंकी पंक्तिके सम्बन्धसे हिमालय पर्वतकी लीलाको प्रकट करने वाले सुवेल पर्वतपर रामचन्द्रजी की सेना चढ गई ॥ ४३ ॥**

लवणजलबन्धसरस तरुफलसपत्तिरुद्धदेहायासम् ।
लङ्कातोरणवारणमारूढं समरलालस रामबलम् ॥ ४४ ॥

**अन्वय.**—लवणजलबन्धसरस तरुफलसम्पत्तिरुद्धदेहाऽऽयासं लङ्कातोरण-वारण समरलालस रामबल ( सुवेलम् ) आरूढम् ॥

**व्याख्या**—लवणजलबन्धसरस=सेतुबन्धसहर्ष, तरुफलसम्पत्तिरुद्धदेहाऽऽयास = वृक्षफलसम्पदपनीतबुभुक्षापीड, लङ्कातोरणवारण = लङ्काबहिर्द्वारनिषेधक, समरलालस=रणतृष्णासहित, रामबल रामसैन्यम् , आरूढम्-आरुरोह, सुवेलमिति शेष । क्वचित् "आरूढम्" इत्यत्र "आलोलम्" इति पाठस्तस्य चञ्चलमित्यर्थ । तत्र पूर्ववत् "आरूढम्" इति पदमध्याहर्तव्यम् ॥

**❀व्युत्पत्ति.❀ लवणजलबन्धसरस = लवण जलं यस्य स लवणजल' समुद्र इत्यर्थ । तस्य बन्धाद्धेतो सरसम् । तरुफलसम्पत्तिरुद्धदेहाऽऽयास = तरुफलसम्पत्त्या रुद्धो देहायासो यस्य तत् । लङ्कातोरणवारण = लङ्कातोरणस्य वारण, "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमर ॥**

**❀भाषाऽर्थ❀ समुद्रके बन्धनसे सहर्ष, वृक्षोंकी फलसपत्तिसे भूखकी पीडाको हटानेवाली, लङ्काके ब हर्द्वारको रोकनेवाली एवम् युद्धकी तृष्णासे युक्त रामचन्द्रजी की सेना सुवेल पर्वतपर चढ गई ॥ ४४ ॥**

**विशेषकं त्रिभिः-४५-४७**

गुरुपणववेणुगुञ्जाभेरीपेलोरुझल्लरीभीमरवम् ।
ढक्काघण्टातुमुल सन्नद्धं परबलं रणायाससहम् ॥ ४५ ॥

**अन्वय.**—गुरुपणववेणुगुञ्जाभेरीपेलोरुझल्लरीभीमरव ढक्काघण्टातुमुल रणाऽऽयाससह परबल सन्नद्धम् ॥

**व्याख्या**—गुरुपणववेणुगुञ्जाभेरीपेलोरुझल्लरीभीमरवं = महागायनपटहवंशीपटहदुन्दुभिवाद्यविशेषमहाझर्झरभयङ्करशब्दं, ढक्काघण्टातुमुलं= यश पटहघण्टासम्मूर्च्छितशब्दं, रणाऽऽयाससहं=संग्रामक्लेशसमर्थ, परबल= शत्रुसैन्य, रावणसैन्यमित्यर्थ । सन्नद्ध=युद्धायोद्यतमिति भाव ॥

**❀व्युत्पत्तिः❀ गुरुपणवाश्च वेणवश्च गुञ्जाश्च भेर्यश्च पेलाश्च उरुझल्लर्यश्च, तासां भीमो रवो यस्मिंस्तत । ढक्काघण्टातुमुलं = ढक्काघण्टयो' तुमुल ( शब्दः ) यस्मिंस्तत् ।**

※भाषाऽर्थ※ महापणव, वशी, पटह, दुन्दुभि, पेला, महाझल्लरी इन वाद्योंके भयङ्कर शब्दसे युक्त, ढक्का और घण्टाके विस्तृत शब्दसे सम्पन्न और युद्धके क्लेशको सहनेवाली शत्रु ( रावण ) की सेना युद्धके लिए तत्पर हो गई ॥ ४५ ॥

आरूढबाणघोर विमलायसजालगूढपीवरदेहम् ।
चञ्चलतुरङ्गवारणसघट्टाबद्धचारुपरिणाहगुणम् ॥ ४६ ॥

अन्वयः—आरूढबाणघोर विमलाऽऽयसजालगूढपीवरदेह चञ्चलतुरङ्गवारण-सङ्घट्टाऽऽबद्धचारुपरिणाहगुणम् ( परबल ) सन्नद्धम् ॥

व्याख्या—आरूढबाणघोरं=निक्षिप्तबाणधनुर्भयङ्कर, विमलाऽऽयसजालगूढपीवरदेहं = निर्मलवर्मच्छन्नस्थूलशरीर, चञ्चलतुरङ्गवारणसङ्घट्टाऽऽबद्धचारुपरिणाहगुणं= चपलहयहस्तिसश्लेषजनितसुन्दरविस्तारगुणं, परबल सन्नद्धमिति पूर्वपदाभ्या सम्बन्ध ॥

※व्युत्पत्ति※ आरूढबाणघोरम् = आरूढो बाणो यस्मिस्तत् आरूढबाणं, धनुरितिभावस्तेन घोरम् । विमलाऽऽयसजालगूढपीवरदेह = विमलं यत् आयसजालं ( वर्म ), तेन गूढ. पीवरो देहो यस्य तत् । चञ्चलतुरङ्गवारणसघट्टाबद्धचारुपरिणाह गुण = चञ्चला ये तुरङ्गा वारणाश्च, तेषा सङ्घट्टेन आबद्ध. चारु परिणाह एव गुणो यस्य तत् ॥

※भाषाऽर्थ※ बाण रक्खे गये धनुषसे भयङ्कर निर्मल कवचसे रक्षित स्थूल शरीरवाली, चञ्चल घोडे और हाथियोंके परस्पर संघट्टसे जहां पर सुन्दर विशालता-रूप गुण उत्पन्न हुआ है ऐसी शत्रुसेना युद्धके लिए तत्पर हो गई ॥ ४६ ॥

असितोमरकुन्तमहापट्टिशभल्लवरबाणगुरुपुरुमुसलम् ।
वीररसाऽलङ्कारं गुरुसचारहयदन्तिसमहीकम्पम् ॥ ४७ ॥

अन्वय —असितोमरकुन्तमहापट्टिशभल्लवरबाणगुरुपुरुमुसल वीररसाऽलङ्कारं गुरुसञ्चारहयदन्तिसमहीकम्पम् ( परबल सन्नद्धम् )॥

व्याख्या—असितोमरकुन्तमहापट्टिशभल्लवरबाणगुरुपुरुमुसलम् = खड्गशर्वला-प्रासमहापरशुभल्लश्रेष्ठशराऽनभिभवनीयमहामुसल, वीररसाऽलङ्कारं=वीररसभूषण, गुरु-सञ्चारहयदन्तिसमहीकम्पं=महासञ्चरणतुरङ्गमातङ्गै भूमिकम्पसहित, परबल सन्नद्ध-मितिपूर्वपदयोरध्याहार ॥

※व्युत्पत्ति※ असयश्च तोमराश्च कुन्ताश्च महापट्टिशाश्च भल्लाश्च वरबाणाश्च, तैः गुरु पुरु मुसल यस्मिंस्तत् । मुसलशब्दो मूर्धन्यमध्योऽपि । वीररसाऽलङ्कार = वीररस एवाऽलङ्कारो यस्य तत् । गुरुसञ्चारहयदन्तिसमहीकम्पं = गुरु. सञ्चारो

येषां ते गुरुसञ्चाराः एतादृशा ये हयदन्तिनः, तैः समहीकम्पम् (महीकम्पेन सह वर्तमानम्) ॥

॥भाषाऽर्थः॥ तलवार, तोमर, प्रास, महापरशु, भाला और श्रेष्ठ बाण इनसे अभिभवके अविषय महामुसलसे युक्त, वीररसरूप अलङ्कारसे सम्पन्न, पर्याप्त चलनेवाले घोडे और हाथियोंसे भूमिको कम्पित करनेवाली शत्रुसेना युद्धके लिए तत्पर हो गई ॥ ४७ ॥

ते रामेण सरभस परितरला हरिगणा रणसमारम्भे ।
रुद्धा लङ्कापरिसरभूधरपरिभङ्गलालसा धीररवम् ॥ ४८ ॥

अन्वयः—रणसमारम्भे सरभसं परितरला ते हरिगणा लङ्कापरिसरभूधरपरिभङ्गलालसा (सन्त) रामेण धीररव रुद्धा ॥

व्याख्या—रणसमारम्भे = युद्धप्रवर्तननिमित्तं, सरभसं = त्वरापूर्वक, परितरला = अतिचञ्चला, स्थातुमशक्नुवन्त, ते=पूर्वोक्ता, हरिगणा = वानरसमूहा, लङ्कापरिसरभूधरपरिभङ्गलालसा = लङ्कासमीपस्थवृक्षचूर्णनसतृष्णा सन्त, रामेण= रामचन्द्रेण, धीररवं = गम्भीरशब्द यथा तथा, रुद्धा = निवारिता मा भाङ्क्षुरिति वाक्येनेति शेष ॥

॥व्युत्पत्ति॥ लङ्कापरिसरभूधरपरिभङ्गलालसा.—धरन्ति ते धराः, भुवो धरा भूधराः, वृक्षा इत्यर्थः। लङ्कायाः परिसरे ये भूधरास्तेषां परिभङ्गेलालसा। धीररव= धीरो रवो यस्मिन् रोधकर्मणि तद्यथा तथेति क्रियाविशेषणम् ॥

॥भाषाऽर्थः॥ युद्ध प्रवर्तनके लिए जल्दबाजीके कारण प्रतीक्षा करनेको असमर्थ वे वानरसमूह लङ्काके समीपस्थित वृक्षोंको चूर्ण करनेको चाहते हुए रामचन्द्रजीसे गम्भीरशब्दके उच्चारणके साथ रोके गये ॥ ४८ ॥

जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवरावासम् ।
भीमं तरुहरिणबलं सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४९ ॥

अन्वयः—जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवराऽऽवास सुसमिद्धहिमारिकिरणमालालोल भीम तरुहरिणबलम् "अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढम्" ॥

व्याख्या—जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवराऽऽवास = तोयतटोन्नतवृक्षश्रेष्ठदरीपर्वतकुड्यनिकुञ्जबिलवासि, सुसमिद्धहिमाऽरिकिरणमालालोल = सुप्रदीप्तसूर्यरश्मिपङ्क्तिचञ्चल, भीमं = भयङ्कर, तरुहरिणबल = शाखामृगसैन्यम्, अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढमिति वक्ष्यमाणपद्यपदाभ्या सम्बन्धः ॥

❀व्युत्पत्तिः❀ जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवराऽऽवास = जलतीराणि च तुङ्गतरुवराश्च कन्दराश्च गिरिभित्तयश्च कुञ्जविवराणि च, तेषु आवासो यस्य तत्। सुसमिद्धहिमारिकिरणमालालोल = हिमस्याऽरिर्हिमारिः, सूर्योऽग्निर्वा। सुसमिद्धोयो हिमाऽरिः, तस्य किरणमाला इव लोलम् ॥

❀भाषाऽर्थः❀ जलतट, ऊचे श्रेष्ठ वृक्ष, कन्दराए, पर्वतोंकी भित्तियां और निकुञ्ज-बिल इनमें निवास करनेवाली, प्रदीप्त सूर्यकी किरणमालाके सदृश चञ्चल और भय-ङ्कर वानरसेना अट्ट आदि स्थानोंपर चढ गई ॥ ४९ ॥

रावणबलमवगन्तुं जलभरगुरुसलिलवाहगणसमच्छायम्।
अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढम् ॥ ५० ॥

अन्वय —जलभरगुरुसलिलवाहगणसमच्छाय रावणबलम् अवगन्तुम् ( तरुह-रिणबलम् ) अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढम् ॥

व्याख्या—जलभरगुरुसलिलवाहगणसमच्छायम् = तोयभारमहामेघसमूहतुल्य-कान्ति, रावणबल = रावणसैन्यम् , अवगन्तु = ज्ञातुम् , अट्टतरुमञ्चमन्दिरतोरणमा-लासभासु = क्षौमवृक्षोच्चमण्डपभवनबहिर्द्वारपङ्क्तिगोष्ठीषु, समारूढ = समारुरोह, तरुहरिणबलमिति अध्याहार्यम् ॥

❀व्युत्पत्ति❀ जलभरगुरुसलिलवाहगणसमच्छाय = जलभरेण गुरुर्यः सलिल वाहगण , तेन समा छाया यस्य तत्। अट्टतरुमञ्चमन्दिरतोरणमालासभासु = अट्टाश्च तरवश्च मञ्चाश्च मन्दराणि च तोरणमाला च सभाश्च, तासु। "स्यादट्ट क्षौममस्त्रि-याम्" इत्यमरः। एतानि द्वाविंशति संङ्कीर्णानि ॥

❀भाषाऽर्थः❀ जलके भारसे महान् मेघगणकी तुल्य कान्तिसे युक्त रावणकी सेनाको जाननेके लिए वानरोंकी सेना अट्टालिका, वृक्ष, उच्चमण्डप, भवन, बहि-र्द्वारपङ्क्ति और सभामें चढ गई ॥ ५० ॥

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये प्रसन्नकाण्डे भाषासमावेशो नाम चतुर्थ परिच्छेदः, काव्यस्य सेतुबन्धन नाम त्रयोदश सर्गश्च समाप्तः ॥

---

# अथ चतुर्दशः सर्गः ॥

सुप्तिङ्व्युत्पत्तौ सौष्ठव काव्यस्याऽङ्गत्वेनाऽभिमतम्। अत प्रसन्नकाण्डाऽनन्तर तिङन्तकाण्डमुच्यते। तत्र लस्य स्थाने तिबादय। लकाराश्च दश, परं लेटश्छन्दो मात्रविषयत्वादत्र नवाना लकाराणां विलसितानि प्रदर्श्यन्ते। विलसितं च नाना रूपता। तत्र च भूताऽनद्यतनपरोक्षाऽर्थवन्तं लिटमधिकृत्य तद्विलसितमाह—

ततो दशास्य स्मरविह्वलात्मा चारप्रकाशीकृतशत्रुशक्तिः।

विमोह्य मायामयराममूर्ध्ना सीतामनीकं प्रजिघाय योद्धुम् ॥ १ ॥

अन्वयः—ततो दशाऽऽस्य स्मरविह्वलाऽऽत्मा ( सन् ) मायामयराममूर्ध्ना सीता विमोह्य चारप्रकाशीकृतशत्रुशक्ति ( सन् ) योद्धुम् अनीक प्रजिघाय ॥

व्याख्या—तत = सेतुबन्धनाऽनन्तरं, दशाऽऽस्य = रावण, स्मरविह्वलात्मा = कामविक्लवबुद्धि सन् , मायामयराममूर्ध्ना = मायास्वरूपराममस्तकेन, सीता = जानकी, विमोह्य = मोहयित्वा, चारप्रकाशीकृतशत्रुशक्ति = प्रणिधिज्ञापित-रिपुसामर्थ्य सन् , योद्धु = युद्ध कर्तुम् , अनीक = सैन्य, प्रजिघाय = प्रहितवान् ॥

॥व्युत्पत्ति॥ स्मरविह्वलाऽऽत्मा = स्मरेण विह्वल आत्मा यस्य स । "आत्मा यत्नो धृतिर्बुद्धि स्वभावो ब्रह्म वर्ष्म च । "इत्यमर. । मायामयराममूर्ध्ना = मायामयेन राममूर्ध्ना, स्वरूपाऽर्थे मयट् । चारप्रकाशीकृतशत्रुशक्ति = चारै प्रकाशीकृता शत्रुशक्तिर्यस्मै सः । प्रजिघाय = प्रपूर्वकात् "हि गतौ वृद्धौ च"ति धातो. "परोक्षे लिट्" इति लिट् । एव परत्राऽपि । "हेरचङि" इति कुत्वम् ॥

॥भाषाऽर्थ॥ सेतुबन्धनके अनन्तर रावणने कामदेवसे विह्वल बुद्धि वाला होकर मायारूप रामचन्द्रजीके मस्तकसे सीताजीको मोहितकर गुप्तचरोंसे शत्रुशक्तिको जानकर लड़नेके लिए सेना भेजी ॥ १ ॥

कम्बूनथ समादध्मु , कोणैर्भेर्यो निजघ्निरे ।
वेणून् पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः ॥ २ ॥

अन्वय —अथ कम्बून् समादध्मु । कोणै भेर्यो निजघ्निरे । वेणून् पुपूरिरे । करघट्टिता गुञ्जा जुगुञ्जु ॥

व्याख्या—अथ = अनीकप्रेषणाऽनन्तर, कम्बून् = शङ्खान् , समादध्मु = शब्दितवन्त , शाङ्खिका इति शेष । कोणै = काष्ठमयैर्वाद्यवादनै , भेर्य =आनका , निजघ्निरे = ताडिता , भेरीवादकैरिति शेष । वेणून्=वंशान् , पुपूरिरे = पूरितवन्त , मुखमरुता, वेणुवादका इति शेष । करघट्टिता = हस्ताऽभिहता , गुञ्जा = पटहा , जुगुञ्जु =अव्यक्तशब्द चक्रु ॥

॥व्युत्पत्ति॥ समादध्मु = समाङ्पूर्वकात् "ध्मा शब्दाऽग्निसयोगयो " इति धातो. कर्तरि लिट् । कोणै = "कोणो वीणादिवादनम्" इति । भेर्य = "भेर्यामानकदुन्दुभी" इत्यमर. । निजघ्निरे = निपूर्वात् "हन हिंसागत्यो." इति धातो कर्मणि लिट् । पुपूरिरे = "पूरी आप्यायने" इति दैवादिकधातोर्लिट् । गुञ्जा = "गुञ्जातु का-कचिञ्चायां पटहे च कलध्वनौ ।" इति मेदिनी । जुगुञ्जु. = "गुजि अव्यक्ते शब्दे" इति धातोर्लिट् ॥

ऋभाषाऽर्थःऋ रावणके सेनाओंको लडनेके लिए भेजनेके अनन्तर शाङ्खिकों ने शङ्खोंको फूका। भेरीवादकोंने कोणनामक वादन काष्ठोंसे भेरिया बजाई। वाशिकोंने वशिया बजाई। वादकोंके हाथ से ताडित पटह शब्द करने लगे ॥ २ ॥

वादयाञ्चक्रिरे ढक्का. पणवा दध्वनुर्हताः ।
काहला पूरयाञ्चक्रुः पूर्णाः पेराश्च सस्वनुः ॥ ३ ॥

अन्वय —ढक्का वादयाञ्चक्रिरे । हता., पणवा दध्वनु । काहला पूरयाञ्चक्रु । पूर्णा पेरा सस्वनु ॥

व्याख्या—ढक्का = यश पटहान्, वादयाञ्चक्रिरे = वादितवन्त, ढक्कावादका इति शेष । हता = ताडिता, पाणविकैरिति शेष । पणवा = गायनपटहा, दध्वनु = ध्वनिता । काहला = वाद्यभेदान्, पूरयाञ्चक्रु = पूरितवन्त, मुखमारुतैरिति शेष । पूर्णा = पूरिता, मुखमरुतेति शेष । पेरा = खरमुखाऽऽकारा वाद्य विशेषा, सस्वनु = शब्द चक्रु ॥

ऋव्युत्पत्ति ऋ ढक्का = "स्याद्यश.पटहो ढक्का" इत्यमरः। वादयाञ्चक्रिरे = हेतुमण्ण्यन्ताद्वदेरामि "अयामन्ताल्वाय्येत्विष्णुषु" इत्ययादेश । काहला = "हस्तत्रितयदीर्घा स्याद्धुस्तूरकुसुमोपमा । शुद्धताम्रमयी मध्यशुषिरा काहला मता ॥" इति नाट्यदर्पण इति भरत । पूरयाञ्चक्रु = "पूरी आप्यायने" इति चौरादिकाद्धातोर्लिट् । सस्वनु = "स्वन शब्दे" इति धातोर्लिट्। "फणा च सप्तानाम्" इति लिटि एत्वविधानस्य विकल्पितत्वात् नैत्वम् ॥

ऋभाषाऽर्थःऋ ढक्का वादक ढक्काओंको बजाने लगे। पाणविकोंसे ताडित पणव शब्द करने लगे। कुछ लोगोंने काहला नामक वाद्योंको मुखवायुसे पूर्ण किया। मुखवायुसे पूर्ण पेरा नामक वाद्य शब्द करने लगे ॥ ३ ॥

मृदङ्गा धीरमास्वेनुर्हतैः स्वेने च गोमुखैः ।
घण्टाः शिशिञ्जिरे दीर्घं जह्रादे पटहैर्भृशम् ॥ ४ ॥

अन्वयः—मृदङ्गा धीरम् आस्वेनु । हतै गोमुखै स्वेने। घण्टा दीर्घं शिशिञ्जिरे । पटहै भृश जह्रादे च ॥

व्याख्या—मृदङ्गा = मुरजा धीरं = गम्भीरं यथा तथा, आस्वेनु = शब्दं चक्रु, हतै = ताडितै, गोमुखै = वाद्यविशेषै, स्वेने = शब्दितं, घण्टा = कास्यनिर्मिता वाद्यविशेषा, दीर्घम् = उच्चै, शिशिञ्जिरे = शब्दितवत्य, पटहैश्च = आनकैश्च, भृशम्=अत्यर्थ, जह्रादे=शब्दितम् ॥

※व्युत्पत्तिः※ मृदङ्गा. = मृदङ्गलक्षण यथाऽऽह भरतमुनि'—

"चर्मणा नद्धवदनो मध्ये चैव पृथुर्भवेत्।
मृत्तिकानिर्मितश्चैव मृदङ्ग इति कीर्तित ॥" इति ।

आस्वेनु = "फणा च सप्तानाम्" इति एत्वपक्षे रूपम्। स्वेने = भावे लिट्। शिशिञ्जिरे = "शिजि अव्यक्ते शब्दे" इति धातोर्लिट्। पटहे = 'आनक पटहोऽस्त्री स्यात्' इत्यमर। जह्रादे = "ह्राद अव्यक्ते शब्दे" इति धातोर्भावे लिट् ॥

※भाषाऽर्थ※ पखावजोंने गम्भीरता पूर्वक शब्द किया। ताडित गोमुख नामक वाद्योंने शब्द किया। घण्टाओंने दीर्घता पूर्वक शब्द। पटहोंने अतिशय शब्द उत्पन्न किया ॥ ४ ॥

हया जिहेषिरे हर्षाद्गम्भीर जगजुर्गजा.।
संत्रस्ताः करभा रेटुश्चुकुवुः पत्तिपङ्क्तयः ॥ ५ ॥

**अन्वय**—हया हर्षात् जिहेषिरे। गजा गम्भीर जगजु। करभा सन्त्रस्ता (सन्त) रेटु। पत्तिपङ्क्तय चुकुवु ॥

**व्याख्या**—हया = अश्वा, हर्षात् = प्रमोदात्, जिहेषिरे = हेषितवन्त। गजा = करिण। गम्भीरं = मन्द्र यथा तथा, जगजु = गर्जितवन्त। करभा = उष्ट्रा, सन्त्रस्ता = उद्विग्ना, सन्त, नावादित्रश्रवणादिति भाव। रेटु = शब्दं कृतवन्त। पत्तिपङ्क्तय = पदातिसमूहा, चुकुवु = शब्दितवत्य, गच्छत, कि तिष्ठतेति शेष ॥

※व्युत्पत्ति.※ जिहेषिरे = "हेष अव्यक्ते शब्दे" इति भौवादिकाद्धातोर्लिट्। अभ्यासस्य "ह्रस्व" इति "एच इग्घ्रस्वादेशे" इति नियमेन ह्रस्वत्वे एत इत्वम्। जगजु = शब्दार्थाद्गजधातोर्लिट्। रेटु.="रट परिभाषणे" इति धातोर्लिट्। चुकुवु ="कुशब्दे" इति धातोर्लिट् ॥

※भाषाऽर्थ※ घोडे हर्ष से हिनहिनाने लगे। हाथी गम्भीरता पूर्वक चिघाड शब्द करने लगे। ऊँट सन्त्रस्त होते हुए शब्द करने लगे। पत्तियों की पङ्क्तियाँ शब्द करने लगीं ॥ ५ ॥

तुरङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परम्।
नार्यश्चुक्षुभिरे मम्लुर्मुमुहु शुशुचु पतीन् ॥ ६ ॥

**अन्वय.**—तुरङ्गा भीता (सन्त) पुस्फुटु। वृषभा पर पुस्फुरु। नार्य चुक्षुभिरे, मम्लु, मुमुहु, पतीन् शुशुचु ॥

**व्याख्या**—तुरङ्गा = अश्वा, भीता = त्रस्ता सन्त, वादित्रश्रवणादिति शेष। पुस्फुटु = स्फुटिता, इतस्ततो गता इत्यर्थ। वृषभा = बलीवर्दा, परम् = अत्यर्थं,

पुस्फुरु = सञ्चलिता । नार्य = स्त्रिय., चुक्षुभिरे काश्चित् = क्षुब्धा बभूवु, पतिवियोगाऽऽशङ्कया इति भाव । मम्लु = काश्चित् म्लाना सञ्जाता, मुमुहु. = काश्चिन्मोहमुपगता, काश्चिच्च पतीन् = भर्तॄन्, शुशुचु = शोचितवत्य ॥

❀व्युत्पत्ति❀ पुस्फुटु = "स्फुट विशरणे" इति धातोर्लिट्। "शर्पूर्वा. खय" इति अभ्याससकारलोप । पुस्फुरु = "स्फुर सञ्चलने" इति धातोर्लिट्। मम्लु = "म्लै हर्षक्षये" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ घोडे डरते हुए इधर उधर जाने लगे। बैल बहुत ही विचलित होने लगे। कुछ स्त्रियां क्षुब्ध हुई, कुछ म्लान हुई, कुछ मोहित हुई और कुछ पति को उद्देश्य करके शोक करने लगी ॥ ६ ॥

**जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परैः ।**
**बबन्धुरङ्गुलित्राणि सन्नेहु परिनिर्ययु ॥ ७ ॥**

अन्वय —शूरा जगर्जु, जहृषु, रेजु, परै तुष्टुविरे ( च )। ( ते ) अङ्गुलित्राणि बबन्धु, सन्नेहु परिनिर्ययुश्च ॥

व्याख्या—शूरा = वीरा, जगर्जु = गर्जितवन्त, शत्रूञ्जेष्याम इति धियेति शेष । जहृषु = हृष्टा, चिरात्प्राप्त सग्राम इति धियेति शेष । रेजु = शुशुभिरे । परै = अन्यै, तुष्टुविरे = स्तुताश्च । ( ते = शूरा ) अङ्गुलित्राणि = अङ्गुलिरक्षकाणि वस्तूनि, बबन्धु = बध्नन्ति स्म । सन्नेहु = सन्नाहं कृतवन्त, कवचं परिहितवन्त इति भाव । परिनिर्ययुश्च = निष्क्रान्ताश्च ॥

❀व्युत्पत्ति❀ जहृषु = "हृष तुष्टौ" इति धातोर्लिट्। रेजु = "राजदीप्तौ" इति धातोर्लिट्, "फणा च सप्तानाम्" इत्येत्वाऽभ्यासलोपौ। तुष्टुविरे = "ष्टुञ् स्तुतौ" इति धातो कर्मणि लिट्। अङ्गुलित्राणि = अङ्गुलि त्रायन्त इति अङ्गुलित्राणि, तानि "आतोऽनुपसर्गे क" इति कप्रत्यय.। बबन्धु = "बन्ध बन्धने" इति धातोर्लिट्। सन्नेहु = सम्पूर्वकात् "नह बन्धन" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ शूर लोग गर्जन करने लगे, प्रसन्न हुए शोभित हुए और और लोगों ने उनकी स्तुति भी की। उन लोगों ने अङ्गुलियों (उगली की रक्षा करने वाली वस्तुओं) को बाधा, कवच धारण किया और वे लोग (लडने के लिए) निकले भी ॥७॥

**धनूंष्यारोपयाञ्चक्रुरारुरुहू रथादिषु ।**
**असीनुद्ववृहुर्दीप्तान् गुर्वीरुच्चिक्षिपुर्गदाः ॥ ८ ॥**

अन्वयः—( शूरा ) धनूंषि आरोपयाञ्चक्रु, रथाऽऽदिषु आरुरुहु, दीप्तान् असीन् उद्ववृहु, गुर्वी, गदा उच्चिक्षिपु ॥

व्याख्या—धनूषि = कार्मुकाणि, आरोपयाञ्चक्रु =आरोपितगुणानि कृतवन्त, अथवा-रथे हस्ते वा आरोपितवन्त । रथाऽऽदिषु=स्यन्दनादिषु यानेषु, आदिपदेन तुरङ्गाऽऽदीना परामर्श । आरुरुहु =आरोहण कृतवन्त, दीप्तान्=भास्वरान्, असीन्=खङ्गान्, उद्ववृहु = उद्यतान्कृतवन्त, कोशादाकृष्येति शेष । एव च—गुर्वी = महती, गदा =लौहमयाऽस्त्रविशेषान्, उच्चिक्षिपु = उत्क्षिप्तवन्त ॥

ॐव्युत्पत्तिॐ आरोपयाञ्चक्रु = आङुपसर्गपूर्वकात् "रुह बीजजन्मनि प्रादुर्भावे चे"ति धातोर्णौ "रुह पोऽन्यतरस्याम्" इति पाऽऽदेश । रथाऽऽदिषु = अस्य पदस्य आरोहणक्रियाया कर्मत्वेऽपि कारकस्य विवक्षाऽधीनत्वात् "आधारोऽधिकरणम्" इत्यधिकरणत्वविवक्षया सप्तमी। उद्ववृहु =उत्पूर्वकात् "वृह उद्यमने" इति धातोर्लिट् ॥

ॐभाषाऽर्थॐ शूरोने चापोंको मौर्वीयुक्त किया, रथ आदि यानों ( सवारियों ) पर आरोहण किया, चमकने वाले तलवारोंको मियानसे बाहर निकाला और बडी गदाओंको उठाया ॥ ८

शूलानि भ्रमयाञ्चक्रुर्बाणानाददिरे शुभान् ।
भ्रेमुश्चुकुर्दिरे रेसुर्ववल्गुश्च पदातयः ॥ ९ ॥

अन्वयः—( शूरा ) शूलानि भ्रमयाञ्चक्रु, शुभान् बाणान् आददिरे । पदातय भ्रेमु चुकुर्दिरे, रेसु ववल्गुश्च ॥

व्याख्या—शूलानि = अस्त्रविशेषान्, भ्रमयाञ्चक्रु =भ्रमितवन्त, शूरा इति शेष, एवमुत्तरवाक्येऽपि । शुभान् = शोभमानान्, बाणान् = शरान्, आददिरे = गृहीतवन्त । पदातय = पत्तय, भ्रेमु = इतस्ततो याता, चुकुर्दिरे = क्रीडितवन्त, रेसु = शब्दं कृतवन्त, ववल्गुश्च = धावितवन्तश्च ॥

ॐव्युत्पत्तिॐ भ्रमयाञ्चक्रु = णिजन्तात् "भ्रमु अनवस्थाने" इति धातोर्लिट् । मान्तत्वान्मित्त्वे "मिता ह्रस्व" इति ह्रस्वत्वम् । आददिरे="आङोदोऽनास्यविहरणे" इत्यात्मनेपदम् । चुकुर्दिरे="कुर्द क्रीडायामेवे"ति धातोलिट् । रेसु="रसशब्दे" इति धातोर्लिट् ॥

ॐभाषाऽर्थॐ शूरोंने शूलोंको घुमाया शोभित होनेवाले बाणोंको लिया । पैदल सेनायें घूमने लगीं, क्रीडा करने लगी, शब्द करने लगी और दौडने लगी ॥ ९ ॥

समुत्पेतुः कशाघातैरश्म्याकर्षैर्ममङ्गिरे ।
अश्वाः प्रदुद्रुवुर्मोचे रक्तं निजगरुः श्रमे ॥ १० ॥

अन्वय.--अश्वा कशाऽऽघातै समुत्पेतु, रश्म्याकर्षै ममङ्गिरे, मोचे प्रदुद्रुवु, श्रमे रक्तं निजगरु ॥

**व्याख्या**--अश्वा = हया , कशाघातै = चर्मलताप्रहारै , समुत्पेतु = उत्प्लुता , रश्म्याकर्षै = प्रग्रहाऽऽकर्षणै , ममङ्गिरे = शुशुभिरे सङ्कुचितवेगत्वादिति भाव । मोचे = रश्मीना प्रसारण इत्यर्थ । प्रदुद्रुवु -वेगेन गता , श्रमे = परिश्रमे सति, रक्त= रुधिरं, खलीनप्रभवमिति भाव । निजगरु = पीतवन्त ॥

❀व्युत्पत्ति❀ कशाघातै =कशाया आघातै, "अश्वादेस्ताडनीकशा।" इत्यमरः । ममङ्गिरे = "मगि मण्डने" इति धातोर्लिट् । "इदितो नुम् धातो " इति नुमागम । निजगरु = निपूर्वकात् "गॄ निगरणे" इति धातोर्लिट् । "ऋच्छत्यॄताम्" इति गुण ॥

❀भाषाऽर्थ❀ घोडे चाबुकके आघातोंसे उछलने लगे, लगाम खीचनेसे शोभित हुए, लगामको छोडने पर दौडने लगे और परिश्रम होने पर लगामसे निकले हुए रुधिरको पीने लगे ॥ १० ॥

गजाना प्रददुः शारीन् कम्बलान् परितस्तरु ।
तेनुः कक्षा ध्वजांश्चैव समुच्छिश्रियुरुच्छिखान् ॥ ११ ॥

**अन्वय**—गजाना शारीन् प्रददु , कम्बलान् परितस्तरु , कक्षा तेनु , उच्छिखान् ध्वजाश्चैव समुच्छिश्रियु ॥

**व्याख्या**—गजाना = हस्तिना, शारीन् = युद्धोपकरणानि, प्रददु = पृष्ठ आरोपितवन्त इत्यर्थ , हस्तिपका इति शेष , एव परत्राऽपि । कम्बलान् = रल्लकान् , परितस्तरु = आस्तीर्णवन्त , कक्षाम् = उदराद्यवस्थिता रज्जु, तेनु = विस्तारितवन्त , उच्छिखान् = उद्गतशिखान् , ध्वजाश्चैव = पताकाश्चैव, समुच्छिश्रियु = उत्क्षिप्तवन्त ॥

❀व्युत्पत्ति❀ कम्बलान् = "समौ रल्लककम्बलौ" इत्यमर. । परितस्तरुः = परिपूर्वकात् "स्तॄञ् आच्छादने" इति क्र्यादिस्थधातोर्लिट् । कक्षा = "कक्षोद्ग्राहाऽलका काञ्ची प्रकोष्ठगजरज्जुषु ।" इति विश्व । उच्छिखान् = उद्गता शिखा येषा ते उच्छिखास्तान् । समुच्छिश्रियु = समुत्पूर्वकात् "श्रिञ् सेवायाम्" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ महावतोंने हाथियोंकी पीठमें युद्धकी सामग्रियां रक्खी, कम्बलों को बिछाया, उदरमें रक्खी गई रस्सीको फैलाया और उन्नत अग्र भागवाली पताकाओंको फहराया ॥ ११ ॥

विशिश्वासयिषांचक्रुरालिलिङ्गुश्च योषितः ।
आजघ्रुर्मूर्ध्नि बालाश्च चुचुम्बुश्च सुतप्रियाः ॥ १२ ॥

**अन्वय** - ( योधा ) योषितो विशिश्वासयिषाञ्चक्रु आलिलिङ्गुश्च । सुतप्रिया बालान् मूर्ध्नि आजघ्रु चुचुम्बुश्च ॥

**व्याख्या**—योषित = स्त्री, विशिश्वासयिषाञ्चक्रु = विश्वासयितुमिष्टवन्त, आलिलिङ्गुश्च = आलिङ्गन च कृतवन्त, योधा इति शेष । सुतप्रिया = आत्मज-वल्लभा, योधा इति भाव । बालान् = शिशून्, मूर्ध्नि = शिरसि, आजघ्रु = आघ्रातवन्त, चुचुम्बुश्च = चुम्बन च कृतवन्त, योधा स्त्रियो बालकाश्च विश्वासो-त्पादनादिभि सान्त्वयित्वा रणाऽङ्गण जग्मुरिति भाव ॥

**ॐव्युत्पत्ति·ॐ** विशिश्वासयिषाञ्चक्रु = विपूर्वकात् "श्वस प्राणने" इति ण्यन्ता-द्धातो सनि लिटि रूपम् । आलिलिङ्गु· = गत्यर्थो लिगिधातुराङ् पूर्वश्लेषपरिष्वङ्गे वर्तते, तस्य लिटि रूपम् । सुतप्रिया = सुता प्रिया येषा ते । आजघ्रु = आङ्पूर्वकात् "घ्रा गन्धोपादाने" इति धातोर्लिट् । चुचुम्बु = "चुबि वक्त्रसयोगे" इति धातोर्लिट् ॥

**ॐभाषाऽर्थ·ॐ** योद्धाओंने स्त्रियोंको विश्वास दिलानेकी इच्छा की, और उन्हें आलिङ्गन किया । लडकोंको प्यार करने वाले योद्धाओंने लडकोंके शिरमे सूघा और उन्हें चुम्बन भी किया ॥ १२ ॥

> गम्भीरवेदिनः सञ्ज्ञा गजा जगृहुरक्षताः ।
> ववृधे शुशुभे चैषा मदो हृष्टैश्च पुप्लुवे ॥ १३ ॥

**अन्वयः**—गम्भीरवेदिनो गजा अक्षता ( सन्त ) सञ्ज्ञा जगृहु । एषा मदो ववृधे शुशुभे च । हृष्टै ( तै ) पुप्लुवे च ॥

**व्याख्या**—गम्भीरवेदिन = अङ्कुशदुर्द्धरा,

> "त्वग्भेदाच्छोणितस्रावान्मासस्य क्रथनादपि ।
> आत्मान यो न जानाति तस्य गम्भीरवेदिता ॥"

इत्याकारकलक्षणलक्षिता इति भाव । गजा = हस्तिन, अक्षता = तोत्राङ्कुशैरनाहता सन्त, सञ्ज्ञा = युद्धोपयुक्ता अर्थसूचना·, जगृहु = गृहीतवन्त । एषा हस्तिना, मद = दानवारि, ववृधे = एधाञ्चक्रे । शुशुभे च = शोभते स्म च । हृष्टै = सन्तुष्टै, तैरिति शेष । पुप्लुवे च = प्लुत च ॥

**ॐव्युत्पत्ति ॐ** गम्भीरवेदिन = गम्भीर विदन्तीति, ताच्छील्ये णिनिः । सञ्ज्ञा = "सञ्ज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना ।" इत्यमर । पुप्लुवे = "प्लुङ् गतौ" इति धातोर्भावे लिट् ॥

**ॐभाषाऽर्थ·ॐ** गम्भीरवेदी हाथियोंने अक्षत होकर युद्धके उपयुक्त सञ्ज्ञा ( इशारे ) का ग्रहण कर लिया, इनका मद बढा और शोभित भी हुआ । हृष्ट होकर वे वेगसे चलने लगे ॥ १३ ॥

> मृगा प्रदक्षिण सस्रुः शिवा. सम्यग् ववाशिरे ।
> अवामै· पुस्फुरे देहै' प्रसेदे चित्तवृत्तिभिः ॥ १४ ॥

**अन्वय**·—मृगा प्रदक्षिण सस्रु । शिवा सम्यक् ववाशिरे । अवामै देहै· पुस्फुरे । चित्तवृत्तिभि प्रसेदे ॥

**व्याख्या**—मृगा = हरिणा , प्रदक्षिण = वामेतरद्यथा तथा सस्रु = सृतवन्त , एव सनद्ध चलता मृगा दक्षिणपार्श्वेन गता इति भाव । शिवा =शृगाला , सम्यक्= समीचीन यथा तथा, ववाशिरे = शब्द चक्रु , शृगाला वामपार्श्वस्था सन्त शब्दि-तवन्त इति तात्पर्यम् । अवामै =दक्षिणै , देहै =शरीरै , लक्षणया देवाऽवयवैर्भुजादि-भिरिति भाव । पुस्फुरे = स्फुरित, चित्तवृत्तिभि = मनोवृत्तिभि , प्रसेदे=प्रसन्नम् ॥

*व्युत्पत्ति·* शिवा = "स्त्रिया शिवा भूरिमायगोमायुमृगधूर्तका ।" इत्यमर· । ववाशिरे = "वाश्ट शब्दे" इति धातोर्लिट् । पुस्फुरे="स्फुर सचलने" इति धातोर्भावे लिट् । प्रसेदे=प्रपूर्वकात् "षद्लृ विशरणगत्यवसादनेषु" इति धातोर्भावे लिट् ॥

*भाषाऽर्थ* इस तरह कवच धारण करने वालोंके दाहनी ओर मृग चलने लगे, बाईं ओर शृगाल होकर शब्द करने लगे, दक्षिण भुज आदि शरीरके अवयव स्फुरित होने लगे और वीर लोगों की चित्तवृत्तिया प्रसन्न हुईं ॥ १४ ॥

प्राच्यमञ्जिहिषाचक्रे प्रहस्तो रावणाज्ञया ।
द्वारं ररङ्घतुर्याम्यं महापार्श्वमहोदरौ ॥ १५ ॥

**अन्वयः**—प्रहस्तो रावणाऽऽज्ञया प्राच्य द्वारम् अञ्जिहिषाञ्चक्रे, महापार्श्वम-होदरौ याम्य द्वार ररङ्घतु· ॥

**व्याख्या**—प्रहस्त = रावणसेनापतिविशेष , रावणाऽऽज्ञया=रावणाऽऽदेशेन, प्राच्यं=पूर्वदिग्भव, द्वार=प्रतीहारम्, अञ्जिहिषाञ्चक्रे=गन्तुमिष्टवान् । महापा-र्श्वमहोदरौ=तन्नामकौ सेनापतिविशेषौ, याम्य = यमदिग्भव, दक्षिणमित्यर्थ । द्वार = प्रतीहार, ररङ्घतु = गतौ ॥

*व्युत्पत्ति·* प्राच्य = प्राचिभव, "द्युप्रागपागुदक्प्रतीचो यत्" इति यत् । अञ्जि-हिषाञ्चक्रे=सन्नन्तात् "अहि गतौ" इति धातोर्लिट् । इडागमे "अजादेर्द्वितीयस्य" इति द्विर्वचनम् "नन्द्रा· सयोगादय" इति नकारस्य द्वित्वप्रतिषेध । "आम्प्रत्ययव-त्कृञोऽनुप्रयोगस्य" इत्यात्मनेपदम् । याम्य = यमो देवताऽस्येति विग्रहे "यमाच्चेति वक्तव्यम्" इति ण्यप्रत्यय इति काशिका । भाष्येऽदर्शनादेतत्प्रामाण्ये सन्दिहाना ज्ञानेन्द्रभिक्षुचरणास्तु –"अण्णन्तात्स्वार्थिकेन ष्यञा प्रयोगः सूपपाद" इति प्रत्यपी पदन् । ररङ्घतु ="रघि गतौ" इति धातोर्लिट् ॥

*भाषार्थ* प्रहस्तने रावणकी आज्ञासे पूर्व द्वारमे जानेकी इच्छाकी, महापार्श्व और महोदय नामके राक्षसोंने दक्षिण द्वारमे गमन किया ॥ १५ ॥

प्रययाविन्द्रजित्प्रत्यगियाय स्वयमुत्तरम् ।
समध्यासिसिषांचक्रे विरूपाक्ष. पुरोदरम् ॥ १६ ॥

**अन्वय.**—इन्द्रजित् प्रत्यक् प्रययौ । स्वयम् उत्तरम् इयाय । विरूपाक्ष पुरोदर समध्यासिसिषाञ्चक्रे ॥

**व्याख्या**—इन्द्रजित्=मेघनाद, प्रत्यक् = पश्चिमद्वार, प्रययौ = प्रगत । स्वयम् = आत्मना, रावण इति भाव, उत्तरम् = उत्तरद्वारम्, इयाय = गत । विरूपाक्ष = तन्नामा राक्षससेनापति, पुरोदर = पुरमध्य, समध्यासिसिषाञ्चक्रे = समध्यासितुमिष्टवान् ॥

***व्युत्पत्ति.*** प्रत्यक् = प्रतीच्यामिति "दिक्छब्देभ्य· सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्ताति" इति विहितस्याऽस्ताते "अञ्चेर्लुक्" इति लुक् । भसञ्ज्ञाभावात् "अच" इति अकारलोपो निवर्तते "चौ" इति दीर्घत्व च । समध्यासिसिषाञ्चक्रे=समधिपूर्वकात् "आस उपवेशने" सन्नन्ताद्धातो. लिटि इटि अजादि । पूर्ववत्सन." इत्यात्मनेपदम् । अनुप्रयोगस्याप्यात्मनेपदम् ।

***भाषार्थ*** इन्द्रजित् पश्चिम द्वार को चला । स्वयम् रावण उत्तर द्वारको गया । विरूपाक्षने नगरके मध्यभाग में रहनेकी इच्छा की ॥ १६ ॥

शुश्राव रामस्तत्सर्वं प्रतस्थे च ससैनिकः ।
विस्फारयाचकारास्त्रं बबन्धाथ च बाणधी ॥ १७ ॥

**अन्वय:**—अथ राम तत् सर्व शुश्राव, ससैनिक प्रतस्थे च, अस्त्र विस्फारयाञ्चकार, बाणधी च बबंध ॥

**व्याख्या**—अथ = अनन्तर, राम =रामचन्द्र, तत्=पूर्ववृत्त, सर्व=सकल, रावणाचेष्टित, सुश्राव = श्रुतवान्, ससैनिक = सैन्यसहित सन्, प्रतस्थे च = गन्तु प्रवृत्तश्च, अस्त्र = धनु, विस्फारयाञ्चकार = आरोप्याऽऽकृष्टवान्, बाणधीच= तुणीरे च, बबन्ध = बध्नाति स्म ॥

***व्युत्पत्ति*** ससैनिक = सभाया समवेता सैनिका· "सेनाया वा" इति पक्षे ठक्, पक्षे ण्य. = सैन्याः । "सेनाया समवेता ये सैन्यास्ते सैनिकाश्च ते । "इत्यमर । सैनिकै. सहित । प्रतस्थे="समवप्रविभ्य स्थ." इत्यात्मनेपदम् । विस्फारयाञ्चकार= विपूर्वकात् "स्फुर सचलने' इति धातोर्णौ लिट् । "चिस्फुरोर्णौ" इत्यात्वम् । बाणधी = बाणा धीयन्ते अनयोरिति, "कर्मण्यधिकरणे च" इति किप्रत्यय ॥

***भाषार्थः*** अनन्तर रामचन्द्रजीने वह सब वृत्तान्त सुना, सैनिकोंके साथ प्रस्थान भी किया, धनुषको फैलाया और दो तूणीरोंको बाधा ॥ १७ ॥

ईक्षाचक्रेऽथ सौमित्रिमनुजज्ञे बलानि च ।
नमश्चकार देवेभ्यः पर्णतल्प मुमोच च ॥ १८ ॥

अन्वयः—अथ ( राम ) सौमित्रिम् ईक्षाञ्चक्रे, बलानि च अनुजज्ञे, देवेभ्यो नम चकार, पर्णतल्प मुमोच च ॥

व्याख्या—अथ = अनन्तर, ( राम = रामचन्द्र ) सौमित्रि=लक्ष्मणम्, ईक्षाञ्चक्रे = दृष्टवान्, बलानि च = सैनिकाश्च, अनुजज्ञे=अनुज्ञातवान्, देवेभ्य = सुरेभ्य, नम =नमस्कार, चकार = कृतवान्, पर्णतल्प = पत्रशयनीय, मुमोच च=मुक्तवाश्च ।

ॐव्युत्पत्ति.ॐ ईक्षाञ्चक्रे = "ईक्ष दर्शने" इति धातोर्लिटि "इजादेश्च गुरुमतोऽनृच्छ" इति आम् । अनुजज्ञे=अनुपूर्वो "ज्ञा अवबोधने" इति धातुरनुज्ञाने वर्तते तस्य परस्मैपदित्वात् "अनुपसर्गाज्ज्ञ" इतिवचनादात्मनेपदम्। उपसर्गेण युक्तत्वात्। देवेभ्यः-"नम" इति पदेन योगे "नम स्वस्तिस्वाहास्वधाऽलवषड्योगाच्चे"ति चतुर्थी। यद्यपि "नमश्चकारे"ति क्रियापदेन साक्षाद्योगे "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"ति परिभाषया द्वितीयाविभक्तेरेव प्राप्तिस्तथाप्यत्र नम शब्दस्य वाचकत्वेन कृञोऽन्वयाच्चतुर्थ्यपि युक्ता ॥

ॐभाषार्थॐ अनन्तर रामचन्द्रजीने लक्ष्मणको देखा, सैनिकोंको आज्ञा दी, देवताओंको नमस्कार किया और पत्रशय्याको भी छोड़ा ॥ १८ ॥

चकासाचक्रुरुत्तस्थुर्नेदुरानशिरे दिश ।
वानरा भूधरान् रेधुर्बभञ्जुश्च ततस्तरून् ॥ १९ ॥

अन्वय.—ततो वानरा चकासाञ्चक्रु, उत्तस्थु, नेदु, दिशः आनशिरे, भूधरान् रेधु तरूश्च बभञ्जु ॥

व्याख्या—तत = अनुज्ञानन्तर, वानरा = कपय, चकासाञ्चक्रु = शुशुभिरे, उत्तस्थु =उत्थिता, नेदु = अव्यक्त शब्द चक्रु, दिश = आशा, आनशिरे= व्याप्तवन्त, भूधरान् = पर्वतान्, रेधु = उन्मूलितवन्त, तरूश्च = वृक्षांश्च, बभञ्जु = भग्नवन्त ॥

ॐव्युत्पत्तिःॐ चकासाञ्चक्रु. = "चकासृ दीप्तौ" इति धातोर्लिटि "कास्प्रत्ययादाममन्त्रे लिटि" इत्यत्र "कास्यनेकाज्ग्रहण कर्तव्यम्" इति वचनादाम् । नेदु = "णद अव्यक्ते शब्दे" इति धातोर्लिट्, "णो न" इति णस्य नः। आनशिरे= "अशूङ् व्याप्तौ" इति धातोर्लिट् । "अश्नोतेश्च" इत्यभ्यासस्य नुट् "अत आदे." इति दीर्घत्वम् । रेधु =राध ससिद्धौ इति धातोर्लिटि हिंसायाम् "राधो हिसायाम्" इत्येत्वाऽभ्यासलोपौ ॥

ॐभाषाऽर्थ.ॐ रामचन्द्रजीकी आज्ञा देनेके अनन्तर वानर शोभित हुए, उठे,

अव्यक्त शब्द करने लगे, दिशाओंको व्याप्त करने लगे, पर्वतोंको उन्मूलित करने लगे और वृक्षोंको भङ्ग करने लगे ॥ १९ ॥

रामलक्ष्मणयोर्ब्रह्मास्त्रबन्धसूचनाऽर्थमपशकुन श्लोकद्वयेन दर्शयति—

**ददाल भूर्नभो रक्तं गोष्पदप्रं ववर्ष च ।**
**मृगाः प्रससृपुर्वाम खगाश्चुकुविरेऽशुभम् ॥ २० ॥**

**अन्वय.**—भू ददाल । नभो रक्तं गोष्पदप्र ववर्ष । मृगा वाम प्रससृपु । खगा अशुभ चुकुविरे ।

**व्याख्या**—भू =पृथिवी, ददाल=विदीर्णा । नभ =आकाश, रक्तं=रुधिर, गोष्पदप्र=गोष्पदं पूरयित्वा, ववर्ष=वृष्टवत् । मृगा =हरिणा , वामं = दक्षिणोत्तरं, प्रससृपु =गता , मृगा वामपार्श्वेन याता इत्यर्थ । खगा =पक्षिण , उलूकादय इति शेष । अशुभ = अमङ्गलं यथा तथा, "अशुभान्' इति पाठे अनिष्टान् इत्यर्थ । चुकुविरे=शब्दितवन्त ॥

**व्युत्पत्ति** ददाल = "दलविशरणे" इति धातोर्लिट् । गोष्पदप्र = "वर्षप्रमाण ऊलोपश्चाऽस्याऽन्यतरस्याम्" इति णमुल् ऊलोपश्च, "कृन्मेजन्त" इत्यव्ययम् । ववर्ष=पित्त्वादकित्वे धातोर्गुण. । चुकुविरे="कुङ् शब्दे" इति धातोर्लिट् ॥

**भाषाऽर्थः** भूमि विदीर्ण हुई । आकाशने रुधिरको गोष्पदको पूर्ण करके बरसाया । मृग बाईं ओर चले । पक्षी अमङ्गलपूर्वक शब्द करने लगे ॥ २० ॥

**उल्का ददृशिरे दीप्ता रुरुवुश्चाऽशिव शिवा ।**
**चक्ष्माये च मही रामः शशङ्के चाशुभागमम् ॥ २१ ॥**

**अन्वय'**—दीप्ता उल्का ददृशिरे । शिवा अशिव रुरुवु । मही च चक्ष्माये । राम अशुभाऽऽगम शशङ्के ।

**व्याख्या**—दीप्ता = भासिता , उल्का = निर्गतज्वाला , ददृशिरे = दृष्टा । शिवा = शृङ्गाला , अशिवम् = अशुभ यथा तथा, रुरुवु =शब्दितवन्त । महीच= पृथ्वी च, चक्ष्माये = कम्पिता । राम = रामचन्द्र अशुभाऽऽगमम् = अनिष्टप्राप्तिं शशङ्के = शङ्कितवान्, अशकुनदर्शनेनेति भाव ।

**व्युत्पत्ति.** ददृशिरे "दृशिर् प्रेक्षणे" इति धातो. कर्मणि लिट् । चक्ष्माये— "क्ष्मायी विधूनने" इति धातोर्लिट् ॥

**भाषाऽर्थः** प्रदीप्त उल्काये देखी गईं । शृङ्गाल अशुभपूर्वक शब्द करने लगे । भूमि भी कम्पित हुई । । रामचन्द्रजीने अनिष्ट प्राप्ति की आशङ्का की ॥ २१ ॥

रावणः शुश्रुवान् शत्रून् राक्षसानभ्युपेयुषः ।
स्वय युयुत्सयाचक्रे प्राकाराऽग्रे निषेदिवान् ॥ २२ ॥

अन्वयः—राक्षसान् अभ्युपेयुष शत्रून् शुश्रुवान्, रावण प्राकाराऽग्रे निषेदिवान् स्वय युयुत्सयाञ्चक्रे ॥

व्याख्या—राक्षसान्=यातुधानान्, अभ्युपेयुष =अभिमुखमुपगतवत, शत्रून्= रिपून्, रामादीनित्यर्थ । शुश्रुवान् = श्रुतवान्, रावण = दशाऽऽनन, प्राकाराऽग्रे= वप्राऽग्रे, निषेदिवान् = निषण्ण सन्, स्वयम् = आत्मना, युयुत्सयाञ्चक्रे = योद्धुमिच्छन्तं प्रयोजितवान् ॥

व्युत्पत्तिः शुश्रुवान्=श्रुधातो "भाषाया सदवसश्रुव." इति लिट क्वसु । निषेदिवान्=निपूर्वात्सदधातो पूर्वसूत्रेणैव क्वसु । युयुत्सयाञ्चक्रे=सन्नन्तण्यन्तात् "युध सम्प्रहारे" इति धातोर्लिट् ॥

भाषाऽर्थः राक्षसोंके सम्मुख आये हुए राम आदि शत्रुओंको सुनने वाले रावणने प्राकारके अग्रभागमे रहकर स्वयम् युद्धकी इच्छा करने वालेको प्रेरणा की ॥ २२ ॥

निरासू राक्षसा बाणान् प्रजहुः शूलपट्टिशान् ।
असींश्च वाहयाञ्चक्रुः पाशैश्चाऽऽचकृषुस्ततैः ॥ २३ ॥

अन्वयः—राक्षसा बाणान् निरासु, शूलपट्टिशान् प्रजहु, असीन् वाहयाञ्चक्रु ततै पाशै आचकृषुश्च ॥

व्याख्या—राक्षसा = यातुधाना, रावणप्रेरिता इति शेष । बाणान्=शरान्, निरासु = क्षिप्तवन्त, शूलपट्टिशान् = शूलसहितान् पट्टिशान्, प्रजहु = त्यक्तवन्त, असीन् = खड्गान्, वाहयाञ्चक्रु = व्यापारितवन्त, तते = विस्तृतै, पाशै=शस्त्रविशेषै, आचकृषुश्च = आकृष्टवन्तश्च ॥

व्युत्पत्ति निरासु = निरुपसर्गपूर्वकात् "असु क्षेपणे" इति धातोर्लिट् । शूलपट्टिशान्=शूलसहिता पट्टिशा शूलपट्टिशास्तान्, "शाकपार्थिवादीना सिद्धय उत्तरपदलोपस्योपसंख्यानम्" इति मध्यमपदलोपी समास । द्वन्द्वे तु "जातिरप्राणिनाम्" इति समाहार स्यात् । प्रजहु=प्रपूर्वकात् "ओहाक् त्यागे" इति धातोर्लिट् । वाहयाञ्चक्रु ="वह प्रापणे" इति णिजन्ताद्धातोर्लिट् । आचकृषु.= आङ्पूर्वकात् "कृष विलेखने" इति धातोर्लिट् । कित्त्वे गुणप्रतिषेधः ॥

भाषाऽर्थः राक्षसोंने बाणोंको फेंका शूल और पट्टिश नामके अस्त्रोंको छोड़ा, तलवारोंका प्रयोग किया और विस्तृत पाशोंसे शत्रुओंको खीचा भी ॥ २३ ॥

भल्लैश्च बिभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा ।
गदाभिश्चूर्णयाञ्चक्रुः, शितैश्चक्रैश्च चिच्छिदुः ॥ २४ ॥

**अन्वयः**—( राक्षसा ) तीक्ष्णै भल्लै बिभिदु, तथा तोमरै विविधु, गदाभि-चूर्णयाञ्चक्रु, शितै चक्रैश्च चिच्छिदु ॥

**व्याख्या**—तीक्ष्णै = निशितै, भल्लै = शस्त्रविशेषै, विभिदु = विदारितवन्त, राक्षसा इति शेष, एव परत्राऽपि । तथा = तीक्ष्णै, तोमरै = शर्वलाभि, विविधु = ताडितवन्त, गदाभि = लौहमयास्त्रविशेषै, चूर्णयाञ्चक्रु = चूर्णितवन्त, शितै =तीक्ष्णै, चक्रैश्च=रथाऽङ्गाऽऽकारैरस्त्रविशेषैश्च चिच्छिदु =छिन्नवन्त ॥

***व्युत्पत्ति.*** बिभिदु = "भिदिर् विदारणे" इति धातोर्लिट् । विविधु.="व्यध ताडने" इति धातोर्लिट् । "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति चे"ति सम्प्रसारणम् । चूर्णयाञ्चक्रुः = "सत्यापपाशरूपवीणातूलश्लोकसेना-लोमत्वचवर्मवर्णचूर्णचुरादिभ्योणिच्" इति णिच् । "चूर्ण प्रेरणे" इति चौरादिका-द्धातोर्वा णिच् । चिच्छिदु = "छिदिर् द्वैधीकरणे" इति धातोर्लिट् ॥

***भाषाऽर्थ*** राक्षसोंने तीखे भालोंसे शत्रुओंका विदारण किया वैसे ही तोमरोंसे ताडन किया, गदाओंसे चूर्ण किया और तीक्ष्ण चक्रोंसे छेदन भी किया ॥२४॥

वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा ।
निरासुश्च गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा ॥ २५ ॥

**अन्वय.**—वानरा मुष्टिभि जघ्नु, तथा दशनै ददंशु, तुङ्गान् गिरीन् निरासु तथा द्रुमाश्च विचकरु ॥

**व्याख्या**—वानरा = कपय, मुष्टिभि = सम्पिण्डिताङ्गुलिपाणिभि, जघ्नु = हतवन्त, राक्षसानिति शेष, एव परत्राऽपि । तथा = तेन प्रकारेण, दशनै=दन्तै, ददशु = दष्टवन्त । तुङ्गान् = उन्नतान्, गिरीन् = पर्वतान्, निरासु = क्षिप्तवन्त, तथा = तेनैव प्रकारेण, द्रुमाश्च = वृक्षाश्च = विचकरु =विक्षिप्तवन्त ॥

***व्युत्पत्ति*** विचकरु = "कॄ विक्षेपे" इति धातोर्लिट् । "ऋच्छत्यॄताम्" इति गुण. ॥

***भाषाऽर्थ*** वानरोंने राक्षसोंको मुष्टियोंसे मारा और दाँतोंसे काटा, उनपर ऊँचे पहाड फेंके उसी तरह वृक्षोंको भी फेंका ॥ २५ ॥

लाङ्गूलैर्लोठयाञ्चक्रुस्तलैर्निन्युश्च संक्षयम् ।
नखैश्चकृतु क्रुद्धा. पिपिषुश्च क्षितौ बलात् ॥ २६ ॥

**अन्वयः**—( वानरा ) लाङ्गूलै. लोठयाश्चक्रु, तलै सक्षय च निन्यु, नखैः चकृतुः, क्रुद्धा ( सन्त ) क्षितौ बलात् पिपिषु ॥

**व्याख्या**—लाङ्गूलैः = पुच्छैः, लोठयाञ्चक्रुः = व्यापादितवन्तः, वानरा राक्षसानिति भावः, एवं परत्राऽपि। तलैः = हस्ततलैः संक्षयं च = विनाशं च, निन्युः = नीतवन्तः, नखैः = नखरैः, चकृतुः = उच्छिन्नवन्तः, क्रुद्धाः = कुपिताः सन्तः, क्षितौ = पृथिव्या, बलात् = हठात्, पिपिषुः = चूर्णितवन्तः ॥

**॥व्युत्पत्तिः॥** लोठयाञ्चक्रुः = णिजन्तस्य "लुठ प्रतिघाते" इति धातोर्लिट्। चकृतुः = "कृती छेदने" इति धातोर्लिट्। पिपिषुः = "पिष्लृ सञ्चूर्णने" इति धातोर्लिट्॥

**॥भाषाऽर्थ॥** वानरोंने राक्षसोंको पूँछसे मारा हथेलीसे मार डाला, नाखूनोंसे फाड़ा और क्रुद्ध होकर जमीनपर जबर्दस्तीसे चूर्ण किया ॥ २६ ॥

सबभूवुः कबन्धानि प्रोहुः शोणिततोयगाः।
तेरुर्भटास्यपद्मानि ध्वजैः फेणैरिवाबभे ॥ २७ ॥

**अन्वयः**—कबन्धानि सबभूवुः। शोणिततोयगाः प्रोहुः। भटाऽऽस्यपद्मानि तेरुः। फेणैः इव ध्वजैः आबभे ॥

**व्याख्या**—कबन्धानि = अपमूर्धकलेवराणि, सबभूवुः = सम्भूतानि, प्रतिसहस्रं व्यापादनादिति भावः। शोणिततोयगाः = रुधिरनद्यः, प्रोहुः = प्रवृत्ताः। भटाऽऽस्यपद्मानि = योधमुखकमलानि, तेरुः = प्लुतानि, फेणैरिव = डिण्डीरैरिव, ध्वजैः = पताकाभिः, आबभे = शोभितम्, शोणिततोयगास्विति शेषः।

**॥व्युत्पत्तिः॥** कबन्धानि = "कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्।" इत्यमरः। प्रोहुः = वहेर्यजादित्वात् सम्प्रसारणम्। भटाऽऽस्यपद्मानि = आस्यानि पद्मानीव आस्यपद्मानि, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः। भटानामास्यपद्मानि। तेरुः = "तॄ प्लवनसंतरणयोः" इति धातोर्लिट्। "तॄफलभजत्रपश्च" इत्येत्वाऽभ्यासलोपौ। आबभे = भावे लिट्॥

**॥भाषाऽर्थ॥** कबन्ध प्रकट हुए। रुधिरकी नदियाँ बहने लगी। उनमें योद्धाओंके मुखकमल तैरने लगे और फेनोंके तुल्य ध्वज शोभित हुए ॥ २७ ॥

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः ॥ २८ ॥

**अन्वयः**—गजाः रक्तपङ्के सेदुः। रथाः न प्रचक्रमिरे। तुरङ्गाः निममज्जुश्च। भटाः गन्तुं न उत्सेहिरे ॥

**व्याख्या**—गजाः = हस्तिनः, रक्तपङ्के = रुधिरकर्दमे, सेदुः = निषण्णाः रक्तपङ्कबाहुल्यादिति भावः। रथाः = स्यन्दनाः, न प्रचक्रमिरे = गन्तुं नाऽऽरब्धाः, तुरङ्गाः = अश्वाः, निममज्जुश्च = निमग्नाश्च। भटाः = योद्धारः, गन्तुं = यातुं, न उत्सेहिरे = उत्साहं न कृतवन्तः।

ॐव्युत्पत्तिॐ प्रचक्रमिरे = प्रपूर्वकात् -"क्रमु पादविक्षेपे" इति धातोर्लिट्। "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम्। निममज्जु = निपूर्वकात् "टुमस्जो शुद्धौ" इति धातोर्लिट्॥

ॐभाषार्थॐ हाथी रुधिरपक मे पड गये। रथों ने गमनका आरम्भ नहीं किया। घोडे डूब गये। योद्धाओं ने जाने का उत्साह नही किया॥ २८॥

कोट्याकोटया पुरद्वारमेकैक रुरुधे द्विषाम्।
षट्त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपम्॥ २९॥

अन्वयः—द्विषाम् एकैक पुरद्वार कोट्या कोट्या रुरुधे। षट्त्रिंशद्धरिकोट्यश्च वानराऽधिप निवव्रु॥

व्याख्या—द्विषा = शत्रूणाम्, एकैक= प्रत्येक, पुरद्वार = नगरद्वारं, कोट्या कोट्या = कोटिकोटिसंख्यया वानरसंहत्या, रुरुधे = रुद्धम्। षट्त्रिंशद्धरिकोट्यश्च= षट्त्रिंशत्कोटिसख्या हरयश्च, वानराऽधिप = सुग्रीव, निवव्रु = आवृतवन्त।

ॐव्युत्पत्तिॐ रुरुधे="रुधिर आवरणे" इति धातो कर्मणि लिट्। षट्त्रिंशद्धरिकोट्य' =हरीणां कोट्यो हरिकोट्य, षट्त्रिंशत्सख्याका हरिकोट्य, मध्यमपदलोपी समास॥

ॐभाषार्थॐ शत्रुओं के एक एक शहरके द्वार को कोटि कोटि बानरों ने रोका। छत्तीस करोड़ बानर सुग्रीवको घेर कर रहे॥ २९॥

तस्तनुर्जह्लुर्मम्लुर्जग्लुर्लुलुठिरे क्षता'।
मुमूर्च्छुर्ववमू रक्तं ततृषुश्चोभये भटा.॥ ३०॥

अन्वय'—उभये भटा क्षता ( सन्त ) तस्तनु, जह्लु, मम्लु, जग्लु, लुलुठिरे, मूमूर्च्छु रक्त ववमु, ततृषुश्च॥

व्याख्या—उभये— द्विसम्बन्धिन', रामरावणसम्बन्धिन इति भाव। भटाः= योद्धार, क्षता = विद्धाः सन्त, तस्तनु = स्तनितवन्त, जह्लु = चलिता', मम्लु = म्लाना, जग्लु = हर्षक्षयं गता', लुलुठिरे = भूमौ लुठितवन्त, मुमूर्च्छु'= मोहमुपगता, रक्तं= रुधिरं, ववमु- = उद्गीर्णवन्त, ततृषुश्च = तृषमुपगताश्च। एतत्संकुलयुद्धमाह॥

ॐव्युत्पत्ति.ॐ जह्लु. = "ह्वल चलने" इति धातोर्लिट्। लुलुठिरे="लुठ प्रतिघाते" इति तौदादिकाद्धातोर्लिट्॥

ॐभाषाऽर्थॐ राम और रावण उभय पक्षके योद्धाओंने क्षत होकर शब्द किया व चले, ग्लान हुए, हर्ष क्षय को प्राप्त हुए, जमीन पर लोट पोट करने लगे, मूर्छित हुए, रुधिरवमन करने लगे और प्यासे हुए॥ ३०॥

सम्पातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः ।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च ॥ ३१ ॥

अन्वय —प्रजङ्घस्तु सम्पातिना युयुधे । असौ द्रुमाऽऽहत ( सन् ) चकम्पे, अतीव चुक्रोश, जीवनाशं ननाश च ॥

व्याख्या—प्रजङ्घस्तु = प्रजङ्घनामा राक्षसस्तु, सम्पातिना = सम्पातिनामकेन वानरेण सह युयुधे = युद्ध कृतवान् । असौ प्रजङ्घ , द्रुमाऽऽहत = वृक्षताडित सन् , चकम्पे = कम्पित , अतीव = अत्यर्थ, चुक्रोश = आर्तनाद चकार, जीवनाशं ननाश च = जीवेन विनष्टश्च ॥

❀व्युत्पत्ति❀ चुक्रोश = "क्रुश आह्वाने रोदने च" इति धातोर्लिट् । जीवनाशं = "कर्त्रोर्जीवपुरुषयोर्नशिवहो" इति णमुल् , "कृन्मेजन्त" इत्यव्ययत्वम् ॥

❀भाषाऽर्थ❀ प्रजङ्घ नामका राक्षसने तो सम्पाति नामक वानरसे युद्ध किया । वह ( प्रजङ्घ ) वृक्षों से ताडित होकर काँपा, अतिशय आर्तनाद करने लगा और जीवनसे रहित हो गया ॥ ३१ ॥

उच्चख्नाते नलेनाजौ स्फुरत्प्रतपनाक्षिणी ।
जम्बुमाली जहौ प्राणान् ग्राव्णा मारुतिना हत ॥ ३२ ॥

अन्वय'—आजौ नलेन स्फुरत्प्रतपनाऽक्षिणी उच्चख्नाते । मारुतिना ग्राव्णा हतो जम्बुमाली प्राणान् जहौ ॥

व्याख्या—आजौ = संग्रामे, नलेन = नलाऽऽख्यवानरेण, स्फुटत्प्रतपनाऽक्षिणी = द्योतमानप्रतपनराक्षसनेत्रे, उच्चख्नाते = उत्खाते । मारुतिना = हनूमता, ग्राव्णा = पाषाणेन, हत = ताडित , जम्बुमाली = तदाख्यो राक्षस , प्राणान्=असून् , जहौ = त्यक्तवान् ॥

❀व्युत्पत्ति❀ स्फुरत्प्रतपनाऽक्षिणी=स्फुरती च ते प्रतपनाऽक्षिणी । उच्चख्नाते= उत्पूर्वकात् "खनु अवदारणे" इति धातो कर्मणि लिट् । ग्राव्णा = "पाषाणप्रस्तर-ग्रावोपलाश्मान शिला दृषत् ।" इत्यमर ॥

❀भाषाऽर्थ❀ संग्राममें नलने प्रतपन नामके राक्षसकी चमकनेवाली आँखोंको फोड डाला । हनूमान्जीसे पत्थरसे ताडित होकर जम्बुमाली नामक राक्षसने प्राणत्याग किया ॥ ३२ ॥

मित्रघ्नस्य प्रचुक्षोद गदयाङ्गं विभीषणः ।
सुग्रीवः प्रघसं नेमे बहून् रामस्ततर्द च ॥ ३३ ॥

अन्वय.—विभीषण मित्रघ्नस्य अङ्ग गदया प्रचुक्षोद । सुग्रीव प्रघस नेमे । रामश्च बहून् ततर्द ॥

**व्याख्या**—विभीषण = रावणकनिष्ठभ्राता, मित्रघ्नस्य=तन्नामकस्य राक्षसस्य, अङ्ग = शरीरं, गदया = शस्त्रविशेषेण, प्रचुक्षोद = चूर्णयामास। सुग्रीव = वानरराज॰, प्रघसं = प्रघसाऽऽख्य राक्षस, नेभे = हिसितवान्। रामश्च = रामचन्द्रश्च, बहून् = अनेकान्, राक्षसानित्यर्थ । ततर्द = जघान ॥

**॥व्युत्पत्ति॥** नेभे = "णभ (तुभ) हिंसायाम्" इति धातोर्लिट्। ततर्द = "उतृदिर् हिंसाऽनादरयो" इति धातोर्लिट् ॥

**॥भाषाऽर्थ॥** विभीषणने मित्रघ्न नामक राक्षसके शरीरको गदासे चूर्णित किया। सुग्रीवने प्रघस राक्षसको मारा। रामचन्द्रजीने भी बहुतेरे राक्षसोंको मार डाला ॥ ३३ ॥

वज्रमुष्टेर्विशिश्लेष मैन्देनाभिहत शिर॰ ।
नीलश्चकर्त चक्रेण निकुम्भस्य शिर॰ स्फुरत् ॥ ३४ ॥

**अन्वय:**—मैन्देन अभिहतं वज्रमुष्टे शिर विशिश्लेष। नील चक्रेण स्फुरत् निकुम्भस्य शिर चकर्त ॥

**व्याख्या**—मैन्देन = तदाख्येन वानरेण, अभिहित = ताडित, वज्रमुष्टे = तदाख्यस्य राक्षसस्य, शिर = मूर्द्धा, विशिश्लेष = विश्लिष्टम्। नील = नीलनामा वानर, चक्रेण = रथाऽङ्गाऽऽकारेण शस्त्रेण, स्फुरत् = चलत्, निकुम्भस्य=निकुम्भनाम्नो राक्षसस्य, शिर = मूर्धानं, चकर्त = चिच्छेद ॥

**॥व्युत्पत्ति॥** विशिश्लेष = विपूर्वकात् "श्लिष आलिङ्गने" इति धातोर्लिट्। स्फुरत् = स्फुर सञ्चलने" इति धातोर्लट् शत्रादेश । चकर्त = "कृती छेदने" इति धातोर्लिट् ॥

**॥भाषाऽर्थ॥** मैन्द नामके वानरसे ताडित वज्रमुष्टि नामके राक्षसका शिर धड़से अलग हुआ। नील नामक वानरने चलते हुए निकुम्भके शिरको काट डाला ॥

विरूपाक्षो जहे प्राणैस्तृढः सौमित्रिपत्त्रिभि ।
प्रमोचयाञ्चकारासून् द्विविदस्त्वशनिप्रभम् ॥ ३५ ॥

**अन्वय**—सौमित्रिपत्त्रिभि॰ तृढ विरूपाक्ष प्राणै॰ जहे। द्विविद अशनिप्रभम् असून् प्रमोचयाञ्चकार ॥

**व्याख्या**—सौमित्रिपत्त्रिभि = लक्ष्मणबाणै, तृढ = हत, विरूपाक्ष = तन्नामधेयो राक्षस, प्राणै = असुभि, जहे = त्यक्त। द्विविद = तन्नामधेयो वानर, अशनिप्रभं=तन्नामधेय राक्षसम्, असून् = प्राणान्, प्रमोचयाञ्चकार=त्याजितवान् ॥

**॥व्युत्पत्ति॥** सौमित्रिपत्त्रिभि॰ = सुमित्राया अपत्य पुमान् सौमित्रि॰, "बह्वादि-

श्यश्च" इति इञ्। सौमित्रेः पत्रिणस्तैः। तृढ·="तृहू हिंसाऽर्थ." इति तौदादिका-द्धातोरुदित्वान्निष्ठायामिडभाव.। जहे="ओहाक् त्यागे" इति धातो. कर्मणि लिट्। अमोचयाञ्चकार=ण्यन्तस्य "मुच्लृ मोक्षणे" इति धातोर्लिट्॥

❀भाषाऽर्थ❀ लक्ष्मणके बाणोंसे ताडित विरूपाक्ष राक्षसने प्राणोंको छोडा। द्विविद वानरने अशनिप्रभ राक्षसको प्राणोंसे छुडाया॥ ३५॥

गदा शक्रजिता जिघ्ये ता प्रतीयेष वालिज।
रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गद·॥ ३६॥

अन्वय.—शक्रजिता गदा जिघ्ये। वालिज ता प्रतीयेष तत अङ्गद अस्य सहय रथ शाखिना ममन्थ॥

व्याख्या—शक्रजिता = इन्द्रजिता, गदा = शस्त्रविशेष, जिघ्ये = प्रहिता। वालिज = वालिसूनु, अङ्गद इत्यर्थ। ता = गदाम्, इन्द्रजित्प्रहितामिति भाव। प्रतीयेष = प्रतीष्टवान् जग्राहेति भाव। तत = अनन्तरम्, अङ्गद = वालिसूनु, अस्य = इन्द्रजित·, सहयन् = अश्वसहित, रथ=स्यन्दन, शाखिना=वृक्षेण, ममन्थ= चूर्णितवान्॥

❀व्युत्पत्ति·❀ जिघ्ये="हि गतौ वृद्धौ च" इति धातो कर्मणि लिट्। प्रतीयेष= प्रतिपूर्वकात् "इष इच्छायाम्" इति धातो लिंट्। "अभ्यासस्याऽसवर्णे" इतीयङ्। ममन्थ="मथि हिंसासङ्क्लेशनयो" इति धातोर्लिट्॥

❀भाषाऽर्थ❀ इन्द्रजित्ने गदाको फेका। उसे अङ्गदने पकडा। उसके अनन्तर अङ्गदने घोडेके साथ उसके रथको वृक्षसे चूर्णकर डाला॥ ३६॥

तत्कर्म वालिपुत्रस्य दृष्ट्वा विश्व विसिष्मिये।
सन्त्रेसू राक्षसा सर्वे बहु मेने च राघव·॥ ३७॥

अन्वय·—वालिपुत्रस्य तत् कर्म दृष्ट्वा विश्वं विसिष्मिये। सर्वे राक्षसा संत्रेसु·। राघवश्च बहु मेने॥

व्याख्या—वालिपुत्रस्य = अङ्गदस्य, तत् = पूर्वोक्तं, कर्म = कार्यं, रथमन्थनरूपमित्यर्थ। दृष्ट्वा = विलोक्य, विश्व = त्रैलोक्य, विसिष्मिये = विस्मितं, सर्वे = सकला, राक्षसा = यातुधाना, सन्त्रेसु = सत्रस्ता। राघवश्च = रामचन्द्रश्च, बहु—अधिक यथा तथा, मेने = बुबुधे, अङ्गद श्लाघितवानिति भाव॥

❀व्युत्पत्ति.❀ विसिष्मिये विपूर्व "स्मिङ् ईषद्धसने" इति धातुर्विस्मयाऽर्थकः, तस्माल्लिट्। सन्त्रेसु·=सम्पूर्वकात् "त्रसी उद्वेगे" इति धातोर्लिट्॥

❀भाषाऽर्थ.❀ अङ्गदके उस कर्मको देख कर त्रैलोक्य विस्मित हो गया। सब राक्षस सन्त्रस्त हुए। रामचन्द्रजीने भी अङ्गद की प्रशसा की॥ ३७॥

सुग्रीवो मुमुदे देवाः साध्वित्यूचुः सविस्मयाः ।
विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः ॥ ३८ ॥

अन्वयः—सुग्रीवो मुमुदे । देवाः सविस्मयाः ( सन्तः ) साधु इति ऊचुः । विभीषणः अभितुष्टाव । प्लवङ्गमाः प्रशशंसुः ॥

व्याख्या—सुग्रीवः—वानरेश्वरः, मुमुदे = हृष्टवान् । देवाः = अमराः, सविस्मयाः = आश्चर्योपेताः सन्तः, साधु = समीचीनम्, इति = एवम्, ऊचुः = उक्तवन्तः । विभीषणः = रावणाऽनुजः, अभितुष्टाव = अभिष्टुतवान्, प्लवङ्गमाः = वानराः, प्रशशंसुः = प्रशंसां कृतवन्तः ॥

॥व्युत्पत्तिः॥ मुमुदे = "मुद हर्षे" इति धातोर्लिट् "असंयोगाल्लिट् कित्" इति गुणाऽभावः । ऊचुः = "वचिस्वपियजादीनां किति" इति वचेः सम्प्रसारणम् । अभितुष्टाव = अभिपूर्वात् "ष्टुञ् स्तुतौ" इति धातोर्लिट् । "धात्वादेः षः सः" इति षस्य सत्वं, ततः "निमित्ताऽपाये नैमित्तिकस्याऽप्यपायः" इति न्यायेन टकारनिवृत्त्या तकारः । "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इति षत्वम्, "ष्टुना ष्टुः" इति ष्टुत्वं च ॥

॥भाषाऽर्थ॥ सुग्रीव प्रसन्न हुए । देवताओं ने आश्चर्ययुक्त हो कर साधुवाद ज्ञापित किया । विभीषणने स्तुति की । वानरोंने प्रशंसा की ॥ ३८ ॥

ही चित्रं लक्ष्मणेनोदे रावणिश्च तिरोदधे ।
विचकार ततो रामः शरान् संतत्रसुर्द्विषः ॥ ३९ ॥

अन्वयः—लक्ष्मणेन ' ही ! चित्रम् !! " ( इति ) ऊदे । रावणिश्च तिरोदधे । ततो रामः शरान् विचकार । द्विषः सन्तत्रसुः ॥

व्याख्या—लक्ष्मणेन = रामाऽनुजेन, ही = विस्मयः !, चित्रम् = आश्चर्यम्, ( इति=एवम् ) ऊदे = उक्तम् । रावणिश्च = इन्द्रजिच्च, तिरोदधे = अदृश्यो जातः । ततः=इन्द्रजित्तिरोधानाऽनन्तरं, रामः=रामचन्द्रः, शरान् = बाणान्, विचकार = विक्षिप्तवान् । द्विषः = शत्रवः, सन्तत्रसुः = सन्त्रस्ताः ॥

॥व्युत्पत्तिः॥ ही = "अहो ही च विस्मये" इत्यमरः । ऊदे="वद व्यक्तायां वाचि" इति धातोर्भावे लिट् । यजादित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणम् । रावणिः = रावणस्याऽपत्यं पुमान्, "अत इञ्" इति इञ्प्रत्ययः । विचकार = विपूर्वकात् "कॄ विक्षेपे" इति धातोर्लिट् ॥

॥भाषाऽर्थ॥ लक्ष्मणसे "ओह ! आश्चर्य है !!" ऐसा कहा गया । इन्द्रजित् अदृश्य हो गया । तब रामचन्द्रजीने बाणोंको फेंका । शत्रुलोग सन्त्रस्त हुए ॥ ३९ ॥

विभिन्ना जुघुरुर्घोरं जक्षुः क्रव्याऽशिनो हतान् ।
चुश्च्योत व्रणिना रक्तं छिन्नाश्चेलुः क्षणं भुजाः ॥ ४० ॥

**अन्वयः**—विभिन्ना घोर जुघुरु । क्रव्याऽशिनो हतान् जक्षु । व्रणिना रक्तं चुश्च्योत । छिन्ना भुजाः क्षण चेलु ॥

**व्याख्या**—विभिन्ना = विदीर्णा, शरैरिति शेष । घोरं = भयङ्करशब्द यथा तथा, जुघुरु = शब्द चक्रु । क्रव्याऽशिन = मासभक्षका, शृगालादय इत्यर्थ । हतान् = मारितान, जक्षु = भक्षितवन्त । व्रणिना = कृतव्रणाना, शरैरिति शेष । रक्त = रुधिरं, चुश्च्योत = श्च्योतितवत् व्रणादिति शेष । छिन्ना = कृत्ता, भुजा = बाहव, क्षण = कञ्चित्काल, चेलु = चलिता ॥

**॥व्युत्पत्ति॥** जुघुरु = "घुर भीमाऽर्थशब्दयो" इति धातोर्लिट् । क्रव्याशिन = क्रव्यमश्नन्तीति तच्छीला, ताच्छील्ये णिनि । जक्षु = "अद भक्षणे" इति धातोर्लिट्, "लिट्यन्यतरस्याम्" इत्यदेर्घस्लादेश । "गमहनजनखनघसा लोप क्ङित्यनङि" इत्युपधालोप, "खरि चे"ति चर्त्वम् । चुश्च्योत = "श्च्युतिर् क्षरणे" इति धातोर्लिट् । पित्वादकित्वे गुण ॥

**॥भाषाऽर्थ॥** शरों से विदीर्ण योद्धाओंने भयङ्कर शब्द किया । शृगाल आदि मास भक्षकोंने मारे गये योद्धाओंको खाया । शस्त्रोंसे क्षत योद्धाओंके शरीरसे रुधिर बहने लगा । काटे गये बाहु कुछ कालतक फडकने लगे ॥ ४० ॥

कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यजे ।
पलायाञ्चक्रिरे शेषा जिह्रियु शूरमानिन ॥ ४१ ॥

**अन्वय.**—कृत्तै अपि वीरवक्त्रै दृढक्रोधो न तत्यजे । शेषा पलायाञ्चक्रिरे । शूरमानिनो जिह्रियु ॥

**व्याख्या**—कृत्तैरपि = छिन्नैरपि, वीरवक्त्रै = शूरमुखै, दृढक्रोध = घनकोप, न तत्यजे = न त्यक्त, तत्राऽपि दष्टाऽधरभ्रुकुट्यादीना सद्भावादिति भाव । शेषा = अवशिष्टा, पलायाञ्चक्रिरे = पलायिता । शूरमानिन = वीरमानिन, जिह्रियु = लज्जिता, स्वजनपलायनदर्शनादिति भाव ॥

**॥व्युत्पत्ति॥** पलायाञ्चक्रिरे = परोपसर्गपूर्वकात् "अय गतौ" इति धातोर्लिट् । "दयायासश्च" इत्याम् "उपसर्गस्याऽयतौ" इति लत्वम् । शूरमानिन = शूर मन्यन्त इति, "मन" इति णिनि ॥

**॥भाषाऽर्थ॥** काटे जाने पर भी वीरोंके मुखोंने दृढ क्रोध नही छोडा । अवशिष्ट भाग गये । अपनेको शूर मानने वाले लज्जित हुए ॥ ४१ ॥

राघवो न दयाञ्चक्रे दधुर्धैर्यं न केचन ।
मम्रे पतङ्गवद्वीरैर्हाहेति च विचुक्रुशे ॥ ४२ ॥

**अन्वयः**—राघवो न दयाञ्चक्रे । केचन धैर्यं न दधुः । वीरैः पतङ्गवत् मम्रे । "हा ! हा !!" इति च विचुक्रुशे ॥

**व्याख्या**—राघवः = रामः, न दयाञ्चक्रे = दया न कृतवान्, केचन = केऽपि, धैर्यं = धीरता, न दधुः = न धृतवन्तः, यद्वा के च = केऽपि, धैर्यं = धीरता, न दधुः (इति) न, अपि तु दधुः, सर्वेऽपि धैर्यं धृतवन्त एवेति भावः । वीरैः = शूरैः, पतङ्गवत् = शलभवत्, मम्रे = मृतम् । हा हा इति च = हन्त ! हन्त !! इति च विचुक्रुशे=रुदितम् ॥

**॥व्युत्पत्ति॥** दयाञ्चक्रे="दय दानगतिरक्षणहिंसादानेषु" इति धातोर्लिट्, "दयायासश्च" इत्याम् । पतङ्गवत्=पतङ्गैस्तुल्यं, "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः । मम्रे="मृङ् प्राणत्यागे" इति धातोर्भावे लिट् ॥

**॥भाषाऽर्थः॥** रामचन्द्रजीने दया नही की । किसीने धैर्यधारण नहीं किया । वीर टिड्डी के सदृश मर गये । लोग हाहाकार करने लगे ॥ ४२ ॥

तिरोबभूवे सूर्येण प्रापे च निशयाऽऽस्पदम् ।
जग्रसे कालरात्रीव वानरान् राक्षसांश्च सा ॥ ४३ ॥

**अन्वयः**—सूर्येण तिरोबभूवे । निशया आस्पदं प्रापे च । सा च कालरात्री इव वानरान् राक्षसांश्च जग्रसे ॥

**व्याख्या**—सूर्येण = आदित्येन, तिरोबभूवे = तिरोभूतम्, अस्तं गतमित्यर्थः । निशया = रात्र्या, आस्पदं = प्रतिष्ठा प्रापे च = प्राप्त च, सा च = निशा च, कालरात्री इव = कृतान्तरजनी इव, वानरान् = कपीन्, राक्षसांश्च = यातुधानांश्च, जग्रसे = भक्षितवती ॥

**॥व्युत्पत्तिः॥** तिरोबभूवे = भावे लिट् । आस्पदम् = "आस्पदं प्रतिष्ठायाम्" इति ससुट्को निपातः । प्रापे = प्रपूर्वात् "आप्लृ व्याप्तौ" इति धातोः कर्मणि लिट् । कालरात्री = कालप्रयुक्ता रात्री, "शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्" इति मध्यमपदलोपी समासः । "कृदिकारादक्तिनः" इति ङीष् । इत्थमेव रात्रीपदसिद्धौ वैदिकप्रकरणस्थेन "रात्रेश्चाजसौ" इति सूत्रेण ङीप् इति लिखन्नयमङ्गलो नाऽऽदरणीयः ॥

**॥भाषाऽर्थ॥** सूर्य अस्ताऽचलको चले गये । रातने स्थान पाया । उस रातने कालरात्रिकी सदृश हो कर वानर और राक्षसोंको खा डाला ॥

चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रं चाजुहाव स ।
आजुहुवे तिरोभूतः परानीकं जहास च ॥ ४४ ॥

**अन्वय**—इन्द्रजित् चुकोप, अत्युग्रं सर्पाऽस्त्रं च आजुहाव । स तिरोभूत-( सन् ) पराऽनीकम् आजुहुवे जहास च ॥

**व्याख्या**—इन्द्रजित् = मेघनाद , चुकोप = कुपित , अत्युग्रम् = अतिभयङ्कर सर्पाऽस्त्रं च = सर्परूपमस्त्रं च, आजुहाव = आहूतवान् । स = इन्द्रजित्, तिरोभूत = अदृष्ट सन् , पराऽनीक = शत्रुसैन्य, रामबलमिति भाव । आजुहुवे = स्पर्धितवान् , जहास च=हसितवाश्च ॥

**%व्युत्पत्ति%**सर्पाऽस्त्र = सर्पा अस्त्रमिव सर्पाऽस्त्र, तत् । आजुहाव = आङ्पूर्वकात् "ह्वेञ् स्पर्धायां शब्दे च" इति धातो शब्दाऽर्थे लिट् । "अभ्यस्तस्य च" इति द्विर्वचनात्प्राक् सम्प्रसारणं ततो द्विर्वचनम् । आजुहुवे=आङ्पूर्वात्पूर्वधातोरेव "स्पर्धायामाङ 'इत्यात्मनेपदम्' लिटि पूर्ववत्सम्प्रसारण, यजादित्वाद्वा सम्प्रसारणम् । अनन्तरमुवङादेश ॥

**%भाषाऽर्थ%** इन्द्रजित् कुपित हुआ । उसने अतिशय भयङ्कर सर्पाऽस्त्र को बुलाया । उसने अदृश्य होकर रामचन्द्रजी की सेनाको ललकारा और हास्य भी किया ॥ ४४ ॥

बबाधे च बलं कृत्स्नं निजग्राह च सायकै ।
उत्ससर्ज शरास्तेऽस्य सर्पसाच्च प्रपेदिरे ॥ ४५ ॥

**अन्वय.**—( स ) कृत्स्नं बलं बबाधे, सायकै निजग्राह च, शरान् उत्ससर्ज, ते अस्य सर्पसाच्च प्रपेदिरे ॥

**व्याख्या**—( स )इन्द्रजित् , कृत्स्न = संपूर्ण, बल = रामसैन्यं, बबाधे = अभिभूतवान् , सायकै = बाणै , निजग्राह च = निगृहीतवाश्च, शरान् = बाणान् , उत्ससर्ज = उत्सृष्टवान्, ते = उत्सृष्टा शरा , अस्य = रामबलस्य, सर्पसाच्च=कार्त्स्न्येन सर्पभूताश्च, प्रपेदिरे=सम्पन्ना ॥

**%व्युत्पत्ति.%** बबाधे = "बाधृ विलोडने" इति धातोर्लिट् । सर्पसात् = "विभाषा साति कार्त्स्न्ये" इति साति ॥

**%भाषाऽर्थ%** इन्द्रजित्ने सम्पूर्ण रामकी सेनाको अभिभूत किया, बाणोंसे निगृहीत किया, बाणोंको छोडा, वे बाण रामचन्द्रजीकी सेना मे सपूर्णतासे सर्पभूत हो गये ॥ ४५ ॥

आचिचाय स तैः सेनामाचिकाय च राघवौ ।
बभाण च न मे माया जिगायेन्द्रोऽपि किं नृभि ॥ ४६ ॥

अन्वयः—स तैः सेनाम् आचिचाय, राघवौ च आचिकाय, बभाण च-"इन्द्रोऽपि मे माया न जिगाय, नृभिः किम् ?" इति ।

व्याख्या—स = इन्द्रजित् , तैः = सर्पाऽस्त्रैः , सेना = वानरसैन्यम् , आचिचाय = आच्छादितवान् । राघवौच=रामलक्ष्मणौच, आचिकाय=आच्छादितवान् । बभाण च = उक्तवांश्च, इन्द्रोऽपि = देवराजोऽपि, मे=मम, माया = शाम्बरी, न जिगाय = न जितवान् , नृभिः = मनुष्यैः, किं = किं जेष्यते ? मन्मायेति शेषः । नैव जेष्यत इति भावः ॥

॥व्युत्पत्तिः॥ आचिचाय = "आङ्पूर्वकात् चिञ् चयने" इति धातोर्लिट् । कुत्वाऽभावे रूपम् । राघवौ = रघोरपत्ये पुमांसौ, "तस्याऽपत्यम्" इत्यण् । आचिकाय = "विभाषा चेः" इति कुत्वपक्षे रूपम् । बभाण = शब्दाऽर्थात् भणधातोर्लिट् । जिगाय = "जि जये" इति धातोर्लिट् , "सन्लिटोर्जेः" इति कुत्वम् ॥

॥भाषाऽर्थः॥ इन्द्रजित्ने सर्पाऽस्त्रोंसे वानरोंकी सेनाको और राम-लक्ष्मणको भी आच्छादित किया । उसने कहा—"इन्द्रने भी मेरी मायाको नहीं जीता, मनुष्योंसे क्या जीती जायगी ॥ ४६ ॥

आचिक्याते च भूयोऽपि राघवौ तेन पन्नगैः ।
तौ मुमुहतुरुद्विग्नौ वसुधायां च पेततुः ॥ ४७ ॥

अन्वयः—तेन भूयः अपि पन्नगैः राघवौ आचिक्याते च । तौ उद्विग्नौ । ( सन्तौ ) मुमुहतुः, वसुधायां पेततुश्च ॥

व्याख्या—तेन = इन्द्रजिता, भूयोऽपि = पुनरपि, पन्नगैः = सर्पैः , राघवौ = रामलक्ष्मणौ, आचिक्याते च = आच्छादितौ च, तौ=रामलक्ष्मणौ, उद्विग्नौ=व्याकुलौ सन्तौ, मुमुहतुः =मोहं गतौ, वसुधायां = पृथिव्यां, पतितौ च, बन्धपरवशीकृतत्वादिति शेषः ॥

॥व्युत्पत्तिः॥ पन्नगैः = पन्नं ( पतितम् ) गच्छन्तीति पन्नगास्तैः, "सर्वत्रपन्नयोरुपसंख्यानम्" इति डः । "उरगः पन्नगो भोगी"त्यमरः । आचिक्याते = कर्मणि लिट् । मुमुहतुः = "मुह वैचित्त्ये" इति धातोर्लिट् ॥

॥भाषाऽर्थः॥ इन्द्रजित्ने फिर भी सर्पोंसे राम और लक्ष्मणको आच्छादित किया । वे (राम और लक्ष्मण) व्याकुल होते हुए मूर्च्छित होकर जमीनपर गिर पड़े ॥

ततो रामेति चक्रन्दुस्त्रेसुः परिदिदेविरे ।
निशश्वसुश्च सेनान्यः प्रोचुर्धिगिति चात्मनः ॥ ४८ ॥

अन्वयः—ततः सेनान्यो 'राम' इति चक्रन्दुः, त्रेसुः, परिदिदेविरे निशश्वसुश्च; आत्मनश्च 'धिक्' इति प्रोचुः ॥

**व्याख्या**—तत = रामलक्ष्मणपतनाऽनन्तरं, सेनान्य = नीलादय, सेनापतय, "राम" ! इति = हे राम इति नामग्राहपूर्वक, चक्रन्दु = रुदितवन्त, त्रेसु = त्रस्ता, परिदिदेविरे = परिदेवन कृतवन्त, निशश्वसुश्च = निश्वास कृतवन्तश्च, आत्मनश्च स्वाश्च, "धिक" इति प्रोचु = गर्हितवन्त इति भाव ॥

॥व्युत्पत्ति॥ सेनान्य = सेना नयन्तीति, "सत्सूद्विषे"ति क्विप्। चक्रन्दु = "क्रदि आह्वाने रोदने च" इति धातोर्लिट्। परिदिदेविरे = परिपूर्वकात् "देव देवने" इति धातोर्लिट्, "विलाप परिदेवनम्" इत्यमर.। आत्मनः = धिग्योगे—"उभसर्वतसो. कार्ये" त्यादिना द्वितीया ॥

॥भाषाऽर्थ॥ राम और लक्ष्मणके गिरनेके अनन्तर नील आदि सेनापति "हे राम !" कहकर रोने लगे, त्रस्त हुए, विलाप करने लगे, उसासे लेने लगे, अपनेको धिक्कारने लगे ॥ ४८ ॥

> मन्युं शेकुर्न ते रोद्धं नाऽस्त्रं संरुरुधुः पतत् ।
> विविदुर्नेन्द्रजिन्मार्गं परीयुश्च प्लवङ्गमाः ॥ ४९ ॥

**अन्वय**—ते मन्यु रोद्धु न शेकु, पतत् अस्र न सरुरुधु, इन्द्रजिन्मार्ग न विविदु । प्लवङ्गमाश्च परीयु ॥

**व्याख्या**—ते = नीलादय सेनापतयः, मन्यु=शोक, रोद्धु=वारयितु, न शेकु = न पारितवन्त । पतत् = निर्गच्छत्, लोचनाभ्यामिति शेष । अस्रम् = अश्रु, न सरुरुधु = न सरुद्धवन्त । इन्द्रजिन्मार्ग = मेघनादपथ, न विविदु =नो ज्ञातवन्त, क्वाऽसौ तिष्ठतीति। प्लवङ्गमाश्च = वानराश्च, परीयु = समन्ताद्गता, इन्द्रजिदन्वेषणार्थमिति भाव ॥

॥व्युत्पत्ति॥ सरुरुधु = सपूर्वकात् "रुधिर् आवरणे" इति धातोर्लिट्। परीयु = परिपूर्वकात् "इण् गतौ" इति धातोर्लिट् ॥

॥भाषाऽर्थ॥ वे ( नील आदि वानरसेनापति ) शोकको नहीं रोक सके। उन्होंने आखोंसे गिरती हुई आसू को नही रोका और इन्द्रजित्का मार्ग नही जाना। वानर भी ( इन्द्रजित्को ढूढनेके लिए ) चारों तरफ चले गये ॥ ४९ ॥

> दधावाऽद्भिस्ततश्चक्षुः सुग्रीवस्य विभीषण ।
> विदाञ्चकार धौताऽक्ष. स रिपु खे ननर्द च ॥ ५० ॥

**अन्वय**—ततो विभीषण अद्भि सुग्रीवस्य चक्षु दधाव। धौताऽक्ष स खे रिपुं विदाञ्चकार, ननर्द च ॥

**व्याख्या**—तत = अनन्तर, विभीषण = रावणाऽनुज, अद्भि = जलै, म-

न्त्रपूतैरिति शेष । सुग्रीवस्य = वानरराजस्य, चक्षु = नेत्र, दधाव = प्रक्षालितवान् धौताऽक्ष = प्रक्षालितनेत्र , स = सुग्रीव॰, खे = आकाशे, स्थितमिति शेष । रिपु= शत्रु, मेघनादमित्यर्थ , विदाञ्चकार = ज्ञातवान् , ननर्द च = शब्दितवांश्च, क्वेदानी यास्यसीति ॥

※व्युत्पत्ति※ दधाव = "धावु गतिशुद्धयो " इति धातोर्लिट् । धौताऽक्ष = धौते अक्षिणी यस्य स, "बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात्षच्" इति समासाऽन्त षच् । विदाञ्चकार = "विद ज्ञाने" इति धातोर्लिट् "उषविदजागृभ्योऽन्यतरस्याम्" इत्याम् । तदभावपक्षे विवेदेति । ननर्द="नर्द शब्दे" इति धातोर्लिट् ॥

※भाषाऽर्थ※ तब विभीषणने जलसे सुग्रीवके नेत्रोंका प्रक्षालन किया। प्रक्षालित नेत्रवाले सुग्रीवने आकाशमे स्थित शत्रु ( इन्द्रजित् ) को जाना, शब्द भी किया ॥ ५० ॥

उज्जुगूरे तत॰ शैलं हन्तुमिन्द्रजित कपि॰ ।
विहाय रावणिस्तस्मादानहे चाऽन्तिकं पितु॰ ॥ ५१ ॥

**अन्वयः**—तत कपि इन्द्रजित हन्तु शैलम् उज्जुगूरे। रावणि विहाय तस्मात् पितु अन्तिकम् आनहे ॥

**व्याख्या**—तत = रिपुवेदनाऽनन्तर, कपि = सुग्रीव , इन्द्रजित = मेघनाद, हन्तु = व्यापादयितुं, शैलं = पर्वतम् , उज्जुगूरे = उत्क्षिप्तवान् । रावणि = इन्द्रजित् , विहाय = त्यक्त्वा, युद्धमिति शेष । "विभाये"ति पाठे भय प्रापेत्यर्थ । तस्मात् = आकाशात् , पितु = जनकस्य, रावणस्येत्यर्थ । अन्तिकं = समीपम् , आनंहे = गत ॥

※व्युत्पत्ति※ उज्जुगूरे = उत्पूर्वकात् "गूरी हिंसागत्यो " इति दैवादिकधातोर्लिट् । रावणि॰ = रावणस्याऽपत्य पुमान् , "अत इञ्" , इति इञ् । आनहे = अहि गतौ" धातोर्लिट् । "अत आदे " इति अभ्यासस्याऽऽदेरतो दीर्घ "तस्मान्नुड् द्विहल॰" इति नुट् ॥

※भाषाऽर्थ※ शत्रुको जाननेके अनन्तर सुग्रीवने इन्द्रजित्को मारनेके लिए पर्वतको उठाया। इन्द्रजित् युद्ध छोडकर आकाशमे पिता ( रावण ) के पास चला गया ॥ ५१ ॥

आचचक्षे च वृत्तान्तं प्रजहर्ष च रावणः ।
गाढं चोपजुगूहैनं शिरस्युपशिशिङ्घ च ॥ ५२ ॥

**अन्वय.**—( रावणि ) वृत्तान्तम् आचचक्षे च । रावणश्च प्रजहर्ष, एन गाढम् उपजुगूह, शिरसि उपशिशिङ्घ च ॥

**व्याख्या**—वृत्तान्तम् = उदन्तं, राघवबन्धनरूपमिति भाव । आचचक्षे च= कथितवांश्च, इन्द्रजिद्रावणमिति शेष । रावणश्च = दशाऽऽननश्च, प्रजहर्ष = प्रहृष्ट । एन = रावणि, गाढ = दृढम् , उपजुगूह=आलिलिङ्ग, शिरसि = मूर्ध्नि, उपशिशिङ्घ च = आघ्रातवांश्च ॥

**ॐव्युत्पत्ति ॐ** एन = "द्वितीयाटौस्वेन" इति इदम एनादेशः । उपजुगूह = उपपूर्वकात् "गुहू सवरणे" इति धातोर्लिट् । अत्र क्रियाफलस्याऽविवक्षितत्वान्न आत्मनेपदम् । "ऊदुपधाया गोह" इत्यूत्वम् । उपशिशिङ्घ=उपपूर्वकात्' 'शिघि आघ्राणे" इति धातोर्लिट् ॥

**ॐभाषाऽर्थ.ॐ** इन्द्रजित्‌ने रावणको राम और लक्ष्मणके बन्धनका वृत्तान्त कहा। रावण भी प्रसन्न हुआ। उसने पुत्रको गाढ आलिङ्गन किया और शिरमें सूंघा भी ॥ ५२ ॥

ध्वजानुद्दधुवुस्तुङ्गान् मासं चेमुर्जगु पपु ।
कामयाञ्चक्रिरे कान्तास्ततस्तुष्टा निशाचराः ॥ ५३ ॥

**अन्वयः**—ततो निशाचरा तुष्टा ( सन्त ) तुङ्गान् ध्वजान् उद्दुधुवु , मास चेमु , जगु , पपु , कान्ता कामयाञ्चक्रिरे ॥

**व्याख्या**—तत = राघवबन्धनज्ञानाऽनन्तर, निशाचरा = राक्षसा , तुष्टा = प्रीता सन्त , तुङ्गान् = उन्नतान् , ध्वजान् = पताका , उद्दुधुवु = उत्क्षिप्तवन्त , मास=क्रव्य, चेमु =भक्षितवन्त , जगु =गीतवन्त , पपु =पीतवन्त , मद्यमिति शेष । कान्ता =प्रिया , कामयाञ्चक्रिरे = कामितवन्त ॥

**ॐव्युत्पत्ति ॐ** तत = तस्मादिति, "पञ्चम्यास्तसिल्" इति तसिल् । चेमुः="चमु ( छमु जमु झमु ) अदने" इति धातोर्लिट् । पपु. = "पा पाने" इति धातोर्लिट् । कामयाञ्चक्रिरे = "कमु कान्तौ" इति धातो लिंट् । कमेर्णिङन्तादाम् ॥

**ॐभाषाऽर्थ ॐ** तब राक्षसोंने प्रसन्न होकर ऊँचे ध्वजोंको फहराया, मास खाया, गाना गाया, मद्यपान किया और प्रियाओंका अभिलाष किया ॥ ५३ ॥

दर्शयाञ्चक्रिरे राम सीतां राज्ञश्च शासनात् ।
तस्या मिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे ॥ ५४ ॥

**अन्वयः**—राज्ञ शासनात् ( राक्षसा ) सीता राम दर्शयाञ्चक्रिरे । तस्या नेत्रे मिमीलतु । ( सा ) पुष्पकोदरे लुलुठे ॥

**व्याख्या**—राज्ञ = रावणस्य, शासनात् = आदेशात् , सीता = जानकी, जानक्या इत्यर्थ । रामं = रामचन्द्र, दर्शयाञ्चक्रिरे = दर्शितवन्त , राक्षसा इति शेष ।

तस्या = सीताया , नेत्रे = नयने, मिमीलतु =निमीलिते । पुष्पकोदरे = पुष्पकविमानमध्ये, लुलुठे = लुठिता, रामलक्ष्मणबन्धन दृष्ट्वा सीता मूर्च्छया पुष्पकमध्ये लुठितेति भाव ॥

ॐव्युत्पत्तिःॐ सीताम् = "अभिवादिदृशोरात्मनेपदे वेति वाच्यम् "इति विकल्पेन कर्मत्व, पक्षान्तरे सीतया इति च। दर्शयाञ्चक्रिरे = णिजन्तादृदृशधातोर्लिट् । मिमीलतु = "मील ( श्मील च्मील ) निमेषणे" इति धातोर्लिट् ॥

ॐभाषाऽर्थ·ॐ रावणकी आज्ञासे राक्षसोंने सीतासे रामका दर्शन कराया। राम और लक्ष्मणका बन्धन देखकर सीताजीके नेत्र मुद्रित हो गये और वे पुष्पक विमानके मध्यभागमे गिर पडीं ॥ ५४ ॥

प्राणा दध्वसिरे गात्र तस्तम्भे च प्रिये हते ।
उच्छश्वास चिराद्दीना रुरोदासौ ररास च ॥ ५५ ॥

**अन्वयः**—प्रिये हते प्राणा दध्वसिरे, गात्रं च तस्तम्भे, चिरात् उच्छश्वास, दीना असौ रुरोद ररास च ॥

**व्याख्या**—प्रिये = कान्ते, राम इति भाव , हते = बद्धे इति भाव । प्राणा = असव , सीताया इति शेष । दध्वंसिरे = ध्वस्ताः, गात्र च = शरीर च, तस्तम्भे = काष्ठवत् निश्चलमभूत् । चिरात् = बहुकालात् , उच्छश्वास = उच्छ्वसितवती, दीना = दु खिता, असौ = सीता, रुरोद = अश्रूणि मुमोच, ररास च = वक्ष्यमाणं विलाप च चकार ॥

ॐव्युत्पत्ति ॐ दध्वसिरे = "ध्वसु अवस्रसने" इति धातोर्लिट् । तस्तम्भे = "ष्टभि ( स्कभि ) प्रतिबन्धे" इति धातोर्लिट् ॥

ॐभाषाऽर्थ·ॐ रामचन्द्रजीके बद्ध होने पर सीताजी के प्राण ध्वस्त हुए, शरीर काष्ठ के सदृश निश्चल हुआ । उन्होंने बहुत समयके अनन्तर उच्छ्वास लिया। दीन होकर सीताजी आसू गिराने लगीं और विलाप भी करने लगीं ॥ ५५ ॥

लौहबन्धैर्बबन्धे नु वज्रेण किं विनिर्ममे ।
मनो मे न विना रामाद्यत् पुस्फोटसहस्रधा ॥ ५६ ॥

**अन्वयः**—"लौहबन्धै मे मनो बबन्धे नु ? किं वज्रेण विनिर्ममे ? यत् रामात् विना सहस्रधा न पुस्फोट ॥

**व्याख्या**—लौहबन्धै· = लोहविकारबन्धै , मे = मम, मन = हृदयं, बबन्धे नु = बद्धं किं, कि = किं वा, वज्रेण = कुलिशेन, विनिर्ममे = निर्मितम् , यत् = यस्माद्धेतो , रामात् विना = रामचन्द्रं विना, सहस्रधा=सहस्रेण प्रकारै , न पुस्फोट= न स्फुटितम् ॥

❀व्युत्पत्ति❀ लौहबन्धै = लोहस्येमे लौहा, "तस्येदम्" इत्यण्, लौहाश्च ते बन्धा लौहबन्धास्तै । बबन्धे = कर्मणि लिट् । विनिर्ममे = विनिरुपसर्गपूर्वकात् "माङ् मान" इति धातो कर्मणि लिट् । आतो लोपस्य "द्विर्वचनेऽचि" इति स्थानिवद्भावाद्द्विर्वचने ह्रस्वत्वे च रूपम् । रामात् = "विना" पदेन योगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति वैकल्पिकी पञ्चमी । सहस्रधा = "सङ्ख्याया विधाऽर्थे धा" इति धाप्रत्यय ॥

❀भाषाऽर्थ❀ "लौहबन्धोंसे मेरा हृदय बद्ध है क्या ? अथवा वज्रसे बना हुआ है, जो कि रामके विना हजारों टुकडोंके रूपमे विशीर्ण नही हुआ ॥ ५६ ॥॥

उत्तेरिथ समुद्रं त्व मदर्थेऽरीन् जिहिंसिथ ।
ममर्थ चाऽतिघोरा मा धिग् जीवितलघूकृताम् ॥ ५७ ॥

अन्वय.—त्व मदर्थे समुद्रम् उत्तेरिथ, अरीन् जिहिंसिथ ममर्थ च, अतिघोरा जीवितलघूकृता मा धिक् ॥

व्याख्या—हे कान्त ! त्व, मदर्थे=मन्निमित्ते, समुद्र = सागरम्, उत्तेरिथ= उत्तीर्ण, अरीन् = शत्रून् राक्षसान्, जिहिंसिथ = निहतवान् असि, ममर्थ च=मृतश्च, त्वन्मरणेऽपि जीवनेन अतिघोराम् = अतिरौद्रा, जीवितलघूकृता=जीवनेन गौरवरहितामित्यर्थ, मा = सीता, धिक् ॥

❀व्युत्पत्ति.❀ उत्तेरिथ = उत्पूर्वकात् "तॄ प्लवनसन्तरणयो" इति धातोर्लिट् "तॄफलभजत्रपश्च" इत्येत्वाऽभ्यासलोपौ । मा = धिग्योगे "धिगुपर्यादिषु त्रिषु ।" इति द्वितीया ॥

❀भाषाऽर्थ.❀हे नाथ ! आपने मेरे लिए समुद्रतरण किया, शत्रुओंको मारा और स्वयम् भी पञ्चत्वको प्राप्त हो गये । अतिशय कठोर और जीवनसे गौरवरहित मुझे धिक्कार है ॥ ५७ ॥

न जिजीवासुखी तातः प्राणता रहितस्त्वया ।
मृतेऽपि त्वयि जीवन्त्या किं मयाणकभार्यया ॥ ५८ ॥

अन्वय —( हे वल्लभ ! ) प्राणता त्वया रहित तात असुखी ( सन् ) न जिजीव । त्वयि मृतेऽपि जीवन्त्या अणकभार्यया मया किम् ?"

व्याख्या—( हे वल्लभ ! ) प्राणता=जीवता, सता त्वया=भवता, रहित =वियुक्त, तात = पिता, दशरथ इति भाव । असुखी = दु खी सन्, न जिजीव=नो जीवित । त्वयि = भवति, मृतेऽपि=उपरतेऽपि, जीवन्त्या = प्राणान्धारयन्त्या, अणकभार्यया = कुत्सितपत्न्या, मया = सीतया, किं = किं प्रयोजनं, न किमपीति भाव ॥

❀व्युत्पत्तिः❀ प्राणता = प्राणितीति प्राणन्, तेन। प्रपूर्वकात् "अन प्राणने" इति।

धातोर्लट' शत्रादेशः। जिजीव="जीव प्राणधारणे" इति धातोर्लिट्। अणकभार्यया= अणिका चाऽसौ भार्या अणकभार्या, तया "पापाऽणके कुत्सितैः॥ इति समासः "कुपूयकुत्सिताऽवद्यखेटगर्ह्याऽणका' समा.।" इत्यमर' ॥

※भाषाऽर्थ※ हे प्रिय! जीते हुए आपसे वियुक्त होकर पिताजी ( दशरथ ) ने दु'खी होते हुए प्राणका परित्याग किया। आपके मरनेपर भी प्राणोंको धारण करती हुई कुत्सितपत्नी मुझसे क्या प्रयोजन है?" ॥ ५८ ॥

सा जुगुप्सान् प्रचक्रेऽसून् जगर्हे लक्षणानि च।
देहभाञ्जि ततः केशान् लुलुञ्च लुलुठे मुहु ॥ ५९ ॥

**अन्वय'**—सा असून् जुगुप्सान् प्रचक्रे, देहभाञ्जि लक्षणानि च जगर्हे तत- केशान् लुलुञ्च, मुहु लुलुठे ॥

**व्याख्या**—सा = सीता, असून् = प्राणान्, जुगुप्सान् = निन्दितान्, प्रचक्रे = कृतवती, क्वचित् "जुगुप्साम्" इति पाठस्तत्र आत्मनि निन्दामित्यर्थ एवमेव असूनि"त्यस्य "जगर्हे" इत्यनेन सम्बन्ध । देहभाञ्जि = शरीराऽऽश्रयाणि, लक्षणानि च = चिह्नानि च, सौभाग्यद्योतकानीति शेष । जगर्हे = निन्दितवती । तत = अनन्तरं, केशान् = शिरोरुहान्, लुलुञ्च = उत्पाटितवती । मुहु = वार वारं लुलुठे = पतिता ॥

※व्युत्पत्ति※ जुगुप्सान् = जुगुप्स्यन्त इति जुगुप्सास्तान्, घञन्तस्य सनि रूपम्। आमि प्रत्यये तु "प्रचक्र" इत्यनुप्रयोगो न घटते। "जुगुप्साम्" इति पाठे तु "गुप गोपने" इति धातो "गुप्तिज्किद्भ्य सन्" इति सूत्रेण "गुपेर्निन्दायाम्" इति वार्तिकमनुसृत्य निन्दायां सन्, तदन्तात् "अप्रत्ययात्" इति अप्रत्यय, तदन्ताट्टाप्। "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे।" इत्यमर । देहभाञ्जि= देह भजन्तीति देहभाञ्जि, तानि "भजो ण्वि" इति ण्विप्रत्यय । जगर्हे="गर्ह ( गल्ह ) कुत्सायाम्" इति धातोर्लिट्। लुलुञ्च="लुञ्च अपनयने" इति धातोर्लिट्।

※भाषाऽर्थ※ सीताजीने अपने प्राणोंकी निन्दाकी, शरीरस्थित सौभाग्यद्योतक लक्षणोंकी भी निन्दाकी, अनन्तर केशोंका उत्पाटन किया और वे वारवार भूतलमें गिर पडी ॥ ५९ ॥

जग्लौ दध्यौ वितस्तान क्षण प्राण न विव्यथे ॥
दैवं निनिन्द चक्रन्द देहे चाऽतीव मन्युना ॥ ६० ॥

**अन्वय**—( सा ) जग्लौ, दध्यौ, वितस्तान, क्षण न प्राण, विव्यथे, दैवं निनिन्द, चक्रन्द मन्युना अतीव देहे च ॥

**व्याख्या**—( सा = सीता ) जग्लौ = ग्लानि गता, दध्यौ = चिन्तयामास,

पुन किं मयाद्रष्टव्योऽसीति शेष । वितस्तान = शब्दं कृतवती । क्षण = किञ्चित्कालं यावत्, न प्राण = न जिजीव, मूर्च्छयेति भाव । विव्यथे = पीडिता, लब्धसंज्ञा सतीति शेष । दैव = भाग्य, निनिन्द = निन्दितवती, चक्रन्द=रुदिता, मन्युना = शोकेन, अतीव=अत्यर्थं, देहे च = दग्धा च ॥

*व्युत्पत्ति* जग्लौ = "ग्लै (म्लै) हर्षक्षये" इति धातोर्लिट् । दध्यौ = "ध्यै चिन्तायाम्" इति धातोर्लिट् । वितस्तान = विपूर्वकात् "स्तन (गदी) देवशब्दे" इति धातोर्लिट् । प्राण = प्र पूर्वकात् "अन प्राणन" इति धातोर्लिट्, "अत आदे" इति दीर्घत्वम् । विव्यथे = "व्यथ भयसचलनयो" इति धातोर्लिट् । "व्यथो लिटि" इत्यभ्यासस्य सप्रसारणम् । देहे = "दह भस्मीकरणे" इति धातो. कर्मणि लिट् ॥

*भाषाऽर्थ* सीताजी ग्लानिको प्राप्त हुईं, चिन्ता करने लगीं, शब्द करने लगी, कुछ समय तक मूर्च्छित हुईं, होशमें आकर पीडित हुईं, भाग्यकी निन्दा करने लगी, रोने लगी और शोकसे अतिशय जली ॥ ६० ॥

**आश्वासयाञ्चकाराऽथ त्रिजटा तां निनाय च ।**
**तत प्रजागराञ्चक्रुर्वानरा सविभीषणाः ॥ ६१ ॥**

**अन्वय**—अथ त्रिजटा ताम् आश्वासयाञ्चकार, निनाय च । तत सविभीषणा वानरा प्रजागराञ्चक्रु ॥

**व्याख्या**—अथ=सीतासन्तपनाऽनन्तर, त्रिजटा = रावणभगिनी, ता=सीताम्, आश्वासयाञ्चकार = आश्वासितवती, विष्णुरसौ राघव कथ गतचेतनो भविष्यतीति शेष । निनाय च = नीतवती च, पुष्पकादिति शेष । तत =अनन्तरं, सविभीषणा = विभीषणसहिता, वानरा = कपय, प्रजागराञ्चक्रु = आलोचना कृतवन्त, रामलक्ष्मणयोरक्षणाऽर्थं जागरितवन्त इति वा ॥

*व्युत्पत्ति* आश्वासयाञ्चकार = णिजन्तात् आङ्पूर्वकश्वसधातोर्लिटि रूपम् । प्रजागराञ्चक्रु = प्रपूर्वकात् "जागृ निद्राक्षये" इति धातोर्लिट् । अत्राऽनुप्रयोगे नाऽऽत्मनेपद, पूर्वस्याऽनात्मनेपदित्वात् ॥

*भाषाऽर्थ* सीताजी के सन्ताप करने के अनन्तर त्रिजटा नामकी रावणकी भगिनीने सीताजीको आश्वासन दिया वह पुष्पकविमानसे उन्हें ले गई भी । उसके बाद विभीषणके साथ वानरों ने आलोचना की ॥ ६१ ॥

**चिचेत रामस्तत् कृच्छ्रमोषाञ्चक्रे शुचाथ सः ।**
**मन्युश्चाऽस्य समापिप्ये विरुराव च लक्ष्मणम् ॥ ६२ ॥**

**अन्वय.**—राम तत् कृच्छ्र चिचेत । अथ स शुचा ओषाञ्चक्रे । अस्य मन्युश्च समापिप्ये, लक्ष्मणं च विरुराव ॥

व्याख्या—राम = रामचन्द्र, तत् = पूर्ववृत्त, कृच्छ्रं = कष्ट, सर्पशरबन्ध दुःखमिति भाव । चिचेत = ज्ञातवान् । अथ = ज्ञानाऽनन्तरं, सुचा = शोकेन, ओषाञ्चक्रे = दग्ध । अस्य = रामस्य, मन्युश्च = शोकश्च, समापिप्ये = सवृद्धि गत, लक्ष्मण च = स्वाऽनुज च, विरुराव = शब्दितवान्, वत्स ! जीवसीति शेष ॥

❀व्युत्पत्ति❀ कृच्छ्रं = "स्यात्कष्ट कृच्छ्रमाभीलम्" इत्यमर । चिचेत = "चिती सज्ञाने" इति धातोर्लिट् । ओषाञ्चक्रे = "उष दाहे" इति धातो कर्मणि लिट् । "उषविदजागृभ्योऽन्यतरस्याम्" इत्याम् । समापिप्ये = समापूर्वकात् "( स्फायी ) ओप्यायी वृद्धौ" इति धातोर्लिटि "प्याय पी"ति पीभाव । "एरनेकाचोऽसयोगपूर्वस्य" इति यण् ।

❀भाषाऽर्थ❀ रामचन्द्रजीने ( होशमे आ कर ) उस कष्ट का अनुभव किया। तब वे शोक से दग्ध हुए। उनका शोक सवृद्धिको प्राप्त हुआ। उन्होंने लक्ष्मणको बुलाया ॥ ६२ ॥

समीहे मर्तुमानर्चे तेन वाचाखिल बलम् ।
आपपृच्छे च सुग्रीवं स्वं देशं विससर्ज च ॥ ६३ ॥

अन्वय.—( स ) मर्तु समीहे । तेन वाचा अखिलं बलम् आनर्चे । सुग्रीवम् आपपृच्छे, स्व देश च विससर्ज ॥

व्याख्या—( स = राम ) मर्तु = प्राणास्त्यक्तु, समीहे = समीहितवान् । तेन = रामेण, वाचा = वाण्या, अखिलं = सम्पूर्ण, बलं = सैन्यम्, आनर्चे = पूजितं, "भवद्भि स्वकार्यं साधु निर्व्यूढ, मद्भाग्यमेवाऽत्राऽपराध्यती"ति शेषोऽर्थ । सुग्रीव= कपिराज स्वमित्रम्, आपपृच्छे = आमन्त्रितवानित्यर्थ, "दर्शन देही"ति शेष । स्व = आत्मीय, देशं च = विषय च, किष्किन्धारूपमिति भाव । विससर्ज = प्रहितवान् सर्वतोभावेन रामो नैराश्य मनुभूतवानिति भाव ॥

❀व्युत्पत्ति❀ आनर्चे = "अर्च पूजायाम्" इति धातो कर्मणिलिट् । "तस्मान्नुड् द्विहल" इति नुट् । आपपृच्छे = आङ्पूर्वकात् "प्रच्छ ज्ञीप्सायाम्" इति धातोर्लिट् । "आङिनुप्रच्छ्यो." इत्यात्मनेपदम् ॥

❀भाषाऽर्थ❀ रामने प्राणत्याग करनेकी इच्छा की। उन्होंने वचनसे सब सेनाका सत्कार किया। सुग्रीवको बुलाया और उन्हें अपने देश ( किष्किन्धा ) मे जाने की आज्ञा दी ॥ ६३ ॥

आदिदेश स किष्किन्धा राघवौ नेतुमङ्गदम् ।
प्रतिजज्ञे स्वय चैव सुग्रीवो रक्षसां वधम् ॥ ६४ ॥

**अन्वय**—स राघवौ किष्किन्धा नेतुम् अङ्गदम् आदिदेश । सुग्रीव स्वयम् एव रक्षसा वध प्रतिजज्ञे च ॥

**व्याख्या**—स = सुग्रीव , राघवौ = रामलक्ष्मणौ, किष्किन्धा = स्वनगरी, नेतु = प्रापयितुम् , अङ्गदं = वालिसूनुम् , आदिदेश = आदिष्टवान् । सुग्रीव = कपिराज , स्वयमेव = आत्मनैव, रक्षसा = राक्षसाना, वध = विनाश, प्रतिजज्ञे च= प्रतिज्ञातवाश्च, अहमेव राक्षसान्व्यापादयिष्यामीति भाव ॥

**व्युत्पत्ति** ॐ राघवौ = मुख्यकर्मैतत्पदम् । किष्किन्धां = गौणकर्मैतत्पदम् । आदिदेश = आङ्पूर्वकात् "दिश अतिसर्जने" इति धातोर्लिट् । उपसर्गवशाद्धातोरर्थान्तरत्वम् । प्रतिजज्ञे = प्रतिपूर्वकात् "ज्ञा अवबोधने" इति धातोर्लिट् । "सम्प्रतिभ्यामनाध्याने" इत्यात्मनेपदम् , सकर्मकाऽर्थं वचनम् ॥

**ॐभाषाऽर्थ ॐ** उन्होंने ( सुग्रीवने ) राम और लक्ष्मणको किष्किन्धामे पहुचानेके लिए अङ्गदको आज्ञा दी । सुग्रीवने स्वयम् ही राक्षसोंको मारनेकी प्रतिज्ञा भी की ॥

नागाऽस्त्रमिदमेतस्य विपक्षस्तार्क्ष्यसंस्मृतिः ।
विभीषणादिति श्रुत्वा तं निदध्यौ रघूत्तमः ॥ ६५ ॥

**अन्वयः**—"इद नागाऽस्त्रम् । एतस्य विपक्ष तार्क्ष्यसस्मृति ।" विभीषणात् इति श्रुत्वा रघूत्तम त निदध्यौ ॥

**व्याख्या**—इद = मेघनादप्रयुक्तं, नागाऽस्त्रं = सर्पाऽस्त्र, न शरा इति भाव । एतस्य = नागाऽस्त्रस्य, विपक्ष = शत्रु , तार्क्ष्यसस्मृति = गरुडसस्मरण, यत्सस्मरणादेवाऽस्य शान्तिरिति भाव । विभीषणात् = रावणाऽनुजात् , इति=एव श्रुत्वा= आकर्ण्य, रघूत्तम = राम , तं = तार्क्ष्य, निदध्यौ = ध्यातवान् ॥

**ॐव्युत्पत्ति ॐ** तार्क्ष्यसस्मृति = तार्क्ष्यस्य सस्मृति , "गरुत्मान्गरुडस्तार्क्ष्यो वैनतेय खगेश्वर ।" इत्यमर । विभीषणात् = "आख्यातोपयोगे" इति अपादानत्वम् । रघूत्तमः = रघुषु ( लक्षणया—रघुवश्येषु राजसु ) उत्तम । निदध्यौ = निपूर्वकात् "ध्यै चिन्तायाम्" इति धातोर्लिट् । "आदेच उपदेशेऽशिति" इत्यात्वम् । "आत औ णल" इति णल औकारादेश ॥

**ॐभाषाऽर्थ ॐ** "यह नागाऽस्त्र है । इसका प्रतीकार गरुडजीकी सस्मृति है ।" विभीषणजीसे ऐसा सुनकर रामचन्द्रजीने उन ( गरुड ) की याद की ॥ ६५ ॥

ततो विजघटे शैलैरुद्वेलं पुप्लुवेऽम्बुधिः ।
वृक्षेभ्यश्चच्युते पुष्पैर्विरेजुर्भासुरा दिशः ॥ ६६ ॥

**अन्वय**—तत शैलै विजघटे । अम्बुधि उद्वेलं पुप्लुवे । वृक्षेभ्यः पुष्पैः चुच्युते । दिशो भासुरा ( सत्य ) विरेजु ॥

**व्याख्या**—तत = रामकर्तृकतार्क्ष्यध्यानाऽनन्तर, शैलै = पर्वतै, विजघटे = विघटितम्। अम्बुधि॰ = समुद्र, उद्वेल = वेलामतिक्रम्येति भाव । पुप्लुवे=गत । वृक्षेभ्य = तरुभ्य, पुष्पै = कुसुमै, चुच्युते=च्युतम्। दिश = आशा, भासुरा = प्रभासनशीला सत्य गरुडागमनात्सुपर्णपक्षप्रभाभिरिति शेष । विरेजु =शुशुभिरे ॥

**व्युत्पत्ति॰ॐ विजघटे = "घट सङ्घाते" इति धातोर्भावे लिट्। उद्वेलम् = उत्क्रान्ता वेला यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम्। विरेजु॰ = "राजृ दीप्तौ" इति धातोर्लिट्। "फणां च सप्तानाम्" इत्येत्वाऽभ्यासलोपौ ॥**

**ॐभाषाऽर्थःॐ तब पर्वत विघटित हुए। समुद्र वेलाका अतिक्रमणकर चलने लगा। वृक्षों से फूल गिर पडे। दिशाये प्रकाशशील होती हुई शोभित हो गई ॥**

जगाहिरेऽम्बुधि नागा ववौ वायुर्मनोरम॰।
तेजांसि शशमाञ्चक्रुः शरबन्धा विशिश्लिषु॰ ॥ ६७ ॥

**अन्वय**:—नागा अम्बुधि जगाहिरे। मनोरमो वायु ववौ। तेजासि शशमाञ्चक्रु। शरबन्धा विशिश्लिषु ॥

**व्याख्या**—नागा = काद्रवेया, अम्बुधि = समुद्रं, जगाहिरे = प्रविष्टा, गरुडभयादिति शेष । मनोरम = चेतोहर, वायु = वात, ववौ = वाति स्म। तेजासि = अर्चीषि, रत्नादीनामिति शेष । शंशमाञ्चक्रु = अत्यर्थं प्रशान्तानि। शरबन्धा =बाणबन्धा, विशिश्लिषु =विश्लिष्टा, दूरत एव गरुडप्रभावादिति शेष ॥

**ॐव्युत्पत्ति ॐ नागा॰="नागा॰ काद्रवेयाः" इत्यमर । ववौ="वा गतिगन्धनयोः" इति धातोर्लिट्। शशमाञ्चक्रु = यङ्लुगन्तात् "शमु उपशमे" इति धातोर्लिट्। एव चाऽनुप्रयोगे परस्मैपदम् ॥**

**ॐभाषाऽर्थ ॐ नागोंने गरुडके भयसे समुद्रमे प्रवेश किया। चित्तको आनन्दित करनेवाला वायु बहने लगा। रत्नादियोंके तेज अतिशय शान्त हुए। बाण-बन्ध विश्लिष्ट हुए ॥ ६७ ॥**

भ्रेजिरेऽक्षतवद्योधा लेभे संज्ञा च लक्ष्मणः।
विभीषणोपि बभ्राजे गरुत्मान् प्राप चान्तिकम् ॥ ६८ ॥

**अन्वय**'—योधा अक्षतवत् भ्रेजिरे। लक्ष्मणश्च संज्ञा लेभे। विभीषणोऽपि बभ्राजे। गरुत्मान् च अन्तिकं प्राप ॥

**व्याख्या**—योधा = भटा, अक्षतवत् = बाणवेधरहिता इव, भ्रेजिरे = अशोभन्त। लक्ष्मणश्च = रामाऽनुजश्च, संज्ञा = चेतना, लेभे = प्राप्तवान्। विभीषणोऽपि रावणाऽनुजोऽपि, बभ्राजे = दिदीपे, सपन्ना मे मनोरथा इति। गरुत्माश्च = गरुडश्च, अन्तिकं = समीप, रामलक्ष्मणयोरिति शेष । प्राप = प्राप्तवान् ॥

❀व्युत्पत्तिः❀ अक्षतवत् = अक्षतैस्तुल्य, "तेन तुल्य क्रिया चेद्वतिः ।" इति वतिप्रत्यय । भ्रेजिरे = "भ्राज् दीप्तौ" इति धातोर्लिट् "फणा च सप्तानाम्" इत्येत्वाऽभ्यासलोपौ । सञ्ज्ञां = "सञ्ज्ञास्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना ।" इत्यमरः । बभ्राजे = भ्राजृधातोरेत्वाऽभ्यासलोपाऽभावपक्षेरूपम् । गरुत्मान् = प्रशस्तौ गरुतौ स्तोऽस्येति, "तदस्यास्त्यस्मिन्निति मतुप्" यवादित्वात् "झय" इति वत्व न ॥

❀भाषाऽर्थ❀ योद्धालोग अक्षतके सदृश शोभित हुए । लक्ष्मणने भी चैतन्य पाया । विभीषण भी शोभित हो गये । गरुडजी भी राम और लक्ष्मणके समीपमें प्राप्त हुए ॥ ६८ ॥

सपस्पर्शाथ काकुत्स्थौ जज्ञाते तौ गतव्यथौ ।
तयोरात्मानमाचख्यौ ययौ चाथ यथागतम् ॥ ६९ ॥

**अन्वय.**—अथ ( गरुत्मान् ) काकुत्स्थौ सपस्पर्श । तौ गतव्यथौ जज्ञाते । ( गरुत्मान् ) तयो आत्मानम् आचख्यौ, अथ यथागत ययौ ॥

**व्याख्या**—अथ = गरुत्मदागमनानन्तर, काकुत्स्थौ = राघवौ, संपस्पर्श = सस्पृष्टवान्, गरुत्मानिति शेष । तौ = काकुत्स्थौ, गतव्यथौ = पीडारहितौ, जज्ञाते = जातौ । तयो = काकुत्स्थयो, आत्मान = स्वम्, आचख्यौ = आख्यातवान्, गरुत्मानहमिति गरुत्मानिति शेष । अथ = आत्मपरिचयप्रदानाऽनन्तर, यथाऽऽगतम् = यथा तेनाऽऽगतं तथा, ययौ = जगाम ॥

❀व्युत्पत्ति❀ गतव्यथौ = गता व्यथा ययोस्तौ । आचख्यौ = आङ्पूर्वकात् "चक्षिङ् व्यक्तायां वाचि" इति धातोर्लिट् । "वा लिटि" इति चक्षिङ, ख्याञ् । तदभावपक्षे "चक्शौ" इति रूपम् । यथाऽऽगतम् = आगतमनतिक्रम्येति पदाऽर्थाऽनतिवृत्तौ अव्ययीभाव. ॥

❀भाषाऽर्थ.❀ आनेके अनन्तर गरुडजीने राम और लक्ष्मणको स्पर्श किया । वे दोनों पीडारहित हो गये । गरुडजीने उन दोनोंको अपना परिचय दिया । तदनन्तर जैसे आये थे वैसे चले गये ॥ ६९ ॥

स्वेनुस्तित्विषुरुद्येमुरुच्चख्नुः पर्वतांस्तरून् ।
वानरा दद्रमुश्चाऽथ सग्राम चाशशासिरे ॥ ७० ॥

**अन्वय.**—अथ वानरा स्वेनु, तित्विषु, उद्येमु, पर्वतान् तरूंश्च उच्चख्नु, दद्रमु, सग्राम च आशशासिरे ॥

**व्याख्या**—अथ = गरुत्मद्गमनाऽनन्तर, वानरा = कपय, स्वेनु = शब्दं चक्रु, तित्विषु = शोभिता, उद्येमु = उद्योग चक्रु, पर्वतान् = शैलान्, तरूंश्च =

वृक्षांश्च, उच्चख्नु = उत्क्षिप्तवन्त, दद्रमु = इतस्ततो भ्रान्ता, सग्राम च = युद्ध च, आशशासिरे = अभीष्टवन्त ॥

ॐव्युत्पत्तिॐ तित्विषु = "त्विष दीप्तौ" इति धातोर्लिट्। उद्येमु = उत्पूर्वकात् "यम उपरमे" इति धातोर्लिट्। उच्चख्नु = उत्पूर्वकात् "खनु अवदारणे" इति धातोर्लिट् "गमहनजनखनघसा लोप. क्ङित्यनङि" इति उपधालोप। दद्रमु.="द्रम (हम्म मीमृ) गतौ" इति धातोर्लिट्। आशशासिरे = "आङ. शासु इच्छायाम्" इत्यादादिकाद्धातोर्लिट् ॥

ॐभाषाऽर्थॐ गरुडजीके जानेके अनन्तर वानर शब्द करने लगे, शोभित हुए, उद्योग करने लगे, पर्वत और वृक्षोंको उठाने लगे, इधर उधर घूमने लगे और सग्रामकी इच्छा करने लगे ॥ ७० ॥

डुढौकिरे पुनर्लङ्का बुबुधे तान् दशानन. ।
जीवतश्च विवेदारीन् बभ्रशेऽसौ धृतेस्तत ॥ ७१ ॥

**अन्वयः—**(वानरा) पुन लङ्का डुढौकिरे। दशाऽऽनन तान् बुबुधे, अरांश्च जीवतो विवेद। तत असौ धृते बभ्रशे ॥

**व्याख्या—**पुन = भूय, लङ्का = रावणनगरी, डुढौकिरे = जग्मु, वानरा इति शेष। दशाऽऽनन = रावण, तान् = लङ्काप्राप्तान्वानरान्, बुबुधे = बुद्धवान्, अरींश्च = शत्रूंश्च, रामादीनिति भाव। जीवत = प्राणान् धारयत, विवेद=ज्ञातवान् अन्यथा कथ वानरा समागता इति शेष। तत =अरिजीवनवेदनाऽनन्तरम्, असौ=रावण, धृते =धैर्यात् सन्तोषाद्वा सकाशात्, बभ्रशे=भ्रष्ट ॥

ॐव्युत्पत्तिॐ डुढौकिरे=गत्यर्थात् ढौकृधातोर्लिट्। बुबुधे = "बुध अवगमने" इति धातोर्लिट् ॥

ॐभाषाऽर्थॐ वानर फिर लङ्काको चले गये। रावणने उनलोगोंको जाना और शत्रुओंको भी जीते हुए जान लिया। तदनन्तर वह धैर्यसे भ्रष्ट हुआ ॥ ७१ ॥

सस्रसे शरबन्धेन दिव्येनेति बुबुन्द सः।
बभाजाथ परं मोहमूहाञ्चक्रे जय न च ॥ ७२ ॥

**अन्वयः—**स दिव्येन शरबन्धेन सस्रसे इति बुबुन्द, अथ पर मोह बभाज; जय च न ऊहाञ्चक्रे ॥

**व्याख्या—**स = रावण, दिव्येन = अलौकिकेन, शरबधेन = बाणबन्धेन, नागाऽस्त्रेणेत्यर्थ। सस्रंसे = स्रस्तम्, इति = एवं, बुबुन्द = श्रुतवान्, अथ = अनन्तर, परं = महान्त, मोह = वैचित्य, मूर्च्छाकारमिति भाव। बभाज=सेवितवान्, जयं च = विजय च, न ऊहाञ्चक्रे = न वितर्कितवान् ॥

*व्युत्पत्ति* सस्रसे="स्रंसु ( ध्वंसु भ्रंसु ) अवस्रंसने ॥ इति धातोर्भावे लिट् । बुबुन्द="उबुन्दिर निशामने इति धातोर्लिट् । बभाज="भज सेवायाम्" इति धातोर्लिट् । ऊहाञ्चक्रे="ऊह वितर्के" इति धातोर्लिट् । "इजादेश्च गुरुमतोऽनृच्छ" इत्याम् ॥

*भाषाऽर्थ.* रावणने "दिव्य शरबन्ध स्रस्त हो गया" ऐसा सुना । तदनन्तर वह अतिशय मोहको प्राप्त हुआ, और उसने जयमालकी आशा छोड दी ॥ ७२ ॥

धूम्राक्षोऽथ प्रतिष्ठासाञ्चक्रे रावणसंमतः ।
सिंहास्यैर्युयुजे तस्य वृकास्यैश्च रथ खगै ॥ ७३ ॥

अन्वयः—अथ धूम्राक्षो रावणसम्मत ( सन् ) प्रतिष्ठासाञ्चक्रे । तस्य रथ सिहाऽऽस्यैं वृकास्यैश्च खगै युयुजे ॥

व्याख्या—अथ=अनन्तर, धूम्राक्ष = तन्नामा राक्षस, रावणसम्मत = दशाऽऽननाऽनुमत सन् , प्रतिष्ठासाञ्चक्रे=गन्तुमिच्छा कृतवान् । तस्य = धूम्राक्षस्य, रथ =स्यन्दन , सिहाऽऽस्यै =मृगेन्द्रमुखै , वृकाऽऽस्यैश्च = ईहामृगमुखैश्च, खगै = आकाशगामिभिर्यानै , युयुजे=युक्त ॥

*व्युत्पत्ति* रावणसम्मत =रावणेन सम्मत । प्रतिष्ठासाञ्चक्रे=सन्नन्तात् प्रपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोर्लिट् । "समवप्रविभ्यः स्थ" इत्यात्मनेपदम् । "उपसर्गात्सुनोती"-त्यादिना षत्वम् । सिहाऽऽस्यै =सिहस्येवाऽऽस्य येषा ते सिहाऽऽस्यास्तै । वृकाऽऽस्यै =वृकस्येवाऽऽस्य येषां, तै । युयुजे=कर्मणि लिट् ॥

*भाषाऽर्थ* तब धूम्राक्षनामके राक्षसने रावणसे आज्ञा पाकर प्रस्थानकी इच्छा की । उसका रथ सिहके और भेडिएके जैसे मुखवाले आकाशचारी जन्तुओंसे युक्त हुआ ॥ ७३ ॥

त्वक्त्रै सविव्ययुर्देहान् वाहनान्यधिशिश्रियरे ।
आनर्जुर्नृभुजोऽस्त्राणि वव्रजुश्चाहवक्षितिम् ॥ ७४ ॥

अन्वय—नृभुज त्वक्त्रै देहान् सविव्ययु , वाहनानि अधिशिश्रियरे, अस्त्राणि आनर्जु , आहवक्षिति वव्रजुश्च ॥

व्याख्या—नृभुज =नरभक्षका , धूम्राक्षसम्बन्धिन इति भाव । त्वक्त्रै = चर्मरक्षकै , कवचैरितिभाव । देहान्=शरीराणि, संविव्ययु =आच्छादितवन्त , वाहनानि = गजाऽश्वादीनि, अधिशिश्रियरे = आरूढवन्त , अस्त्राणि = आयुधानि, आनर्जु = गृहीतवन्त , आहवक्षिति च=युद्धभूमि च वव्रजुश्च=गताश्च ॥

*व्युत्पत्ति* त्वक्त्रै =त्वच त्रायन्त इति त्वक्त्रास्तै , त्वक्पूर्वकात् "त्रैङ् पालने"

इति धातो "आतोऽनुपसर्गे कः" इति कप्रत्यय । सविव्ययु = सपूर्वकात् "व्येञ् सवरणे" इति धातोर्लिट् । "न व्यो लिटि" इत्यात्वप्रतिषेध । "लिट्यभ्यासस्योभयेषाम्" इति सम्प्रसारणम् । वाहनानि = अधिपूर्वक "शीङ् स्वप्ने" इति धातुना योगे "अधिशीङ्स्थाऽऽसा कर्म" इति कर्मसज्ञा, ततो द्वितीया । आनर्जु = "अर्ज प्रतियत्ने" इति धातोर्लिट् । "अत आदे" इति दीर्घत्व "तस्मान्नुड् द्विहलः" इति नुट् । क्वचित् "आनर्चु" इति पाठान्तर, तस्य पूजितवन्त इत्यर्थः । ववञ्जु = "वञ्जु गतौ" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ धूम्राक्षके अनुयायी राक्षसोंने कवचोंसे शरीरोंको आच्छादित किया, घोडे हाथी आदि वाहनोंपर आरोहण किया, अस्त्रोंको लिया और रणभूमिमे यात्रा भी की ॥ ७४ ॥

अध्युवास रथ तेये पुराच्चुक्षाव चाशुभम् ।
संश्रावयाञ्चकाराख्या धूम्राक्षस्तत्वरे तथा ॥ ७५ ॥

**अन्वय.**—धूम्राक्ष रथम् अध्युवास, पुरात् तेये, अशुभं च चुक्षाव, आख्या संश्रावयाञ्चकार, तथा तत्वरे ॥

**व्याख्या**—धूम्राक्ष = रावणाऽनुचरो राक्षस , रथ = स्यन्दनम् , अध्युवास = आरूढ , पुरात् = लङ्काया , तेये = निष्क्रान्त , अशुभम् = अकल्याण यथा तथा, चुक्षाव = क्षुतशब्द चकार, आख्या = नाम, स्वकीयामिति शेष । सश्रावयाञ्चकार संश्रावितवान् , तथा = तेन प्रकारेण, तत्वरे = त्वरा चकार, युद्धायेति शेष ॥

❀व्युत्पत्ति❀ रथम् = अधिपूर्वकस्य "वस निवासे" इति धातोर्योगे "उपान्वध्याङ्वस" इति कर्मत्वम् । तेये = "( अय वय पय मय चय ) तय ( णय ) गतौ" इति धातोर्लिट् । चुक्षाव = "टुक्षु शब्दे" इति धातोर्लिट् । आख्याम् = "आख्याऽऽह्वे अभिधान च नामधेय च नाम च ।" इत्यमरः । तत्वरे = "ञित्वरा सभ्रमे" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ धूम्राक्षने रथमें आरोहण किया, लङ्कासे प्रस्थान किया, अशुभ रूपसे छिक्का की, अपना नाम सुनाया और इस प्रकारसे युद्धके लिए जल्दबाजी की

निलिल्ये मूर्ध्नि गृध्रोऽस्य क्रूरा ध्वाङ्क्षा ववाशिरे ।
शिशीके शोणितं व्योम चचाल क्ष्मातलं तथा ॥ ७६ ॥

**अन्वय**—अस्य मूर्ध्नि गृध्रो निलिल्ये । क्रूरा ध्वाङ्क्षा ववाशिरे । व्योम शोणित शिशीके । तथा क्ष्मातल चचाल ॥

**व्याख्या**—अस्य = धूम्राक्षस्य, गच्छत इति शेष । मूर्ध्नि = शिरसि, गृध्र = दाक्षाय्य , निलिल्ये = विलीन । क्रूरा = कठोरा , अशुभसूचका इति भाव ।

ध्वाङ्क्षा = काका ववाशिरे = वाशितवन्त । व्योम = आकाश ( कर्तृ ), शोणित= रुधिरं, ( कर्म ), शिशीके = क्षरितवत्, तथा = तेनैव प्रकारेण, क्ष्मातल= भूतलं, चचाल = चलितम्, उत्पातसूचको भूकम्पोऽपि जात इति भाव ॥

❀व्युत्पत्ति❀ निलिल्ये = निपूर्वकात् "लीङ्श्लेषणे" इति धातोर्लिट्। "एरनेकाचोऽसयोगपूर्वस्य" इति यण्। ध्वाङ्क्षा = "ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि"। इत्यमरः। ववाशिरे = "वाश्शब्दे" इति धातोर्लिट्। "तिरश्चां वाशितं रुतम्।" इत्यमरः। शिशीके = "शीकृ सेचने" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ धूम्राक्षके शिरके समीप गृध्र निलीन हुआ। अशुभसूचक कौवे शब्द करने लगे। आकाशने रुधिरक्षरण किया। उसी तरहसे भूतल कम्पित हुवा ॥७६॥

ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परम् ।
वव्रश्चुराजुघूर्णुश्च स्येमुश्चुकूर्दिरे तथा ॥ ७७ ॥

अन्वय.—ततो युद्धं प्रजघटे। ( हरिराक्षसा ) परस्पर शस्त्राणि आसु, वव्रश्चु, आजुघूर्णु, स्येमु तथा चुकूर्दिरे ॥

व्याख्या—तत = अनन्तर, युद्धम् = आयोधन, प्रजघटे = घटितम्। परस्पर = मिथ, शस्त्राणि = आयुधानि, आसु = क्षिप्तवन्त, हरिराक्षसा इति शेष एव परत्राऽपि। वव्रश्चु = छिन्नवन्त, आजुघूर्णु = भ्रान्ता, चक्रवदिति शेष। स्येमु = शब्द कृतवन्त। तथा = तेन प्रकारेण, चुकूर्दिरे = क्रीडितवन्त ॥

❀व्युत्पत्ति❀ आसु = "असु क्षेपणे" इति धातोर्लिट्। "अत आदेः" इति दीर्घं द्विहल्त्वाऽभावान्नुडभावः। वव्रश्चु = "ओव्रश्चू छेदने" धातोर्लिट्। स्येमु = "स्यमु स्वनध्वन शब्दे" इति धातोर्लिट् "फणां च सप्तानाम्" इत्येत्वाऽभ्यासलोपौ। चुकूर्दिरे = "कुर्द ( खुर्द गुर्द गुद ) क्रीडायामेव" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ तब युद्ध हुआ। वानर और राक्षस परस्पर अस्त्र फेकने लगे, चक्रके सदृश घूमने लगे, शब्द करने लगे और युद्ध क्रीडा करने लगे ॥ ७७ ॥

रुरुजुर्भ्रेजिरे फेणुर्बहुधा हरिराक्षसाः ।
वीरा न बिभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान् ॥ ७८ ॥

अन्वयः—हरिराक्षसा रुरुजु, भ्रेजिरे, बहुधा फेणु। वीरा न बिभयाञ्चक्रु, परान् भीषयाञ्चक्रिरे ॥

व्याख्या—हरिराक्षसा =वानरयातुधाना, रुरुजु =परस्परं भग्नवन्त, भ्रेजिरे= शोभिता, बहुधा = अनेकप्रकारै, फेणु =गता। वीरा =शूरा, न बिभयाञ्चक्रु = नो भीता, परान्=शत्रून्, भीषयाञ्चक्रिरे=भीषयन्ते स्म, प्रयोजका इति शेष ॥

❀व्युत्पत्ति❀ रुरुजु = "रुजो भङ्गे" इति धातोर्लिट् । बहुधा = "सङ्ख्याया विधार्थे धा" इति धाप्रत्यय । फेणु = "फण गतौ" इति धातोर्लिट् "फणा च सप्तानाम्" इति विभाषया एत्वाऽभ्यासलोपौ । बिभयाञ्चक्रु = "ञिभी भये" इति धातोर्लिट् "भीह्रीभृहुवां श्लुवच्च" "इत्याम् । भीधातो परस्मैपदित्वात् अनुप्रयोगेपिपरस्मैपदम् । भीपयाञ्चाक्रिरे = णिजन्ताद्भीधातोर्लिट् । "भीस्म्योर्हेतुभये" इत्यात्मनेपदम् । "भियो हेतुभये षुक्" इति षुगागम ॥

❀भाषाऽर्थ❀ वानर और राक्षसोंने परस्परोंको परास्त किया । वे शोभित हुए, अनेक प्रकारोंसे चलने लगे, वीर लोग नही डरे और शत्रुओंको भीत किया ॥७८॥

रक्तं प्रचुश्चुतु क्षुण्णा. शिश्वियुर्बाणविक्षताः ।
अस्यता शुशुवुर्बाणान् भुजा. साङ्गुष्ठमुष्टयः ॥ ७९ ॥

अन्वय.—क्षुण्णा रक्त प्रचुश्चुतु शिश्वियु. । बाणान् अस्यता साऽङ्गुष्ठमुष्टयो भुजा बाणविक्षता शुशुवु ॥

व्याख्या—कचित् क्षुण्णा =खण्डिता सन्त., रक्त = रुधिर, प्रचुश्चुतु =प्रक्षरिता । केचित् शिश्वियु = शोथयुक्ता बभूवु । बाणान्=शरान् , अस्यता=क्षिप्यता, योधाना, साऽङ्गुष्ठमुष्टय = अङ्गुष्ठमुष्टिसहिता भुजा =बाहव , बाणविक्षता =शरभिन्ना. सन्त , शुशुवु = गता ॥

❀व्युत्पत्ति❀ शिश्वियु = "टुओश्वि गतिवृद्धयो " इति धातोर्वृद्धौ लिट् । "विभाषाश्वे " इति सम्प्रसारणाऽभावपक्षे रूपम् । शुशुवु = श्विधातोर्गत्यर्थे लिट् , पूर्वसूत्रेण सम्प्रसारणम् ॥

❀भाषाऽर्थ❀ कुछ लोग खण्डित होते हुए रुधिर गिराने लगे । कुछ लोग शोथयुक्त हो गये । बाणोंको फेकनेवाले योद्धाओंके अङ्गुष्ठ और मुष्टि के साथ बाहु बाणोसे भिन्न होकर नष्ट हुए ॥ ७९ ॥

रणे चिक्रीड धूम्राक्षस्त ततर्जाऽनिलात्मजः ।
आददे च शिलां साऽश्वं पिपेषाऽस्य रथं तया ॥ ८० ॥

अन्वय —धूम्राक्षो रणे चिक्रीड। अनिलाऽऽत्मज त ततर्ज, शिलाम् आददे, तया साऽश्वम् अस्य रथ पिपेष ॥

व्याख्या—धूम्राक्ष = तन्नामा राक्षस , रणे = युद्धे, चिक्रीड = क्रीडितवान् । अनिलाऽऽत्मज = वायुपुत्र , हनुमानित्यर्थ । त = धूम्राक्ष, ततर्ज = भर्त्सितवान् , शिला = प्रस्तरम् , आददे = गृहीतवान् , तया = शिलया, साऽश्व = हयसहितम् , अस्य=धूम्राक्षस्य, रथ=स्यन्दन, पिपेष=चूर्णितवान् ॥

❀व्युत्पत्ति❀ ततर्ज="तर्ज भर्त्सने" इति धातोर्लिट्। पिपेष="पिष्लृ सञ्चूर्णने" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ धूम्राक्ष युद्धमें क्रीडा करने लगा। वायुपुत्र हनूमान्जी ने उसका भर्त्सन किया और पत्थर ले लिया और उस पत्थरसे घोड़ोंके साथ उसके रथको पीस डाला ॥ ८० ॥

पपात राक्षसो भूमौ, रराट च भयंकरम् ।
तुतोद गदया चाऽरिं तं दुध्रावाद्रिणा कपिः ॥ ८१ ॥

अन्वयः—राक्षसो भूमौ पपात, भयङ्करं रराट च, गदया अरिं तुतोद। कपिः अद्रिणा तं दुध्राव ॥

व्याख्या—राक्षसः = यातुधानः, धूम्राक्ष इति भावः। भूमौ = पृथिव्या, पपात = पतितः, भयङ्करं = भीषणं यथा तथा, रराट च=शब्दं च कृतवान्। गदया = शस्त्रविशेषेण, अरिं=शत्रुं, हनूमन्तमित्यर्थः। तुतोद=आहतवान्। कपिः=हनूमान्, अद्रिणा = पर्वतेन, तं = धूम्राक्षं, दुध्राव = स्थिरं चकार, व्यापादितवानिति भावः ॥

❀व्युत्पत्ति❀ रराट="रट परिभाषणे" इति धातोर्लिट्। दुध्राव="ध्रु-स्थैर्ये" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ राक्षस धूम्राक्ष जमीनपर गिर पडा, और भयङ्कर शब्दकर उसने गदासे हनूमान्जीको आहत किया। हनूमान्जीने पर्वतसे उसे मार डाला ॥ ८१ ॥

अकम्पनस्ततो योद्धुं चकमे रावणाऽऽज्ञया ।
स रथेनाभिदुद्राव जुघुरे चातिभैरवम् ॥ ८२ ॥

अन्वयः—ततो रावणाऽऽज्ञया अकम्पनो योद्धुं चकमे। स रथेन अभिदुद्राव, अतिभैरवं जुघुरे च ॥

व्याख्या—ततः = धूम्राक्षवधाऽनन्तरं, रावणाऽऽज्ञया = रावणादेशेन, अकम्पनः=तन्नामा राक्षसः, योद्धुं = युद्धं कर्तुं, चकमे = इष्टवान्। सः=अकम्पनः, रथेन=स्यन्दनेन, अभिदुद्राव = अभिमुखं गतः, अतिभैरवम् = अतिभयानकं, जुघुरे च=शब्दं कृतवांश्च ॥

❀व्युत्पत्ति❀ चकमे="कमु कान्तौ" इति धातोर्लिट्। "आयादय आर्धधातुके वा" इति णिङभावपक्षे रूपम्। जुघुरे="घुर भीमाऽर्थशब्दयोः" इति धातोर्लिट् ॥

❀भाषार्थ❀ धूम्राक्षके विनाशके अनन्तर रावणकी आज्ञासे अकम्पन नामके राक्षसने लडनेके लिए इच्छा की। वह रथमें चढ़कर सम्मुख आकर अतिशय भयङ्कर शब्द करने लगा ॥ ८२ ॥

परस्पन्दे तस्य वामाऽक्षि सस्यमुश्चाऽशिवाः खगाः ।
तान् वव्राजावमत्यासौ बभासे च रणे शरैः ॥ ८३ ॥

**अन्वयः**—तस्य वामाऽक्षि पस्पन्दे, अशिवा खगा सस्यमुश्च । असौ तान् अवमत्य वव्राज, रणे शरैः बभासे च ॥

**व्याख्या**—तस्य = अकम्पनस्य, वामाऽक्षि = सव्यलोचन, पस्पन्दे=स्पन्दितम् , अशिवा = अशुभसूचका , खगा = पक्षिण , उलूकादय इति भाव । सस्यमुश्च = शब्द कृतवन्तश्च । असौ = अकम्पन , तान् = खगान् , अवमत्य = अवज्ञाय, वव्राज=गत । रणे=संग्रामे , शरैः =बाणैः , बभासे च=शोभित च ॥

**ॐव्युत्पत्तिॐ** पस्पन्दे = "स्पदि किञ्चिच्चलने" इति धातोर्लिट् , "शर्पूर्वाः खयः" इति सलोपः । सस्यमुः = स्यमुधातोः "फणा च सप्तानाम्" इति वैकल्पिकैत्वाऽभ्यासलोपाभावे रूपम् ॥

**ॐभाषाऽर्थॐ** अकम्पन की बाईं आख फडकने लगी । अशुभसूचक पक्षी भी शब्द करने लगे । वह उनकी परवाह न कर चला, और युद्धमें बाण शोभित हुए ॥

खमूयुर्वसुधामूवुः सायका रज्जुवत् तताः ।
तस्माद् बलैरपत्रेपे पुप्रोथाऽस्मै न कश्चन ॥ ८४ ॥

**अन्वयः**—( तेन ) रज्जुवत् तता सायका खम् ऊयु , वसुधाम् ऊवु । तस्मात् बलैः अपत्रेपे । अस्मै कश्चन न पुप्रोथ ॥

**व्याख्या**—रज्जुवत् = रश्मिवत् , तता = विस्तृता , सायका = बाणा , तेनेति शेष । खम् = आकाशम् , ऊयु = आवृतवन्त , वसुधा = भूमिम् , ऊवु = आच्छादितवन्त । तस्मात् = अकम्पनात् , अकम्पन वीक्ष्येति भाव । बलैः = कपिसैन्यैः , अपत्रेपे = लज्जितम् । अस्मै = अकम्पनाय, कश्चन = कोऽपि वानरवीर न पुप्रोथ = न प्रवभूव ॥

**ॐव्युत्पत्तिॐ** रज्जुवत् = रज्जुभिस्तुल्य, "तेन तुल्यं क्रिया चेद्वतिः" इति वति प्रत्ययः । सायका = "शरे खड्गे च सायक" इत्यमर । खम्—आकाशम्, ऊयुः = "वेञ् तन्तुसन्ताने" इति धातोर्लिट् । "वेञो वयि" इति वयिरादेश । "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति यकारस्य सम्प्रसारणे प्राप्ते "लिटि वयो य" इति निषेधेन वस्य सम्प्रसारणम् । ऊवु = "वश्चास्याऽन्यतरस्यां किति" इति यकारस्य वकारादेशः । तस्मात् = "ल्यब्लोपे कर्मण्यधिकरणे च" इति पञ्चमी । अपत्रेपे = अपपूर्वकात् "त्रपूष् लज्जायाम्" इति धातोर्भावे लिट् । "तॄफलभजत्रपश्च" इत्येत्वाऽभ्यासलोपौ । "लज्जा साऽपत्रपाऽन्यत" इत्यमरः । अस्मै = "नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" इत्यत्र अलंशब्दस्य पर्याप्त्य-

र्थग्रहणात् प्रोथृधातोर्योगे चतुर्थी। पुप्रोथ="प्रोथृ पर्याप्तौ" इति स्वरितेतो धातोर्लिट्। कर्तृ क्रियाफलाऽयोगान्नात्मनेपदम् ॥

ॐभाषाऽर्थॐ अकम्पनसे रस्सीके सदृश फैलाये गये बाणोंने आकाश और पृथ्वीको आच्छादित किया। उसको देखकर वानर सेना लज्जित हुई। उससे लडने-के लिए कोई भी समर्थ नही हुआ ॥ ८४ ॥

स भस्मसाच्चकाराऽरीन् दुदाव च कृतान्तवत् ।
चुक्रोध मारुतिस्तालमुच्चखने च महाशिखम् ॥ ८५ ॥

अन्वयः—स अरीन् भस्मसात् चकार कृतान्तवत् दुदाव च। मारुतिः चुक्रोध, महाशिखं तालम् उच्चखने च ॥

व्याख्या—स = अकम्पन, अरान् = शत्रून्, भस्मसात् चकार = कात्स्न्येंन भस्मभूतान् कृतवान्, कृताऽन्तवत् = यमवत्, दुदाव च = पीडितवाश्च। मारुति = हनूमान्, चुक्रोध = क्रुद्ध, महाशिखम् = अतिदीर्घ, ताल = तृणराजवृक्षम्, उच्चखने च = उत्खातवाश्च ॥

ॐव्युत्पत्ति.ॐ भस्मसात् = "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्यय। कृताऽन्तवत् = वतिप्रत्यय। दुदाव = "टुदु उपतापे" इति धातोर्लिट्। महाशिख = महतीशिखा यस्य स महाशिखस्तम्। ताल = "तृणराजाह्वयस्ताल" इत्यमरः। उच्चखने = उत्पूर्वकात् "खनु अवदारणे" इति धातोर्लिट्। कर्तृ क्रियाफलयोगादा-त्मनेपदम् ॥

ॐभाषाऽर्थ.ॐ अकम्पनने शत्रुओंको पर्याप्तरूपसे भस्मभूत कर दिया और यमराजके सदृश ही पीडित भी कर दिया। तब हनूमान्जीने क्रुद्ध होकर अतिशय उन्नत तालवृक्षको उठाया भी ॥ ८५ ॥

यमायाऽकम्पन तेन निरुवाप महापशुम् ।
बभ्रज्ज निहते तस्मिन् शोको रावणमग्निवत् ॥ ८६ ॥

अन्वय.—( स ) तेन अकम्पनं महापशुम् ( इव ) यमाय निरुवाप। तस्मिन् निहते शोक अग्निवत् रावण बभ्रज्ज ॥

व्याख्या—तेन = तालेन, अकम्पन = तदाख्यं राक्षसं, महापशु = यज्ञिय बृहज्जन्तुमिव, यमाय = कृतान्ताय, निरुवाप=दत्तवान्, मारुतिरिति शेष.। तस्मिन्= अकम्पने, निहते = व्यापादिते हनूमतेति शेष.। शोक =मन्यु., अग्निवत् = अन-लवत्, रावण = दशाऽऽनन, बभ्रज्ज = दग्धवान् ॥

ॐव्युत्पत्ति·ॐ यमाय = "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सम्प्रदानत्वा-

चतुर्थी। निरुवाप = निरुपसर्गपूर्वकात् "डुवप् बीजसन्ताने" इति धातोर्लिट्। "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य सम्प्रसारणम्। अकित्त्वात् "वचिस्वपियजादीना किति" इति तु न सम्प्रसारणम्। अग्निवत् = अग्निना तुल्य, वतिप्रत्ययः। बभ्रज्ज = "भ्रस्ज पाके" इति धातोर्लिट्। "भ्रस्जोरोपधयोरमन्यतरस्याम्" इति रमभावे रूपम्। रमि तु—बभर्ज ॥

ॐभाषाऽर्थ ॐ हनूमान्‌जीने उस ताडके पेडसे महापशुके सदृश अकम्पनको यमराजजीको दे दिया। अकम्पनके मारे जानेपर शोकने अग्निके सदृश होकर रावणको जलाया ॥ ८६ ॥

स बिभ्रेष प्रचुक्षोद दन्तैरोष्ठं चखाद च ।
प्रगोपायाञ्चकाराऽऽशु यत्नेन परितः पुरम् ॥ ८७ ॥

अन्वयः—स बिभ्रेष, प्रचुक्षोद, दन्तै ओष्ठं चखाद च, पुर परितो यत्नेन आशुप्रगोपायाञ्चकार ॥

व्याख्या—स = रावण, बिभ्रेष = चलित, प्रचुक्षोद = लोष्टादीन् चूर्णितवान्, दन्तै = दशनै, ओष्टम्-अधर, चखाद = दष्टवान्, पुर = लङ्का, परित = सर्वत, यत्नेन = प्रयासेन, आशु = शीघ्र, प्रगोपायाञ्चकार = रक्षितवान् ॥

ॐव्युत्पत्ति ॐ बिभ्रेष = "भ्रेषृ चलने" इति धातोर्लिट्। चखाद = "खाद भक्षणे" इति धातोर्लिट्। पुर = "परित" इति पदेन योगे "अभित परित समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया। प्रगोपायाञ्चकार = प्रपूर्वकात् "गुपू रक्षणे" इति धातोर्लिट्। आयप्रत्ययान्तत्वादाम् ॥

ॐभाषाऽर्थ ॐ रावण चला, लोष्ठ आदियोंको क्रोधसे चूर्ण करने लगा, दाँतोंको ओष्ठसे काटने लगा और लङ्काके चारों ओर शीघ्र रक्षा करने लगा ॥ ८७ ॥

युग्मम्।

प्रहस्तमर्थयाञ्चक्रे योद्धुमद्भुतविक्रमम् ।
किं विचारेण राजेन्द्र ! युद्धाऽर्था वयमित्यसौ ॥ ८८ ॥
चकाणाशङ्कितो योद्धुमुत्सेहे च महारथः ।
निर्येमिरेऽस्य योद्धारश्चक्लृपे चाऽश्वकुञ्जरम् ॥ ८९ ॥

अन्वयः—( स ) अद्भुतविक्रम प्रहस्तं योद्धुम् अर्थयाञ्चक्रे। असौ "हे राजेन्द्र ! विचारेण किं ? वय युद्धार्था ॥

इति चकाण, महारथ आशङ्कित ( सन् ) योद्धुम् उत्सेहे च।
अस्य योद्धारो निर्येमिरे च। अश्वकुञ्जरं च चक्लृपे ॥

**व्याख्या**—अद्भुतविक्रमम् = आश्चर्यजनकपराक्रमं, प्रहस्त=तन्नामानं स्वसचिवं, योद्धुं = युद्धं कर्तुम्, अर्थयाञ्चक्रे=प्रार्थितवान्, रावण इति शेषः। असौ= रावणाऽर्थितः प्रहस्त, हे राजेन्द्र ! हे भूपश्रेष्ठ ! विचारेण = विमर्शेन, किं=किं प्रयोजनं, नाऽयं विचारकाल इति भावः। वयं=भवदनुचराः, युद्धाऽर्थाः=सङ्ग्रामप्रयोजनाः, भवदर्थसिद्ध्यर्थमिति भावः। इति=एवं, चक्राण=बभाण, ततः महारथ = बृहद्रथः—

'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ।
अस्त्रशस्त्रप्रवीणश्च स महारथ उच्यते ॥"

इति लक्षणलक्षितो योद्धृविशेषो वा। अशङ्कित=निर्भयः सन्, योद्धुं=युद्धं कर्तुम्, उत्सेहे च = उत्साहं कृतवांश्च। अस्य=प्रहस्तस्य, योद्धारः=भटाः, नियेमिरे च=नियमिताश्च, अनेन (प्रहस्तेन) सह एतावद्भिर्योद्धव्यमिति रावणेन व्यवस्थापिता इति भावः। अश्वकुञ्जरं च = हयगजं च, चक्लृपे=सज्जीकृतं, युद्धाऽर्थमिति शेषः ॥

**॥व्युत्पत्तिः॥ अर्थयाञ्चक्रे="अर्थ उपयाच्ञायाम्" इति चौरादिकाद्धातोर्लिट्। युद्धाऽर्थाः=युद्धम् अर्थो येषां ते। चक्राण=शब्दाऽर्थात् क्वणधातोर्लिट्। नियेमिरे= कर्मणि लिट्। अश्वकुञ्जरम्=अश्वाश्च कुञ्जराश्च, "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति सेनाङ्गत्वात्समाहारद्वन्द्वः। चक्लृपे="कृपू सामर्थ्ये" इति धातोर्लिट् "कृपो रोलः" इति लत्वम् ॥**

**॥भाषाऽर्थ॥ रावणने अद्भुतपराक्रमवाले प्रहस्तसे लडनेके लिए प्रार्थना की। उसने "हे महाराज ! विचारसे क्या ? हम लोग युद्धको चाहने वाले है" ऐसा कहा। तब रावणने उसके सहकारी योद्धाओंकी व्यवस्था की। लडनेके लिए घोडों और हाथियोको सज्जितभी किया ॥ ८८ ॥ ८९ ॥**

**युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः ।
आनर्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशासिरे ॥ ९० ॥**

**अन्वयः**—स्यन्दनान् अश्वैः युयुजुः। पुरोहिताः देवान् ईजुः। ब्राह्मणान् आनर्चुः। आशिषश्च सम्यक् आशशासिरे ॥

**व्याख्या**—स्यन्दनान् = रथान्, अश्वैः =हयैः, युयुजुः = युक्ताश्चक्रुः सारथयः इति भावः। पुरोहिताः = पुरोधसः, राक्षसानामिति शेषः। देवान् = सुरान्, ईजुः= पूजितवन्तः, ब्राह्मणान्=विप्रान्, आनर्चुः = पूजितवन्तः, राक्षसा इति शेषः। अर्चितास्ते च ब्राह्मणाः—आशिषश्च = हिताऽऽशंसाश्च, सम्यक्=समीचीनं यथा तथा आशशासिरे=उदितवन्त इति भावः ॥

ॐव्युत्पत्तिॐ ईजुः="यज देवपूजासङ्गतिकरणदानेषु" इति धातोर्लिट्। "वचिस्वपियजादीना किति" इति सम्प्रसारणम्। आशिष="आङ शासु इच्छायाम्" इति धातो क्विप्। "आशास. क्वावुपधाया इत्व वाच्यम्" इतीत्वम्। "स्त्री त्वाशीर्हिताऽऽशसाऽहिदंष्ट्रयो" इत्यमर॥

ॐभाषाऽर्थॐ सारथियोंने रथोंको घोड़ोंसे युक्त किया। राक्षसपुरोहितोंने देवताओंकी पूजा की। राक्षसोंने ब्राह्मणोंका पूजन किया। पूजित उन ब्राह्मणोंने अच्छी तरहसे उन्हें आशीर्वाद दिया॥ ९०॥

ऊहिरे मूर्ध्नि सिद्धार्था गावश्चाऽऽलेभिरे भटैः।
प्रचुक्षुणुर्महास्त्राणि जिज्ञासाञ्चक्रिरे हयान्॥ ९१॥

अन्वयः—भटै मूर्ध्नि सिद्धार्था ऊहिरे, गावश्च आलेभिरे। महाऽस्त्राणि प्रचुक्षुणु, हयान् जिज्ञासाञ्चक्रिरे॥

व्याख्या—भटै=योधै, मूर्ध्नि=शिरसि, सिद्धार्था=सर्षपा, ऊहिरे=ऊढा, गावश्च=धेनवश्च, आलेभिरे=स्पृष्टा। महाऽस्त्राणि=बृहदायुधानि, प्रचुक्षुणु=तेजितवन्त, भटा इति शेष, एवमुत्तरवाक्येऽपि। हयान्=अश्वान् जिज्ञासाञ्चक्रिरे=ज्ञातुमिच्छा कृतवन्त, एते योद्धु क्षमा नो वेति॥

ॐव्युत्पत्तिॐ ऊहिरे=कर्मणि लिट्, एव परवाक्येऽपि। प्रचुक्षुणु=प्रपूर्वकात् "क्ष्णु तेजने" इति धातो कर्तरि लिट्। जिज्ञासाञ्चक्रिरे="ज्ञाश्रुस्मृदृशां सन." इत्यात्मनेपदित्वादनुप्रयोगेऽपि आत्मनेपदम्॥

ॐभाषाऽर्थॐ योद्धाओंने शिरमे सरसों को रक्खा और गायोंका स्पर्श किया, इसी तरह महाऽस्त्रोंको तीक्ष्ण किया और घोड़ों की परीक्षा की॥ ९१॥

युग्मम्—

ललु खड्गान् ममार्जुश्च ममृजुश्च परश्वधान्।
अलञ्चक्रे समालेभे ववसे बुभुजे पपे॥ ९२॥
जहसे च क्षण यानैर्निर्जग्मे योद्धृभिस्ततः।
विप्रान् प्रहस्त आनर्च जुहाव च विभावसुम्॥ ९३॥

अन्वयः—( भटा ) खड्गान् ललु, ममार्जुश्च, परश्वधान् ममृजुश्च। योद्धृभि अलञ्चक्रे, समालेभे, ववसे, बुभुजे, पपे, क्षण जहसे च, ततो यानै निर्जग्मे। प्रहस्तो विप्रान् आनर्च, विभावसु च जुहाव॥

अनुलेपन कृतमित्यर्थ । ववसे = आच्छादितं, बुभुजे = भुक्त, पपे = पीतं, क्षण = कश्चित्काल, जहसे च = हसित च । तत = अनन्तर, यानै = अश्वादिभि करणै, निर्जग्मे = निर्गतम् । प्रहस्त = रावणसचिव विप्रान् = ब्राह्मणान्, आनर्च = पूजितवान्, विभावसु च = अग्नि च, जुहाव = प्रीणितवान् ॥

❀व्युत्पत्ति❀ ललु.=“ला आदाने” इति धातोर्लिट् । ममार्जु =“मृजू शुद्धौ” इति धातोर्लिट् । “मृजेर्वृद्धि ” इति “क्ङित्यजादौ वेष्यते” इति वैकल्पिकी वृद्धिस्तदभावे ममृजु । अलञ्चक्रे = भावे लिट्, एव परत्राऽपि । ववसे =“वस आच्छादने” इति धातोर्लिट् । पपे=“पा पाने” इति धातोर्भावे लिट् । क्षण =“कालाऽध्वनोरत्यन्तसयोगे” इति द्वितीया । जुहाव=“हु दानाऽदानयो ” इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ योद्धाओंने खड्गोंको लिया, साफ किया, परशुओंको भी साफ किया । उन लोगोंने अलङ्कार धारण किया, अनुलेपन किया, वस्त्रधारण किया, खाना खाया, पान किया, कुछ समय तक हसी दिल्लगी भी की, तब वे यानों पर चढ़कर बाहर निकले । प्रहस्तने ब्राह्मणोंकी पूजा की, हवन भी किया ॥ ९२ ॥ ९३ ॥

सवर्गयाञ्चकाराप्तान् चन्दनेन लिलेप च ।
चचाम मधु मार्द्वीक त्वक्त्रं चाचकचे वरम् ॥ ९४ ॥

अन्वयः—( प्रहस्त ) आप्तान् सवर्गयाञ्चकार, चन्दनेन लिलेप मार्द्वीकं मधु चचाम, वर त्वक्त्र च आचकचे ॥

व्याख्या—आप्तान् = विश्वस्तान्, सवर्गयाञ्चकार = कटकादिप्रदानेन सभावितवान्, चन्दनेन = श्रीखण्डेन, लिलेप = लेपन कृतवान्, मार्द्वीकं=द्राक्षाविकारभूत, मधु = मद्य, चचाम = पीतवान्, वर = श्रेष्ठं, त्वक्त्र च = कवच च, आचकचे = बद्धवान् ॥

❀व्युत्पत्ति❀ आप्तान्=“आप्त प्रत्ययित समौ” इत्यमर. । संवर्गयाञ्चकार = सवर्ग करोतीति “तत्करोति तदाचष्टे” इति णिजन्ताल्लिट् । लिलेप=“लिपउपदेहे” इति धातोर्लिट् । मार्द्वीक = मृद्वीकाया विकार', “तस्य विकार” इत्यण्, “मृद्वीका गोस्तनीद्राक्षा” इत्यमरः । आचकचे=आङ्पूर्वकात् “कच बन्धने” इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ प्रहस्तने कटक आदि देकर विश्वासी जनोंकी प्रतिष्ठा की, शरीरमें चन्दनसे लेपन किया, अगूरकी मदिरा पी ली और श्रेष्ठ कवचको पहना भी ॥९४॥

उष्णीष मुमुचे चारु रथ च जुजुषे शुभम् ।
आललम्बे महाऽस्त्राणि गन्तु प्रववृते तत' ॥ ९५ ॥

अन्वय —( प्रहस्त ) चारु उष्णीष मुमुचे, शुभ रथं जुजुषे, महाऽस्त्राणि आललम्बे, ततो गन्तु प्रववृते ॥

व्याख्या—चारु=सुन्दरम् , उष्णीषं=शिरस्त्राण, मुमुचे = परिदधे, प्रहस्त इति शेष , एव परत्राऽपि । शुभं=शोभमान, रथं = स्यन्दन, जुजुषे = सेवितवान् , आरूढ इति भाव । महाऽस्त्राणि = बृहदायुधानि, आललम्बे=गृहीतवान्, तत =अनन्तर, गन्तु=यातुं प्रववृते = प्रवृत्त ॥

॥व्युत्पत्ति॥ उष्णीषम् = "उष्णीष शिरोवेष्टकिरीटयो" इत्यमर. । जुजुषे = "जुषी प्रीतिसेवनयो"' इति धातोर्लिट् । आललम्बे = आङ्पूर्वकात् "लबि अवस्रसने" इति धातोर्लिट् ॥

॥भाषाऽर्थ॥ प्रहस्तने सुन्दर मुकुटको धारण किया, सुन्दर रथपर आरोहण किया, बडे बडे अस्त्रोंको ले लिया और वह जानेके लिए प्रवृत्त हुआ ॥ ९५ ॥

आजघ्नुस्तूर्यजातानि तुष्टुवुश्चानुजीविन. ।
रजः प्रववृधे घोरं घोषश्च व्यानशे दिशः ॥ ९६ ॥

अन्वय —तूर्यजातानि आजघ्नु । अनुजीविनश्च तुष्टुवु । घोर रज प्रववृधे । घोषश्च दिशो व्यानशे

व्याख्या —तूर्यजातानि = वाद्यसमूहान् ,आजघ्नु = ताडितवन्त , वाद्यवादका इति शेष । अनुजीविनश्च = प्रहस्ताऽनुचराश्च, तुष्टुवु = "जय, जीवे' ति शब्दै· स्तुतिं चक्रु । घोरं = भयानक, रज = धूलि , प्रववृधे = प्रवृद्ध, घोषश्च = कोलाहलशब्दश्च, दिश = आशा , व्यानशे - व्याप्तवान् ॥

॥व्युत्पत्ति॥ आजघ्नु· = आङ्पूर्वकात् "हन हिंसागत्यो." इति धातोर्लिट् । सकर्मकत्वात् "आङो यमहन" इत्यात्मनेपदं न भवति । व्यानशे = विपूर्वात् "अशू व्याप्तौ सघाते च" इति धातोर्लिट् । "अत आदे" इति दीर्घत्वम् , "अश्नोतेश्चे"ति नुट् ॥

॥भाषाऽर्थ॥ बाजा बजाने वालोंने बाजाओंको बजाया । अनुचरोंने प्रहस्तकी स्तुति की । भयानक धूलि बढ़ गई । शब्दने दिशाओंको व्याप्त किया ॥ ९६ ॥

त यान्त दुद्रुवुर्गृध्रा· क्रव्यादश्च सिषेविरे ।
आववुर्वायवो घोरा· खादुल्काश्च प्रचक्षरुः ॥ ९७ ॥

अन्वय·—यान्तं त गृध्रा दुद्रुवु , क्रव्यादश्च सिषेविरे । घोरा वायव आववु । खात् उल्काश्च प्रचक्षरु ॥

व्याख्या—यान्त=गच्छन्त, समरायेति शेष । त = प्रहस्तं गृध्रा =दाक्षाय्या·, दुद्रुवु = गतवन्त , क्रव्यादश्च = शृगालादयश्च, सिषेविरे = सेवितवन्त । घोरा = भयङ्करा , पांसुवर्षिण इति भाव । वायव = वाता , आववु = समन्ताद्वान्ति स्म । खात् = आकाशात् , उल्काश्च = निर्गतज्वालाश्च, प्रचक्षरु = पतिता ॥

※व्युत्पत्ति※ आववु =आङ्पूर्वकात् "वा गतिगन्धनयो" इति धातोर्लिट्। उल्का स्यान्निर्गतज्वाला।" इत्यमर । प्रचचरुः - प्रपूर्वकात् "चर सञ्चलने" इति धातोर्लिट्। अकर्मकोऽयं धातु ॥

※भाषाऽर्थ※ प्रहस्तके जानेपर गीध भी गये, शृगाल आदियोंने सेवा की। भयानक वायु बहने लगे। आकाशसे उल्कायें गिर पड़ीं ॥ ९७ ॥

सस्यन्दे शोणितं व्योम रणाऽङ्गानि प्रजज्वलुः।
रथाः प्रचस्खलुः साऽश्वा न ररंहाश्वकुञ्जरम् ॥ ९८ ॥

अन्वयः—व्योम शोणित सस्यन्दे । रणाऽङ्गानि प्रजज्वलु । साऽश्वा रथाः प्रचस्खलु । अश्वकुञ्जर न ररंह ॥

व्याख्या—व्योम = आकाश कर्तृ, शोणित = रुधिर, सस्यन्दे = सिक्तवत् । रणाऽङ्गानि = खड्गादीनि, प्रजज्वलु = प्रज्वलितवन्ति । साश्वा = हयसहिता, रथा = स्यन्दना, प्रचस्खलु = स्खलितवन्तः। अश्वकुञ्जर = हयगज, न ररंह = न गतम् ॥

※व्युत्पत्ति※ सस्यन्दे = "स्यन्दू प्रस्रवणे" इति धातोर्लिट। अश्वकुञ्जरम् = अश्वाश्च कुञ्जराश्च, "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति सेनाङ्गत्वात्समाहारद्वन्द्वः॥

※भाषाऽर्थ※ आकाशने रुधिरसेचन किया। खड्ग आदि जलने लगे। घोड़ोंके साथ रथ फिसले। घोड़े और हाथी गतिहीन हो गये ॥ ९८ ॥

प्रतोदा जगलुर्वाममानञ्चुर्यज्ञिया मृगाः।
ददाल भूः पुपूरे द्यौः कपीनामपि निःस्वनैः ॥ ९९ ॥

अन्वयः—प्रतोदा जगलु । यज्ञिया मृगा वामम् आनञ्चु । भू ददाल । कपीना नि स्वनै अपि द्यौ पुपूरे ॥

व्याख्या—प्रतोदा = तोत्त्राणि, अश्वादिताडनदण्डा इति भाव । जगलु = गलिता, हस्तेभ्य स्वयं पतिता इति भाव । यज्ञिया॰ = यज्ञयोग्या, मृगा =पशव॰, कृष्णसारादय इति भाव । वामं = दक्षिणेतरभागम्, आनञ्चु = गता । भू = पृथिवी, ददाल = विदीर्णा "जज्वाले' ति पाठान्तर तस्य चचालेत्यर्थ । कपीना = वानराणा, नि स्वनैरपि = शब्दैरपि, द्यौ = आकाश, पुपूरे = पूर्णा प्रहस्तस्य रणभूमिगमनसमये तादृशमशुभ दृष्ट्वा वानरा हर्षशब्द चक्रुरिति भाव ॥

※व्युत्पत्ति※ जगलु = "गल अदने" इति धातोर्लिट्, धातोरनेकार्थत्वादिह पतने प्रयोग॰। यज्ञिया॰ = यज्ञमर्हन्तीति, "यज्ञर्त्विग्भ्यां घखञौ" इति घप्रत्ययः।

आनञ्चु = "अञ्चु गतिपूजनयो " इति धातोर्गतौ लिट् । "अत आदे " इति दीर्घत्वं, "तस्मान्नुड् द्विहल " इति नुट् ॥

❀भाषाऽर्थ❀ हाथोंसे चाबुक आपसे आप गिर पडे । यज्ञके योग्य कृष्णसार-मृगआदि पशु बाईं ओर चलने लगे । पृथिवी विदीर्ण हुई । वानरोंके शब्दोंसे भी आकाश पूर्ण हुआ ॥ ९९ ॥

मिमेह रक्तं हस्त्यश्व राक्षसाश्च नितिष्ठिवु ।
ततः शुशुभतु सेने निर्दयं च प्रजह्रतु ॥ १०० ॥

अन्वयः—हस्त्यश्व रक्त मिमेह । राक्षसाश्च रक्त नितिष्ठिवु । तत सेने शुशुभतु , निर्दय प्रजह्रतुश्च ॥

व्याख्या—हस्त्यश्वं = गजहयं, रक्तं = रुधिरं, मिमेह = मूत्रितवत् । राक्षसाश्च= यातुधानाश्च, रक्तं = रुधिरं, नितिष्ठिवु = निरस्तवन्त । तत = दुर्निमित्ताऽनन्तरं, सेने = वानरराक्षससैन्ये, शुशुभतु = शोभितवत्यौ, निर्दय = करुणारहितं यथा तथा, प्रजह्रतुश्च = प्रहृतवत्यौ च ॥

❀व्युत्पत्तिः❀ हस्त्यश्व = हस्तिनश्च अश्वाश्च, सेनाङ्गत्वात्समाहारद्वन्द्व । मिमेह = "मिह सेचने" इति धातोर्लिट् । नितिष्ठिवु =निपूर्वकात् "ष्ठिवु निरसने" इति धातोर्लिट् । शुशुभतु = "शुभ ( शुम्भ ) शोभाऽर्थे" इति तौदादिकधातोर्लिट् । निर्दयं= निर्गता दया यस्मिन्कर्मणि तद्यथा तथा ॥

❀भाषाऽर्थ❀ हाथी और घोडोंने रुधिरको पेशाब किया, राक्षसोंने भी रक्तको थूका । तब दोनों सेनाये (वानर और राक्षसोंकी) शोभित हुईं और निर्दयतापूर्वक परस्पर प्रहार करने लगी भी ॥ १०० ॥

दिद्विषुर्दुद्युवुश्चच्छुश्चक्लमुः सुषुपुर्हताः ।
चखादिरे चखादुश्च विलेपुश्च रणे भटाः ॥ १०१ ॥

अन्वयः—रणे भटा दिद्विषुः, दुद्युवुः, चच्छु , हता ( सन्त ) चक्लमुः, सुषुपु , चखादिरे, चखादु विलेपुश्च ॥

व्याख्या—रणे = सग्रामे, भटा = योद्धार , दिद्विषु = द्वेषं चक्रु , परस्पर-मिति शेष । दुद्युवु = अभिमुख जग्मु , चच्छु = छिन्नवन्त, हताः = आहताः सन्त , चक्लमु = मूर्च्छां प्राप्तवन्त । सुषुपु =भूमौ पतिता , चखादिरे=खादिता , चखादु = खादितवन्त , विलेपुश्च = विलाप कृतवन्तश्च ॥

❀व्युत्पत्ति❀ दिद्विषुः = "द्विष अप्रीतौ" इति धातोर्लिट् । दुद्युवु = "द्यु अभि-गमने" इति धातोर्लिट् । चच्छुः= "छो छेदने" इति धातोर्लिट् । सुषुपु = "ञिष्वपूशये"

इति धातोर्लिट् । वच्यादित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणम् । चखादिरे = "खादृभक्षणे" इति धातो कर्मणिलिट् । विलेपुः = "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्येत्वाऽभ्यासलोपौ । "विलाप परिदेवनम्" इत्यमर. ॥

※भाषाऽर्थ※युद्धमे योद्धाओंने परस्परमे द्वेष किया, सम्मुख गमन किया, छेदन किया। वे ताडित होते हुए मूर्च्छित हुए, जमीनपर गिर पडे, दूसरोंसे खाये गये और स्वयम् भी खाया एवम् उन्होंने विलाप भी किया ॥ १०१ ॥

प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा ।
वानरा कर्म सेनानी रक्षसा चक्षमे न तत् ॥ १०२ ॥

अन्वय.—वानरा प्रहस्तस्य पुर अमात्यान् जिहिंसु, तथा दधृषु । रक्षसा सेनानी तत् कर्म न चक्षमे ॥

व्याख्या—वानरा = कपय, प्रहस्तस्य = रावणसचिवस्य, पुर = अग्रत., अमात्यान् = मन्त्रिण, जिहिंसु = हतवन्त, तथा = तेन प्रकारेण, दधृषु=परिभूतवन्त । रक्षसा = राक्षसाना, सेनानी =सेनापति, प्रहस्त इति भाव• । तत्= पूर्वोक्तं, कर्म = वानरविक्रम न चक्षमे = न ममृषे ॥

※व्युत्पत्ति※ अमात्यान्=अमा ( सह ) वर्तन्त इति अमात्यास्तान्, "अव्ययात्त्यप्" इति "अमेहक्वतसित्रेभ्य एव" इति त्यप् । जिहिंसु ="हिसि हिसायाम्" इति धातोर्लिट् । दधृषु = "ञिधृषा प्रागल्भ्ये" इति धातोर्लिट् ॥

※भाषाऽर्थ※ वानरोंने प्रहस्तके सामने मन्त्रियोंको मार डाला और परिभूत किया । राक्षसोंके सेनापति प्रहस्तने वानरोंके उस कर्मका सहन नहीं किया ॥१०२॥

ऊर्णुनाव स शस्त्रौघैर्वानराणामनीकिनीम् ।
शशास च बहून् योधान् जीवितेन विवेच च ॥ १०३ ॥

अन्वय —स शस्त्रौघै वानराणाम् अनीकिनीम् ऊर्णुनाव, बहून् योधान् शशास, जीवितेन च विवेच ।

व्याख्या—स = प्रहस्त, शस्त्रौघै = आयुधसमूहै, वानराणा = कपीनाम्, अनीकिनी = सेनाम्, ऊर्णुनाव = आच्छादितवान्, बहून् = प्रचुरान्, योधान् = भटान्, शशास = जघान, जीवितेन च = जीवनेन च, विवेच = पृथक्कृतवान् ॥

※व्युत्पत्ति※ अनीकिनी = "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमू ।" इत्यमरः । ऊर्णुनाव="ऊर्णुञ् आच्छादने" इति धातोर्लिट् "ऊर्णोतेराम्नेति वाच्यम्" इति आम प्रतिषेध । शशास = "शसु हिसायाम्" इति धातोर्लिट् । जीवितेन = जीवित, तेन "नपुसके भावेक्त" इति क्तप्रत्ययः । विवेच="विचिर् पृथग्भावे" इति रौधादिकाद्धातोर्लिट् । "इर इत्सञ्ज्ञा वाच्या" इतीर इत्सञ्ज्ञा ॥

※भाषाऽर्थ※ प्रहस्तने शस्त्रसमूहोंसे वानरोंकी सेनाको आच्छादित किया, बहुतेरे योद्धाओंको आहत किया और जीवनसे अलग कर दिया ॥ १०३ ॥

आससञ्ज भय तेषा दिद्युते च यथा रविः ।
नाययास द्विषद्देहैर्जगाहे च दिशो दश ॥ १०४ ॥

अन्वयः—( प्रहस्त ) तेषा भयम् आससञ्ज, रवि यथा दिद्युते च, न आययास द्विषद्देहै दश दिश जगाहे च ॥

व्याख्या—तेषा = वानराणा, भयं = भीतिम् , आससञ्ज = आरोपितवान् , प्रहस्त इति शेष , एव परत्राऽपि । रवि॰ = सूर्य , यथा = इव, दिद्युते च = बभौ च, न आययास = आयास न प्राप । द्विषद्देहै = शत्रुशरीरै , दश = दशसंख्यका॰, दिश = आशा , जगाहे च = अवष्टब्धवांश्च ॥

※व्युत्पत्ति※ आससञ्ज = आङ्पूर्वकात् "षञ्ज सङ्गे" इत्यकर्मकाद्धातोर्लिट् । अत्राऽन्तर्भावितो णिजर्थ । दिद्युते = "द्युत दीप्तौ" इति धातोर्लिट् । "द्युतिस्वाप्योः सम्प्रसारणम्" इति अभ्यासस्य सम्प्रसारणम् । आययास = आङ्पूर्वकात् "यसु प्रयत्ने" इति धातोर्लिट् ॥

※भाषाऽर्थ※ प्रहस्तने वानरोंमे भय उत्पन्न किया, और वह सूर्यके तुल्य प्रकाशित हुआ । उसे कुछ भी आयास नही हुआ और उसने शत्रुओंके शरीरोंसे दशों दिशाओंको भर दिया ॥ १०४ ॥

केचित्सञ्चुकुटुर्भीता लेजिरेऽन्ये पराजिताः ।
सग्रामाद्बभ्रशुः केचिद्ययाचुश्चापरेऽभयम् ॥ १०५ ॥

अन्वयः—केचित् भीता ( सन्त ) सचुकुटु । अन्ये पराजिता ( सन्त ) लेजिरे । केचित् संग्रामात् बभ्रशु । अपरे अभय ययाचु ॥

व्याख्या—केचित् = वानरा , भीता = त्रस्ता सन्त , संचुकुटु संकुटिता॰, कौटिल्य प्रापुरित्यर्थ । अन्ये = अपरे, पराजिता = विजिता सन्त , लेजिरे = भर्त्सिता , प्रहस्तेनेति शेष । केचित् = वानरा , सग्रामात् = युद्धात् , बभ्रशु = पलायिता , अपरे = अन्ये, अभयम् = अभीति, ययाचु = याचितवन्त॰ । प्रहस्तमिति शेष ॥

※व्युत्पत्ति※ सचुकुटुः = सपूर्वकात् "कुट कौटिल्ये" इति धातोर्लिट् । लेजिरे = "लज ( लाजि ) भर्त्सने" इति धातोर्लिट् । बभ्रशु = "( भृशु ) भ्रशु अध पतने" इति धातोर्लिट् ॥

※भाषाऽर्थः※ भीत होकर कुछ वानरोंने कौटिल्यको प्राप्त किया। पराजित अन्य

वानरोंको प्रहस्तने भर्त्सन किया। कुछ वानर संग्रामस्थलसे भाग गये। कुछ और लोगोंने अभयप्रार्थना की ॥ १०५ ॥

एव विजिग्ये ता सेनां प्रहस्तोऽतिददर्प च ।
शशाम न च सक्रुद्धो निर्जुगोप निशाचरान् ॥ १०६ ॥

अन्वय.—प्रहस्त एव ता सेना विजिग्ये, अतिददर्प च, सक्रुद्ध ( सन् ) न च शशाम, निशाचरान् निर्जुगोप ॥

व्याख्या—प्रहस्त =रावणसेनापति , एव=उक्तप्रकारेण, ता = पूर्वोक्ता, सेना= वानरपृतना, विजिग्ये = विजितवान् , अतिददर्प च = सुष्टु हृष्टवाश्च, सक्रुद्ध = सकुपित सन् , न च शशाम = न च शमगत , निशाचरान् = राक्षसान् , स्वाऽनुयायिन इति भाव । निर्जुगोप=रक्षितवान् ॥

❀व्युत्पत्ति ❀ विजिग्ये=विपूर्वकात् "जि जये" इति धातोर्लिट् । "विपराभ्या जेः" इत्यात्मनेपदम् । "सन्लिटोर्जे" इति कुत्वम् । अतिददर्प=अत्युपसर्गपूर्वकात् "दृप हर्षविमोचनयो" इति धातोर्लिट् । निशाचरान्—निशासु चरन्तीति निशाचरास्तान्, "चरेष्ट" इति ट । निर्जुगोप = निरुपसर्गपूर्वकात "गुपू रक्षणे" इति धातोर्लिट् । "आयादय आर्धधातुके वा" इत्यायाभावपक्षे रूपम् ॥

❀भाषाऽर्थ ❀ प्रहस्तने इस प्रकारसे उस ( वानरोंकी ) सेनाको जीत लिया और वह अतिशय प्रसन्न हुआ, कुपित होकर शान्त नही हुआ और उसने राक्षसोंका संरक्षण किया ॥ १०६ ॥

चुक्रुधे तत्र नीलेन तरुश्चोच्चिक्षिपे महान् ।
प्रहस्तोभिहतस्तेन बाणान् विससृजे बहून् ॥ १०७ ॥

अन्वय.—तत्र नीलेन चुक्रुधे, महान् तरुश्च उच्चिक्षिपे । तेन अभिहत प्रहस्तो बहून् बाणन् विससृजे ॥

व्याख्या—तत्र = तस्मिन् , प्रहस्त इति भाव । नीलेन=तदाख्येन वानरसेनापतिना, चुक्रुधे = क्रुद्धं , महान्=विशाल , तरुश्च = वृक्षश्च, उच्चिक्षिपे=उत्क्षिप्त । तेन=महातरुणा, नीलेन वा, अभिहत = ताडित , प्रहस्त =राक्षससेनापति , बहून् = प्रचुरान् , बाणान्=शरान् , विससृजे=क्षिप्तवान् ॥

❀व्युत्पत्ति ❀ तत्र = "सप्तम्यास्त्रल् ।" इति त्रल् । चुक्रुधे = भावे लिट् । उच्चिक्षिपे = उत्पूर्वकात् "क्षिप प्रेरणे" इति धातो कर्मणि लिट् । विससृजे = विपूर्वकात् "सृज विसर्गे" इति दैवादिकाद्धातो कर्तरि लिट् ॥

❀भाषाऽर्थ ❀ प्रहस्तसे वानरसेनापति नील क्रुद्ध हुए, और उन्होंने बडे पेडको उठाया । उस पेडसे ताडित होकर प्रहस्तने भी बहुतसे बाणोंको छोडा ॥१०७॥

सेहे कपी रथाऽश्वांश्च रिपोस्ततर्ह शाखिना ।
धरित्रीं मुसली तेये प्रहस्तश्चिखिदे न च ॥ १०८ ॥

अन्वय - कपि सेहे, शाखिना रिपो रथाऽश्वाश्च ततर्ह। प्रहस्त•मुसली (सन्) धरित्री तेये, न च चिखिदे ॥

व्याख्या—कपि = वानर, नील इति भाव । सेहे = सोढवान्, प्रहस्तविसृष्टान् बाणानिति शेष । शाखिना=वृक्षेण, रिपो = शत्रो प्रहस्तस्य, रथाऽश्वाश्च = स्यन्दनहयाश्च, ततर्ह=हतवान् । प्रहस्त =रावणसेनापति, मुसली=गृहीतमुसल सन्, धरित्री=भूमिं, तेये=गत, न च चिखिदे = न च खिन्न ॥

ॐव्युत्पत्तिॐ सेहे = "षह मर्षणे" इति धातोर्लिट्। ततर्ह = "तृह (हिसि) हिंसायाम्" इति धातोर्लिट्। मुसली = मुसलमस्याऽस्तीति, "अत इनिठनौ" इतीनि । "सौ च" इति सौ दीर्घत्वम् । तेये = गत्यर्थात्तयधातोर्लिट्। चिखिदे = "खिद दैन्य" इति धातोर्लिट् ॥

ॐभाषाऽर्थ ॐ वानरसेनापति नीलने प्रहस्तसे छोडे गये बाणोंका सहन किया वृक्षसे शत्रुके रथ और घोडोंको नष्ट किया। प्रहस्त भी मुसल लेकर जमीनपर उतरा, खिन्न भी नहीं हुआ ॥ १०८ ॥

सदुधुक्षे तयो• कोपः पस्फाये शस्त्रलाघवम् ।
नुनोद शाखिन नील आवव्रे मुसली तरुम् ॥ १०९ ॥

अन्वय•—तयो कोप सदुधुक्षे, शस्त्रलाघव पस्फाये । नील शाखिनं नुनोद । मुसली तरुम् आवव्रे ॥

व्याख्या—तयो = नीलप्रहस्तयो, कोप = क्रोध, सदुधुक्षे = सम्प्रदीप्त, शस्त्रलाघवम् = अस्त्रप्रहारक्षिप्रता, पस्फाये = वृद्धिंगतम् । नील = वानरसेनापति, शाखिन = वृक्ष, नुनोद = प्रेरितवान् । मुसली = गृहीतमुसल, प्रहस्त इति भाव । तरु=वृक्षम्, आवव्रे=निवारितवान् ॥

ॐव्युत्पत्ति ॐ सदुधुक्षे = "धुक्ष (धिक्ष) सन्दीपनक्लेशनयो•" इति धातोर्लिट्। पस्फाये = "स्फायी (ओप्यायी) वृद्धौ" इति धातोर्लिट्। नुनोद = "णुद प्रेरणे" इति धातोर्लिट् । मुसली = मुसलमस्याऽस्तीति "अत इनिठनौ" इतीनि । "सौ च" इति सौ दीर्घत्वम् ॥

ॐभाषाऽर्थ.ॐ नील और प्रहस्तका कोप प्रदीप्त हुआ । आयुध प्रहार की शीघ्रता वृद्धिको प्राप्त हो गई । नीलने वृक्षको फेका । प्रहस्तने मुसल लेकर इसका निवारण किया ॥ १०९ ॥

वियत्यानभ्रतुर्भूमौ मण्डलानि विचेरतु: ।
प्रदुद्रुवतुरन्योन्यं वीरौ शश्रमतुर्न च ॥ ११० ॥

**अन्वय**—वीरौ वियति आनभ्रतु, भूमौ मण्डलानि विचेरतु, अन्योन्य प्रदुद्रुवतु:, न च शश्रमतु: ॥

**व्याख्या**—वीरौ = शूरौ, तौ नीलप्रहस्ताविति भाव । वियति=आकाशे, आनभ्रतु = गतौ, भूमौ = पृथिव्या, मण्डलानि = तिर्यग्भ्रमणानि, विचेरतु = आचरितवन्तौ, अन्योन्य = परस्पर, प्रदुद्रुवतु = गतौ, प्रहारकत्वेनेति भाव । न च शश्रमतु = न च श्रान्तौ ॥

**%व्युत्पत्ति%** वीरौ = "शूरो वीरश्च विक्रान्त" इत्यमर । वियति = वियतोऽधिकरणत्वेन विवक्षितत्वात्कर्मत्वाऽभावेन न द्वितीया । आनभ्रतु = "अभ्र गत्यर्थे" इति धातोर्लिट्, "अत आदेः" इति दीर्घत्वम् "तस्मान्नुड् द्विहल" इति नुट्। प्रदुद्रुवतु = प्रपूर्वकात् "(द्रु) द्रु गतौ" इति धातोर्लिट्। शश्रमतु = "श्रमु तपसि खेदे च" इति धातोर्लिट् ॥

**%भाषाऽर्थ%** वीर नील और प्रहस्त आकाश मे गये। उन्होंने पृथ्वीमे तिर्यग्भ्रमण किया। वे प्रहारकके तौर पर परस्पर को प्राप्त हुए परन्तु परिश्रान्त नहीं हुए११०

समीरयाञ्चकाराऽथ राक्षसस्य कपि: शिलाम् ।
क्षतस्तया ममारासावाशिश्राय च भूतलम् ॥ १११ ॥

**अन्वय**—अथ कपि राक्षसस्य शिला समीरयाञ्चकार। तया क्षत असौ ममार भूतलम् आशिश्राय च ॥

**व्याख्या**—अथ = अनन्तर, कपि = वानर, नील इत्यर्थ । राक्षसस्य = यातुधानस्य, प्रहस्तस्योपरीति भाव । शिला = पाषाण, समीरयाञ्चकार = क्षिप्तवान्। तया = शिलया, क्षत = ताडित, असौ = प्रहस्त, ममार = मृत भूतलं = धरणीतलम्, आशिश्राय च = आश्रितश्च, पतितश्चेति भाव ॥

**%व्युत्पत्ति%** समीरयाञ्चकार = सम्पूर्वकात् "ईर क्षेपे" इति चौरादिकात् उदात्तेतो धातोर्लिट्। ममार = "मृङ् प्राणत्यागे" इति धातोर्लिट्। आशिश्राय = आङ् पूर्वकात् "श्रिञ् सेवायाम्" इति धातोर्लिट् ॥

**%भाषाऽर्थ%** तब नीलने राक्षस प्रहस्तपर पत्थर फेका। उससे ताडित हो कर वह मर गया और जमीनपर गिर पडा ॥ १११ ॥

तुतुषुर्वानरा: सर्वे नेशुश्चित्रा निशाचरा: ।
जेरुराशा दशास्यस्य सैन्य नील नुनाव च ॥ ११२ ॥

अन्वय —सर्वे वानरा तुतुषु । चित्रा निशाचरा नेशु । दशास्यस्य आशा जेरु । सैन्यं नील नुनाव च ॥

व्याख्या—सर्वे = समस्ता , वानरा = कपय , तुतुषु = तुष्टा । चित्रा = नानाप्रकारा , निशाचरा = राक्षसा , नेशुः = नष्टा , पलायिता इति भाव । दशाऽऽस्यस्य = रावणस्य, आशा मनोरथा , जेरु = जीर्णा । सैन्य = सेना, नील=वानरसेनापति, नुनाव च = स्तुतवच्च ॥

ॐव्युत्पत्ति ॐ तुतुषु = "तुष प्रीतौ" इति धातोर्लिट्। नेशु = "णश अदर्शने" इति धातोर्लिट्। जेरु = "जॄष् ( झॄष् ) वयोहानौ" इति धातोर्लिट्। "वाजॄभ्रमुत्रसाम्" इत्येत्वाऽभ्यासलोपौ । नुनाव = "णु स्तुतौ" इति धातोर्लिट् ॥

ॐभाषाऽर्थ ॐ **सब वानर सन्तुष्ट हुए। अनेक प्रकारके राक्षस भाग गये। रावण के मनोरथ जीर्ण हो गये और वानरसेनाने नीलकी स्तुति भी की ॥ ११२ ॥**

**यदा न फेलुः क्षणदाचराणा मनोरथा रामबलाऽभियोगे ।**
**लङ्का तदा भेजुरुदीर्णदैन्या व्याचख्युरुच्चैश्च हतं प्रहस्तम् ॥ ११३ ॥**

अन्वय —रामबलाऽभियोगे क्षणादाचराणा मनोरथा यदा न फेलु तदा उदीर्णदैन्या लङ्का भेजु प्रहस्त हतम् उच्चै व्याचख्युश्च ॥

व्याख्या—रामबलाऽभियोगे = रामसैन्यसग्रामे, क्षणदाचराणा = निशाचराणा, राक्षसानामित्यर्थ । मनोरथा = अभिलाषा । यदा = यस्मिन्काले, न फेलु = न फलिता , प्रहस्तस्य हतत्वादिति भाव । तदा = तस्मिन्काले, उदीर्णदैन्याः = अतिशयदैन्ययुक्ता , ते क्षणदाचरा इति भाव । लङ्का=रावणनगरी भेजु = सेवितवन्त, प्रहस्त = राक्षससेनापतिं हत = मारित, नीलेनेति शेष. । उच्चै. = तारस्वरेण, व्याचख्युश्च = व्याख्यातवन्तश्च रावणायेति शेष ॥

ॐव्युत्पत्ति ॐ **क्षणदाचराणां क्षणदाया चरन्तीतिक्षणदाचरास्तेषा, "चरेष्ट" इति ट प्रत्यय। फेलु.= "फल निष्पत्तौ" इति धातोर्लिट्। उदीर्णदैन्या = उदीर्ण दैन्य येषा ते ॥**

ॐभाषाऽर्थ ॐ **रामचन्द्रजी की सेनाके साथ सग्राममें राक्षसोंके मनोरथ जब फलित नही हुए, तब बड़ी दीनतासे युक्त होकर वे राक्षस लङ्कामें पहुंचे और उन्हों ने "प्रहस्त मारा गया" ऐसा ऊचे स्वरसे रावण को कहा भी ॥ ११३ ॥**

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये चतुर्थे तिङन्तकाण्डे
लक्षणरूपे प्रथमः परिच्छेद तथा लक्ष्यरूपे कथानके
सर्वबन्धो नाम चतुर्दश. सर्ग. ।



## अथ पञ्चदशः सर्गः

राक्षसेन्द्रस्ततोऽभैषीदैक्षिष्ट परितः पुरम् ।
प्रातिष्ठिपच्च बोधाऽर्थं कुम्भकर्णस्य राक्षसान् ॥ १ ॥

इत प्रभृति लुङमधिकृत्य तद्विलसितमाह । तत्र "लुङ्" इति भूतसामान्ये लुङ् । ततोऽन्यत्राऽपि दर्शयिष्यति ।

अन्वय—ततो राक्षसेन्द्र अभैषीत्, परित ऐक्षिष्ट कुम्भकर्णस्य बोधाऽर्थं राक्षसान् प्रातिष्ठिपच्च ॥

व्याख्या—तत = प्रहस्तवधश्रवणाऽनन्तरं, राक्षसेन्द्र = रावण, अभैषीत् = भीत, एतादृग्विक्रान्तोऽपि हत इति मत्वेति भाव । पुरं = लङ्का, परित = सर्वत, ऐक्षिष्ट = दृष्टवान्, आत्मगोपनस्थानमिति शेष । कुम्भकर्णस्य = स्वमध्यमाऽनुजस्य, बोधाऽर्थं = प्रबोधनाऽर्थं राक्षसान् = यातुधानान्, प्रातिष्ठिपच्च = प्रस्थापितवांश्च ॥

**व्युत्पत्ति अभैषीत् = "ञिभी भये" इति धातोर्लुङ्, "सिचि वृद्धि· परस्मैपदेषु" इति वृद्धि । पुर = "परित" इति पदेन योगे "अभित परित समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । बोधाऽर्थ = बोधायेद यथा तथेति क्रियाविशेषणम् । प्रातिष्ठिपत् = णिजन्तात् प्रपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोर्लुङ् । चङ् परे णावुपधाह्रस्वाऽपवाद "तिष्ठतेरित्" इतीत्वम् । द्वित्वमभ्यासकार्यं, धातोरादेश षत्वं ष्टुत्व च ॥**

**भाषाऽर्थ· प्रहस्तवधको सुनने के अनन्तर राक्षसराज रावण डर गया, लङ्का के चारों ओर रक्षा के स्थान को देखने लगा, और उसने कुम्भकर्ण को जगाने के लिए राक्षसों को भेजा भी ॥ १ ॥**

तेऽभ्ययुर्भवनं तस्य सुप्तं चैक्षिषताथ तम् ।
व्याहार्षुस्तुमुलान् शब्दान् दण्डैश्चावधिषुद्रुतम् ॥ २ ॥

अन्वय—ते तस्य भवनम् अभ्ययु, अथ त सुप्त च ऐक्षिषत, तुमुलान् शब्दान् व्याहार्षु दण्डै द्रुतम् अवधिषुश्च ॥

व्याख्या—ते = राक्षसा, तस्य = कुम्भकर्णस्य, भवनं=निकेतनम्, अभ्ययु = गता, अथ = गमनाऽनन्तर, त = कुम्भकर्णं, सुप्त च=निद्राण च, ऐक्षिषत = दृष्टवन्त, तुमुलान् = महत, शब्दान् = ध्वनीन्, व्याहार्षु = व्याहृतवन्त, दण्डै = लगुडै, द्रुत=शीघ्रम् अवधिषुश्च=प्रहृतवन्तश्च ॥

❀व्युत्पत्ति❀ अभ्यगु =अभिपूर्वकात् "इण् गतौ" इति धातोर्लुङ "इणो गा लुङि" इति लुङि गाऽऽदेश "गातिस्थाघुपाभूभ्य सिच परस्मैपदेषु" इति सिचोलुक्, "उस्यपदान्तात्" इति पररूपत्वम् । व्याहार्षु =व्याङ्पूर्वकात् "हृञ् हरणे" इति धातोर्लुङ् । "सिचि वृद्धि परस्मैपदेषु" इति सिचि वृद्धि ॥

❀भाषाऽर्थ❀ रावणसे भेजे गये राक्षस कुम्भकर्णके भवनमे चले गये और उन्हों ने कुम्भकर्ण को सोते देखा । उन्होंने तुमुल शब्द किया और शीघ्रता पूर्वक जगाने के लिए दण्डोंसे कुम्भकर्ण पर प्रहार भी किया ॥ २ ॥

केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वचिक्रमन् ।
शीतैरभ्यषिचंस्तोयैरलातैश्चाऽप्यदम्भिषुः ॥ ३ ॥

**अन्वयः**—( ते ) तस्य केशान् अलुञ्चिषु , गात्रेषु गजान् अचिक्रमन् , शीतै तोयै अभ्यषिचन् , अलातै अदम्भिषुश्च ॥

**व्याख्या**—( ते=राक्षसा ) तस्य = कुम्भकर्णस्य, केशान्=शिरोरुहान् , अलुञ्चिषु = उत्पाटितवन्त , गात्रेषु = अङ्गेषु, तस्येति शेष । गजान् = हस्तिन , अचिक्रमन् = क्रमितवन्त , शीतै = शीतलै , तोयै = जलै , अभ्यषिचन् = अभिषिक्तवन्त , अलातै = उल्मुकै , अदम्भिषुश्च = दग्धवन्तश्च ॥

❀व्युत्पत्ति❀ अलुञ्चिषु = "लुञ्च अपनयने" इति धातोर्लुङ् । अचिक्रमन् = "क्रमु पादविक्षेपे" इति णिजन्ताद्धातोर्लुङ् । क्रमेर्मान्तत्वान्मित्संज्ञायां ह्रस्वत्वम् । चङि सन्वद्भावादभ्यासस्य "सन्यत" इति इत्वम् । अभ्यषिचन् = अभिपूर्वकात् "षिच क्षरणे" इति धातोर्लुङ् । "लिपिसिचिह्वश्च" इत्यङ् , "प्राक्सितादड्व्यवायेऽपि" इति षत्वम् । अदम्भिषु = "दम्भु दम्भने" इति धातोर्लुङ् । अनेकाऽर्थत्वाद्धातूनामत्राऽस्य दाहार्थकत्व ज्ञेयम् ॥

❀भाषाऽर्थ❀ राक्षसोंने कुम्भकर्णके केशों का उत्पाटन किया, शरीरमे हाथियों को चलाया, ठण्डे जलसे सेचन किया और जलती हुई लकडियोंसे जलाया भी ॥३॥

नखैरकर्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा ।
शितैरतौत्सु शूलैश्च भेरीश्चाऽवीवदन् शुभाः ॥ ४ ॥

**अन्वयः**—( ते ) तीक्ष्णै नखै अकर्तिषु , तथा तीक्ष्णै दशनै अदाङ्क्षु , शितै शूलै अतौत्सु शुभा भेरीश्च अवीवदन् ॥

**व्याख्या**—( ते = राक्षसा ) तीक्ष्णै = निशितै , नखै = नखरै , अकर्तिषु = छिन्नवन्त , कुम्भकर्णमिति शेष । एव परत्राऽपि । तथा = तेन प्रकारेण, तीक्ष्णै = निशितै , दशनै = दन्तै , अदाङ्क्षु = दष्टवन्त , शितै = तीक्ष्णै , शूलै = आयु-

वविशेषै , अतौत्सु = पीड़ितवन्त , शुभा = शोभना , भेरीश्च = आनकाश्च, अवीवदन् = वादितवन्त ॥

❀व्युत्पत्ति❀ अदाड्क्षु = अनिटो दशधातो. "वदव्रजहलन्तस्याऽच" इति वृद्धिः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशा ष" इति षत्वम् "षढो क सि" इति कत्वम्। अतौत्सु = "तुद व्यथने" इत्यनिटो धातो. पूर्वसूत्रेणैव वृद्धि' । अवीवदन् = णिजन्तात् "वद व्यक्ताया वाचि" इति धातोर्लुङ् । "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावादभ्यासस्य "सन्यत" इतीत्वम्, "दीर्घो लघो" इति दीर्घत्वम् । "अनीनदन्" इति मल्लिनाथ सम्मत पाठस्तस्य अनादयन्नित्यर्थ । उभयत्राऽप्युपधाह्रस्वत्वम् ॥

❀भाषाऽर्थ❀ राक्षसोंने कुम्भकर्ण को तीक्ष्ण नखोंसे फाडा उसी तरहसे तीक्ष्ण दांतोंसे नोच डाला, तीक्ष्ण शूलोंसे पीडित किया और सुन्दर भेरियों को भी बजाया ॥ ४ ॥

**स तान् नाऽजीगणत् सर्वानिच्छयाऽबुद्ध च स्वयम् ।**
**अबूबुधत कस्मान् मामप्राक्षीच्च निशाचरान् ॥ ५ ॥**

**अन्वय.**— स तान् सर्वान् न अजीगणत् स्वयम् इच्छया अबुद्ध च, "मा कस्मात् अबूबुधत" ( इति ) निशाचरान् अप्राक्षीच्च ॥

**व्याख्या**—स = कुम्भकर्ण , तान् = पूर्वोल्लिखितान् , सर्वान्=सकलान्, प्रबोधोपायानिति भाव न अजीगणत् = नो वेदितवानिति भाव । स्वयम् = आत्मना, इच्छया = वाञ्छया, अबुद्ध च = प्रबुद्धश्च, मा=कुम्भकर्ण, कस्मात्=कुत , हेतोरिति भाव । अबूबुधत = प्रबोधितवन्त , यूयमिति भाव । ( इति=एवम् ) निशाचरान्=राक्षसान् , अप्राक्षीच्च = पृष्टवाश्च ॥

❀व्युत्पत्ति❀ अजीगणत् = "गण सङ्ख्याने" इति स्वार्थिकणिजन्ताद्धातोर्लुङ् । अदन्तस्याऽभ्यासस्य "ई च गण" इतीत्वम् । अबुद्ध = "बुध अवगमने" इति धातोर्लुङ् । "दीपजनबुधे" त्यादिना चिणभावपक्षे रूपम् । "झलो झलि" इति सिचो लोप "झषस्तथोर्धोऽध" इति तस्य ध , जस्त्वम् । अबूबुधत = बुधेर्ण्यन्तस्य मध्यमपुरुष बहुवचने "णौ चङ्युपधाया ह्रस्व" इति ह्रस्वत्वम्, अभ्यासस्य "दीर्घो लघो" इति दीर्घत्व च । अप्राक्षीत् = "प्रच्छ ज्ञीप्सायाम्" इति धातोर्लुङ्, "वदव्रजहलन्तस्याऽच" इति वृद्धि "व्रश्चे" त्यादिना षत्व "षढो क सि" इति कत्व च ॥

❀भाषाऽर्थ❀ कुम्भकर्णने जगाने के उन सब उपायों को नही जाना, वह स्वयम् इच्छासे जागा । उसने "तुम लोगोने मुझे क्यों जगाया ?" इस प्रकारसे राक्षसोंसे पूछा भी ॥ ५ ॥

तेऽभाषिषत राजा त्वा दिदृक्षुः क्षणदाचर ! ।
सोऽस्नासीद्व्यलिपन्मासमप्सासीद्वारुणीमपात् ॥ ६ ॥

**अन्वयः**—ते "हे क्षणदाचर ! राजा त्वा दिदृक्षुः" ( इति ) अभाषिषत । स अस्नासीत्, व्यलिपत्, मासम् अप्सासीत्, वारुणीम् अपात् ॥

**व्याख्या**—ते = राक्षसाः, कुम्भकर्णपृष्टा इति भावः । हे क्षणदाचर = हे राक्षस !, राजा = रावणः, त्वा = भवन्तं दिदृक्षुः = द्रष्टुमिच्छुः, अस्तीति शेषः । ( इति = एवम् ) अभाषिषत = भाषितवन्तः । सः = कुम्भकर्णः, अस्नासीत् = स्नातवान्, व्यलिपत् = समालिप्तवान्, चन्दनादिकेनेति शेषः । मासं = पललम्, अप्सासीत् = भक्षितवान्, वारुणीं = मदिराम्, अपात् = पीतवान् ॥

**॥व्युत्पत्तिः॥** क्षणदाचर = क्षणं ददातीति क्षणदा, "निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।" इत्यमरः । क्षणदाया चरतीति क्षणदाचरस्तत्सम्बुद्धौ । "चरेष्टः" इति टप्रत्ययः । त्वा = दिदृक्षुरिति कृदन्तपदेन योगे "कर्तृकर्मणोः कृतिः" इति प्राप्तायाः कारकषष्ठ्या "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति निषेधः । दिदृक्षुः = "सनाशंसभिक्ष उः" इति उप्रत्ययः । अभाषिषत = "भाष व्यक्तायां वाचि" इति धातोर्लुङ् अस्नासीत् = "ष्णा शौचे" इति धातोर्लुङ् "यमरमनमातां सक् चे"ति सगिटौ । व्यलिपत् = विपूर्वकात् "लिप उपदेहे" इति धातोर्लुङ् । "लिपिसिचिह्वश्चे"ति सूत्रेण अङ् । अप्सासीत् = "प्सा भक्षणे" इति धातोर्लुङ्, पूर्ववत्सगिटौ । अपात् = "पा पाने" इति धातोर्लुङ् "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक् ॥

**॥भाषाऽर्थ॥** राक्षसोंने "हे राक्षस ( कुम्भकर्ण ) ! महाराज रावण आपको देखना चाहते हैं" ऐसा कहा । तब कुम्भकर्णने स्नान किया, चन्दनादिका लेपन किया मांस खाया और मदिरापानभी कर लिया ॥ ६ ॥

न्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतद्गृहात् ।
राजाऽऽयान्तं तमद्राक्षीदुदस्थाच्चेषदासनात् ॥ ७ ॥

**अन्वयः**—ततः ( सः ) रावणं द्रष्टुं न्यवसिष्ट, गृहात् प्रावृतत् । राजा आयान्तं तम् अद्राक्षीत् आसनात् ईषत् उदस्थाच्च ॥

**व्याख्या**—ततः = स्नानाद्यनन्तरं, रावणं = स्वाऽग्रजं, द्रष्टुं = विलोकयितुं, न्यवसिष्ट = परिहितवान्, राजदर्शनयोग्यं वस्त्रमिति भावः, कुम्भकर्ण इति शेषः, एवमुत्तरवाक्येऽपि । गृहात् = स्वभवनात्, प्रावृतत् = प्रवृत्तः । राजा = भूपः, रावण इत्यर्थः । आयान्तम् = आगच्छन्तं, तं = कुम्भकर्णम्, अद्राक्षीत् = दृष्टवान्, आसनात् = सिंहासनात्, ईषत् = स्तोकम्, उदस्थाच्च = उत्थितश्च ॥

※व्युत्पत्तिः※ न्यवसिष्ट=निपूर्वकात् "वस आच्छादने" इति धातोर्लुङ्। प्रावृतत्=प्रपूर्वकात् "वृतु वर्तने" इति धातोर्लुङ् "द्युद्भ्यो लुङि" इति परस्मैपदम्, "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" इत्यङ्। अद्राक्षीत्="दृशिर् प्रेक्षणे" इति धातोर्लुङ्, "सृजिदृशोर्झल्यमकिति" इत्यम्, हलन्तलक्षणा वृद्धिश्च। "इरितो वा" इति अङ्पक्षे अदर्शत्। उदस्थात्=उत्पूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोर्लुङ्। "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक्, ऊर्ध्वकर्मकत्वात् "उदोऽनूर्ध्वकर्मणि" इत्यात्मनेपदं न ॥

※भाषाऽर्थ※ तब कुम्भकर्णने रावणका दर्शन करनेके लिए कपडा पहना। वह भवनसे निकला। राजा रावण आते हुए उसको देखकर आसनसे कुछ उठा ॥७॥

अतुषत्पीठमासन्ने निरदिक्षच्च काञ्चनम्।
अस्मेष्ट कुम्भकर्णोऽल्पमुपाविक्षदथाऽन्तिके ॥ ८ ॥

अन्वय —( राजा ) अतुषत्, आसन्ने काञ्चनं पीठं निरदिक्षच्च। कुम्भकर्णः अल्पम् अस्मेष्ट, अथ अन्तिके उपाविक्षत् ॥

व्याख्या—अतुषत्=तुष्टः, राजेति शेषः आसन्ने=समीपे, काञ्चनं=सौवर्णं, पीठम्=आसनं, निरदिक्षद्=आदिष्टवान्, कुम्भकर्णः=रावणमध्यमाऽनुजः, अल्पम्=ईषत् अस्मेष्ट=हसितवान्, अथ=अनन्तरम, अन्तिके=समीपे, उपाविक्षत्=उपविष्टः ॥

※व्युत्पत्तिः※ अतुषत्="तुष प्रीतौ" इति धातोर्लुङ्, पुषादित्वादङ्। निरदिक्षत्=निरुपसर्गपूर्वकात् "दिश अतिसर्जने" इति धातोर्लुङ् "शल इगुपधादनिटः क्सः" इति क्सः। अस्मेष्ट="स्मिङ् ईषद्धसने" इति धातोर्लुङ्। उपाविक्षत्=उपपूर्वकात् "विश प्रवेशने" इति धातोर्लुङ्, पूर्ववत् क्सः ॥

※भाषाऽर्थ※ रावण प्रसन्न हुआ और उसने कुम्भकर्णको बैठनेके लिए सुवर्णमय आसनका निर्देश किया। कुम्भकर्ण कुछ हसा और रावणके निकट बैठ गया ॥८॥

अवादीन् मां किमित्याह्वो राज्ञा च प्रत्यवादि सः।
मा ज्ञासीस्त्वं सुखी रामो यदकार्षीत्स रक्षसाम् ॥ ९ ॥

अन्वय.—"मा किमिति आह्वः" ( इति ) कुम्भकर्णः अवादीत्। राज्ञा सः प्रत्यवादि—"त्वं सुखी, स रामो रक्षसां यत् अकार्षीत्, ( तत् ) मा ज्ञासीः ॥

व्याख्या—मा=कुम्भकर्णं, किमिति=कस्मात्कारणात्, आह्वः=आहूतवान्, त्वमिति शेषः। ( इति=एवं, ) कुम्भकर्णः=रावणमध्यमभ्राता ) अवादीत्=उक्तवान्। राज्ञा=रावणेन, सः=कुम्भकर्णः, प्रत्यवादि=प्रत्युक्तः। त्वं=कुम्भकर्णः, सुखी=सुखोपेतः, सः=जनप्रसिद्धः, रामः=रामचन्द्रः, रक्षसां=राक्षसानां, यत्=दशाऽन्तरम्,

अकार्षीत्=कृतवान् ( तन् = दशान्तरम् ) ( त्वं=कुम्भकर्ण ) मा ज्ञासी =न ज्ञातवान्, स्वकुलदीनदशाया अज्ञानात्त्व सुखीति तात्पर्यम् ॥

ॐव्युत्पत्ति ॐ आह्व = आङ्पूर्वकात् "ह्वेञ् स्पर्धाया शब्दे चे"ति धातोर्लुङ्। "लिपिसिचिह्वश्चे""त्यङ्। "आतो लोप इटि चे" त्यातो लोप। अवादीत्="वद व्यक्ताया वाचि" इति धातोर्लुङ् "वदव्रजहलन्तस्याऽच" इति वृद्धि। प्रत्यवादि = प्रतिपूर्वाद्वदधातो कर्मणि लुङ्, "चिण् भावकर्मणो" इति चिण् "चिणो लुक्" इति तलोप। अकार्षीत्="डुकृञ् करणे" इति धातोर्लुङ्, "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि। ज्ञासी = माङि उपपदे "ज्ञा अवबोधने" इति धातो "माङि लुङ्" इति लुङ् "न माङ्योगे" इत्यडागमनिषेध। "यमरमनमाता सक् च" इति सगिटौ ॥

ॐभाषाऽर्थ ॐ "आपने मुझको क्यों बुलाया ?" कुम्भकर्णने रावणको ऐसा कहा। राजा रावणने उसे उत्तर दिया—"तुम सुखी हो, जो कि प्रसिद्ध रामने राक्षसोंकी जो अवस्थाकी, उसे नही जानते हो ॥ ९ ॥

उदतारीदुदन्वन्तं पुर न परितोऽरुधत्।
व्यद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम् ॥ १० ॥

अन्वय:—( राम ) उदन्वन्तम् उदतारीत्, न पुर परित अरुधत्, रणे शस्त्रै व्यद्योतिष्ट, राक्षसान् क्षयम् अनैषीत् ॥

व्याख्या—उदन्वन्तं = समुद्रम्, उदतारीत् = उत्तीर्ण, राम इति शेष। एवं परत्राऽपि न =अस्माक, पुर = नगरी, परित = सर्वत, अरुधत् = रुद्धवान्, रणे=युद्धे, शस्त्रै =आयुधै, व्यद्योतिष्ट=विद्योतितवान्, राक्षसान्=यातुधानान्, क्षय= नाशम्, अनैषीत्=नीतवान् ॥

ॐव्युत्पत्ति ॐ उदन्वन्तम् = उदकानि सन्त्यस्मिन्निति उदन्वान्, तम्। "उदन्वानुदधौ चे"ति मत्वन्तो निपातित। "उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णव।" इत्यमर। उदतारीत्=उत्पूर्वकात् 'तॄ प्लवनसन्तरणयो" इति धातोर्लुङ् "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि। पुर = "परित" इति पदेन योगे "अभित परित समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया। अरुधत् = "रुधिर् आवरणे" इति धातोर्लुङ्। "इरितो वा" इति च्लेरङ्। व्यद्योतिष्ट=विपूर्वकात् "द्युत दीप्तौ" इति धातोर्लुङ्। "द्युद्भ्यो लुङि"ति विकल्पेन परस्मैपदविधानात् पक्षे तदभाव। राक्षसान् = नीधातो प्रधान कर्म। क्षयम् = अप्रधान कर्म अनैषीत्="णीञ् प्रापण" इति धातोर्लुङ्, सिचि वृद्धि ॥

ॐभाषाऽर्थ ॐ रामने समुद्रतरण किया, हमारे शहरको चारों ओर रुद्ध किया। वह युद्धमें शस्त्रोंसे प्रकाशमान हुआ। उसने राक्षसोंको नष्ट कर दिया ॥ १० ॥

न प्रावोचमहं किञ्चित्प्रियं यावदजीविषम् ।
बन्धुस्त्वमर्चितः स्नेहान् मा द्विषो न वधीर्मम ॥ ११ ॥

**अन्वय.**—यावत् अहम् अजीविष ( तावत् ) किञ्चित् प्रिय न प्रावोचम् । स्नेहात् अर्चितो बन्धु त्व मम द्विषो मा न वधी ॥

**व्याख्या**— हे भ्रात ) यावत्=यत्काल यावत्, अह=रावण , अजीविष= जीवितवान्, परैरनाक्रान्तत्वेनेति शेष । ( तावत्=तत्काल यावत् ) किञ्चित्=किमपि, प्रियम् = अभीष्ट, प्रार्थनारूपेणेति शेष । न प्रावोच=न प्रोक्तवान् । किन्तु स्नेहात्= प्रेम्णा, अर्चित =पूजित , सत्कृत इति भाव । बन्धु =भ्राता, त्व=कुम्भकर्ण , मम= रावणस्य, द्विष =शत्रून् , रामादीनिति भाव । मा न वधी =मा न मारय, किन्तु मारयेति तात्पर्यम् ॥

**॥ व्युत्पत्ति ॥** अजीविष="जीव प्राणधारणे" इति धातोर्लुङ् । प्रियम्="अभीष्टेऽभीप्सित हृद्य दयित वल्लभ प्रियम् ।" इत्यमर । प्रावोच="ब्रूञ् व्यक्तायां वाचि" इति धातोर्लुङ्, आर्धधातुकाऽधिकारे "ब्रुवो वचि" इतिवच्यादेश "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यङ् "वच उम्" इत्युम् । मा वधीः=माङि उपपदे हनधातोर्लुङ् "लुङि चे"ति हनो वधादेश ॥

**॥ भाषाऽर्थः ॥** ( हे भाई ! ) जब तक मै ( शत्रुसे अनाक्रान्त हो ) जीता रहा तब तक मैने किसी भी अभीष्ट विषयकी प्रार्थना नही की । स्नेहसे सत्कृत बन्धु तुम मेरे शत्रुओंको नही मारो यह नही ( बल्कि मार डालो ) ॥ ११ ॥

वीर्य मा न दर्दशस्त्व मा न त्रास्था. क्षता पुरम् ।
तवाऽद्राक्ष्म वय वीर्य त्वमजैषी पुरा सुरान् ॥ १२ ॥

**अन्वय**—( हे भ्रात ! ) त्वं वीर्य मा न ददर्श , क्षता पुर मा न त्रास्था । वय तव वीर्यम् अद्राक्ष्म । पुरा त्वं सुरान् अजैषी " ॥

**व्याख्या**—( हे भ्रात ) त्व = कुम्भकर्ण , वीर्यं = पराक्रमं, मा न ददर्श = नो दर्शय ( इति ) न, किन्तु दर्शय, क्षता=शत्रुपीडिता, पुर=नगरी, लङ्कामिति भाव । मा न त्रास्था =नो त्रायस्व ( इति ) न, किन्तु त्रायस्व । वयं=रावणादयो राक्षसा , तव = भवत , वीर्य = पराक्रमम् , अद्राक्ष्म = दृष्टवन्त । पुरा = प्राक् , त्व = कुम्भकर्ण , सुरान् = देवान्, अजैषी = जितवानसि ॥

**॥ व्युत्पत्ति ॥** मा ददर्श =माङि उपपदे ण्यन्तस्य दृशधातो "माङि लुङ्" चङि सिपि रूपम् । सन्वद्भावाभावान्नसनीव कार्यम् । मा त्रास्था =माङि उपपदे "त्रैङ् पालने" इति धातो लुंङ् । अद्राक्ष्म=दृशधातोर्लुङ्, "शल इगुपधादनिटः क्स"

इति प्राप्तस्य च्ले क्सादेशस्य "न दृश" इति निषेध । "इरितो वा" इति विकल्पेनाङ्विधानात्तदभावपक्षे रूपम् । अजैषीः=जिधातोर्लुङ्, "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धि ॥

ॐभाषाऽर्थ ॐ हे भाई ! तुम पराक्रम मत दिखाओ यह नहीं (बल्कि दिखाओ), शत्रुओंसे पीडित लङ्काकी रक्षा मत करो यह नहीं ( बल्कि करो )। हम लोग तुम्हारे पराक्रमको देख चुके है। पहले तुमने देवताओंको पराजित किया था ॥१२॥

अवोचत्कुम्भकर्णस्त वयं मन्त्रेऽभ्यधाम यत् ।
न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमत् ॥ १३ ॥

अन्वय.—कुम्भकर्ण तम् अवोचत्—"वय मन्त्रे यत् अभ्यधाम, त्व तत् सर्वं न अश्रौषी, तस्य इद फलम् आगमत् ॥

व्याख्या—कुम्भकर्ण = रावणमध्यमाऽनुज, त = रावणम, अवोचत् = उक्तवान्, वय = नीतिज्ञा, मन्त्रे = मन्त्रसमये, यत् = वचन "क्रियासमारम्भगतोऽभ्युपाय" ( १२-६२ ) इत्यादिवाक्यकदम्बरूपमिति भाव । अभ्यधाम=अभिहितवन्त, त्व = रावण, तत् = पूर्वाऽभिहितं, सर्वं = सकल, वचनमिति भाव॰, न अश्रौषी =न श्रुतवानसि, तस्य = अश्रवणस्य, इद=सन्निहित, फल = विनाशरूपम्, आगमत् = आगतम् ॥

ॐव्युत्पत्ति ॐ अभ्यधाम = अभिपूर्वकात् "डुधाञ् धारणपोषणयो" इति धातोर्लुङ् । "गातिस्थाघुपाभूभ्य सिच॰ परस्मैपदेषु" इति सिचो लुक् । अश्रौषीः = "श्रु श्रवणे" इति धातोर्लुङ् "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि । आगमत् = आङ्पूर्वकात् "गम्लृ गतौ" इति धातोर्लुङ् । लृदित्त्वात् "पुषादिद्युताद्यॢृदित परस्मैपदेषु" इत्यङ् ॥

ॐभाषाऽर्थ ॐ कुम्भकर्णने रावणको कहा—"हमने परामर्शकालमें जो कहा था, आपने वह सब नहीं सुना । उसका यह फल आ गया ॥ १३ ॥

प्राज्ञवाक्यान्यवामस्था मूर्खवाक्येष्ववास्थिथा॰ ।
अध्यगीष्ठाश्च शास्त्राणि प्रत्यपत्था हितं न च ॥ १४ ॥

अन्वय.—( त्वम् ) प्राज्ञवाक्यानि अवामस्था॰, मूर्खवाक्येषु अवास्थिथा॰; शास्त्राणि अध्यगीष्ठा हितं च न प्रत्यपत्था ॥

व्याख्या = प्राज्ञवाक्यानि = विद्वद्वचनानि, विभीषणादिवाक्यानीति भाव । अवामंस्था = अवज्ञातवानसि त्वमिति शेष, एवमुत्तरवाक्येष्वपि । मूर्खवाक्येषु= अज्ञवचनेषु, प्रहस्तादिवाक्येष्विति भाव॰ । अवास्थिथा॰=अवस्थितोऽसि । शास्त्राणि=

नीतिशास्त्राणि, अध्यगीष्ठा = अधीतवानसि, पर हितच = पथ्यं च, न प्रत्यपत्थाः = न ज्ञातवानसि वा नो प्रतिपन्नवानसि ॥

❀व्युत्पत्ति❀ प्राज्ञवाक्यानि = प्रज्ञाऽस्ति एषां ते प्राज्ञा, "प्रज्ञाश्रद्धाऽर्चाभ्योण" इति ण । "धीरोमनीषीज्ञ प्राज्ञ सख्यावान्पण्डित कवि ।" इत्यमर । प्राज्ञाना वाक्यानि, तानि । अवामस्था = अवपूर्वकात् "मन ज्ञाने" इति धातोर्लुङ् । अवास्थिथा = अवपूर्वकात् स्थाधातोर्लुङ् । "समवप्रविभ्य स्थ" इत्यात्मनेपदम् । "स्थाध्वोरिच्च" इतीत्व सिच किरव च । अध्यगीष्ठा = अधिपूर्वात् "इङ् अध्ययने" इति धातोर्लुङ् "विभाषा लुङ्लृङो" इति इङो गाङादेशः । प्रत्यपत्था = प्रतिपूर्वकात् "पद गतौ" इति धातोर्लुङ् "झलो झलि" इति सिचो लोप ॥

❀भाषाऽर्थ❀ आपने बुद्धिमानोंके वाक्योंका अपमान किया और मूर्खोंके वाक्योंमे अवस्थिति की । आपने शास्त्रोंका अध्ययन किया परन्तु अपना हित नहीं जाना ॥ १४ ॥

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन् ।
अभाणीन्माल्यवान् युक्तमक्षस्थास्त्वं न तन् मदात् ॥ १५ ॥

अन्वय.—ये विग्रहम् अचीकरन् ( ते ) मूर्खा त्वाम् अववञ्चन्त । माल्यवान् युक्तम् अभाणीत्, त्वं मदात् तम् न अक्षस्था ॥

व्याख्या—ये = प्रहस्ताऽऽदय , विग्रह = सग्रामम् , अचीकरन् = कारितवन्त , भवन्तमिति शेष० । ते मूर्खा = मूढा , त्वा = भवन्तम् , अववञ्चन्त = वञ्चितवन्त । माल्यवान् = मातामह , युक्तम् = उचितम् , अभाणीत = भणितवान् । त्व = रावण , मदात् = गर्वात् , तत् = माल्यवदुक्त वचन, न अक्षंस्था = न सोढवानसि ॥

❀व्युत्पत्ति❀ अचीकरन् = णिजन्तात् कृञ्धातोर्लुङ् । अववञ्चन्त = ण्यन्तात् "वञ्चू प्रलम्भने" इति धातोर्लुङ् । "गृधिवञ्च्यो॰ प्रलम्भने" इति आत्मनेपदम् । अभाणीत् = "भण शब्दे" इति धातोर्लुङ् "इट ईटि" इति सिचो लोप० । अक्षस्था = "क्षमूष् सहने" इति धातोर्लुङ् ॥

❀भाषाऽर्थ❀ जिन्होंने आपसे युद्ध करवाया उन मूर्खोंने आपको प्रतारित किया । मातामह माल्यवान्‌ने उचित कहा था, परन्तु आपने मदसे उनके वाक्यका सहन नहीं किया ॥ १५ ॥

राघवस्याऽमुसः कान्तामाप्तैरुक्तो न चाऽर्पिपः ।
मा नाऽनुभू. स्वकान् दोषान् मा मुहो मा रुषोऽधुना ॥ १६ ॥

अन्वयः—राघवस्य कान्ताम् अमुस, आप्तैः उक्तश्च न आपिप स्वकान् दोषान् मा अनुभू ( इति ) न । अधुना मा मुह॰, मा रुष ॥

**व्याख्या**—प्रमादित्वमपि तेऽस्तीति प्रतिपादयति—राघवस्य = रामस्य, कान्ता = प्रिया, सीतामिति भाव । अमुस = खण्डितवानसि, इदमेव खण्डन यत्पत्या रामेण वियोजनम् । आप्तै =विश्वस्तै , विभीषणादिभिरिति भाव । उक्तश्च= अभिहितोऽपि, ''प्रत्यर्प्यताम्'' इतीति शेष । न आर्पिप = न अर्पितवानसि, स्वकान् = आत्मीयान्, दोषान् = दूषणानि, दुश्चरितानीति भाव । मा अनुभू = नो अनुभव, ( इति ) न, अपि त्वनुभव । अधुना = सम्प्रति, मा मुह = मोहं मा गम , मा रुष = रोष मा कार्षी , गतशोचनं विहाय धैर्यं धारयेति भाव ॥

**॥व्युत्पत्ति॥ अमुस॰ = "मुस खण्डने" इति धातोर्लुङ्, पुषादित्वादङ् । आत्रे॰ यस्तु" कातन्त्रे मूर्धन्यान्तोऽयम् । तथा च "राघवस्याऽमुष. कान्ताम्" इति भट्टिकाव्ये प्रयोगश्चेति" पाठान्तरमप्याह । आप्तै॰="आप्त॰ प्रत्ययित. समौ" इत्यमर । आर्पिप ="ऋ गतौ" इति धातोर्णौ लुङि "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्याता पुङ् णौ" इति पुक्, गुण । चङि "द्विर्वचनेऽचि" इति स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति पिशब्दस्य द्वित्वम् । रेफस्य तु "न न्द्रा सयोगादय" इति द्वित्वनिषेध॰ । मा अनुभू =माङि उपपदे "माङि लुङ्" इति लुङ् । "न माङ्योगे" इत्यडागम निषेध "गातिस्थाघुपाभूभ्य सिच परस्मैपदेषु" इति सिचो लुक् । मा मुह =माङि उपपदे "मुह वैचित्त्ये" इति धातो , तथा मा रुष॰ = "रुष ( रिष ) हिसायाम्" इति धातो "माङि लुङ् । "न माङ्योगे" इत्यडागमनिषेध । उभयत्राऽपि पुषादित्वादङ् ॥**

**॥भाषाऽर्थ॥ आपने रामचन्द्रकी पत्नीका हरण किया, विश्वस्त विभीषण आदियोंसे कहे जाने पर भी नही लौटाया। अपने दोषोंका अनुभव नही किया यह नही ( बल्कि किया ) । अभी आप मोह और क्रोध मत करे ॥ १६ ॥**

**तस्याऽप्यत्यक्रमीत्कालो यत्तदाऽहमवादिषम् ।**
**अघानिषत रक्षांसि परै॰ कोशास्त्वमव्ययीः ॥ १७ ॥**

**अन्वयः**—अह तदा यत् अवादिष, तस्याऽपि काल अत्यक्रमीत् । परै रक्षासि अघानिषत, त्वं कोशान् अव्ययी ॥

**व्याख्या**—अह = कुम्भकर्ण , तदा = तस्मिन्काले, मन्त्रणासमय इति भाव । यत् = वचनम् , ''रामेण सह सन्धि क्रियताम्' इत्याकारकमिति भाव । अवादिषम् = उक्तवानस्मि, तस्याऽपि = तद्वचनस्याऽपि, काल = समय , सन्धिसमर्य इति भाव , अत्यक्रमीत् = अतिक्रान्त यत् परै = शत्रुभि , रक्षांसि = राक्षसा , अघानिषत = हतानि, त्व=रावण , कोशान् = कोशस्थद्रव्याणि, अव्ययी = त्यक्तवानसि, लङ्कादाहे कोशस्याऽरक्षितत्वादिति भाव ॥

**॥व्युत्पत्ति॥ अत्यक्रमीत् = अतिपूर्वकात् "क्रमु पादविक्षेपे" इति धातोर्लुङ ।**

"स्नुक्रमोरनात्मनेपदनिमित्ते" इतीट् । मान्तत्वाद्वृद्धिप्रतिषेधः । अघानिषत = हन-धातो कर्मणि लुङ् । "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इति चिण्वद्भावाद्वृद्धिवत्वे । अव्ययी = "व्यय वित्तसमुत्सर्गे" इति चौरादिकाद्धातोर्लुङ् "आधृषाद्वा" इति णिजभावपक्षे रूपम् । "ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्" इति वृद्धिप्रतिषेधः । धातूनामनेकार्थत्वात् "व्ययगतौ" इति धातोर्वा रूपम् ॥

॥भाषाऽर्थ॥ मैंने उस समय जो कहा था, उसका समय ( सन्धिकाल ) भी बीत चुका, क्यों कि शत्रुओंने राक्षसोंको मार डाला और आप कोशों को भी व्यय कर चुके ॥ १७ ॥

सन्धानकारणं तेजो न्यगभूत्तेऽकृथास्तथा ।
यत्त्वं वैराणि कोशं च सहदण्डमजिग्लपः ॥ १८ ॥

**अन्वयः**—( त्वम् ) तथा अकृथाः ( यथा ) ते सन्धानकारणं तेजो न्यक् अभूत् । यत् त्वं वैराणि कोशं च सहदण्डम् अजिग्लपः ॥

**व्याख्या**—तथा = तेन प्रकारेण, अकृथाः = कृतवानसि, त्वमिति शेषः । ( यथा = येन प्रकारेण ) ते = तव, सन्धानकारणं = सन्धिहेतुकं, तेजः = प्रचण्डत्वं, न्यक् = खर्वम्, अभूत् = भूतम् । कुत इत्याह—यत् त्वं = रावण, वैराणि = शत्रुभावान्, कोशं च = अर्थसमूहं च, सहदण्डं = ससैन्यम्, अजिग्लपः = ग्लपितवानसि ॥

॥व्युत्पत्तिः॥ अकृथाः = कृधातोर्लुङ् "तनादिभ्यस्तथासोः" इति सिचो लुक् । न्यक् = "न्यङ्नीचखर्वह्रस्वाः स्युः" इत्यमरः । अभूत् = भूधातोर्लुङ्, "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचोलुक् । अजिग्लपः = "ग्लै ( म्लै ) हर्षक्षये" इति धातोर्णिजन्तात् लुङ् । "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुकि "ग्लास्नावनुवमां च" ति मित्त्वाद्ध्रस्वत्व । ततो लुङि चङि णिलोपः ॥

॥भाषाऽर्थ॥ आपने वैसा किया, जिस तरह से आपका सन्धान कारण तेज खर्व हो गया, जो कि आपने वैरोंको और खजाना को भी सेनाके साथ क्षीण कर दिया ॥ १८ ॥

अक्रुधच्चाऽभ्यधाद्वाक्यं कुम्भकर्णं दशाननः ।
किं त्वं मामजुगुप्सिष्ठा नैदिधः स्वपराक्रमम् ॥ १९ ॥

**अन्वयः**—दशाननः अक्रुधत्, कुम्भकर्णं वाक्यं च अभ्यधात्—"किं त्वं माम् अजुगुप्सिष्ठाः, स्वपराक्रमं न ऐदिधः ॥

**व्याख्या**—दशाऽऽननः = रावणः, अक्रुधत् = अकुप्यत्, कुम्भकर्णं = स्वमध्यमाऽनुजं, वाक्यं च = पदसमूहं च, अभ्यधात् = अभिहितवान् । किं = किमिति,

त्वं = कुम्भकर्ण , मा = रावणम् , अजुगुप्सिष्ठा = निन्दितवानसि, स्वपराक्रमम् = आत्मविक्रम, न ऐदिध =न वर्धितवानसि ॥

॥व्युत्पत्ति॥ अक्रुधत् = "क्रुध क्रोधे" इति धातोर्लुङ्, पुषादित्वादङ्। अभ्यधात् = अभिपूर्वकाद्धाधातोर्लुङ्, "गातिस्थाघुपाभूभ्य: सिच परस्मैपदेषु" इति सिचो लुक्। ऐदिध = "एध वृद्धौ" इति णिजन्ताद्धातोर्लुङ्। चङि स्थानिवद्भावात् "अजादेर्द्वितीयस्ये"ति धिशब्दस्य द्वित्वम् ॥

॥भाषाऽर्थ॥ रावण क्रुद्ध हुआ और उसने कुम्भकर्णको वचन भी कहा – "क्यों तुमने मेरी निन्दा की और तुम अपने पराक्रमको नही बढ़ाते हो ॥ १९ ॥

मोज्जिग्रह· सुनीतानि मा स्म क्रस्था न संयुगे ।
मोपालब्धाः कृतैर्दोषैर्मा न वाक्षीर्हित परम् ॥ २० ॥

अन्वय.—सुनीतानि मा उज्जिग्रह । सयुगे मा स्म क्रस्था ( इति ) न, कृतैः दोषै मा उपालब्धाः हित पर मा वाक्षी ( इति ) न ॥

व्याख्या—सुनीतानि = सुनीती , मा उज्जिग्रह =नो उद्ग्राहय नोपदिशेत्यर्थ । संयुगे = युद्ध विषये, मास्म क्रस्था = नो उत्सहस्व, ( इति ) न, अपि तु उत्सहस्वेति भाव । कृतै =विहितै , अस्माभिरिति शेष , दोषै =दूषणै , मा उपालब्धा = न उपालभस्व । हित=पथ्य, परम् = उत्तरं कर्म, युद्धमिति भाव । मा वाक्षी = नो वह, ( इति ) न, किन्तु वहेति भाव ॥

॥व्युत्पत्ति॥ मा उज्जिग्रह· = माङि उपपदे ग्रहेर्ण्यन्तस्य "माङि लुङ्" इति लुङि चङि रूपम् । मा स्म क्रस्था. = "स्मोत्तरे लङ् चे"ति चकाराल्लुङ्। "वृत्तिसर्गतायनेषु क्रम" इति क्रमे सर्गे ( उत्साहे ) तङ्। मा उपालब्धा = माङि उपपदे उपपूर्वकात् "डुलभष् प्राप्तौ" इति धातोर्लुङ्। "झलो झलि" इति सिचो लोपः "झषस्तथोर्धोऽध" इति धत्व "झला जश् झशि" इति जश्त्वम् । मा वाक्षी = माङि उपपदे "वह प्रापणे" इति धातोर्लुङ्। "वद व्रजहलन्तस्याऽच" इति वृद्धि·, ढत्वकत्वषत्वानि च ॥

॥भाषाऽर्थ॥ उत्तम नीतियों का ग्रहण मत कराओ युद्धमे उत्साह मत करो यह नही, बल्कि करो। किये गये दोषों से उलहना मत दो। हित युद्ध को नही करो यह नही बल्कि करो ॥ २० ॥

कुम्भकर्णस्ततोऽगर्जीद्भटाश्चाऽन्यान्न्यवीवृतत् ।
उपायस्त महाऽस्त्राणि निरगाच्च द्रुत पुर ॥ २१ ॥

अन्वयः—तत कुम्भकर्ण अगर्जीत् , अन्यान् भटाश्च न्यवीवृतत् , महाऽस्त्राणि उपायस्त पुरो द्रुत निरगाच्च ॥

**व्याख्या**—तत = रावणवाक्याऽनन्तरं, कुम्भकर्ण = रावणमध्यमाऽनुज, अगर्जीत् = गर्जितवान्, अन्यान्=अपरान्, भटाश्च = योधाश्च, न्यवीवृतत् = निवर्तितवान्, महाऽस्त्राणि = बृहदायुधानि, उपायस्त = स्वीकृतवान्, पुर = नगर्या, लङ्काया इति भाव । द्रुतं = शीघ्र, निरगाच्च = निर्गतश्च ॥

❀व्युत्पत्ति❀ अगर्जीत् = "गर्ज शब्दे" इति धातोर्लुङ् । न्यवीवृतत् = निपूर्वकात् "वृतु वर्तने" इति धातोर्णिचि लुङ् । लघूपधगुण बाधित्वा "उर्ऋत्" इति ऋत्वम्, पक्षान्तरे न्यववर्तत् । उपायस्त = उपाङ्पूर्वाद्यमधातोर्लुङ् । "उपाद्यम स्वकरणे" इत्यात्मनेपदम् । अत्र स्वकरणमौपचारिकम् । यद्वा "समुदाङ्भ्यो यमोऽग्रन्थे" इति आत्मनेपदम् । निरगाच्च = निरुपसर्गपूर्वकात् "इण् गतौ" इति धातोर्लुङ् । "इणो गालुङि" इति इणो गादेश । "गातिस्थाघुपाभूभ्य सिच परस्मैपदेषु" इति सिचो लुक् ॥

❀भाषाऽर्थ❀ तब कुम्भकर्ण गर्जा, और उसने और राक्षसों को भेजा । इसने बडे अस्त्रों का स्वीकार किया और शहरसे जल्दी निकल भी पडा ॥ २१ ॥

मूर्ध्ना दिवमिवाऽलेखीत्ख व्यापद्वपुषोरुणा ।
पादाभ्या क्ष्मामिवाऽभैत्सीद्दृष्ट्याऽधाक्षीदिव द्विषः ॥ २२ ॥

**अन्वय**—( कुम्भकर्ण ) मूर्ध्ना दिवम् अलेखीत् इव, उरुणा वपुषा खं व्यापत्, पादाभ्यां क्ष्माम् अभैत्सीत् इव, दृष्ट्या द्विष अधाक्षीत् इव ॥

**व्याख्या**—मूर्ध्ना = शिरसा, दिवम् = आकाशम्, अलेखीत् इव = लिखितवान् इव, कुम्भकर्ण इति शेष, एव परत्राऽपि । उरुणा = महता, वपुषा = शरीरेण, खम् = आकाश, व्यापत् = व्याप्तवान्, पादाभ्या = चरणाभ्या, क्ष्मा = पृथ्वीम्, अभैत्सीत् इव = विदारितवान् इव, दृष्ट्या = दर्शनेनैव, द्विष = शत्रून्, अधाक्षीत् इव = दग्धवान् इव ॥

❀व्युत्पत्ति❀ व्यापत् = विपूर्वकात् "आप्लृ व्याप्तौ" इति धातोर्लुङ्, लृदित्त्वादङ् । अभैत्सीत् = "भिदिर् विदारणे" इति धातोर्लुङ् "वदव्रजहलन्तस्याऽच" इति वृद्धि । अधाक्षीत् = "दह भस्मीकरणे" इति लुङ् । प्रथमतृतीयचतुर्थचरणेषु वाच्योत्प्रेक्षात्रयस्य द्वितीयचरणे च प्रतीयमानोत्प्रेक्षाया मिथोऽनपेक्षया स्थितेः संसृष्टि ॥

❀भाषाऽर्थ❀ कुम्भकर्णने शिरसे आकाशका जैसे विलेखन किया, और बडे शरीरसे उसने आकाशको व्याप्त किया. दो चरणोंसे जैसे पृथ्वीका विदारण किया एवम् दृष्टिमात्रसे जैसे शत्रुओंको दग्ध कर डाला ॥ २२ ॥

दग्धशैल इवाऽभासीत्प्राक्रंस्त क्षयमेघवत् ।
प्राचकम्पदुदन्वन्त राक्षसानप्यतित्रसत् ॥ २३ ॥

**अन्वयः**—( कुम्भकर्ण· ) दग्धशैल इव अभासीत्, क्षयमेघवत् प्राक्रस्त, उदन्वन्तं प्राचकम्पत्, राक्षसान् अपि अतित्रसत् ॥

**व्याख्या**—दग्धशैल इव = प्लुष्टपर्वत इव, अभासीत् = भाति स्म, महत्त्वात्कृष्णत्वाच्चेति भाव । कुम्भकर्ण इति शेष । क्षयमेघवत् = प्रलयाम्बुदवत्, प्राक्रंस्त= प्रस्थित ' उदन्वन्त = समुद्र, प्राचकम्पत् = प्रकम्पितवान्, किम्बहुना स राक्षसान् अपि = स्वबन्धून् यातुधानान् अपि, अतित्रसत् = त्रासितवान्, किमुताऽन्यानिति भाव ॥

**❀व्युत्पत्ति❀** अभासीत् = "भा दीप्तौ" इति धातोर्लुङ्, "यमरमनमाता सक् चे"ति सगिटौ । क्षयमेघवत् = क्षयमेघेन तुल्य, "तेन तुल्य क्रिया चेद्वति" इति वतिप्रत्यय । प्राक्रस्त = प्रपूर्वकात् क्रमुधातोर्लुङ्, "प्रोपाभ्या समर्थाभ्याम्" इत्यात्मने पदम् । प्राचकम्पत् = प्रपूर्वकात् "कपि चलने" इति ण्यन्तस्य धातोर्लुङि चङि रूपम् । अतित्रसत् = "त्रसी उद्वेगे" इति ण्यन्तस्य धातोर्लुङि चङि रूपम् । उपमाद्वयस्य अर्थापत्तेश्च ससृष्टि ॥

**❀भाषाऽर्थ❀** कुम्भकर्ण जले हुए पर्वतके सदृश प्रतीत हुआ । उसने प्रलय काल के मेघकी तरह प्रस्थान किया, और समुद्रको प्रकम्पित किया कि बहुना राक्षसों को भी त्रस्त किया ॥ २३ ॥

सपक्षोऽद्रिरिवाऽचालीन्न्यश्वसीत्कल्पवायुवत् ।
अभार्षीद्ध्वनिना लोकानभ्राजिष्ट क्षयाऽग्निवत् ॥ २४ ॥

**अन्वय**—( कुम्भकर्ण ) सपक्ष अद्रि इव अचालीत्, कल्पवायुवत् न्यश्वसीत्, ध्वनिना लोकान् अभार्षीत्, क्षयाऽग्निवत् अभ्राजिष्ट ॥

**व्याख्या**—( कुम्भकर्ण ) सपक्ष = पक्षसहित, अद्रिरिव = पर्वत इव, अचालीत् = चलित, बाह्वो पक्षाऽनुकारित्वादिति भाव । कल्पवायुवत् = प्रलयवातवत्, न्यश्वसीत् = निश्वसितवान्, ध्वनिना = शब्देन, लोकान् = भुवनानि, अभार्षीत् = पूरितवान्, क्षयाऽग्निवत् = प्रलयाऽनलवत्, अभ्राजिष्ट=दीप्तवान् ॥

**❀व्युत्पत्ति❀** सपक्ष = पक्षाभ्या सहित, "तेन सहेति तुल्ययोगे" इति बहुव्रीहि । "वोपसर्जनस्ये"ति सहस्य सभाव । अचालीत् = चलधातोर्लुङ्, "अतो ल्रान्तस्ये"ति वृद्धि । कल्पवायुवत्=कल्पवायुना तुल्य, "तेन तुल्य क्रिया चेद्वति" इति वतिप्रत्यय । न्यश्वसीत् = निपूर्वकात् "श्वस प्राणने" इति धातोर्लुङ् "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति वृद्धिनिषेध· । अभार्षीत् = "भृञ् भरणे" इति धातोर्लुङ्, "सिचिवृद्धि· परस्मैपदेषु" इति वृद्धि । अभ्राजिष्ट = "भ्राजृ दीप्तौ" इति धातोर्लुङ् ॥

※भाषाऽर्थ※ कुम्भकर्ण पङ्खोंवाले पर्वतके समान चला। उसने प्रलयके वायुके सदृश निश्वास छोड़ा, शब्दसे भुवनोंको पूर्ण किया और वह प्रलय कालके अग्निके तुल्य प्रकाश मान हुआ ॥ २४ ॥

अनसीद्भूर्भरेणाऽस्य रहसा शाखिनोऽलुठन् ।
सिंहाः प्राद्रुद्रुवन् भीताः प्राक्षुभन् कुलपर्वताः ॥ २५ ॥

अन्वयः—अस्य भरेण भूः अनसीत्, रहसा शाखिनः अलुठन्, सिंहाः भीताः (सन्तः) प्राद्रुद्रुवन्, कुलपर्वताः प्राक्षुभन् ॥

व्याख्या—अस्य = कुम्भकर्णस्य, भरेण = भारेण, भूः = पृथ्वी, अनसीत् = नता, रंहसा=वेगेन, शाखिनः = वृक्षाः, अलुठन्=पतिताः, सिंहाः =मृगेन्द्राः, भीताः = त्रस्ताः सन्तः, प्राद्रुद्रुवन् = पलायिताः, कुलपर्वताः = कुलशैलाः, महेन्द्रादयः इति भावः । प्राक्षुभन्=सञ्चलिताः ॥

※व्युत्पत्ति※ अनसीत्="णम प्रह्वत्वे शब्दे" इति धातोर्लुङ्, "यमरमनमातां सक् चे"ति सगिटौ। अलुठन्="(रुठ) लुठ प्रतिघाते" इति धातोरनुदात्तेतो द्युतादित्वादङ्। "द्युद्भ्यो लुङि" इति परस्मैपदविकल्पः। प्राद्रुद्रुवत्=प्रपूर्वकात् "(द्रु) द्रु गतौ" इति धातोर्लुङ्। "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति चङ्। प्राक्षुभन्=प्रपूर्वकात् "क्षुभ सञ्चलने" इति धातोर्लुङ्, द्युतादित्वादङ् ॥

※भाषाऽर्थ※ कुम्भकर्णके भारसे पृथिवी झुक गई, वेगसे वृक्ष गिर पड़े, सिंह भीत होते हुए दौड़ने लगे और महेन्द्र आदि कुल पर्वत सञ्चलित हो गये ॥ २६ ॥

उत्पाताः प्रावृतंस्तस्य द्यौरशीकिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाऽकुषत द्विजाः ॥ २६ ॥

अन्वयः—तस्य उत्पाताः प्रावृतन्, द्यौः शोणितम् अशीकिष्ट, भीमाः वायवः अवासिषुः, क्रूराः द्विजाश्च अकुषत ॥

व्याख्या—तस्य = कुम्भकर्णस्य, गच्छतः इति शेषः । उत्पाताः = उपसर्गाः, प्रावृतन् = प्रवृत्ताः, द्यौः = आकाशं, शोणितं = रुधिरम्, अशीकिष्ट = असिञ्चत्, भीमाः = भयङ्कराः, वायवः =वाताः, अवासिषुः =वान्ति स्म, क्रूराः =अशुभसूचकाः, द्विजाश्च=पक्षिणश्च, उलूकादयः इति भावः । अकुषत = शब्दं कृतवन्तः ॥

※व्युत्पत्ति※ उत्पाताः="अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् ।" इत्यमरः। प्रावृतन्=प्रपूर्वकात् "वृतु वर्तने" इति धातोर्लुङ्। द्युतादित्वादङ् "द्युद्भ्यो लुङि" इति परस्मैपदं च। अशीकिष्ट="शीकृ सेचने" इति अनुदात्तेतो धातोर्लुङ्। अवासिषुः="वा गतिगन्धनयोः" इति धातोर्लुङ्। "यमरमनमातां सक् चे"ति सगिटौ।

अकुषत="कुड् शब्दे" इत्यनिटो भौवादिकधातोर्लुङ्, कुटादित्वात्सिच क्त्विे न गुण. ॥

ॐभाषाऽर्थॐ कुम्भकर्णके गमन कालमे उत्पात हुए। आकाशने रुधिर सेचन किया। भयङ्कर वायु बहने लगे और अशुभ सूचक पक्षी शब्द करने लगे ॥ २६ ॥

अस्पन्दिष्टाऽक्षि वाम च घोराश्चाऽराटिषु. शिवा. ।
न्यपप्तन्मुसले गृध्रा दीप्तयाऽपाति चोल्कया ॥ २७ ॥

अन्वय—वामम् अक्षि अस्पन्दिष्ट। घोरा शिवा अराटिषु । मुसले गृध्रा न्यपप्तन्, दीप्तया उल्कया च अपाति ॥

व्याख्या—वाम = सव्यम्, अक्षि = नेत्र, कुम्भकर्णस्येति शेष । अस्पन्दिष्ट = किञ्चिच्चलितवत्, घोरा = भीत्युत्पादिका, अनिष्टशसिन्य इति भाव । शिवा = ग्रोमायव, अराटिषु = शब्द चक्रु । मुसले = अयोऽग्रे, गृध्रा = दाक्षाय्या, न्यपप्तन् = निपतिता । दीप्तया = प्रज्वलितया, उल्कया च = निर्गतज्वालया च, अपाति = पतितम् ॥

ॐव्युत्पत्तिॐ अस्पन्दिष्ट="स्पदि किञ्चिच्चलने" इति धातोर्लुङ्। शिवा = "स्त्रिया शिवा भूरिमायगोमायुमृगधूर्तका ।" इत्यमर । अराटिषु ="रट परिभाषणे" इति धातोर्लुङ्। "अतो हलादेर्लघो" इति वृद्धिविकल्प । मुसले="अयोऽग्रो मुसलाऽस्त्री स्यात्" इत्यमर । न्यपप्तन्=निपूर्वात् "पत्लृ पतने" इति धातोर्लुङ्, लृदित्त्वादङ्। "पत पुम्" इति पुमागमश्च। अपाति=पतधातोर्भावेलुङ्, चिणादेश॰॥

ॐभाषाऽर्थॐकुम्भकर्णकी बाई आख फडकने लगी। अनिष्टसूचक शृगाल शब्द करने लगे। मुसलमे गृध्र बैठ गये और प्रज्वलित उल्का गिर पड़ी ॥ २७ ॥

आहिष्ट तानसमान्य दर्पात्स प्रधनक्षितिम् ।
ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाऽऽहवे ॥ २८ ॥

अन्वय॰—स तान् दर्पात् असमान्य प्रधनक्षितिम् आहिष्ट। तत (सः) अनर्दीत्, आहवे शत्रून् आह्वास्त च ॥

व्याख्या—स =कुम्भकर्ण, तान्=उत्पातान्, दर्पात् = गर्वात्, असमान्य= अवज्ञाय, प्रधनक्षिति = युद्धभूमिम्, आहिष्ट = गतवान्। तत = अनन्तर, स = कुम्भकर्ण, अनर्दीत् = गर्जितवान्, अनन्दीत्=सानन्दोऽभूत्, आहवे=युद्धे, शत्रून् रिपून्, आह्वास्त च='आगच्छत युध्यध्वम्' इति स्पर्धया आहूतवाश्च ॥

ॐव्युत्पत्तिॐ अनन्दीत्="टुनदि समृद्धौ" इति धातोर्लुङ्। आह्वास्त=आङ्पूर्वकात् "ह्वेञ् स्पर्धायां शब्दे चे"ति धातोर्लुङ् "स्पर्धायामाङ॰" इति धातोरात्मनेपदम् "आत्मनेपदेष्वन्यतरस्याम्" इत्यङभावपक्षे रूपम् ॥

ॐभाषाऽर्थ ॐ कुम्भकर्ण उन उत्पातोंको गर्वसे अवज्ञा करके युद्धभूमिको चला। अनन्तर उसने गर्जन किया आनन्दका अनुभव किया और सग्राममें शत्रुओंको ललकारा भी ॥ २८ ॥

प्राशीन्न चाऽतृपत्क्रूरः क्षुच्चाऽस्याऽवृधदश्नत. ।
अधाद्वसामधासीच्च रुधिरं वनवासिनाम् ॥ २६ ॥

अन्वय'—क्रूर प्राशीत्, न च अतृपत्। अश्नत अस्य क्षुत् च अवृधत्; वनवासिना वसाम् अधात् रुधिरम् अधासीच्च ॥

व्याख्या—क्रूर = घातुक, कुम्भकर्ण इति भाव । प्राशीत् = भक्षितवान्, वनवासिन इति भाव । न च अतृपत् = न च तृप्त । अश्नत = भक्षयत, अस्य= कुम्भकर्णस्य, क्षुच्च = बुभुक्षा च, अवृधत् = ऐधिष्ट, वनवासिना = काननिवासिना, वानराणामितिभाव । वसा = वपाम्, अधात् = पीतवान्, रुधिर = रक्तम्, अधासीच्च=पीतवाश्च ॥

ॐव्युत्पत्ति ॐ क्रूर. = "नृशसोघातुक क्रूर" इत्यमर' । प्राशीत् = प्रपूर्वकात् "अश भक्षणे" इति धातोर्लुङ्। अतृपत् = "तृप प्रीणने" इति धातोर्लुङ्। पुषादित्वा दङ्। अवृधत् = "वृधु वृद्धौ" इति धातोर्लुङ्, द्युतादित्वादङ्। वसा = "मेदस्तु वपा वसा।" इत्यमरः। अधात् = "धेट् पाने" इति धातोर्लुङ्। "विभाषा घ्राधेट्शा-च्छासः" इति सिचो लुक्पक्षे रूपम्। अधासीत् = "विभाषा धेट्श्व्यो" इति चङभा वपक्षे रूपम् ॥

ॐभाषार्थ ॐ हत्यारे कुम्भकर्णने खाया तौ भी वह तृप्त नही हुआ। खाते हुए उसकी भूख और बढ़ी। उसने वनवासी वानरोंकी चर्बी और रुधिरको पी लिया॥२९॥

मांसेनाऽस्याऽश्वतां कुक्षी जठरं चाऽप्यशिश्वियत् ।
बहूनामग्लुचत्प्राणानग्लोचीच्च रणे यशः ॥ ३० ॥

अन्वय.—मासेन अस्य कुक्षी अश्वताम् जठर च अशिश्वियत्। (स) बहूना प्राणान् अग्लुचत् रणे यशश्च अग्लोचीत् ॥

व्याख्या—मासेन = आमिषेण, अस्य = कुम्भकर्णस्य, कुक्षी = उदरपार्श्वौ, अश्वता = शूनौ, जठर च = उदर च, अशिश्वियत् = शूनम्। बहूना = प्रचुराणा, वानराणामिति भाव । प्राणान् = असून्, अग्लुचत्=हृतवान् कुम्भकर्ण इति शेष । रणे=संग्रामे, यशश्च = कीर्तिं च, बहूनामिति शेष' । अग्लोचीत्=अपनीतवान् ॥

ॐव्युत्पत्ति ॐ अश्वता = "टुओश्वि गतिवृद्ध्यो" इति धातोर्लुङ्। "जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चे"ति च्लेरङ्। "श्वयतेर" इति अत्वम्। अशिश्वि-

यत् = "विभाषाधेट्श्व्योः" इति चङ्। इयङादेश । अग्लुचत् = "( ग्रुचु ) ग्लुचु ( कुजु खुजु ) स्तेयकरणे" इति धातोर्लुङ्, पूर्वसूत्रेण अङ् विकल्पः। अग्लोचीत् = अङभावपक्षे रूपम् ॥

❀भाषाऽर्थ.❀ माससे कुम्भकर्णके उदरपार्श्व फूल गये और पेट भी फूल गया। उसने अनेक वानरोंके प्राणोंका अपहरण किया और युद्धमे अनेक वानरोंका यश भी मिटाया ॥ ३० ॥

सामर्थ्यं चाऽपि सोऽस्तम्भीद्विक्रमं चाऽस्य नाऽस्तभन्।
शाखिनः केचिदध्यष्ठुर्न्यमाङ्क्षुरपरेऽम्बुधौ ॥ ३१ ॥

**अन्वय.**—स सामर्थ्यं च अस्तम्भीत्। अस्य विक्रमं न अस्तभन्। केचित् शाखिनः अध्यष्ठुः। अपरे अम्बुधौ न्यमाङ्क्षुः ॥

**व्याख्या**—सः = कुम्भकर्णः, सामर्थ्यं = शक्तिं, शत्रूणामिति शेषः। अस्तम्भीत् = नियमितवान्। अस्य = कुम्भकर्णस्य, विक्रमं = पराक्रमं, न अस्तभन् = नो नियमितवन्तः, केचिदिति शेषः। केचित् = वानराः, शाखिनः = वृक्षान्, अध्यष्ठुः = अधिष्ठितवन्तः, कुम्भकर्णभयादिति भावः। अपरे = अन्ये वानराः, अम्बुधौ = समुद्रे, न्यमाङ्क्षुः = निमग्नाः ॥

❀व्युत्पत्ति❀ सामर्थ्यं = समर्थस्य भावः तत्, "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ्। अस्तम्भीत् = सौत्रस्तम्भुधातोर्लुङ्। अङभावपक्षे सिचि "इट ईटि" इति सलोपः। अस्तभन् = "जॄस्तम्भु" इति अङ्भावपक्षे रूपम्। शाखिनः = अधिपूर्वकस्थाधातोर्योगे "अधिशीङ्स्थाऽऽसां कर्म" ति आधारस्य कर्मत्वम्। अध्यष्ठुः = अधिपूर्वकस्थाधातोर्लुङ्" "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक्। आदेशसकारस्य "आदेशप्रत्यययोः" इति षत्वं ष्टुत्वं च। न्यमाङ्क्षुः = निपूर्वकात् "टुमस्जो शुद्धौ" इति धातोर्लुङ्। "मस्जिनशोर्झलि" इति "मस्जेरन्त्यात्पूर्वो नुम्वाच्य" इति नियमेन नुम्। सयोगादिलोपश्च। हलन्तलक्षणा वृद्धिः, कुत्वषत्वादि कार्यं च ॥

❀भाषाऽर्थ❀ उसने शत्रुओंका सामर्थ्य रोका। उसके पराक्रमको किसीने नहीं रोका। कुछ वानर पेड़ोंपर चढ़ गये, और कोई समुद्रमे डूब गये ॥ ३१ ॥

अन्ये त्वलङ्घिषुः शैलान् गुहास्वन्ये न्यलेषत।
केचिदासिषत स्तब्धा भयात् केचिदघूर्णिषुः ॥ ३२ ॥

**अन्वयः**—अन्ये तु शैलान् अलङ्घिषुः। अन्ये गुहासु न्यलेषत। केचित् स्तब्धाः ( सन्तः ) आसिषत। केचित् भयात् अघूर्णिषुः ॥

**व्याख्या**—अन्ये = अपरे वानराः, शैलान् = पर्वतान्, अलङ्घिषुः = लङ्घितवन्तः, भयादारूढा इति भावः। अन्ये = अपरे, गुहासु = गह्वरेषु, न्यलेषत = निलीनाः।

केचित्=केऽपि वानरा, स्तब्धा=जातस्तम्भा सन्त, आसिषत उपविष्टा । केचित्=केऽपि, भयात्=त्रासात्, अघूर्णिषु=घूर्णितवन्त ॥

**ॐव्युत्पत्तिःॐ** अलङ्घिषु=गत्यर्थाल्लघिधातोर्लुङ् । न्यलेषत=निपूर्वात् "लीङ् श्लेषणे" इति धातोर्लुङ् । आसिषत="आस उपवेशने" इति धातोर्लुङ् । अघूर्णिषु="(घुण) घूर्ण भ्रमणे" इति धातोर्लुङ् ॥

**ॐभाषाऽर्थ ॐ** अन्य वानर पर्वतोंपर चढ़ गये । और लोग गुहाओंमें छिप गये । कुछ स्तब्ध होकर बैठ गये । कुछ वानर डरसे भ्रमण करने लगे ॥ ३२ ॥

उदतारिषुरम्भोधिं वानराः सेतुनाऽपरे ।
अलज्जिष्टाऽङ्गदस्तत्र प्रत्यवास्थित चोर्जितम् ॥ ३३ ॥

**अन्वयः**—अपरे वानरा सेतुना अम्भोधिम् उदतारिषु । तत्र अङ्गद अलज्जिष्ट, ऊर्जित च प्रत्यवास्थित ॥

**व्याख्या**—अपरे=अन्ये, वानरा=कपय, सेतुना=आल्या, अम्भोधिं=समुद्रम् उदतारिषु=उत्तीर्णा । तत्र=तेषु वानरेषु विषये, अङ्गद=वालिपुत्र, अलज्जिष्ट=लज्जित, ऊर्जित च=पराक्रम च, प्रत्यवास्थित=प्रतिपन्नवान् ॥

**ॐव्युत्पत्ति ॐ**सेतुना="सेतुरालौ स्त्रियां पुमान्" इत्यमर । अम्भोधिम्=अम्भासि धीयन्तेऽत्रेति अम्भोधिस्तम्, "कर्मण्यधिकरणे च" ति किप्रत्यय । उदतारिषु=उत्पूर्वकात् "तॄ प्लवनसतरणयो" इति धातोर्लुङ् । अलज्जिष्ट="(ओलजी) ओलस्जी व्रीडायाम्" इति धातोर्लुङ् । प्रत्यवास्थित=प्रत्यवपूर्वकात् स्थाधातोर्लुङ् । "समवप्रविभ्य स्थ" इत्यात्मनेपदम् । "ह्रस्वादङ्गात्" इति सिचो लोप ॥

**ॐभाषाऽर्थ ॐ** और वानरोंने पुलसे समुद्रका सतरण किया । उनके विषयेमें अङ्गदजी लज्जित हुए और उन्होंने पराक्रमका अवलम्बन किया ॥ ३३ ॥

सत्त्वं समदुधुक्षच्च वानराणामयुद्ध च ।
ततः शैलानुदक्षैप्सुरुदगूरिषत द्रुमान् ॥ ३४ ॥

**अन्वय**—(अङ्गद) वानराणा सत्व समदुधुक्षत् अयुद्ध च । तत (वानरा) शैलान् उदक्षैप्सु, द्रुमान् उदगूरिषत ॥

**व्याख्या**—वानराणा=कपीना, सत्त्व=बल, समदुधुक्षत्=सन्दीपितवान्, अङ्गद इति शेष, एवमागामि क्रियायामपि । अयुद्ध च=युद्ध कृतवाश्च । तत=अङ्गदकर्तृकसत्त्वसन्धुक्षणाऽनन्तर, शैलान्=पर्वतान्, उदक्षैप्सु=उत्क्षिप्तवन्त, वानरा इति शेष, एवपरक्रियायामपि । द्रुमान्=पर्वतान्, उदगूरिषत=उत्थापितवन्त ॥

**ॐव्युत्पत्तिःॐ** समदुधुक्षत्=सपूर्वकात् ण्यन्तात् "धुक्ष (धिक्ष) सन्दीपन

क्लेशनयो " इति धातोर्लुङ् । च्लेश्चङ् । अयुद्ध="युध सम्प्रहारे" इति धातोर्लुङ्, "झलो झलि" इति सिचो लोप । उदक्षैप्सु =उत्पूर्वकात् "क्षिप प्रेरणे" इति धातोर्लुङ् "वदव्रजहलन्तस्याऽच" इति वृद्धि । उदगूरिषत=उत्पूर्वकात् "गूरीउद्यमने" इति धातोर्लुङ् ॥

❀भाषाऽर्थ❀ अङ्गदजीने वानरोंके बलको सदीपित किया और युद्ध भी किया। तब वानरोंने पर्वतोंको फेका और वृक्षोंको उठाया ॥ ३४ ॥

अनर्दिषुः कपिव्याघ्राः सम्यक् चाऽयुत्सताऽऽहवे ।
तानमर्दीदखादीच्च निरास्थच्च तलाऽऽहतान् ॥ ३५ ॥

अन्वय —कपिव्याघ्रा अनर्दिषु , आहवे सम्यक् अयुत्सत च । ( कुम्भकर्ण ) तान् अमर्दीत् अखादीत् , तलाऽऽहतान् निरास्थच्च ॥

व्याख्या—कपिव्याघ्रा = वानरश्रेष्ठा , उत्क्षिप्तशैलद्रुमा इति शेष । अनर्दिषु= शब्दं कृतवन्त । आहवे = युद्धे, सम्यक् = समीचीन, निर्भय यथा तथेति भाव । अयुत्सत च = युद्धं कृतवन्तश्च । तान् = पूर्वोक्तान् वानरान्, अमर्दीत्=मृदितवान् , कुम्भकर्ण इति शेष एव परत्राऽपि । अखादीत् = भक्षितवान् , तलाऽऽहतान् = हस्ततलताडितान् , तान्वानरानिति शेष , निरास्थच्च = इतस्तत क्षिप्तवाश्च ॥

❀व्युत्पत्ति❀ कपिव्याघ्रा =कपयो व्याघ्रा इव, "उपमित व्याघ्रादिभि सामान्याऽप्रयोगे" इति समास । अनर्दिषु="नर्द शब्दे" इति धातोर्लुङ् । अयुत्सत="युध सप्रहारे" इति धातोर्लुङ् । "लिङ्सिचावात्मनेपदेषु"ति सिच कित्वे गुणाऽभाव । अमर्दीत्="मृद क्षोदे" इति धातोर्लुङ् । लघूपधगुण । अखादीत्="खाद भक्षणे" इति धातोर्लुङ् । निरास्थत्=निरुपसर्गपूर्वकात् "असु क्षेपणे" इति धातोर्लुङ् । पुषादिद्युताद्य्लृदित इत्यङ् । "अस्यतेस्थुक्" इति थुगागमश्च ॥

❀भाषार्थ❀ श्रेष्ठ वानरोंने शब्द किया और संग्राममें निर्भय होकर प्रहार भी किया। कुम्भकर्णने उन लोगोंको मर्दन किया, खा डाला और थप्पड़ोंसे मारकर इधर उधर फेक भी दिया ॥ ३५ ॥

प्राचुचूर्णच्च पादाभ्यामबिभीषत च द्रुतम् ।
अतर्हीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान् ॥ ३६ ॥

अन्वयः—कुम्भकर्ण पादाभ्या प्लवङ्गमान् प्राचुचूर्णत् , द्रुतम् अबिभीषत, शूलेन अतर्हीच्च ॥

व्याख्या—कुम्भकर्ण = रावणमध्यमाऽनुज , पादाभ्या = चरणाभ्या, प्लवङ्गमान्=वानरान् , प्राचुचूर्णत् = प्रचूर्णितवान् , द्रुतं=शीघ्रम् , अबिभीषत=भीषितवान्, शूलेन = आयुधविशेषेण अतर्हीच्च = विद्धवाश्च ॥

※व्युत्पत्ति※ प्राचुचूर्णत् = प्रपूर्वकात् "चूर्ण प्रेरणे" इति चौरादिकाद्धातोः "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" इति णिचि लुङि चङि द्वित्वेऽभ्यासह्रस्वश्च । अबिभीषत = "ञिभी भये" इति णिजन्ताद्धातो लुङ् । "भीस्म्योर्हेतुभये" इत्यात्मनेपदम् । "भियो हेतुभये षुक्" इति षुगागम चङि द्वित्वेऽभ्यासह्रस्वश्च । अतर्हीत् = "तृह हिंसायाम्" इति धातो लुङ् । हकारान्तत्वात् "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति वृद्धिप्रतिषेध ॥

※भाषाऽर्थ.※ कुम्भकर्णने दोनों चरणोंसे बन्दरों को पीस डाला, शीघ्र उन्हें भयभीत बनाया और शूलसे उन लोगोंको मार डाला ॥ ३६ ॥

अतौत्सीद् गदया गाढमपिषच्चोपगूहनैः ।
जानुभ्यामदमीच्चाऽन्यान् हस्तवर्तमवीवृतत् ॥ ३७ ॥

अन्वय—( कुम्भकर्ण प्लवङ्गमान् ) गदया गाढम् अतौत्सीत्, उपगूहनै अपिषत्, जानुभ्याम् अन्यान् अदमीत्, हस्तवर्तम् अवीवृतत् ॥

व्याख्या—गदया = आयुधविशेषेण, गाढ = दृढम्, अतौत्सीत् = व्यथितवान्, कुम्भकर्ण, प्लवङ्गमानिति शेष । एव परत्राऽपि । उपगूहनै = आलिङ्गनै, अपिषत् = सचूर्णितवान्, जानुभ्याम् = अष्ठीवद्भ्याम्, अन्यान् = अपरान् वानरान्, अदमीत् = शासितवान्, हस्तवर्तम् अवीवृतत् = हस्ताभ्या वर्तितवान्, पिष्टवानित्यर्थ ।

※व्युत्पत्ति※ अतौत्सीत् = "तुद व्यथने" इति धातोर्लुङ् । अपिषत् = "पिष्लृ सचूर्णने" इति धातोर्लुङ्, लृदित्वादङ् । जानुभ्या = "जानूरुपर्वाऽष्ठीवदस्त्रियाम्" इत्यमर । अदमीत् = "दमु उपशमे" इति धातोर्लुङ् । मान्तत्वान्न वृद्धि । हस्तवर्तम् अवीवृतत् = "हस्ते वर्तिग्रहो" इति णमुल्, "कषादिषु यथाविध्यनुप्रयोग" इति वृतेर्ण्यन्तस्याऽनुप्रयोग ॥

※भाषाऽर्थ※ कुम्भकर्णने वानरोंको गदासे दृढतापूर्वक पीडित किया, आलिङ्गनोंसे पीस डाला, दोनों घुटनोंसे और वानरोंका दमन किया और दोनों हाथोंसे भी पीस डाला ॥ ३७ ॥

अदालिषुः शिलादेहे चूर्ण्यभूवन् महाद्रुमाः ।
क्षिप्तास्तस्य न चाऽचेतीत् तानसौ नाऽपि चाऽक्षुभत् ॥ ३८ ॥

अन्वयः—तस्य देहे क्षिप्ता शिला अदालिषुः, महाद्रुमा चूर्ण्यभूवन् । असौ तान् न अचेतीत्, नाऽपि अक्षुभत् ।

व्याख्या—तस्य = कुम्भकर्णस्य, देहे = शरीरे, क्षिप्ता = प्रेरिता, शिला = प्रस्तरा, अदालिषु = विशीर्णा, महाद्रुमा = महावृक्षा, चूर्ण्यभूवन् = चूर्णीभूता ।

असौ = कुम्भकर्ण , तान् = प्रेरितान् , शिलामहावृक्षान् , न अचेतीत् = न चेतितवान् , नाऽपि = नैव, अक्षुभच्च = क्षुभितश्च ॥

⊛व्युत्पत्ति⊛ अदालिषु = "दलविशरणेइतिधातोर्लुङ् । चूर्ण्यभूवन् = अचूर्णाश्चूर्णा यथा सपद्यन्ते तथा अभूवन्, "कृभ्वस्तियोगे सपद्यकर्तरि च्वि" इति च्विः । "अस्य च्वौ" इत्यवर्णस्य ईत्वम् । अचेतीत् = "चिती संज्ञाने" इति धातोर्लुङ् । अक्षुभत् = "क्षुभ सचलने" इति दैवादिकाद्धातोर्लुङ्, पुषादित्वादङ् ॥

⊛भाषाऽर्थः⊛ कुम्भकर्णके शरीरमें प्रेरित पत्थर विशीर्ण हो गये, बड़े बडे वृक्ष चूर चूर हुए । कुम्भकर्णने उनको नहीं जाना और न वह क्षुब्ध ही हुआ ॥३८ ॥

**अद्राष्टा तं रघुव्याघ्रौ आख्यच्चैनं विभीषणः ।**
**एष व्यजेष्ट देवेन्द्रं नाऽशङ्किष्ट विवस्वतः ॥ ३९ ॥**

**अन्वय.**—रघुव्याघ्रौ तम् अद्राष्टाम् । विभीषण एनम् आख्यच्च—"एष देवेन्द्र व्यजेष्ट, विवस्वतो न अशङ्किष्ट ॥

**व्याख्या**—रुघुव्याघ्रौ = रघुवशश्रेष्ठौ, रामलक्ष्मणाविति भाव । त = कुम्भकर्णम्, अद्राष्टा = दृष्टवन्तौ । विभीषण = रावणकनिष्ठाऽनुज., एन=कुम्भकर्णम् , आख्यच्च = कथितवांश्च" कुम्भकर्णोऽयमिति शेष , एव च—एष =कुम्भकर्ण , देवेन्द्रं=पाकशासन, व्यजेष्ट=विजितवान् , विवस्वत =सूर्यात् , न अशङ्किष्ट = न शङ्कितवान् , नाऽभैषीदित्यर्थ ॥

⊛व्युत्पत्ति⊛ अद्राष्टां = "दृशिर् प्रेक्षणे" इति धातोर्लुङ्, "सृजिदृशोर्झल्यमकिति' इत्यमागमः, "वदव्रजहलन्तस्याचः" इति वृद्धि । आख्यत् = आङ्पूर्वकात् "ख्या प्रकथन" इति धातोर्लुङ् , "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यङ् । व्यजेष्ट = विपूर्वकात् "जिजय" इति धातोर्लुङ् , "विपराभ्या जे." इत्यात्मनेपदम् । अशङ्किष्ट= "शकि शङ्कायाम्" इति धातोर्लुङ् ॥

⊛भाषाऽर्थ⊛ राघवश्रेष्ठ राम और लक्ष्मणने उस ( कुम्भकर्ण ) को देखा । विभीषणने राम और लक्ष्मणको कुम्भकर्णका परिचय दिया और कहा भी—"इन्होंने इन्द्रको जीता और ये सूर्यसे भी शङ्कित नहीं हुए ॥ ३९ ॥

**यक्षेन्द्रशक्तिमच्छासीन् नाऽप्रोथीदस्य कश्चन ।**
**कुम्भकर्णान्न भैष्ट मा युवामस्मान्नृपाऽऽत्मजौ ॥ ४० ॥**

**अन्वय**—( एष ) यक्षेन्द्रशक्तिम् अच्छासीत् । अस्य कश्चन न अप्रोथीत् । हे नृपाऽऽत्मजौ ! युवाम् अस्मात् कुम्भकर्णात् मा भैष्टम् ( इति ) न ॥

**व्याख्या**—( एष = कुम्भकर्ण ) यक्षेन्द्रशक्ति = कुबेरस्य प्रहरणविशेषमथवा

सामर्थ्यम्, अच्छासीत् = खण्डितवान् । अस्य = कुम्भकर्णस्य, कश्चन = कोऽपि, न अप्रोथीत्=न प्राभूत् । हे नृपाऽऽत्मजौ=हे राजकुमारौ, युवाम्=भवन्तौ अस्मात्= कुम्भकर्णात्, मा भैष्टं = न बिभीतम्, ( इति = एवम् ) न, अपि तु बिभीतञ्च ॥

ॐव्युत्पत्तिॐ यक्षेन्द्रशक्ति=यक्षाणामिन्द्र कुबेरस्तस्य शक्तिम् । "कुबेरस्त्र्य-म्बकसखो यक्षराड् गुह्यकेश्वर ।" इत्यमर । अच्छासीत्="छो छेदने" इति धातोर्लुङ्, "आदेच उपदेशेऽशिति" इत्यात्वम्, "प्रोथ पर्याप्तौ" इति धातोर्लुङ् । पर्याप्तियोगे "नम.स्वस्तिस्वाहास्वधाऽलवषड्योगाच्चे"ति चतुर्थी न पर्याप्तेरविव-क्षितत्वात् अत सम्बन्धसामान्ये षष्ठी । कुम्भकर्णात्="भीत्रार्थानां भयहेतु." इति अपादानत्वात्पञ्चमी । मा भैष्ट="ञिभी भय" इति धातोर्माङि उपपदे "माङि लुङ्" इति लुङ्, "न माङ्योगे" इत्यडागमप्रतिषेध ॥

ॐभाषाऽर्थॐ इन्होंने ( कुम्भकर्णने ) कुबेरकी शक्तिको खण्डित किया । इनके विषयमें कोई भी समर्थ नहीं हुआ । हे राजकुमारो ! आप दोनों इनसे मत डरिये यह नही ( बल्कि डरिये ) ॥ ४० ॥

घ्नन्तं मोपेक्षिषाथां च मा न कार्ष्टमिहाऽऽदरम् ।
अमुं मा न वधिष्टेति रामोऽवादीत् तत' कपीन् ॥ ४१ ॥

अन्वयः—घ्नन्तम् ( एनम् ) मा उपेक्षिषाथाम् । इह आदर मा कार्ष्टम् (इति) न । ततो राम "अमुं मा वधिष्ट ( इति ) न" इति वानरान् अवादीत् ॥

व्याख्या—घ्नन्त = प्रहरन्त, कुम्भकर्णमिति भाव । मा उपेक्षिषाथाम्=अत्र उपेक्षकौ माभूतमित्यर्थ । इह = अस्मिन् कुम्भकर्णे, आदरम्=अप्रमाद, मा कार्ष्टं= नो कुरुतम्, ( इति ) न = अपि तु कुरुतम् एव । तत = विभीषणवचनाऽनन्तरं, राम = रामचन्द्र, अमु=कुम्भकर्णं, मा वधिष्ट=नो हत, ( इति = एवम् ) न, अपि तु हत एव । इति = इत्थं, वानरान् = कपीन् अवादीत्=उक्तवान् ॥

ॐभाषाऽर्थॐ आप दोनों मारते हुए कुम्भकर्णकी उपेक्षा मत कीजिए । इनमें आदर मत कीजिए, यह नही किन्तु कीजिए । तब रामचन्द्रजीने "इसे मत मारो" यह नही प्रत्युत मारडालो ऐसा वानरोंको कहा ॥ ४१ ॥

ते व्यरासिषुराह्नन्त राक्षस चाऽप्यपिप्लवन् ।
अबभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषु ॥ ४२ ॥

अन्वय—ते व्यरासिषु, राक्षसम् आह्नन्त, अपिप्लवन्, स्वका शक्ती-अबभासन् द्रुमशैलं व्यकारिषु ॥

व्याख्या—ते=वानरा, व्यरासिषु=किलकिलाशब्द कृतवन्त, हर्षादिति

शेष• । राक्षसं = यातुधानम् , आह्वन्त=स्पर्धमाना आहूतवन्त , अपिप्लवन्=प्लावितवन्त , स्वका = आत्मीया , शक्ती =सामर्थ्यानि, अबभासन्=प्रकाशितवन्त•, द्रुम•शैलं= वृक्षपर्वतं, व्यकारिषु =तदुपरि क्षिप्तवन्त ॥

ॐव्युत्पत्ति•ॐ व्यरासिषु• = विपूर्वकात् "रस शब्दे" इति धातोर्लुङ् । "अतो हलादेर्लघो" इति वृद्धि• । आह्वन्त = आङ्पूर्वकात् "ह्वेञ् स्पर्धायां शब्दे चे"ति धातोर्लुङ् । "स्पर्धायामाङ" इत्यात्मनेपदम् । "आत्मनेपदेष्वन्यतरस्याम्" इति पक्षे अङ् । अपिप्लवन्="प्लुङ् गतौ" इति धातोर्ण्यन्तस्य चङि सन्वत्कार्यं, "स्रवतिश्रृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वे"ति अभ्यासस्येत्वम् । अबभासन् = "भास् दीप्तौ" इति ण्यन्तस्य धातोश्चङि "भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्" इति सूत्रेणोपधाह्रस्वविकल्पः । द्रुमशैलं = द्रुमाश्च शैलाश्चेति "जातिरप्राणिनाम्" इति समाहारद्वन्द्व• । व्यकारिषु = विपूर्वकात् "कॄ विक्षेपे" इति धातोर्लुङ् ॥ ।

ॐभाषाऽर्थ ॐ वानरोंने शब्द किया, कुम्भकर्णको ललकारा, लङ्घन किया, अपने सामर्थ्योंको प्रकाशित किया और उसके ऊपर वृक्ष और पर्वतोंको फेंका ॥४२॥

ते तं व्याशिषताक्षौत्सुः पादैर्दन्तैस्तथाऽच्छिदन् ।
आर्जिजच्छरभो वृक्षं नीलस्त्वाऽऽदित पर्वतम् ॥ ४३ ॥

**अन्वयः**—ते त व्याशिषत, पादै अक्षौत्सु , तथा दन्तै अच्छिदन् । शरभो वृक्षम् आर्जिजत् । नीलस्तु पर्वतम् आदित ॥

**व्याख्या**—ते = वानरा , त = कुम्भकर्ण, व्याशिषत - व्याप्तवन्त , पादै = चरणै , अक्षौत्सु = पिष्टवन्त , तथा = तेन प्रकारेण, दन्तै = दशनै , आच्छिदन्= छिन्नवन्त । शरभ = तन्नामा कश्चित्कपि , वृक्ष = तरुम् , आर्जिजत् = ग्रहीतु यत्नमकार्षीत् । नीलस्तु = तन्नामक कपिसेनापतिस्तु, पर्वत = शैलम् , आदित= गृहीतवान् ॥

ॐव्युत्पत्ति ॐ व्याशिषत = विपूर्वकात् "अशू व्याप्तौ सघाते चे"ति धातोर्लुङ् अक्षौत्सु = "क्षुदिर् सम्पेषणे" इति धातोर्लुङ् । अच्छिदन् = "छिदिर् द्वैधीकरणे" इति धातोर्लुङ् । "इर इत्सञ्ज्ञा वाच्या" इतीत्सञ्ज्ञा । "इरितो वे"ति च्लेरङ् । आर्जिजत् = "अर्ज प्रतियत्ने" इति स्वार्थिकण्यन्ताच्चङि "द्विर्वचनेऽचि" इति स्थानिवद्भावात् "अजादेर्द्वितीयस्ये"ति द्वित्वम् । रेफस्य तु "नन्द्राः संयोगादय" इति द्वित्व प्रतिषेध• । आदित=आङ पूर्वकात् "डुदाञ् दाने" इति धातोर्लुङ् । "स्थाघ्वोरिच्चे"ति इदादेश "ह्रस्वादङ्गात्" इति सलोप ॥

ॐभाषाऽर्थ•ॐ वानरोंने कुम्भकर्ण को घेर लिया, चरणोंसे पीस डाला उसी तरह

दांतों से नोच डाला । शरभ नामके वानरने वृक्ष लेनेके लिए प्रयत्न किया । नील नामक वानर सेना नायकने तो पर्वत ले लिया ॥ ४३ ॥

ऋषभोऽद्रीनुदक्षैप्सीत्ते तैररिमतर्दिषुः ।
अस्फूर्जीद्गिरिशृङ्गं च व्यस्राक्षीद् गन्धमादनः ॥ ४४ ॥

अन्वयः—ऋषभ अद्रीन् उदक्षैप्सीत् । ते तै॰ अरिम् अतर्दिषु । गन्धमादन अस्फूर्जीत् गिरिशृङ्ग च व्यस्राक्षीत् ॥

व्याख्या—ऋषभ = तन्नामा वानर , अद्रीन् = पर्वतान् उदक्षैप्सीत् = उत्क्षिप्तवान् । इत्थ ते=शरभादयो वानरा तै॰ = वृक्षादिभि , अरिं = शत्रु कुम्भकर्णम् , अतर्दिषु = हतवन्त । गन्धमादन = तन्नामको वानर । अस्फूर्जीत् = वज्रवत् शब्द चकार, गिरिशृङ्ग च = पर्वतशिखर च व्यस्राक्षीत् = विसृष्टवान् ॥

*व्युत्पत्ति* उदक्षैप्सीत् = उत्पूर्वकात् "क्षिप प्रेरणे" इति धातोर्लुङ् , "वदव्रजहलन्तस्याऽच" इति वृद्धि । अतर्दिषु = "तर्द हिसायाम्" इति धातोर्लुङ् । अस्फूर्जीत् = "टुओस्फूर्जा वज्रनिर्घोषे" इति धातोर्लुङ् । व्यस्राक्षीत् - विपूर्वकात् "सृज विसर्गे" इति धातोर्लुङ् , "सृजिदृशोर्झल्यमकिति" इत्यमागम , पूर्ववद्वृद्धिश्च ॥

*भाषाऽर्थ* ऋषभ नामके वानरने पर्वतोंको उठाया । इस प्रकारसे शरभ आदि वानरोंने वृक्ष आदियोंसे शत्रु कुम्भकर्णको ताडित किया । गन्धमादन नामक वानरने वज्रके तुल्य शब्द किया और पर्वतके शिखर को छोडा ॥ ४४ ॥

अकूर्दिष्ट व्यकारीच्च गवाक्षो भूधरान् बहून् ।
स तान् नाऽजीगणद्वीरः कुम्भकर्णोऽव्यथिष्ट न ॥ ४५ ॥

अन्वयः—गवाक्ष अकूर्दिष्ट, बहून् भूधरान् व्यकारीच्च । स वीर कुम्भकर्ण॰ तान् न अजीगणत् , न अव्यथिष्ट ॥

व्याख्या—गवाक्ष = तन्नामा कपि , अकूर्दिष्ट = क्रीडापूर्वक चेष्टितवान् , बहून् = प्रचुरान् , भूधरान् = पर्वतान्, व्यकारीच्च = विक्षिप्तवाश्च । स = पूर्वोक्त , वीर = शूर , कुम्भकर्ण = रावणमध्यमाऽनुज , तान् = शरभादीन्, न अजीगणत् = नो गणयामास न अव्यथिष्ट = व्यथितो नाऽभूत् ॥

*व्युत्पत्ति* वीर = "शूरो वीरश्च विक्रान्त" इत्यमर॰ । अजीगणत् = "गण सख्याने" इति चौरादिकाद्धातोर्लुङ् । "ई च गण" इत्यभ्यासस्य ईत्व, चादत्वपक्षे "अजगणत्" इति पाठान्तरम् । अव्यथिष्ट="व्यथ भयसञ्चलनयो " इति धातोर्लुङ् ।

*भाषाऽर्थ* गवाक्ष नामके वानरने क्रीडा पूर्वक चेष्टा की और अनेक पर्वतों को फेका भी । उस वीर कुम्भकर्णन उनकी परवाह नही की और वह व्यथित नही हुआ ॥ ४५ ॥

अमन्थीच्च पराऽनीकमप्लोष्ट च निरङ्कुशः ।
निहन्तुं चाऽत्वरिष्टाऽरीनजक्षीच्चाऽङ्कमागतान् ॥ ४६ ॥

अन्वय —( कुम्भकर्ण· ) परानीकम् अमन्थीत्, निरङ्कुश ( सन् ) अप्लोष्टः अरीन् निहन्तुम् अत्वरिष्ट, अङ्कम् आगतान् अजक्षीच्च ॥

व्याख्या—परानीक = शत्रुसैन्यम्, अमन्थीत् = क्षोभितवान्, कुम्भकर्ण इति शेष, एव परत्राऽपि । निरङ्कुश = अप्रतिहतशक्ति सन्, अप्लोष्ट = भ्रान्तवान्, अरीन् = शत्रून्, निहन्तु = मारयितुम्, अत्वरिष्ट = त्वरा कृतवान्, एवं च अङ्कम् = उत्सङ्गम् समीपमिति भाव, आगतान् = आयातान्, अरीनिति शेष । अजक्षीच्च = भक्षितवाश्च ॥

ॐव्युत्पत्ति ॐ अमन्थीत् = "मन्थ विलोडने" इति धातोर्लुङ् । अप्लोष्ट = "प्लुङ् गतौ" इति धातोर्लुङ् । अत्वरिष्ट = "ञित्वरा सम्भ्रमे" इति धातोर्लुङ्, "आदिर्ञिटुडव" इति ञीत्यस्येत्सञ्ज्ञा । अजक्षीत् = जक्ष भक्षहसनयो" इति धातोर्भक्षणाऽर्थे लुङ्, "नेटी"ति वृद्धिप्रतिषेधश्च ॥

ॐभाषाऽर्थॐ कुम्भकर्णने शत्रु सेना को क्षोभित कर डाला। वह निरङ्कुश होकर घूमने लगा, शत्रुओंको मारनेके लिए शीघ्रता करने लगा और उसने समीप आये हुए शत्रुओं को खा लिया ॥ ४६ ॥

व्यक्रुक्षद्वानराऽनीक संपलायिष्ट चाऽऽयति ।
हस्ताभ्या नश्यदक्राक्षीद्भीमे चोपाधिताऽऽनने ॥ ४७ ॥

अन्वय —( तस्मिन् ) आयति वानराऽनीक व्यक्रुक्षत् सम्पलायिष्ट च । ( कुम्भकर्ण ) नश्यत् ( तत् ) हस्ताभ्याम् अक्राक्षीत्, भीम आनने च उपाधित ॥

व्याख्या—आयति = आगच्छति, तस्मिन्निति शेष । वानराऽनीक = कपिसैन्य, व्यक्रुक्षत् = व्यरुदत्, सम्पलायिष्ट च = सम्पलायितवच्च नश्यत् = पलायमान, तदिति शेष, हस्ताभ्या = कराभ्याम्, अक्राक्षीत् = आकृष्टवान्, कुम्भकर्ण इति शेष । भीमे = भयङ्करे, आनने च = मुखे च, उपाधित = न्यस्तवान् ॥

ॐव्युत्पत्ति ॐ आयति = ऐतीति आयन्, तस्मिन्, आङ्पूर्वकस्य "इण् गतौ" इति धातोर्लट शत्रादेश । व्यक्रुक्षत् = विपूर्वकात् "क्रुश आह्वाने रोदने चे"ति धातोर्लुङ् "शल इगुपधादनिट क्स" इति च्ले. क्सादेश. । सम्पलायिष्ट = सम्परापूर्वकात् "अय गतौ" इति धातोर्लुङ्, "उपसर्गस्यायतौ" इति रेफस्य लत्वम् । अक्राक्षीत् = "कृष विलेखन" इति धातोर्लुङ्, "अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्" इत्यम्, हलन्तलक्षणा वृद्धिश्च । उपाधित उपपूर्वकात् "डुधाञ् धारणपोषणयो." इति धातो-

लुङ्, "स्थाध्वोरिच्चे"ति इत्व सिच किरव च किरवान्न गुण. "ह्रस्वादङ्गात्" इति सिचोलुक् ॥

❀भाषाऽर्थ❀ कुम्भकर्णके आने पर वानरों की सेना रोने लगी और भागने भी लगी। कुम्भकर्णने भागती हुई उसको दोनों हाथोंसे खीचा और भयङ्कर मुखमें डाला भी ॥ ४७ ॥

रक्तेनाऽचिक्लिदद् भूमि सैन्यैश्चाऽतस्तरद्धतै ।
नाऽताप्र्सीद्भक्षयन् क्रूरो नाऽश्रमद् घ्नन् प्लवङ्गमान् ॥ ४८ ॥

**अन्वय**—क्रूरो रक्तेन भूमिम् अचिक्लिदत्, हतै सैन्यै भूमिम् अतस्तरत् भक्षयन् न अताप्र्सीत् प्लवङ्गमान् घ्नन् न अश्रमत् ॥

**व्याख्या**—क्रूर = घातुक, कुम्भकर्ण इति भाव । रक्तेन = रुधिरेण, भूमि = पृथिवीम्, अचिक्लिदत् = क्लेदितवान्, हतै = व्यापादितै, सैन्यै = सैनिकै, भूमिम् = पृथिवीम्, अतस्तरत् = छादितवान् । भक्षयन् = खादन्, न अताप्र्सीत् = न तृप्त, प्लवङ्गमान् = वानरान्, घ्नन् = हिंसन्, न अश्रमत् = न श्रान्त ॥

❀व्युत्पत्ति❀ अचिक्लिदत् = "क्लिदू आर्द्रीभावे" इति ण्यन्तस्य चङि रूपम्। "णौ चङ्युपधाया ह्रस्व" इति उपधाया ह्रस्वत्वम्। अतस्तरत् = "स्तृञ् आच्छादने" (स्तृणाते) इति धातोर्णौ लुङि चङि रूपम् । "अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्" इत्यभ्यासस्य अत्वम्। अताप्र्सीत् = "तृप प्रीणने" इति पुषादे र्धातो लुङ्, "स्पृशमृशकृषतृपदृपा च्ले. सिज्वा वाच्य" इति पक्षे सिच् । अश्रमत् = "श्रमु तपसि खेदे चे"ति पुषादे र्धातो. खेदे लुङ्, अङ् च ॥

❀भाषाऽर्थ❀ क्रूर कुम्भकर्णने बन्दरोंके खूनसे पृथ्वी को आर्द्र कर डाला, मारे गये बानर सैन्योंसे पृथ्वी को आच्छादित कर दिया। वह खाता हुआ तृप्त नही हुआ और बानरोंको मारता हुआ थका भी नही ॥ ४८ ॥

न योद्धुमशकन् केचिन्नाऽढौकिषत केचन ।
प्राणशन् नासिकाभ्या च वक्त्रेण च वनौकसः ॥ ४९ ॥

**अन्वय**.—केचित् योद्धुं न अशकन् । केचन न अढौकिषत। वनौकसो नासिकाभ्या वक्त्रेण च प्राणशन् ॥

**व्याख्या**—केचित् = वानरा, योद्धुं = युद्धं कर्तुं, न अशकन् = न शक्ता अभवन् । केचित् = वानरा, न अढौकिषत = समीप नो जग्मु । वनौकस = वानरा, कुम्भकर्णेन मुखे क्षिप्ता इति शेषः । नासिकाभ्या = घोणाभ्या, नासिकाविवराभ्यामिति भाव । वक्त्रेण च = मुखेन च, मुखच्छिद्रेणेति भाव• । प्राणशन् = प्रनष्टाः पलायिता इति भाव ।

❀व्युत्पत्ति❀ अशकन् = "शक्लृ शक्तौ" इति धातो लुंङ्, लृदित्वादङ् । अढौकिषत = गत्यर्थात् ढौकृधातोलुङ् । वनौकस = वनमोको येषां ते । प्राणशन् = प्रपूर्वकात् "णश अदर्शने" इति धातो लुंङ्, पुषादित्वादङ् च । "उपसर्गादसमासेऽपि णोपदेशस्ये"ति णत्वम् ॥

❀भाषाऽर्थ❀ कुछ बानर लड़नेको समर्थ नहीं हुए, और कुछ तो कुम्भकर्णके समीप नही गये । कुम्भकर्णके मुहके भीतर घुसे हुए कुछ बानर नासिका और मुखके छिद्रसे भागे ॥ ४९ ॥

उदरे चाऽजरन्नन्ये तस्य पातालसन्निभे ।
आक्रन्दिषुः सखीनाह्वन् प्रपलायिषताऽस्विदन् ॥ ५० ॥

अन्वय—अन्ये पातालसन्निभे तस्य उदरे अजरन्, आक्रन्दिषु, सखीन् आह्वन्, प्रपलायिषत, अस्विदन् ॥

व्याख्या—अन्ये = अपरे, पातालसन्निभे = रसातलसदृशे, तस्य = कुम्भकर्णस्य, उदरे=जठरे, अजरन्=जीर्णा, आक्रन्दिषु =आक्रन्दितवन्त, सखीन्= मित्राणि, आह्वन्=आहूतवन्त, प्रपलायिषत = प्रपलायितवन्त, अस्विदन्=स्विन्ना ॥

❀व्युत्पत्ति❀ पातालसन्निभे = पातालेन सदृश पातालसन्निभ, तस्मिन्, अस्वपदविग्रहो नित्यसमास । अजरन् = "जॄष् ( झॄष् ) वयोहानौ "इति धातोर्लुङ्" "जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चे"ति च्लेरङ् "ऋदृशोऽङि गुण" इति गुणः । आह्वन् = आङ्पूर्वात् "ह्वेञ् स्पर्धायां शब्दे चे"ति धातोर्लुङ् । "लिपिसिचिह्वश्चे"त्यङ् । अस्विदन् = "ष्विदा गात्रप्रक्षरणे"इति धातोर्लुङ् "पुषादिद्युताद्यॢदित. परस्मैपदेषु" इति पुषादित्वादङ् ॥

❀भाषाऽर्थ❀ और वानर पातालके सदृश कुम्भकर्णके पेटमें जीर्ण हो गये कुछ चिल्लाने लगे । कोई मित्रोंको बुलाने लगे । कोई भागने लगे । कोई पसीनेसे लथपथ हो गये ॥ ५० ॥

युग्मम् ॥

रक्तमश्च्योतिषु क्षुण्णा. क्षताश्च कपयोऽतृषन् ।
उपास्थायि नृपो भग्नैरसौ सुग्रीवमैजिहत ॥ ५१ ॥

अन्वय.—क्षुण्णा कपयो रक्तम् अश्च्योतिषु, क्षता अतृषन् । असौ नृपो भग्नै उपास्थायि, सुग्रीवम् ( योद्धुम् ) ऐजिहत ॥

व्याख्या—क्षुण्णा = चूर्णिता सन्त, कपय = वानरा, रक्तं = रुधिरम्, अश्च्योतिषु = क्षरितवन्त । क्षताः = खण्डिता, अस्त्रैरिति शेष । अतृषन् = तृषमुपगता । असौ = पूर्वोक्त, नृप = राम, भग्नै = पलायमानैस्तैर्वानरै, उपा-

स्थायि = उपस्थापित , सुग्रीवं = वानरराजम् , ऐजिहत् = ईहाकारितवान् , योद्धुमिति परेण सम्बन्ध , योद्धुमादिशदिति भाव॰ ॥

॥व्युत्पत्ति॥ अश्च्योतिषु॰ = "श्च्युतिर् क्षरणे" इति धातोर्लुङ्, "इर इत्संज्ञा वाच्या" इतीत्संज्ञा, "इरितो वा" इति अङ्पक्षे तु "अश्च्युतत्" इति रूप बोध्यम्। अतृषन् = "ञितृषा पिपासायाम्" इति धातोर्लुङ्। पुषादित्वादङ्। उपास्थायि = उपपूर्वात्स्थाधातोः कर्मणि लुङ् अन्तर्भावितणिजर्थः। चिण्। ऐजिहत् = "ईह चेष्टायाम् "इति णिजन्ताद्धातोर्लुङि चङि "द्विर्वचनेऽचि" इति स्थानिवद्भावात् "अजादेर्द्वितीयस्ये"ति द्वितीयस्य हि शब्दस्य द्वित्वम्। आट्, "आटश्चे"ति वृद्धिश्च ॥

॥भाषाऽर्थ॥ चूर्णित होते हुए वानरोंने रुधिर गिराया। खण्डित वानर प्याससे आकुल हुए। राजा रामने भागते हुए वानरोंको उपस्थित कर सुग्रीवको लड़नेके लिए प्रेरणा की ॥ ५१ ॥

योद्धु सोऽप्यरुषच्छत्रोरैरिरच्च महाद्रुमम् ।
तं प्राप्तं प्रासहिष्टाऽरिः शक्ति चोग्रामुदग्रहीत् ॥ ५२ ॥

अन्वय.—सोऽपि अरुषत् , योद्धुं शत्रो॰ महाद्रुमम् ऐरिरच्च । अरि प्राप्तं त प्रासहिष्ट, उग्रा शक्ति च उदग्रहीत् ॥

व्याख्या—सोऽपि = रामप्रेरित सुग्रीवोऽपि, अरुषत् = रुष्ट॰, योद्धु = युद्धं कर्तुं, शत्रो = रिपो , कृते समीपे वेति शेष । महाद्रुम = महावृक्षम्, ऐरिरच्च = क्षिप्तवाश्च । अरि = शत्रु , कुम्भकर्ण इति भाव॰ । प्राप्तम् = आसादितं, त=महाद्रुम, प्रासहिष्ट = सोढवान् , उग्रा=भयङ्करी, शक्ति च=आयुधविशेषं च, उदग्रहीत्= उद्गृहीतवान् ॥

॥व्युत्पत्ति॥ अरुषत् = "रुष रोष" इति धातोर्लुङ्। पुषादित्वादङ्। ऐरिरत् = "ईर क्षेपे" इति स्वार्थिकण्यन्ताद्धातोर्लुङ्। प्रासहिष्ट - प्रपूर्वकात् "सह मर्षणे" इति धातोर्लुङ्। उदग्रहीत् = उत्पूर्वकात् "ग्रह उपादान" इति धातोर्लुङ् ॥

॥भाषाऽर्थ॥ सुग्रीव भी रुष्ट हुए और उन्होंने लड़नेके लिए शत्रुके प्रति बडेसे पेडको फेका भी। शत्रु कुम्भकर्णने प्राप्त हुए उस पेडका सहन किया और भयङ्कर शक्ति भी उठाई ॥ ५२ ॥

स तामबिभ्रमद्भीमां वानरेन्द्रस्य चाऽमुचत् ।
प्रापप्तन्मारुतिस्तत्र ता चाऽलासीद्वियद्गताम् ॥ ५३ ॥

अन्वय.—स भीमा ताम् अबिभ्रमत् , वानरेन्द्रस्य अमुचच्च । तत्र मारुति॰ प्रापप्तत्, वियद्गता ताम् अलासीच्च ॥

व्याख्या—स = कुम्भकर्ण , भीमा = भयोत्पादिका, तां = शक्तिम् , अबि-

भ्रमत् = भ्रमयामास, वानरेन्द्रस्य = कपिराजस्य सुग्रीवस्येत्यर्थ , उपरीति शेष· । अमुचच्च = मुक्तवाश्च । तत्र=तस्या, शक्ताविति भाव , मुक्तायामिति शेष· । मारुति = हनूमान्, प्रापप्तत् = प्रत्युपस्थित , वियद्गताम् = आकाशगता, ता = शक्तिम्, अलासीच्च = गृहीतवाश्च ॥

❀व्युत्पत्तिः❀ अविभ्रमत् = "भ्रमु अनवस्थाने" इति ण्यन्ताद्धातोर्लुङि चङि रूपम् । अमुचत् = "मुच्लृ मोक्षणे" इति धातोर्लुङ्, लृदित्त्वादङ् च । प्रापप्तत् = प्रपूर्वकात् "पत्लृ पतन" इति धातोर्लुङ्, लृदित्वादङ् "पत· पुम्" इति पुमागमश्च । अलासीत् = "ला आदान" इति धातोर्लुङ् "यमरमनमातां सक् चे"ति सगिटौ ॥

❀भाषाऽर्थ❀ कुम्भकर्णने भयङ्कर उस शक्तिको घुमाया और सुग्रीवके ऊपर फेंका भी । उस शक्तिको छोडने पर वहा हनूमान्जी उपस्थित हुए और उन्होंने ऊपर गई हुई उस शक्तिको ले भी लिया ॥ ५३ ॥

युग्मम् ॥

अशोभिष्टाऽचखण्डच्च शक्तिं वीरो न चाऽयसत् ।
लौहभारसहस्रेण निर्मिता निरकारि मे ॥ ५४ ॥
शक्तिरित्यकुपद् रक्षो गिरिं चोदखनीद् गुरुम् ।
व्यसृष्ट त कपीन्द्रस्य तेनाऽमूर्च्छीदसौ क्षत ॥ ५५ ॥

अन्वय·—वीरः अशोभिष्ट, शक्तिम् अचखण्डत् न आयसत् । "लौहभार-सहस्रेण निर्मिता मे शक्ति निरकारि" इति रक्ष· अकुपत्, गुरु गिरिम् उदखनीत्, तं कपीन्द्रस्य व्यसृष्ट । तेन क्षत असौ अमूर्च्छीत् ॥

व्याख्या—वीर = शूर , गृहीतशक्तिर्हनूमानिति भाव । अशोभिष्ट = शोभा प्राप्तवान्, शक्ति = कुम्भकर्णप्रहितमायुधविशेषम्, अचखण्डत् = खण्डितवान्, न च आयसत् = न च आयासं प्राप । लौहभारसहस्रेण=लोहभारदशशत्या, निर्मिता= रचिता, मे = मम, शक्ति =आयुधविशेष , निरकारि=भग्ना, अनेनेति शेष , इति= अनेन हेतुना, रक्ष =राक्षस , कुम्भकर्णइत्यर्थ । अकुपत्=कुपित , गुरु=गौरववि-शिष्टं, गिरिं=पर्वतम्, उदखनीत्=उत्खातवान्, त=गिरिं, कपीन्द्रस्य=वानरराजस्य, सुग्रीवस्येति भाव , उपरीति शेषः । व्यसृष्ट = विसृष्टवान् । तेन=गिरिणा, क्षत· = हत , असौ = कपीन्द्र , अमूर्च्छीत्=मूर्च्छितवान् ॥

❀व्युत्पत्तिः❀ अचखण्डत् = "( खड ) खडि भेदने" इति चौरादिकाद्धातोर्लुङ् । आयसत् = आङ्पूर्वकात् "यसु प्रयत्ने" इति धातोर्लुङ्, पुषादित्वादङ् । लौहभार सहस्रेण=लौहाना भारास्तेषां सहस्रेण, "तुला स्त्रियां पलशतं, भार स्याद्विंशति-

स्तुला ।" इत्यमर । अकुपत् = "कुप क्रोध" इति धातोर्लुङ्, पुषादित्वादङ्। उदखनीत् = उत्पूर्वकात् "खनु अवदारणे" इति धातोर्लुङ् "अतो हलादेर्लघो." इति वृद्धयभावपक्षे रूपम्। व्यसृष्ट=विपूर्वकात् "सृज विसर्गे" इत्यनुदात्तेतो धातोर्लुङ्। "झलो झलि" इति सिचोलोप, "लिङ्सिचावात्मनेपदेषु" इति सिच कित्त्वान्न गुणो नाऽप्यम्। अमूर्च्छीत् = "मुर्च्छा मोहसमुच्छ्राययो" इति धातोर्लुङ्॥

॥भाषाऽर्थ॥ वीर हनुमान्‌जी शोभित हुए। उन्होंने शक्तिको तोड डाला परन्तु आयासका अनुभव नही किया। "लोहेके हजार भारोंसे बनी हुई मेरी शक्तिको इसने तोड़ा" ऐसा विचार कर राक्षस कुम्भकर्ण कुपित हुआ और उसने बडे पहाड उखाड डाला, और उसे सुग्रीवके ऊपर फेका। उस पहाड़से ताडित होकर सुग्रीवजी मूर्च्छित हो गये ॥ ५४ ॥ ५५ ॥

अलोठिष्ट च भूपृष्ठे शोणित चाऽप्यसुस्रुवत्।
तमादायपलायिष्ट व्यरोचिष्ट च राक्षस ॥ ५६ ॥

अन्वय'—( असौ ) भूपृष्ठे अलोठिष्ट, शोणित चापि ( अस्य ) असुस्रुवत्। राक्षस तम् आदाय पलायिष्ट व्यरोचिष्ट च ॥

व्याख्या—भूपृष्ठे=भूमिपृष्ठे, अलोठिष्ट = लुठितवान्, सुग्रीव इति शेष। शोणित च=रुधिरं, असुस्रुवत्=स्रुतं, सुग्रीवस्येति शेष। राक्षस =कुम्भकर्ण, त = सुग्रीवम्, आदाय = गृहीत्वा, पलायिष्ट = पलायित, व्यरोचिष्ट च = व्यरुचच्च, विजयेनेति शेष ॥

॥व्युत्पत्ति॥ अलोठिष्ट="( रुठ ) लुठ प्रतिघाते" इति द्युतादेर्धातोर्लुङ् "द्युद्भ्यो लुङि" इति परस्मैपदविकल्पत्वादात्मनेपदम्। असुस्रुवत = "स्रु गतौ" इति धातोर्लुङ् "णिश्रिद्रुस्रुभ्य' कर्तरि चङ्" इति चङ्। पलायिष्ट = परापूर्वकात् "अय गतौ इति धातोर्लुङ् "उपसर्गस्याऽयतौ" इति रेफस्य लत्वम्। व्यरोचिष्ट = विपूर्वकात् "रुच दीप्तावभिप्रीतौ चे"ति धातोर्लुङ्॥

॥भाषाऽर्थ॥ सुग्रीवजी भूपृष्ठपर गिर पडे। उनका रुधिर बहने लगा। कुम्भकर्ण उनको लेकर भागा और शोभित हुआ ॥ ५६ ॥

युग्मम्—

अभैषु' कपयोऽन्वारत् कुम्भकर्ण मरुत्सुतः।
शनैरबोधि सुग्रीवः सोऽलुञ्चीत् कर्णनासिकम् ॥ ५७ ॥
राक्षसस्य न चाऽत्रासीत् प्रनष्टुमयतिष्ट च।
अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ ॥ ५८ ॥

अन्वय'—कपय अभैषु। मरुत्सुत कुम्भकर्णम् अन्वारत्। सुग्रीव शनै-

अबोधि। स राक्षसस्य कर्णनासिकम् अलुञ्चीत्, न अत्रासीत्; प्रनंष्टुम् अयतिष्ट च। कुम्भकर्णेन अक्रोधि, क्षितौ पेष्टुम् आरम्भि च ॥

**व्याख्या**—कपयः = वानराः, अभैषुः = भीताः, मरुत्सुतः = वायुपुत्रः, हनूमानित्यर्थः। कुम्भकर्णं = रावणमध्यमाऽनुजम्, अन्वारत् = अनुगतः। सुग्रीवः = कपीश्वरः, शनैः = मनाक्, अबोधि = लब्धसंज्ञोऽभूत्। सः = सुग्रीवः, राक्षसस्य = कुम्भकर्णस्य, कर्णनासिकं = श्रोत्रघोणम्, अलुञ्चीत् = कृत्तवान्, न अत्रासीत् = नो त्रस्तः, प्रनष्टुं = पलायितुम्, अयतिष्ट च = यत्नं कृतवांश्च। ततः कुम्भकर्णेन = रावणमध्यमाऽनुजेन, अक्रोधि = क्रुद्धं, क्षितौ = पृथिव्यां, पेष्टुं = चूर्णयितुम्, आरम्भि च = आरब्धश्च, सुग्रीव इति शेषः ॥

***व्युत्पत्तिः*** अभैषुः = "ञिभी भये" इति धातोर्लुङ्। अन्वारत् = अनुपूर्वकात् "ऋ (सृ) गतौ" इति धातोर्लुङ् "सर्तिशास्त्यर्तिभ्यश्च" च्लेः अङ् "ऋदृशोऽङि गुणः" इति गुणः। अबोधि = "बुध अवगमने" इति धातोर्लुङ्, "दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्" इति च्लेः कर्तरि चिणादेशः। कर्णनासिकं = कर्णौ च नासिका च, "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति प्राण्यङ्गत्वात्समाहारद्वन्द्वः। अलुञ्चीत् = "लुञ्च अपनयने" इति धातोर्लुङ्। अत्रासीत् = "त्रसी उद्वेगे" इति धातोर्लुङ्। प्रनष्टुं = प्रपूर्वकात् "णश अदर्शने" इति धातोः "समानकर्तृकेषु तुमुन्" इति तुमुन् "मस्जिनशोर्झलि" इति नुम्। अयतिष्ट = "यती प्रयत्ने" इति धातोर्लुङ्। अक्रोधि = क्रुधधातोर्भावे लुङ्। आरम्भि = आङ्पूर्वकात् "रभ राभस्ये" इति धातोः कर्मणि लुङ्। राभस्यमुपक्रमः। "रभेरशब्लिटोः" इति नुम् ॥

***भाषाऽर्थ*** वानरलोग डर गये। हनूमान्‌जीने कुम्भकर्णका अनुगमन किया। सुग्रीवजी धीरे धीरे जाग पडे। उन्होंने कुम्भकर्णकी नाक और कानोंको काट डाला। वे त्रस्त भी नहीं हुए और भागनेके लिए कोशिश भी करने लगे। कुम्भकर्ण क्रुद्ध हुआ और सुग्रीवको जमीनपर पीसनेके लिए आरम्भ भी करने लगा ॥

सुग्रीवोऽस्याऽभ्रशद्धस्तात् समगाहिष्ट चाऽम्बरम्।
तूर्णमन्वसृपद् राममानन्दच्च वानरान् ॥ ५९ ॥

**अन्वयः**—सुग्रीवः अस्य हस्तात् अभ्रशत् अम्बरं समगाहिष्ट च, तूर्णं रामम् अन्वसृपत् वानरान् आनन्दच्च ॥

**व्याख्या**—सुग्रीवः = वानरराजः, अस्य = कुम्भकर्णस्य, हस्तात् = करात्, अभ्रशत् = भ्रष्टः, अम्बरम् = आकाशं, समगाहिष्ट च=आक्रान्तवांश्च, तूर्णं=सत्वरं—रामं = रामचन्द्रम्, अन्वसृपत् = अनुगतः, वानरान् = कपीन्, आनन्दच्च = तोषितवांश्च ॥

❀व्युत्पत्ति❀ अभ्रशत् = "( भ्रशु ) भ्रशु अधः पतने" इति धातोर्लुङ्, पुषादित्वादङ्। समगाहिष्ट = सपूर्वकात् "गाहू विलोडने" इत्यनुदात्तेतो धातोर्लुङ्। अन्वसृपत् = "( गम्लृ ) सृप्लृ गतौ" इति धातोर्लुङ् लृदित्वादङ्। आननन्दत् = आङ्पूर्वकात् "टुनदि समृद्धौ" इति ण्यन्ताद्धातोर्लुङ् इदित्वान्नुम् ॥

भाषाऽर्थ ❀ सुग्रीवजी कुम्भकर्णके हाथसे छूट गये और उन्होंने आकाशमें अवगाहन किया। वे शीघ्र रामके अनुगत हुए। उन्होंने अपने कर्मसे वानरोंको आनन्दितभी किया ॥ ५९ ॥

अतत्वरच्च तान् योद्धुमचिचेष्टच्च राघवौ ।
कुम्भकर्णो न्यवर्तिष्ट रणेऽयुत्सत वानराः ॥ ६० ॥

अन्वयः—( स ) तान् योद्धुम् अतत्वरत् राघवौ च अचिचेष्टत् । कुम्भकर्णो रणे न्यवर्तिष्ट । वानरा अयुत्सत ॥

व्याख्या—तान् = वानरान्, योद्धु = युद्धं कर्तुम्, अतत्वरत् = त्वरयति स्म, सुग्रीव इति शेष । राघवौ च = रामलक्ष्मणौ च, अचिचेष्टत् = योद्धु चेष्टयामास । कुम्भकर्ण = रावणमध्यमाऽनुज·, रणे = सग्रामे, न्यवर्तिष्ट = निवृत्त । वानरा = कपय, अयुत्सत = युध्यन्ते स्म ॥

❀व्युत्पत्ति❀ अतत्वरत् = "ञित्वरा सम्भ्रमे" इति ण्यन्ताद्धातोर्लुङ्, "अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्" इत्यभ्यासस्य अत्वम् । अचचेष्टत् = "चेष्ट चेष्टायाम्" इति ण्यन्ताद्धातोर्लुङ् । "विभाषा वेष्टिचेष्ट्योः" इति अभ्यासस्य अत्वपक्षे रूप, तदभावे "अचिचेष्टत्" इति रूपम् । न्यवर्तिष्ट = निपूर्वात् "वृतु वर्तने" इति धातोर्लुङ् । "द्युद्भ्यो लुङि" इति परस्मैपदाऽभावपक्षे रूपम् । अयुत्सत = "युध सम्प्रहारे" इति धातोर्लुङ्, सिच्, झस्यादादेशश्च ॥

❀भाषाऽर्थ.❀ सुग्रीवने वानरोंको लडनेके लिए शीघ्रता कराई और राम और लक्ष्मणको भी लडनेके लिए चेष्टित किया । कुम्भकर्ण युद्धमे निवृत्त हुआ । वानर लडने लगे ॥ ६० ॥

अविवेष्टन्नृपाऽऽदेशादारुक्षंश्चाऽऽशु राक्षसम् ।
तानधावीत् समारूढांस्तेऽप्यत्रसिषताऽऽकुलाः ॥ ६१ ॥

अन्वय·—( रामो वानरै ) राक्षसम् अविवेष्टत् । नृपाऽऽदेशात् ( ते ) राक्षसम् आशु आरुक्षश्च । ( राक्षस ) समारूढान् तान् अधावीत् । ते अपि आकुला- ( सन्त ) अत्रसिषत ॥

व्याख्या—राक्षस = कुम्भकर्णम्, अविवेष्टत् = वेष्टयति स्म ( रामो वानरैरिति शेष )। नृपाऽऽदेशात् = राजनियोगात्, रामाऽऽज्ञया इति भाव । राक्षस = कुम्भ-

कर्णम्, आशु = शीघ्रम्, आरुक्षश्च = आरूढाश्च, वानरा इति शेष । समारूढान् = स्वस्योपरि कृताऽऽरोहणान्, तान = वानरान्, अधावीत् = धूतवान्, कुम्भकर्ण इति शेष । तेऽपि = वानरा अपि, आकुला = व्याकुला सन्त, अस्रसिषत = स्रस्ता, पतिता इति भाव ॥

॥व्युत्पत्ति॥ अविवेष्टत् = "वेष्ट वेष्टने" इति ण्यन्ताद्धातोर्लुङ् । पक्षान्तरे "विभाषा वेष्टिचेष्ट्योः" इति अभ्यासस्य अत्वेन "अववेष्टत्" इति रूपम्। अत्र प्रयोजककर्तृत्वेन "राम" इति पदस्य अध्याहार कुर्वन्तोऽपि जयमङ्गलभरतमल्लिकादयो "वानरा अविवेष्टन्" इति "वानरान् वेष्टयामासु" इति च कथ नाम समलिखन्निति नैव वेद्मि, वेष्टधातो सकर्मकत्वात् प्रयोज्य कर्तरि तृतीययैव विभक्त्या भाव्यमिति मामकीना मनीषा। मल्लिनाथस्तु "वानरा" इति पदमध्याहृत्य "वानरा नृपादेशात् आशु राक्षसम् अविवेष्टन्" इत्यन्वययोजनामकार्षीत्तत्र अविवेष्टन् अवेष्टन्त इत्यर्थ । एव चाऽत्र णिजर्थस्याऽनन्वयादविवक्षेति द्रष्टव्यम् इत्यपि स एवाह। आरुक्षन् = आङ् पूर्वकात् रुहधातोर्लुङ्, "शल इगुपधादनिट क्स" इति च्ले क्सादेश । अधावीत् = "धूञ् कम्पन" इति धातोर्लुङ्, "स्वरतिसूतिसूयतिधूञूदितो वा" इति इडागम "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि । अस्रसिषत = "स्रसु ( ध्वसु भ्रसु ) अवस्रसने" इति द्युतादेर्धातोर्लुङ्, परस्मैपदाऽभावान्नाङ्॥

॥भाषाऽर्थः॥ रामने वानरोंसे कुम्भकर्ण को वेष्टित करवाया। राम की आज्ञासे उन लोगोंने कुम्भकर्णके ऊपर शीघ्र आरोहण किया। कुम्भकर्णने अपने ऊपर चढे हुए उन वानरों को कम्पित किया। वे भी आकुल होते हुए गिर पडे ॥ ६१ ॥

अग्रसिष्ट व्यधाविष्ट समाश्लिक्षच्च निर्दयम् ।
ते चाऽप्यघोरिषुर्घोर रक्तं चाऽवमिषुर्मुखै ॥ ६२ ॥

अन्वय'—( कुम्भकर्ण काश्चित् ) अग्रसिष्ट ( काश्चित् ) व्यधाविष्ट, निर्दय समाश्लिक्षच्च। ते च घोरम् अघोरिषु, मुखै रक्तम् अवमिषुश्च ॥

व्याख्या—अग्रसिष्ट = भक्षितवान्, कुम्भकर्ण काश्चिदिति शेष, एव परत्राऽपि । व्यधाविष्ट = विधावितवान्, निर्दय = निष्करुणं यथा तथा, समाश्लिक्षच्च = आलिङ्गितवाश्च, आलिङ्ग्य हतवाश्चेति भाव । ते च = कुम्भकर्णपीडिता वानराश्च, घोरं = भयङ्कर यथा तथा, अघोरिषु = शब्द कृतवन्त, मुखै =आननै रक्त = रुधिरम्, अवमिषुश्च = उद्गीर्णवन्तश्च ॥

॥व्युत्पत्ति॥ अग्रसिष्ट = "ग्रसु ( ग्लसु ) अदने" इति धातोर्लुङ्। व्यधाविष्ट = विपूर्वकात् "धावु गतिशुद्धयो" इति धातोर्लुङ्। निर्दय = निर्गता दया यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम्। समाश्लिक्षत् = समाङ्पूर्वकात् "श्लिष आलि-

ङ्गन" इति धातोर्लुङ्, "शल इगुपधादनिट क्स" इति च्ले क्सादेश । अघोरिषु= "घुर भीमाऽर्थशब्दयो." इति धातोर्लुङ् । अवमिषु ="टुवम् उद्गिरणे" इति धातोर्लुङ् ॥

❀भाषाऽर्थ❀ कुम्भकर्णने कुछ वानरोंको खा डाला, कुछ वानरोंके ऊपर धावन किया और कुछ लोगोंको निर्दयता पूर्वक आलिङ्गन कर मार डाला। वानर भी भयङ्कर शब्द करने लगे और मुखसे रक्तवमन करने लगे ॥ ६२ ॥

स चाऽपि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न ।
अग्रहीचाऽऽयुरन्येषामरुद्ध च पराक्रमम् ॥ ६३ ॥

**अन्वयः—**स च रुधिरै मत्त ( सन् ) स्वेषाम् अपि न अदयिष्ट, अन्येषाम् आयु अग्रहीत्, पराक्रम च अरुद्ध ॥

**व्याख्या—**स च = कुम्भकर्णश्च, रुधिरै = रक्तै, मत्त =उत्कट सन्, स्वेषाम् अपि = आत्मीयानाम् अपि, राक्षसानामपीति भाव । न अदयिष्ट=न दया कृतवान्, अपरेषा किमुतेति भाव, अर्थापत्तिरलङ्कार । अन्येषाम् = अपरेषा, वानराणामिति भाव । आयु = जीवितम्, अग्रहीत्=गृहीतवान् । "अदोहीवायु" इति पाठान्तर, तत्र तादृश कुम्भकर्ण दृष्टवताम् अन्येषा = वानराणाम्, आयु = जीवितम्, अदोहि इव = स्वय गतम् इवेत्यर्थ । पराक्रमं च = विक्रम च, अन्येषामिति शेष । अरुद्ध = रुद्धवान् ॥

❀व्युत्पत्ति❀ स्वेषाम् = "अदयिष्टे"ति दयधातोर्योगे "अधीगर्थदयेशा कर्मणि" इति षष्ठी । अदयिष्ट= "दय दानगतिरक्षणहिसादानेषु" इति धातोर्लुङ् । अग्रहीत् = "ग्रह उपादान" इति धातोर्लुङ्। हकारान्तत्वात् "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति वृद्धिनिषेध । अदोहि= "दुह प्रपूरण" इति धातो "दुहश्चे"ति कर्म कर्तरि चिण् । अरुद्ध = "रुधिर् आवरण" इति धातोर्लुङ्, "झलो झलि" इति सिचो लोप । "झषस्तथोर्धोऽध" इति धत्व, झला जश् झशि" इति दत्व च । मल्लिनाथस्तु "अरुधत्" इति पाठान्तरमुल्लिख्य "इरितो वे"ति विकल्पादङ् इत्याह ॥

❀भाषाऽर्थ❀ कुम्भकर्णने रुधिरसे मत्त हो कर आत्मीय राक्षसोंके ऊपर भी दया नही की। उसने कई वानरों का जीवन ले लिया और उनके पराक्रम को भी रोक डाला ॥ ६३ ॥

सत्रस्तानामपाहारि सत्त्वं च वनवासिनाम् ।
अच्छेदि लक्ष्मणेनाऽस्य किरीटं कवच तथा ॥ ६४ ॥

**अन्वय.—**( तेन ) सत्रस्ताना वनवासिना सत्त्वं च अपाहारि। लक्ष्मणेन अस्य किरीटं तथा कवचम् अच्छेदि ॥

व्याख्या—सन्त्रस्ताना = सम्भीताना, वनवासिना = वानराणा, सत्त्वं च = बल च, अपाहारि = अपहृत, तेनेति शेष । अथ, लक्ष्मणेन = रामाऽनुजेन, अस्य = कुम्भकर्णस्य, किरीटं = मुकुट, तथा = तेन प्रकारेण, कवचं = वर्म, अच्छेदि = छिन्नम् ॥

❀व्युत्पत्ति❀ अपाहारि = अपपूर्वकात् "हृञ् हरणे" इति धातो कर्मणि लुङ् । अच्छेदि = "छिदिर् द्वैधीकरणे" इति धातो कर्मणि लुङ् ॥

❀भाषाऽर्थ❀ कुम्भकर्णने डरे हुए वानरोंके बलका भी अपहरण किया । तब लक्ष्मणजीने उसके मुकुट और कवचको काट दिया ॥ ६४ ॥

अभेदि च शरैर्देह प्राशसीत्त निशाचरः ।
अस्पर्धिष्ट च रामेण तेनाऽस्याऽक्षिप्सतेषवः ॥ ६५ ॥

अन्वयः—( लक्ष्मणेन ) शरै देह अभेदि । निशाचर तं प्राशंसीत् , रामेण अस्पर्धिष्ट च । तेन अस्य इषव अक्षिप्सत ॥

व्याख्या—शरै = बाणै , देह = शरीर, कुम्भकर्णस्येति भाव । अभेदि = भिन्न । लक्ष्मणेनेति शेष । निशाचर = राक्षस , कुम्भकर्ण इति भाव । तं = लक्ष्मण, प्राशसीत् = स्तुतवान् , रामेण = रामचन्द्रेण, अस्पर्धिष्ट च = योद्धु स्पर्धा कृतवान् । तेन = रामेण, अस्य = कुम्भकर्णस्य, कृते इति शेष । इषव = बाणा , अक्षिप्सत=क्षिप्ता ॥

❀व्युत्पत्ति❀ अभेदि="भिदिर् विदारणे" इति धातो कर्मणि लुङ् । निशाचर = निशाया चरतीति, "चरेष्ट" इति ट । प्राशसीत् = प्रपूर्वकात् "शसु स्तुतौ" इति धातोर्लुङ् । अस्पर्धिष्ट = "स्पर्ध सघर्षे" इति धातोर्लुङ् , सघर्ष पराऽभिभवेच्छा । अक्षिप्सत = "क्षिप प्रेरणे" इति धातो कर्मणि लुङ् , इक्समीप हलन्तादात्मनेपदे सिच कित्त्वाद्गुणाऽभाव ॥

❀भाषाऽर्थ❀ लक्ष्मणजीने बाणोंसे कुम्भकर्णके शरीर को भेदन किया । कुम्भकर्णने लक्ष्मणकी प्रशसा की और रामचन्द्रजीके साथ स्पर्धा की । रामचन्द्रजीने उसके ऊपर बाण फेंके ॥ ६५ ॥

यैरघानि खरो वाली मारीचो दूषणस्तथा ।
अवामस्त स तान् दर्पात् प्रोदयसीच्च मुद्गरम् ॥ ६६ ॥

अन्वय—यै खरो वाली मारीच तथा दूषण अघानि । स तान् दर्पात् अवामस्त, मुद्गर च प्रोदयसीत् ॥

व्याख्या—यै = इषुभि , खर =तन्नामा राक्षस , वाली = सुग्रीवाऽग्रज , मारीच =तन्नामा राक्षस , तथा = तेन प्रकारेण दूषण = तन्नामा राक्षस , अघानि =

व्यापादित , ते अक्षिप्सत इति पूर्वेण सम्बन्ध । स = कुम्भकर्ण , तान् = तादृशान् इषून्, दर्पात् = गर्वात् , अवामंस्त = तिरश्चकार, मुद्गरं च = द्रुघण च, प्रोदयसीत्= उद्गूर्णवान् ॥

ॐव्युत्पत्तिॐ अघानि = "हन हिंसागत्यो " इति धातो कर्मणि लुङ् चिणि वृद्धि", "हो हन्तेञ्णिन्नेषु" इति कुत्वं च । मुद्गर = "द्रुघणे मुद्गरघनौ" इत्यमर । प्रोदयसी-त् = प्रोत्पूर्वकात् "यमु उपरमे" इति धातोर्लुङ् । "यमरमनमाता सक् च" इति सगिटौ । "अत्र परस्मैपद चिन्त्यं "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदविधानात्" इति मल्लिनाथ ॥

ॐभाषाऽर्थॐ रामचन्द्रजीने जिन बाणोंसे खर वाली, मारीच और दूषणको मारा था, उन्हीं बाणोंको छोडा । कुम्भकर्णने दर्पसे उनकी उपेक्षा की और मुद्गरको भी उठाया ॥ ६६ ॥

वायव्याऽस्त्रेण तं पाणि रामोऽच्छैत्सीत सहाऽऽयुधम् ।
आदीपि तरुहस्तोऽसावधावीच्चाऽरिसंमुखम् ॥ ६७ ॥

अन्वयः—रामो वायव्याऽस्त्रेण सहाऽऽयुध त पाणिम् अच्छैत्सीत् । असौ तरुहस्त आदीपि अरिसम्मुखं च अधावीत् ॥

व्याख्या—राम• = रामचन्द्र , वायव्याऽस्त्रेण = वायव्याऽऽयुधेन, सहायुधम् = आयुधसहित, समुद्गरमिति भाव । त = पूर्वोक्त, पाणिं = कर, कुम्भकर्णस्येति शेष । अच्छैत्सीत् = छिन्नवान् । असौ = कुम्भकर्ण , तरुहस्त = वृक्षकर सन्, आदीपि= आदीप्त , अरिसम्मुख च = शत्रुसम्मुख च, रामाऽभिमुखमिति भाव । अधावीत् = वेगेन गत ॥

ॐव्युत्पत्तिॐ वायव्याऽस्त्रेण = वायुर्देवताऽस्येति वायव्य, "वाय्वृतुपित्रुषसो यत्" इति यत् , "ओर्गुण" इति गुण "वान्तो यि प्रत्यये" इत्यवादेश• । वायव्य च तदस्त्र, तेन । सहाऽऽयुधम् = आयुधेन सहित सहायुधस्तम्, "तेन सहेति तुल्य-योगे" इति बहुव्रीहि । अच्छैत्सीत्="छिदिर् द्वैधीकरणे" इति धातोर्लुङ् । तरुहस्त= तरुर्हस्तेऽस्य स , तरो प्रहरणत्वात् "प्रहरणार्थेभ्य परे निष्ठासप्तम्यौ" इति पूर्वनि-पात । आदीपि = आङ्पूर्वकात् "दीपी दीप्तौ" इति धातोर्लुङ्, "दीपजनबुधपूरिता यिप्यायिभ्योऽन्यतरस्याम्" इति कर्तरि चिण् । अधावीत् = "धावु गतिशुद्धयो " इति धातोर्लुङ् ॥

ॐभाषाऽर्थॐ रामचन्द्रजीने वायव्याऽस्त्रसे मुद्गरसे सहित कुम्भकर्णके हाथ को काट डाला । तब कुम्भकर्ण हाथमे वृक्ष लेकर शोभित हुआ और शत्रु ( रामचन्द्रजी ) के सम्मुख दौड पडा ॥ ६७ ॥

सवृक्षमच्छिदत्तस्य शक्राऽस्त्रेण करं नृपः ।
जङ्घे चाऽशीशतद् बाणैरप्रासीदिषुभिर्मुखम् ॥ ६८ ॥

**अन्वय**—नृप शक्राऽस्त्रेण सवृक्षं तस्य करम् अच्छिदत्, बाणै जघे अशीशतत्, इषुभि मुखम् अप्रासीत् ॥

**व्याख्या**—नृप = महाराज, रामचन्द्र इत्यर्थ । शक्रास्त्रेण = इन्द्राऽस्त्रेण, सवृक्षं = तरुसहितं, तस्य = कुम्भकर्णस्य, करं = हस्तम्, अच्छिदत् = छिन्नवान्, बाणै = शरै, जघे = प्रसृते, कुम्भकर्णस्येति शेष । अशीशतत् = गमनाऽसमर्थे कृतवान्, इषुभि = बाणै, मुख=वक्त्रम्, अप्रासीत् = पूरितवान् ॥

**॥व्युत्पत्ति॥** नृप = नॄन्पातीति नृप, "आतोऽनुपसर्गेक" इति कप्रत्ययः । "राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षित ।" इत्यमरः । अच्छिदत् = "छिदिर् द्वैधीकरणे" इति धातोर्लुङ् । "इर इत्सञ्ज्ञा वाच्या" इतीर इत्सञ्ज्ञा, "इरितो वा" इति विकल्पेन च्लेरङ् । तदभावपक्षे "अच्छैत्सीत्" इति रूपम् । अशीशतत्="शद्लृ शातने" इति धातोर्णौ लुङ् । "शदेरगतौत" इति तोऽन्तादेश । प्रासीत् = प्रापूरणे" इति धातोर्लुङ्, "यमरमनमातां सक् चे"ति सगिटौ ॥

**॥भाषाऽर्थ॥** राजा ( राम ) ने इन्द्राऽस्त्रसे वृक्षयुक्त कुम्भकर्णके हाथ को काट डाला, बाणोंसे जङ्घाओंको चलने में असमर्थ बनाया और बाणोंसे मुखको भर दिया ॥ ६८ ॥

ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हत' ।
अपिक्षाता सहस्रे द्वे तद्देहेन वनौकसाम् ॥ ६९ ॥

**अन्वय**—( राम ) ऐन्द्रेण ( कुम्भकर्णस्य ) हृदये अव्यात्सीत् । हतः स गाम् अध्यवात्सीत् । तद्देहेन वनौकसा द्वे सहस्रे अपिक्षाताम् ॥

**व्याख्या**—ऐन्द्रेण = इन्द्राऽस्त्रेण, हृदये = वक्ष स्थले, कुम्भकर्णस्येति शेष । अव्यात्सीत् = विद्धवान्, राम इति शेष । हत = विद्ध, स = कुम्भकर्ण, गा = भूमिम्, अध्यवात्सीत् = अध्युषितवान् । तद्देहेन = कुम्भकर्णशरीरेण, वनौकसा= वानराणा, द्वे सहस्रे = द्वे दशशत्यौ, अपिक्षाता = चूर्णिते ॥

**॥व्युत्पत्ति॥** ऐन्द्रेण = इन्द्रो देवताऽस्येति ऐन्द्र, तेन । "साऽस्य देवता" इत्यण् । अव्यात्सीत् = "व्यध ताडने" इति धातोर्लुङ्, "वदव्रजहलन्तस्याऽच" इति वृद्धिः । गाम् = "अध्यवात्सीत्" इति अधिपूर्वकस्य "वस निवासे" इति धातोर्योगे "उपान्वध्याङ्वस" इति आधारस्य कर्मत्वम् । "गौरिला कुम्भिनीक्षमा ।" इति कोषः । वनौकसां = वनमोको येषा ते वनौकसस्तेषाम् । अपिक्षातां = "पिष्लृ सञ्चूर्णने" इति धातो. कर्मणि लुङ् ॥

❀भाषाऽर्थ❀ रामचन्द्रजीने इन्द्राऽस्त्रसे कुम्भकर्णके हृदयमें वेधन किया। विद्ध होकर उसने भूमिपर निवास किया। उसके शरीरसे दो हजार वानर पीसे गये ॥ ६९ ॥

अस्ताविषुः सुरा रामं दिशः प्रापन्निशाचराः ।
भूरकम्पिष्ट साऽद्रीन्द्रा व्यचालीदम्भसां पतिः ॥ ७० ॥

**अन्वय.**—सुरा रामम् अस्ताविषु । निशाचरा दिश प्रापन् । साऽद्रीन्द्रा भू अकम्पिष्ट । अम्भसा पति व्यचालीत् ॥

**व्याख्या**—रामेण कुम्भकर्णे हते सति—सुरा = देवा , रामं = रामचन्द्रम्, अस्ताविषु = स्तुतवन्त । निशाचरा = राक्षसा , दिश = आशा , प्रापन् = प्राप्तवन्त , भयादिति शेष । साऽद्रीन्द्रा = कुलपर्वतसहिता, भू = पृथिवी, अकम्पिष्ट= कम्पिता । अम्भसा पति = समुद्र , व्यचालीत् = प्रक्षुभितवान् ॥

❀व्युत्पत्ति❀ अस्ताविषु = "ष्टुञ् स्तुतौ" इति धातोर्लुङ् । "स्तुसुधूञ्भ्यः परस्मैपदेषु" इतीट् । प्रापन्=प्रपूर्वकात् "आप्लृ व्याप्तौ" इति धातोर्लुङ् । लृदित्वात् "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इति च्लेरङ् । साऽद्रीन्द्रा = अद्रीणामिन्द्रा अद्रीन्द्राः, महेन्द्रादय कुलपर्वता , तैः सहिता । व्यचालीत् = विपूर्वाच्चलधातोर्लुङ्, "अतोल्रान्तस्ये"ति वृद्धि ॥

❀भाषाऽर्थ❀ कुम्भकर्णके मारेजानेपर देवताओंने रामचन्द्रजीकी स्तुति की। भयसे राक्षस दिशाओंमें भाग गये। महेन्द्र आदि कुलपर्वतोंके साथ पृथ्वी काँपी। समुद्रभी विचलित हुआ ॥ ७० ॥

हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन् ।
अरोदीद्रावणोऽशोचीन् मोहं चाऽशिश्रियत्परम् ॥ ७१ ॥

**अन्वयः**—रक्षांसि राजान हतं कुम्भकर्णम् अशिश्रवन्। रावण अरोदीत्, अशोचीत्, पर मोह च अशिश्रियत् ॥

**व्याख्या**—रक्षांसि = राक्षसा , राजानं = भूप रावणमिति भाव । हत=व्यापादितं, रामेणेति शेष । कुम्भकर्णं रावणमध्यमाऽनुजम् , अशिश्रवन्=श्रावितवन्त । "कुम्भकर्णो हत" इति रावणं श्रावितवन्त इत्यर्थ । ततो रावण = दशानन अरोदीत् = अश्रूणि मुमोच, अशोचीत् = शोक चकार, परम् = अधिकं, मोह च = मूर्च्छां च अशिश्रियत् = आश्रित ।

❀व्युत्पत्ति❀ राजान = श्रुधातोर्बुद्ध्यर्थत्वात् "गतिबुद्धिप्रत्यवसानाऽर्थशब्दाकर्माकर्मकाणामणिकर्ता स णौ" इति अणिकर्तु कर्मत्वम् । अशिश्रवन्="श्रु श्रवणे" इति

धातोर्ण्यन्ताल्लुङ् । "णिश्रिद्रुस्रुभ्य कर्तरि चङ्" इति चङि "सन्वल्लघुनि चङ् परेऽनग्लोपे" इति सन्वद्भावे च "स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा" इति अभ्यासस्य विकल्पेन इत्व । तदभावे "असुस्रवन्" इति रूपम् । अरोदीत्="रुदिर् अश्रुविमोचने" इति धातोर्लुङ् । इरितो वे"ति च्लेरङभावपक्षे सिचीट् "इट ईटि" इति सलोप "नेटी"ति वृद्धिनिषेधाल्लघूपधगुण । अशिश्रियत् "श्रिञ् सेवायाम्" इति ण्यन्ताद्धातोर्लुङ् । "णिश्रि"त्यादिना चङ् , इयङादेशश्च ॥

※भाषाऽर्थ※ राक्षसोंने रावणको कुम्भकर्णके मारे जानेका वृत्तान्त सुनाया । रावणने आँसू गिराया, शोक किया और उत्कट मूर्च्छाका आश्रय लिया ॥ ७१ ॥

अपप्रथद्गुणान् भ्रातुरचिकीर्तच्च विक्रमम् ।
क्रुद्धेन कुम्भकर्णेन येऽदर्शिषत शात्रव. ॥ ७२ ॥
कथ न्वजीविषुस्ते च स चाऽमृत महाबलः ।
अयुयुत्सिषताऽऽश्वास्य कुमारा रावणं ततः ॥ ७३ ॥

अन्वय —( रावण ) भ्रातु गुणान् अपप्रथत् "क्रुद्धेन कुम्भकर्णेन ये शात्रव अदर्शिषत, ते कथ नु अजीविषु ? स च महाबल अमृत" ( इति ) विक्रमं च अचिकीर्तत् । तत कुमारा रावणम् आश्वास्य अयुयुत्सिषत ॥

व्याख्या—भ्रातु = अनुजस्य, कुम्भकर्णस्येति भाव. । गुणान् = शौर्यादीन् , अपप्रथत् = प्रख्यापितवान् , रावण इति शेष । क्रुद्धेन = कुपितेन कुम्भकर्णेन = मदीयमध्यमभ्रात्रा, ये, शात्रव = वैरिण , अदर्शिषत = दृष्टा', ते = शात्रव., कथं नु = केन प्रकारेण नु, अजीविषु = जीविता., स च=तादृशश्च, महाबल =महावीर , अमृत = मृत , ( इति = इत्थम् ), विक्रमं च = पराक्रम च, कुम्भकर्णस्येति शेष' । अचिकीर्तत् = उदीरितवान् । तत = अनन्तरं, कुमारा· = रावणपुत्रा देवान्तकादय इति भाव । रावण = दशाननम् आश्वास्य = आश्वस्त विधाय, अपनीतशोकं कृत्वेति भाव । अयुयुत्सिषत = योद्धुमिष्टवन्त ॥

※व्युत्पत्ति※ अपप्रथत् = "प्रथ प्रख्याने" इति घटादेर्धातोर्ण्यन्ताल्लुङ् । चङि "अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्" इति अत्वम् । अदर्शिषत = "दृशिर् प्रेक्षणे" इति ण्यन्ताद्धातोः कर्मणि लुङ् , "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् चे"ति चिण्वदिट् । अजीविषु. = "जीव प्राणधारणे" इति धातोर्लुङ् । महाबल =महत् बल यस्य स', "आन्महत' समानाऽधिकरणजातीययो " इत्यात्वम् अमृत = "मृङ् प्राणत्यागे" इति धातोर्लुङ् । "म्रियतेर्लुङ्लिङोश्च"इत तङ् । "ह्रस्वादङ्गात्" इति सिचो लोप । अचिकीर्तत्="कृत संशब्दने" इति चौरादिकाद्धातोर्लुङ् । "उर्ऋत्" इति ऋकाराऽभावपक्षे रूपम् । "उपधायाश्चे"तीत्वम् । "र्वोरुपधाया दीर्घ

इक" इति दीर्घः । पक्षान्तरे "अचीकृतत्" इति रूपम् । अयुयुत्सिषत="युध सम्प्रहारे" इति सन्नन्ताद्धातोर्लुङ् । "हलन्ताच्चे"ति सन किरवम् । "पूर्ववत्सन" इति आत्मनेपदम् । सिचीट्, झस्य चादादेशः ॥

ॐभाषाऽर्थ ॐ रावणने भाई कुम्भकर्णके गुणोंका प्रकाशन किया—"कुपित होकर कुम्भकर्णने जिन शत्रुओंको देखा, वे कैसे जीते थे ? वैसा महाबलवालाभी मर गया इस प्रकारसे उसके पराक्रमका भी कीर्तन किया। अनन्तर देवान्तक आदि राजकुमारोंने रावणको आश्वासन देकर युद्ध करनेकी इच्छा की ॥ ७२-७३ ॥

देवान्तकोऽतिकायश्च त्रिशिराः स नरान्तकः ।
ते चाऽऽहिषत संग्रामं बलिनो रावणाऽऽत्मजाः ॥ ७४ ॥

अन्वयः—देवान्तकः अतिकायः त्रिशिराः सः नरान्तकः ते च बलिनो रावणाऽऽत्मजाः संग्रामम् आहिषत ॥

व्याख्या—देवान्तकः = तन्नामधेयः, अतिकायः = तदाख्यः । त्रिशिराः = तदभिख्यः, सः = प्रसिद्धः, नरान्तकः = तदभिधानः, ते च = पूर्वोक्ताश्च, बलिनः = बलवन्तः, रावणाऽऽत्मजाः = रावणपुत्राः संग्रामं = युद्धम्, आहिषत = गताः ॥

ॐव्युत्पत्ति ॐ बलिनः=बलमस्ति येषां ते, "अत इनिठनौ" इति इनिः प्रत्ययः। आहिषत="अहि गतौ" इति धातोर्लुङ् "आडजादीनाम्" इत्याडागमः, इदित्वान्नुम्, सिचीट् आटश्चेति वृद्धिश्च ॥

ॐभाषाऽर्थ ॐ देवान्तक, अतिकाय, त्रिशिरा और सुप्रसिद्धनरान्तक एवं वे सब बलवान् रावणपुत्र युद्धस्थलको चले गये ॥ ७४ ॥

युद्धोन्मत्तं च मत्तं च राजा रक्षार्थमाञ्जिहत् ।
सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥ ७५ ॥

अन्वयः—राजा सुतानां रक्षाऽर्थं युद्धोन्मत्तं मत्तं च आञ्जिहत् । रणपण्डितौ तौ राक्षसौ निरगाताम् ॥

व्याख्या—राजा = रावणः, सुतानां = पुत्राणां, देवान्तकादीनामिति भावः । रक्षाऽर्थं, = रक्षणार्थं, युद्धोन्मत्तं = तन्नामानं, मत्तं च = तदभिधानं च राक्षसम्, आञ्जिहत् = प्रस्थापितवान् । रणपण्डितौ = युद्धकुशलौ, तौ=पूर्वोक्तौ, युद्धोन्मत्तमत्ताविति भावः । राक्षसौ = यातुधानौ निरगाताम् = निर्गतौ ॥

ॐव्युत्पत्तिः ॐ रक्षाऽर्थं = रक्षायै इदं यथा तथेति क्रियाविशेषणम्, "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति समासः । युद्धोन्मत्तं मत्तं च = गत्यर्थकस्य अहिधातोरणिकर्त्रोरुभयोरपि "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणिकर्ता स णौ" इति कर्मत्वम् । आञ्जिहत्=

"अहि गतौ" इति णिजन्ताद्धातोर्लुङ्। "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति चङ्। निरगाताम् = निरुपसर्गपूर्वकात् "इण् गतौ" इति धातोर्लुङ्। "इणो गा लुङि" इति गाऽऽदेश.। "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचोलुक्॥

ॐभाषाऽर्थ ॐ राजा रावणने देवान्तक आदि अपने पुत्रोंकी रक्षाके लिए युद्धोन्मत्त और मत्त इन दो राक्षसोंको भेजा। युद्ध कुशल वे दोनों राक्षस निकल पड़े॥७५॥

तैरजेषत सैन्यानि द्विषोऽकारिषताऽऽकुलाः।
पर्वतानिव ते भूमावचैषुर्वानरोत्तमान्॥ ७६॥

अन्वयः—तै सैन्यानि अजेषत, द्विष आकुला अकारिषत। ते भूमौ वानरोत्तमान् पर्वतान् इव अचैषु॥

व्याख्या—तै = राक्षसै, सैन्यानि = वानरबलानि अजेषत=जितानि, द्विष = शत्रव, आकुलाः = व्याकुला, अकारिषत = कृता, ते = राक्षसा, भूमौ = भुवि, वानरोत्तमान् = श्रेष्ठवानरान्, पर्वतान् इव शैलान् इव, अचैषु = पुञ्जीकृतवन्त॥

ॐव्युत्पत्ति ॐ अजेषत = "जि जये" इति धातो कर्मणि लुङ्, अचिण्वद्भावपक्षे रूपम्। अकारिषत = "डुकृञ् करणे" इति धातो कर्मणि लुङ्, चिण्वद्भावश्च। अचैषु = "चिञ् चयने" इति धातोर्लुङ्। उपमाऽलङ्कारः॥

ॐभाषाऽर्थ ॐ राक्षसोंने वानरसेनाओंको जीता और शत्रुओंको आकुल किया। उन लोगोंने भूमिपर श्रेष्ठ वानरोंको मार कर पर्वतोंके सदृश ढेर लगा दिया॥७६॥

अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः।
प्रैषिषद्राक्षस. प्रास सोऽस्फोटीदङ्गदोरसि॥ ७७॥

अन्वयः—नरान्तक. अङ्गदेन सम योद्धुम् अघटिष्ट। राक्षस प्रास प्रैषिषत्। स अङ्गदोरसि अस्फोटीत्॥

व्याख्या—नरान्तक = रा णकुमार, अङ्गदेन = वालिसुतेन समं = सह, योद्धुं = युद्धं कर्तुम्, अघटिष्ट = चेष्टितवान्। राक्षस = यातुधान नरान्तक इति भाव। प्रासं = कुन्त, प्रैषिषत् = प्रेषित ान्। स = प्रास, अङ्गदोरसि = अङ्गदवक्षःस्थले, अस्फोटीत् = विशीर्ण॥

ॐव्युत्पत्ति ॐ अङ्गदेन = "समम्" इति सहार्थेन पदेन योगे "सहयुक्तेऽप्रधाने" इति तृतीया। अघटिष्ट="घट चेष्टायाम्" इ ते धातोर्लुङ्। प्रै षषत् = प्रपूर्वकस्य "इषु गतो" इति ण्यन्तस्य धातोर्लु ङे च ङे रूपम्। अस्फ टात्="स्फु टिर् विशरणे" इति धातोर्लुङ्। "इरितो वा" इति च्लेरङभावे तु "अस्फुटत" इ त रूपम्॥

ॐभाषाऽर्थ.ॐ नरान्तकने अङ्गदके साथ युद्ध करनेके लए चेष्टा की। उसने

उनके ऊपर कुन्त नामक अस्त्र फेका। वह ( कुन्त ) अङ्गदजीके वक्षःस्थलमें विशीर्ण हुआ ॥ ७७ ॥

अश्वान् वालिसुतोऽहिंसीदतताडच्च मुष्टिना ।
रावणिश्चाऽव्यथो योद्धुमारब्ध च महीं गतः ॥ ७८ ॥

**अन्वयः**—वालिसुत अश्वान् अहिंसीत्, मुष्टिना अतताडच्च । रावणि अव्यथ मही गत ( सन् ) योद्धुम् आरब्ध ॥

**व्याख्या**—वालिसुत =अङ्गद , अश्वान्=हयान् , नरान्तकरथयुक्तानिति भाव । अहिंसीत् = व्यापादितवान्, मुष्टिना=पाणिना, अतताडच्च=आहतवांश्च । ततो रावणि = रावणपुत्र , नरान्तक इत्यर्थ । अव्यथ = व्यथारहित, महीं, = भूमिं, गत = प्राप्त सन् , योद्धु = विग्रहीतुम् , आरब्ध = आरब्धवान् ॥

❀व्युत्पत्ति❀ अहिंसीत् = "( तृह ) हिंसि हिंसायाम्" इति धातोर्लुङ् । अतताडत् = ताडन ताड, "तड आघाते" इति धातो "भावे" इति घञ् । ताडम् अकार्षीदिति, "तत्करोति तदाचष्टे" इति णिच्, णाविष्ठवद्भावात् टिलोपः, "णौ चङ्युपधाया ह्रस्व" इति ह्रस्वस्य "नाऽग्लोपिशास्वृदिताम्" इति प्रतिषेध । रावणि = रावणस्याऽपत्य पुमान् "अत इञ्" इति इञ् । आरब्ध = आङ्पूर्वाद्रभधातोर्लुङ्, "झलो झलि" इति सिचो लोप , "झषस्तथोर्धोऽध" इति तस्य धत्व च ॥

❀भाषाऽर्थ❀ अङ्गदजीने नरान्तकके रथके घोडोंको मार डाला और उसको भी मुक्केसे आहत किया । नरान्तक व्यथारहित होकर जमीन पर उतरकर लड़नेके लिए उपक्रम करने लगा ॥ ७८ ॥

तस्याऽहारिषत प्राणा मुष्टिना वालिसूनुना ।
प्रादुद्रुवंस्तत क्रुद्धाः सर्वे रावणयोऽङ्गदम् ॥ ७९ ॥

**अन्वयः**—वालिसूनुना तस्य प्राणा मुष्टिना अहारिषत । तत सर्वे रावणय क्रुद्धा ( सन्त ) अङ्गदं प्रादुद्रुवन् ॥

**व्याख्या**—वालिसूनुना = अङ्गदेन, तस्य = नरान्तकस्य, प्राणा = असव , मुष्टिना = संपिण्डिताऽङ्गुलिपाणिना, अहारिषत=हृता । तत = अनन्तरं, सर्वे= समस्ता , रावणय =रावणपुत्रा, देवान्तकादय , क्रुद्धा = कुपिता सन्त , अङ्गद= वालिपुत्र, प्रादुद्रुवन्=गता ॥

❀व्युत्पत्ति❀ अहारिषत = "हृञ् हरणे" इति धातो कर्मणि लुङ्, "स्यसिच्सीयुट्तासिष्वि"त्यादिना चिण्वद्भाव । प्रादुद्रुवन्=प्रपूर्वकात ( द्रु ) द्रु गतौ" इति धातोर्लुङ्, "णिश्रिद्रुस्रुभ्य कर्तरि चङ्" इति चङ् ॥

❀भाषाऽर्थ ❀ अङ्गदने मुक्केसे नरान्तकके प्राणोंका हरण किया। तब रावणके सभी पुत्र ( देवान्तक आदि ) कुपित होते हुए अङ्गदके पास गये ॥ ७९ ॥

ततो नीलहनूमन्तौ रावणीनववेष्टताम् ।
अकारिष्टां गिरीस्तुङ्गानरौत्सीत् त्रिशिराः शरैः ॥ ८० ॥

**अन्वय'**—तता नीलहनूमन्तौ रावणीन् अववेष्टताम्, तुङ्गान गिरीन् अकारिष्टाम् । त्रिशिरा शरै अरौत्सीत् ॥

**व्याख्या**—तत =अनन्तर, नीलहनुमन्तौ=नीलमारुती, रावणीन्=रावणपुत्रान्, अववेष्टता = वेष्टितवन्तौ, तुङ्गान्=उन्नतान्, गिरीन्=पर्वतान्, अकारिष्टा = विक्षिप्तवन्तौ । त्रिशिरा =तन्नामधेयो राक्षस, शरै = बाणै, अरौत्सीत्=आवृतवान् ॥

❀व्युत्पत्ति ❀ अववेष्टताम् = "वेष्ट वेष्टन" इति धातोर्णिजन्ताल्लुङ्, "विभाषा वेष्टिचेष्टयो" इति अभ्यासस्यपक्षेऽकार, तदभावपक्षे "अविवेष्टताम्" इति रूपम् । अकारिष्टां = "कॄ विक्षेपे" इति धातोर्लुङ् । "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि । अरौत्सीत् = "रुधिर् आवरण" इति धातोर्लुङ्, हलन्तलक्षणा वृद्धि. । "इरितो वा" इत्यङ्पक्षे "अरुधत्" इति रूपम् ॥

❀भाषाऽर्थ'❀ अनन्तर नील और हनूमानूजीने रावणके पुत्रोंको घेर लिया और उनके ऊपर ऊँचे पर्वतोंको फेका। त्रिशिरा नामके राक्षसने बाणोंसे उनको रोका॥८०॥

परिघेणाऽवधिष्टाऽथ रणे देवान्तको बली ।
मुष्टिनाऽददरत् तस्य मूर्धानं मारुताऽऽत्मजः ॥ ८१ ॥

**अन्वय**—अथ रण बली देवान्तक परिघेण आवधिष्ट । मारुताऽऽत्मजो मुष्टिना तस्य मूर्धानम् अददरत् ॥

**व्याख्या**—अथ=अनन्तरं, रणे = युद्धे, बली = बलवान्, देवान्तक = रावणपुत्र॰, परिघेण = आयुधविशेषेण, आवधिष्ट=हतवान् । मारुताऽऽत्मज = हनूमान्, मुष्टिना = सम्पिण्डिताऽङ्गुलिपाणिना, तस्य=देवान्तकस्य, मूर्धानं=शिर, अददरत्= दारितवान् ॥

❀व्युत्पत्ति ❀ बली=बलमस्याऽस्तीति, "अत इनिठनौ" इतीनि. । आवधिष्ट= आङ्पूर्वकात् "हन हिसागत्यो" इति धातोर्लुङ् । "आङो यमहन" इत्यात्मनेपदम् । अविवक्षितकर्मकत्वात् "आत्मनेपदेष्वन्यतरस्याम्" इति हनो वधादेश । अददरत्= "दॄ विदारणे" इति ण्यन्तस्य धातोश्चङि "अत्स्मृदॄत्वरप्रथम्रदस्तॄस्पशाम्" इत्यभ्यासस्याऽत्वम् ॥

❀भाषाऽर्थ ❀ अनन्तर युद्धमें बलवान् देवान्तकने परिघसे मारा। हनूमानूजीने मुक्केसे उसके शिरको विदीर्ण किया ॥ ८१ ॥

अदीदिपत् ततो वीर्यं नीलं चाऽपीपिडच्छरैः ।
युद्धोन्मत्तस्तु नीलेन गिरिणाऽनायि संक्षयम् ॥ ८२ ॥

अन्वय—ततो युद्धोन्मत्तो वीर्यम् अदीदिपत्, शरै नील च अपीपिडत् । नीलेन गिरिणा ( स ) तु सक्षयम् अनायि ॥

**व्याख्या**—तत = देवान्तकहननाऽनन्तर, युद्धोन्मत्त तन्नामक कश्चिद्राक्षस, वीर्यं - पराक्रमम्, अदीदिपत्=दीपितवान्, शरै = बाणै, नील च = वानरसेनापतिं च, अपीपिडत् = पीडितवान् । नीलेन = वानरसेनापतिना, गिरिणा = पर्वतेन, ( स ) तु = युद्धोन्मत्तस्तु, सक्षय = नाशम्, अनायि=नीत, हत इति भाव ॥

ॐव्युत्पत्तिॐ अदीदिपत् = ' दीपी दीप्तौ" इति णिजन्ताद्धातोर्लुङ् । "भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्" इत्युपधाह्रस्वविकल्प । तदभावपक्षे—"अदिदीपत्" इति रूपम् । अपीपिडत् = "पीडअवगाहन" इति णौ लुङि चङि पूर्वसूत्रेणैवोपधाह्रस्वविकल्प, तदभावपक्षे "अपिपीडत्" इति रूपम् । "अपीपरत्" इति पाठान्तरम् "पॄ पूरणे" इति चुरादेर्धातोर्लुङ् । स = "अनायि" इति नीधातोर्योगे प्रधानकर्मणि "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।" इति प्रथमा विभक्ति । सक्षय = गौणकर्मत्वाद्द्वितीया । अनायि="णीञ् प्रापण" इति धातोः कर्मणि लुङ् ॥

ॐभाषाऽर्थॐ देवान्तकके मारे जानेके अनन्तर युद्धोन्मत्त नामके राक्षसने अपने पराक्रमको प्रकाशित किया और बाणोंसे नीलको भी पीडित किया । नीलने पर्वतसे उसको मार डाला ॥ ८२ ॥

अबभ्राजत् ततः शक्तिं त्रिशिरा पवनाऽऽत्मजे ।
हनूमता क्षतास्तस्य रणेऽमृषत वाजिन. ॥ ८३ ॥

अन्वय—तत त्रिशिराः पवनात्मजे शक्तिम् अबभ्राजत् । रणे हनूमता क्षता. तस्य वाजिन अमृषत ॥

**व्याख्या**—तत = युद्धोन्मत्तव्यापादनाऽनन्तर, त्रिशिरा = तन्नामा रावणकुमार, पवनात्मजे = हनूमति, शक्तिम् = आयुधविशेषम्, अबभ्राजत्=दीपितवान्, रणे = युद्धे, हनूमता = वायुपुत्रेण, क्षता =ताडिता, तस्य = त्रिशिरस, वाजिन = अश्वा, रथयुक्ता इति शेष । अमृषत = मृता ॥

ॐव्युत्पत्तिॐ अबभ्राजत् = "( एजृ भ्रेजृ ) भ्राजृ दीप्तौ" इति धातोर्णौ लुङि चङि "भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्" इति उपधाह्रस्वविकल्पाऽभावपक्षे रूपम् उपधाह्रस्वत्वे तु "अबिभ्रजत्" इति रूपम् । अमृषत = मृङ् प्राणत्यागे" इति धातोर्लुङ् "म्रियतेर्लुङ्लिङोश्च"त्यात्मनेपदम् ॥

ॐभाषाऽर्थॐ युद्धोन्मत्तके मारे जानेपर त्रिशिरा नामके रावणकुमारने हनूमान्-

जीके विषयमें शक्तिका प्रकाशन किया। युद्धमें हनूमानूजीसे ताडित उसके घोडे मर गये ॥ ८३ ॥

अस्रसच्चाऽहतो मूर्ध्नि खड्ग चाऽजीहरद् द्विषा ।
प्राणानौज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्धभिः ॥ ८४ ॥

अन्वयः—मूर्ध्नि आहत ( त्रिशिरा ) अस्रसत्, द्विषा खड्गम् अजीहरत्, तेन एव खड्गेन छिन्नै मूर्धभि प्राणान् औज्झीच्च ॥

व्याख्या—मूर्ध्नि = शिरसि, आहत = ताडित, त्रिशिरा इति भाव, हनूमता इति शेष । अस्रसत् = स्रस्त, भूमौ पतित इति भाव द्विषा = शत्रुणा, हनूमतेत्यर्थ । खड्ग = करवाल, हस्तस्थमिति भाव, अजीहरत्=हारितवान्, तेन एव = पूर्वोक्तेन एव, खड्गेन = असिना, छिन्नै = कृत्तै, मूर्धभि = शिरोभि, त्रिभिरेव मस्तकैर्हेतुभूतैरित्यर्थ । प्राणान् = असून्, औज्झीच = त्यक्तवांश्च ॥

❀व्युत्पत्ति❀ अस्रसत् - "स्रसु ( ध्वसु भ्रसु ) अवस्रंसने" इति धातोर्लुङ्। "द्युद्भ्यो लुङि" इति परस्मैपदम्। द्युतादित्वात् "पुषादिद्युताद्य्लृदित· परस्मैपदेषु" इति अङ्, "अनिदितां हल उपधाया· क्ङिति" इत्यनुनासिकलोप·। पक्षान्तरे "अस्रंसिष्टे"ति रूपम्। अजीहरत् = "हृञ् हरण" इति णिजन्ताद्धातोर्लुङ् "णौ चङ्युपधाया ह्रस्व" इति ह्रस्वत्व सन्वत्कार्यं च। औज्झीत् = "उज्झ उत्सर्गे" इति धातोर्लुङ्, "आडजादीनाम्" इत्याडागम· ॥

❀भाषाऽर्थ❀ हनूमानूजीसे शिरमे ताडित होकर त्रिशिरा जमीनपर गिर पडा। हनूमानूजीने उसका खड्ग छीन लिया। उसी खड्गसे काटे गये शिरोंसे त्रिशिराने प्राणोंको छोड़ा भी ॥ ८४ ॥

युग्मम्—

मत्तेनाऽमारि सम्प्राप्य शरभाऽस्तां महागदाम् ।
सहस्रहरिणाऽक्रीडीदतिकायस्ततो रणे ॥ ८५ ॥
रथेनाऽविव्यथच्चाऽरीन् व्यचारीच्च निरङ्कुशः ।
विभीषणेन सोऽख्यायि राघवस्य महारथः ॥ ८६ ॥

अन्वयः—शरभाऽस्ता महागदा संप्राप्य मत्तेन अमारि । ततो रणे अतिकाय सहस्रहरिणा रथेन अक्रीडीत्, अरीन् अविव्यथत्, निरङ्कुश ( सन् ) व्यचारीच्च । विभीषणेन राघवस्य महारथ स अख्यायि ॥

व्याख्या—शरभाऽस्ता = शरभाऽऽख्यवानरप्रेरिता, महागदा = बृहन्तमायुधविशेषं, सम्प्राप्य = आसाद्य, मत्तेन = तन्नामकेन राक्षसेन, अमारि = मृतम् । तत =

मत्तमरणाऽनन्तर, रणे = युद्धे, अतिकाय = रावणपुत्र , सहस्रहरिणा = सहस्रहय-युक्तेन, रथेन = स्यन्दनेन, अक्रीडीत् = क्रीडितवान् , अरीन् = शत्रून् , वानरानिति भाव । अविव्यथत् = पीडितवान् , निरङ्कुश = अप्रतिहतशक्तिः सन् व्यचारीच्च = बभ्राम च । विभीषणेन = रावणाऽनुजेन, राघवस्य = रामचन्द्रस्य, समीप इति शेष । महारथ = बृहत्स्यन्दन,, अयुतधन्विभि सह शस्त्राऽस्त्रनिपुणयोद्धा वा, स = अति-काय', अख्यायि = कथित ॥

❀व्युत्पत्ति❀ शरभास्ता = शरभेणाऽस्ता शरभाऽस्ता, ताम् । "अस्ताम्" इत्यत्र "असु क्षेपण" इति धातो' क्तप्रत्यय । अमारि = "मृङ् प्राणत्यागे" इति धातोर्भावे लुङ् । सहस्रहरिणा = सहस्र हरयो यस्य स सहस्रहरिस्तेन, "हरिश्चन्द्राऽर्कवाताऽ-श्वशुकभेकयमाऽऽदिषु । " इति मेदिनी । अविव्यथत् = "व्यथ भयचलनयो " इति धातोर्ण्यन्तस्य लुङि चङि रूप "ग्रहिज्ये"त्यादिना सम्प्रसारणम् । व्यचारीत् = विपूर्वात् "( भ्रम्र वभ्रमभ्र ) चर गत्यर्थो " इति धातोर्लुङ् , "अतो ल्रान्तस्ये"ति वृद्धि । अख्यायि = "ख्या प्रकथने" इति धातो कर्मणि लुङ् , चिणि युगागमश्च ॥

❀भाषाऽर्थ❀ शरभ नामके वानरसे फेकी गई बड़ी गदाके चोटसे मत्त नामक राक्षस मर गया । तब युद्धमे अतिकाय नामके रावणपुत्रने हजार घोड़ोंवाले रथमें चढ़कर क्रीडाकी । शत्रुओंको पीडित किया और वह निरङ्कुश होकर घूमने लगा । विभीषणने रामचन्द्रजीसे "यह अतिकाय महारथ है " ऐसा कहा ॥ ८५ ॥ ८६ ॥

अतस्तम्भदय वज्र स्वयम्भुवमतूतुषत् ।
अशिक्षिष्ट महाऽस्त्राणि रणेऽरक्षीच्च राक्षसान् ॥ ८७ ॥

**अन्वय**—"अय वज्रम् अतस्तम्भत् , स्वयम्भुवम् अतूतुषत् , महाऽस्त्राणि अशिक्षिष्ट, रणे राक्षसान् अरक्षीच्च ।

**व्याख्या**—अयम् = अतिकाय , वज्र = कुलिशम् , अतस्तम्भत् = स्तम्भित-वान् , स्वयम्भुव = ब्रह्मदेव, वा स्वयम् = आत्मनैव, ( पालनादिनेति शेष ), भुवं = पृथिवीमिति केचित् । अतूतुषत् = तोषितवान् , महाऽस्त्राणि = ब्रह्मास्त्रादीनि, अशि-क्षिष्ट = शिक्षितवान् , रण = युद्ध, राक्षसान् = यातुधानान् , अरक्षीत्=रक्षितवान् ॥

❀व्युत्पत्ति❀ अतस्तम्भत् = "ष्टभि ( स्कभि ) प्रतिबन्धे" इति ण्यन्तस्य धातोर्लुङि "णिश्रिद्रुस्रुभ्य. कर्तरि चङ्" इति चङ् । अतूतुषत् = "तुष प्रीतौ" इति धातोर्ण्यन्ताल्लुङ् । अशिक्षिष्ट = "शिक्ष विद्योपादान" इति धातोर्लुङ् ॥

❀भाषाऽर्थ❀ "इसने वज्रको स्तब्ध किया, ब्रह्माजीको सन्तुष्ट किया, महाऽस्त्रोंको सीखा और राक्षसोंकी रक्षा की ८७ ॥

अध्यगीष्टाऽर्थशास्त्राणि यमस्याऽह्नोष्ट विक्रमम् ।
देवाऽऽहवेष्वदीपिष्ट नाऽजनिष्टाऽस्य साध्वसम् ॥ ८८ ॥

अन्वय —( अयम् ) अर्थशास्त्राणि अध्यगीष्ट, यमस्य विक्रमम् अह्नोष्ट, देवाऽऽहवेषु अदीपिष्ट । अस्य साध्वस न अजनिष्ट ॥

व्याख्या—अर्थशास्त्राणि = अर्थोपयुक्तानि शास्त्राणि शुक्रबृहस्पत्यादिप्रणीतानीति भाव , अध्यगीष्ट = अधीतवान् , अतिकाय इति शेष । यमस्य = यमराजस्य, विक्रमं = पराक्रमम् , अह्नोष्ट = अपनीतवान् , देवाहवेषु = सुरसग्रामेषु, अदीपिष्ट = शोभित । अस्य = अतिकायस्य, साध्वस = भय, न अजनिष्ट = नो जातम् ॥

***व्युत्पत्ति.* अध्यगीष्ट = अधिपूर्वकात् "इङ् अध्ययने" इति धातोर्लुङ्, "विभाषा लुङ्लृङो." इतीङो गाङादेश । "घुमास्थागापाजहातिसा हलि" इति आत ईत्वम् । गाङादेशाऽभावपक्षे "अध्यैष्ट"ति रूपम् । अह्नोष्ट = "ह्नुङ् अपनयने" इति धातोर्लुङ्, अहलन्तत्वात्सिचो न कित्त्वम् । अदीपिष्ट = "दीपी दीप्तौ" इति धातोर्लुङ् चिणभावपक्षे रूपम् । अजनिष्ट = "जनी प्रादुर्भावे" इति धातोर्लुङ्, "दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्" इति चिणभावपक्षे रूपम् । चिण्पक्षे-"अजनी"ति रूपम् ॥**

***भाषाऽर्थ.* इस ( अतिकाय ) ने अर्थशास्त्रोंका अध्ययन किया है, यमराजके पराक्रमको हटाया है । यह देवताओंके युद्धोंमे शोभित हुआ है । इसे भय नहीं हुआ है ॥ ८८ ॥**

एष रावणिरापादि वानराणां भयङ्करः ।
आह्वताऽथ स काकुत्स्थ धनुश्चाऽपुस्फुरद्गुरु ॥ ८९ ॥

अन्वय.—वानराणा भयङ्कर एष रावणि आपादि" ( इति विभीषणेन आख्यायि ) । अथ स काकुत्स्थम् आह्वत, गुरुधनुश्च अपुस्फुरत् ॥

व्याख्या—वानराणा = कपीना, भयङ्कर = भीषण , एष = अय, रावणि = रावणपुत्र , अतिकाय इत्यर्थ । आपादि=आगत , अस्मत्समीप इति शेष । "इति विभीषणेन अख्यायि' इति षडशीतितमश्लोकस्थपदानामध्याहार । अथ = विभीषणवाक्याऽवसानाऽनन्तर, स = अतिकाय , काकुत्स्थं = रामम् , आह्वत = युद्धाय आहूतवान् , गुरु = महत् , धनुश्च = कार्मुक च, अपुस्फुरत् = स्फारितवान् ॥

***व्युत्पत्ति* भयङ्कर = भयं करोतीति "मेघर्तिभयेषु कृञ." इति खच्, "अरुर्द्विषदजन्तस्य मुम्" इति मुम् । "भयङ्कर प्रतिभय रौद्र तूग्रममी त्रिषु ।" इत्यमर. । आपादि = आङ्पूर्वकात् "पद गतौ" इति धातोर्लुङ् "चिण् ते पद" इति चिण्,**

"चिणो लुक्" इति तशब्दस्य लुक् । आह्वत=आङ्पूर्वकात् "ह्वेञ् स्पर्धाया शब्दे चे"ति धातोर्लुङ् 'स्पर्धायामाङ" इत्यात्मनेपदम् । "आत्मनेपदेष्वन्यतरस्याम्" इति च्लेरङादेश । अपुस्फुरत्="स्फुर ( स्फुल ) सचलने" इति धातोर्णौ लुङ् । "चिस्फुरोर्णौ" इत्यात्वाऽभावपक्षे रूपम् । आत्वपक्षे "अपुस्फरत्" इति रूपम् । "णौ चङ्युपधाया ह्रस्व" इति ह्रस्वत्वम् ॥

ॐभाषाऽर्थ ॐ वानरोंको भय उत्पन्न करनेवाला यह रावणकुमार ( अतिकाय ) समीप आया है" विभीषणने ऐसा कहा । अनन्तर अतिकायने रामचन्द्रजीको ललकारा और बडेसे धनुषको भी सचालित किया ॥ ८९ ॥

सौमित्रिः सर्पवत्सिहमार्दिदत्त महाऽऽहवे ।
तौ प्रावीवृतता जेतु शरजालान्यनेकश. ॥ ९० ॥

अन्वय —सौमित्रि सिह सर्पवत् त महाहवे आर्दिदत् । तौ जेतुम् अनेकशः शरजालानि प्रावीवृतताम् ॥

**व्याख्या**—सौमित्रि =लक्ष्मण , सिह=केसरिण, सर्पवत्=भुजङ्ग इव, तम्=अतिकाय, महाऽऽहवे=महारणे, आर्दिदत्=गत , पीडितवान् वा । तौ= सौमित्र्यतिकायौ, जेतु=जय लब्धुम् , अनेकश =बहुश , शरजालानि=बाणसमूहान् , प्रावीवृतता=प्रवर्तितवन्तौ ॥

ॐव्युत्पत्ति ॐ सौमित्रि =सुमित्राया अपत्य पुमान् , "बाह्वादिभ्यश्चे"ति इञ् । सिह=हिनस्तीति सिहस्त, हिसि हिंसायाम्" इति धातो पचाद्यच् , "पृषोदरादीनि यथोपदिष्टम्" इति वर्णविपर्यय. । "सिहो मृगेन्द्र. पञ्चाऽऽस्यो हर्यक्षः केसरी हरि. ।" इत्यमर. । सर्पवत्=सर्पेणतुल्य, "तेन तुल्य क्रिया चद्वति" इति वति. । आर्दिदत्=अर्दनमर्द., "अर्द गतौ" इति धातो "भावे" इति घञ् । अर्दमकार्षीत् इति आर्दिदत् , "तत्करोति तदाचष्टे" इति णिच् , तदन्ताल्लुङि चङि रूपम् । यद्वा "अर्द हिसायाम्" इति चौरादिकाद्धातोर्लुङ् । चङि णलोपस्य स्थानिवद्भावाद्रेफवर्जितस्य दद्विरवम् । अनेकश.=अनेकानिति "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति शस् । प्रावीवृतता=प्रपूर्वकात् "वृतु वर्तने" इति णिजन्ताद्धातोर्लुङ् "उर्ऋत्" इत्युपधाया अपवाद ऋकार ॥

ॐभाषाऽर्थ.ॐ लक्ष्मणजीने जैसे सिहको सर्प आक्रमण करता है उसी तरह अतिकायको महायुद्धमे पीडित किया । उन दोनों ( लक्ष्मण और अतिकाय ) ने जीतनेके लिए प्रचुर बाणसमूहोंको छोडा ॥ ९० ॥

अच्छैत्तां च महाऽऽत्मानौ चिरमश्रमतां न च ।
तथा तावास्थता बाणानतानिष्टां तमो यथा ॥ ९१ ॥

**अन्वय.**—महात्मानौ अच्छैत्ता, चिरम् न अश्रमताम् । तौ तथा बाणान् आस्थता, यथा तम अतानिष्टाम् ॥

**व्याख्या**—महात्मानौ = महायत्नौ, सौमित्र्यतिकायाविति भाव । अच्छैत्ता= छिन्नवन्तौ, परस्परस्य शरजालानीति शेष । चिर = बहुकालेनाऽपि, न अश्रमता= नो श्रान्तौ । तौ = सौमित्र्यतिकायौ, तथा = तेन प्रकारेण, बाणान् = शरान् , आस्थता = क्षिप्तवन्तौ, यथा = येन प्रकारेण, तम = अन्धकारम् , अतानिष्टा = विस्तारितवन्तौ ॥

**ॐव्युत्पत्ति ॐ** महात्मानौ = महान् आत्मा ययोस्तौ, "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" त्यमर । अच्छैत्ता = "छिदिर् द्वैधीकरण" इति धातोर्लुङ् "इरितो वे"ति च्लेरङभावपक्षे रूपम् । "झलो झलि" इति सिचो लोप. । अश्रमतां= "श्रमु तपसिखेदे चे"ति धातोर्लुङ् , पुषादित्वादङ् । आस्थताम्="असु क्षेपण" इति धातोर्लुङ , पुषादिद्युतादि–इति च्लेरङ् , "अस्यतेस्थुक्" इति थुगागम. । अतानिष्टा= "तनु विस्तार" इति धातोर्लुङ् , "अतो हलादेर्लघो" इति वृद्धिविकल्प ॥

**ॐभाषाऽर्थ ॐ** महाप्रयत्नसे युक्त लक्ष्मण और अतिकायने एकने दूसरेके बाणों को काटा । वे बहुत समय तक भी श्रान्त नहीं हुए । उन दोनोंने अन्धकारके सदृश बाणोंका विस्तार किया ॥ ९१ ॥

> सौर्याऽऽग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ ।
> ते चोपागमता नाश समासाद्य परस्परम् ॥ ९२ ॥

**अन्वय** - राक्षसलक्ष्मणौ सौर्याऽऽग्नेये अस्त्रे व्यकारिष्टाम् । ते च परस्परं समासाद्य नाशम् उपागमताम् ॥

**व्याख्या**—राक्षसलक्ष्मणौ = अतिकायसौमित्री, सौर्याऽऽग्नेये = सूर्याऽग्निसम्बन्धिनी, अस्त्रे = आयुधे, व्यकारिष्टा=विक्षिप्तवन्तौ । ते च - सौर्याऽऽग्नेये अस्त्रे, परस्पर = मिथ , समासाद्य = सम्प्राप्य, नाशम् = अदर्शनम् , उपागमता=प्रापतु.॥

**ॐव्युत्पत्ति ॐ** सौर्याग्नेये = सूर्यो देवताऽस्येति सौर्यं, "साऽस्य देवता" इति अण् । अग्निर्देवताऽस्येति आग्नेयम् , "अग्नेर्ढक्" इति ढक् , "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति ढस्य एय । सौर्यं च आग्नेय च सौर्याऽऽग्नेये, ते । व्यकारिष्टा = विपूर्वात् "कॄ विक्षेपे" इति धातोर्लुङ् । उपागमताम् = उपपूर्वाद्गम्लृधातोर्लुङ् , लृदित्वाऽङ् ॥

**ॐभाषाऽर्थ ॐ** राक्षसने सौर्यास्त्र और लक्ष्मणने आग्नेयाऽस्त्र छोड़ा । वे दोनों अस्त्र परस्पर प्राप्त होकर नष्ट हो गये ॥ ९२ ॥

अबिभ्रजत्ततः शस्त्रमैषीकं राक्षसो रणे ।
तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३ ॥

**अन्वय** —ततो राक्षसो रणे ऐषीक शस्त्रम् अबिभ्रजत् । तत् अपि लक्ष्मणेरितं माहेन्द्रम् आसाद्य अध्वसत् ॥

**व्याख्या**—तत = सौर्याऽऽग्नेयाऽस्त्रनाशाऽनन्तरं, राक्षस = यातुधान·, अतिकाय इति भाव । रणे = युद्धे, ऐषीकम् = इषीकासम्बन्धि, शस्त्रम् = आयुधम् , अबिभ्रजत् = दीपितवान् । तदपि = तत् , ऐषीकं शस्त्रमपि, लक्ष्मणेरित = लक्ष्मणप्रेरित, माहेन्द्र = महेन्द्रसम्बन्धिशस्त्रम् , आसाद्य = प्राप्य, अध्वसत् = ध्वस्तम् ॥

**॥व्युत्पत्ति॥** ऐषीकम् = इषीकाया इदम् ऐषीक, तत् "तस्येदम्" इत्यण् । अबिभ्रजत् = "भ्राजृ दीप्तौ" इति धातोर्णौ लुङि चङि रूपम् । "भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्" इति उपधाह्रस्वत्वम् , तदभावपक्षे "अबभ्राजत्" इति रूपम् । माहेन्द्र = महाश्चाऽसौ इन्द्रो महेन्द्र·, महेन्द्रो देवताऽस्येति माहेन्द्र , तत् । अध्वसत् = "( स्रसु ) ध्वसु ( भ्रसु ) अवस्रंसने" इति धातोर्लुङ् , द्युतादित्वादङ् , "अनिदिता हल उपधाया· क्ङिति" इति नलोप ॥

**॥भाषाऽर्थ॥** सौर्याऽस्त्र और आग्नेयाऽस्त्रके नष्ट होनेके अनन्तर राक्षसने युद्धमे ऐषीक शस्त्रको प्रकाशित किया । वह ( ऐषीक शस्त्र ) भी लक्ष्मणसे प्रेरित माहेन्द्र शस्त्रको प्राप्तकर ध्वस्त हुआ ॥ ९३ ॥

ततः सौमित्रिरस्मार्षीददेविष्ट च दुर्जयम् ।
ब्रह्माऽस्त्रं तेन मूर्धानमदध्वंसन्नरद्विषः ॥ ९४ ॥

**अन्वयः** —तत सौमित्रि दुर्जय ब्रह्माऽस्त्रम् अस्मार्षीत् अदेविष्ट च । ( सौमित्रि ) तेन नरद्विषो मूर्धानम् अदध्वसत् ॥

**व्याख्या**—तत = ऐषीकाऽस्त्रनाशनाऽनन्तर , सौमित्रि = लक्ष्मण , दुर्जयम् = अनभिभवनीय, ब्रह्मदैवतमस्त्रम् , अस्मार्षीत् = स्मृतवान् , अदेविष्ट च = द्योतते स्म च, यद्वा स्मरणोपस्थित तत् ब्रह्माऽस्त्रम् अदेविष्ट च । तेन = ब्रह्माऽस्त्रेण, प्रयोज्यकर्त्रा नरद्विष = राक्षसस्य, अतिकायस्येति भाव । मूर्धानं = शिरः, अदध्वसत् = पातितवान् , सौमित्रिरिति शेष ॥

**॥व्युत्पत्ति·॥** दुर्जय = दु खेन जेतु शक्य दुर्जय, तत् "ईषद्दु·सुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्" इति खलप्रत्यय । अस्मार्षीत् = 'स्मृ चिन्तायाम्" इति धातोर्लुङ् , "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि । अदेविष्ट = "( तेवृ ) देवृ देवने" इत्यनुदात्तेतो धातोर्लुङ्, देवनस्याऽनेकार्थत्वादत्र द्योतनरूपोऽर्थ· । नरद्विष = नरान्द्वेष्टीति

नरङ्किट्, तस्य "सत्सू द्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" सर्वाऽपहारी लोपः। अदध्वसत्=हेतुमण्ण्यन्ताद्ध्वसुधातोर्लुङि चङि रूपम्। "सस प्रध्वसतेऽप्येति विनश्यति विलीयते।" इति भट्टमल्लः॥

॥भाषाऽर्थ॥ ऐषीकाऽस्त्रको नष्ट करनेके अनन्तर लक्ष्मणजीने अभिभवके अविषय ब्रह्माऽस्त्रका स्मरण किया और वे प्रकाशमान भी हुए। लक्ष्मणजीने उस ( ब्रह्माऽस्त्र ) से राक्षस ( अतिकाय ) के शिर को ध्वस्त किया ( गिरा डाला ) ॥९४॥

ततोऽक्रन्दीद्दशग्रीवस्तमाशिश्वसदिन्द्रजित्।
निरयासीच्च सङ्क्रुद्धः प्रार्चिचच्च स्वयम्भुवम् ॥ ९५ ॥

अन्वयः—ततो दशग्रीवः अक्रन्दीत्। इन्द्रजित् तम् आशिश्वसत्, संक्रुद्धः ( सन् ) निरयासीत् स्वयम्भुवं प्रार्चिचच्च ॥

व्याख्या—ततः = अतिकायाऽऽख्यस्वपुत्रहननाऽनन्तरं, दशग्रीवः = रावणः, अक्रन्दीत् = अरुदत्। इन्द्रजित् = मेघनादः, तं = रावणम्, आशिश्वसत् = आश्वासितवान्, संक्रुद्धः =सकुपितः सन्, निरयासीत्=निर्गतः, रावणप्रासादादिति शेषः। स्वयम्भुवं = ब्रह्मदेवं, प्रार्चिचच्च = पूजितवांश्च ॥

॥व्युत्पत्तिः॥ अक्रन्दीत् = "( कदि ) क्रदि ( क्लदि ) आह्वाने रोदने च" इति धातोर्लुङ्। आशिश्वसत् = आङ्पूर्वकात् "श्वस प्राणने" इति हेतुमण्ण्यन्तस्य धातोर्लुङि चङि रूपम्। निरयासीत् = निरुपसर्गपूर्वकात् "या प्रापणे" इति धातोर्लुङ्, "यमरमनमातां सक् च" इति सगिटौ। प्रार्चिचत् = प्रपूर्वकात् "अर्च पूजायाम्" इति चौरादिकाद्धातोर्लुङ्, "चङि" इति द्वित्वम्, अजादित्वाद्द्वितीयस्य द्विर्वचनम् ॥

॥भाषाऽर्थ॥ अतिकायके मारे जानेके अनन्तर पुत्र शोकसे रावण रोने लगा। इन्द्रजित्ने उसे आश्वासन दिया। कुपित होता हुआ वह रावणके प्रासादसे निकला उसने ब्रह्मदेवकी पूजा भी की ॥ ९५ ॥

अहौषीत्कृष्णवर्त्मानं समयष्टाऽस्त्रमण्डलम्।
सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनं च जयाऽऽवहम् ॥ ९६ ॥

अन्वयः—सः कृष्णवर्त्मानम् अहौषीत्, अस्त्रमण्डलं समयष्ट, ब्रह्मणो जयाऽऽवहं शस्त्रं स्यन्दनं च अलब्ध ॥

व्याख्या—सः = इन्द्रजित्, कृष्णवर्त्मानम् = अग्निम्, अहौषीत = हुतवान्, हवनेन प्रीणितवानिति भावः। अस्त्रमण्डलम् = आयुधसमूहं, समयष्ट = सम्पूजितवान्, ब्रह्मणः =धातुः, जयाऽऽवहं=विजयप्रदं, शस्त्रम्=आयुधं, स्यन्दनं च = रथं च, अलब्ध = लब्धवान् ॥

ॐव्युत्पत्तिॐ कृष्णवर्त्मान=कृष्ण वर्त्म यस्य स कृष्णवर्त्मा, तम्। "बर्हिःशुष्मा कृष्णवर्त्मा शोचिष्केशउषर्बुध।" इत्यमर। अहौषीत्="हु दानादानयो" इति धातोर्लुङ्, "सचि वृद्धि परस्मैपदेषु" इति वृद्धि। समयष्ट=सपूर्वकात् "यज देवपूजासङ्गतिकरणदानेषु" इति धातोर्लुङ्। जयाऽऽवहम्=आवहतीति आवह, पचाद्यच्। जयस्याऽऽवह, तत्। अलब्ध="डुलभष् प्राप्तौ" इति धातोर्लुङ्। "झलो झलि" इति सिचो लोप., धत्वजश्त्वे च॥

ॐभाषाऽर्थॐ इन्द्रजित्ने अग्निमें हवन किया, अस्त्रसमूहकी पूजा की और ब्रह्मदेवसे विजयप्रद शस्त्र और रथको भी पाया॥ ९६॥

तमध्यासिष्ट दीप्राऽग्रममोदिष्ट च रावणिः।
छन्नरूपस्ततोऽकर्तीद्देहान् रावणविद्विषाम्॥ ९७॥

अन्वय—रावणि दीप्राऽग्रं तम् अध्यासिष्ट अमोदिष्ट च। तत· छन्नरूप (सन्) रावणविद्विषा देहान् अकर्तीत्॥

व्याख्या—रावणि = रावणपुत्र, इन्द्रजिदित्यर्थ। दीप्राऽग्रम् = अतिदीपनशीलोपरिभाग, त = स्यन्दनम्, अध्यासिष्ट = अध्यासितवान्, अमोदिष्ट च = हृष्टवाश्च। तत = स्यन्दनाऽऽरोहणाऽनन्तर, छन्नरूप = अदृश्य सन्, रावणविद्विषा = रावणशत्रूणा, वानराणामित्यर्थ। "रावणिविद्विषाम्" इति पाठे देवान्तकाऽऽदिशत्रूणामित्यर्थ। देहान् = शरीराणि, अकर्तीत्=छिन्नवान्, रावणिरिति शेष।

ॐव्युत्पत्तिॐ दीप्राऽग्र = दीपनशीलोदीप्र, "नमिकम्पिस्म्यजसकमहिसदीपो र" इति र प्रत्यय। दीप्रोऽग्रो यस्य, तम्। तम्="अध्यासिष्ट"त्यस्य अधिपूर्वकस्य आसधातोर्योगे "अधिशीङ्स्थाऽऽसां कर्म"ेति कर्मत्वम्। अध्यासिष्ट=अधिपूर्वकस्य "आस उपवेशने" इति धातोर्लुङ्। अमोदिष्ट="मुद हर्षे" इति धातोर्लुङ्। छन्नरूप= छन्न रूप यस्य स। रावणविद्विषा=रावणं विद्विषन्तीति रावणविद्विषस्तेषाम्, क्विप्प्रत्यय अकर्तीत्="कृती छेदने" इति धातोर्लुङ्, "सेऽसिचि कृतचृतच्छृदतृदनृत" इति सिचोऽन्यत्र इड्विकल्प.॥

ॐभाषाऽर्थॐ इन्द्रजित् अतिदीपनशील ऊर्ध्वभागसे युक्त उस रथमें चढ़ा और प्रसन्न भी हुआ। अनन्तर वह अदृश्य होकर वानरोंके शरीरोंको काटने लगा॥९७॥

सप्तषष्टि प्लवङ्गाना कोटीर्बाणैरसूषुपत्।
निशाऽन्ते रावणि· क्रुद्धो राघवौ च व्यमूमुहत्॥ ९८॥

अन्वय-रावणि क्रुद्ध (सन्) प्लवङ्गाना सप्तषष्टि कोटी बाणै असूषुपत्, निशान्ते राघवौ च व्यमूमुहत्॥

व्याख्या—रावणि = रावणपुत्र, इन्द्रजिदित्यर्थ। क्रुद्ध· = कुपित· सन्,

प्लवङ्गाना = वानराणा, सप्तषष्टिं कोटी = सप्ताऽधिकषष्टिसख्यका कोटी, बाणै = शरै, असूषुपत् = स्वापितवान्, हतवानिति भाव । किं बहुना—निशाऽन्ते = रात्र्यवसाने, राघवौ च = रामलक्ष्मणौ च, व्यमूमुहत् = मोहितवान् ॥

❀व्युत्पत्तिः❀ रावणि. = रावणस्याऽपत्य पुमान्, "अत इञ्" इति इञ्। सप्तषष्टि = सप्ताऽधिका षष्टिः सप्तषष्टिस्ता, "शाकपार्थिवादीना सिद्धय उत्तरपदलोपस्योपसख्यानम्" इति मध्यमपदलोपी समास.। असूषुपत् = "ञिष्वप् शय" इति धातोर्णौ लुङ्, "स्वापेश्चडि" इति सम्प्रसारण पश्चाद्दित्वमभ्यासदीर्घश्च। राघवौ = रघोरपत्ये पुमासौ राघवौ, तौ "तस्याऽपत्यम्" इत्यण् "तद्धितेष्वचामादे." इत्यादिवृद्धिश्च। व्यमूमुहत् = विपूर्वकात् "मुह वैचित्त्य" इति धातोर्णौ चडि उपधाह्रस्वत्वमभ्यासदीर्घता च ॥

❀भाषाऽर्थ.❀ इन्द्रजित्‌ने क्रुद्ध होकर सड़सठ करोड़ वानरोंको बाणोंसे सुलाया (मार डाला) और रातके अवसानमें राम और लक्ष्मणको भी मूर्च्छित किया ॥९८॥

अपिस्फवत् स्वसामर्थ्यमगूहीत् सायकैर्दिशः ।
अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणम् ॥ ९९ ॥

अन्वय.—( रावणि ) स्वसामर्थ्यम् अपिस्फवत्, सायकै दिश अगूहीत्, महाघोरम् अघोरीत्, गत्वा च रावण प्रैषीत् ॥

व्याख्या—स्वसामर्थ्य = निजपराक्रमम्, अपिस्फवत् = वर्द्धयामास, रावणिरिति शेष, एव परत्राऽपि। सायकै = बाणै, दिश = आशा, अगूहीत् = छादितवान्, महाघोरम् = अतिभयङ्कर यथा तथा, अघोरीत् = शब्द कृतवान्, गत्वा च = यात्वा च, लङ्कामिति शेष । रावण = दशाऽऽननं, प्रैषीत् = प्रेषितवान्, स्वपराक्रमदर्शनाऽर्थमिति भाव. ॥

❀व्युत्पत्ति❀ स्वसामर्थ्य = समर्थस्य भाव कर्म वा सामर्थ्यं, "गुणवचनब्राह्मणादिभ्य कर्मणि च" इति ष्यञ। स्वस्य सामर्थ्यं स्वसामर्थ्यं, तत्। अपिस्फवत् = "स्फायी (ओप्यायी) वृद्धौ" इति धातोर्णौ लुङि चडि रूपम्, "स्फायो व" इति णौ वत्वम्। सायकै = "शरे खड्गे च सायक" इत्यमर.। अगूहीत् = गुहू सवरणे" इति धातोर्लुङ्, "नेट" इति यद्वा हकारान्तत्वात् "ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम्" इति वृद्धिप्रतिषेध । अघोरीत् = "घुर भीमाऽर्थशब्दयो" इति धातोर्लुङ्। प्रैषीत् = प्रपूर्वकात् "इषु गतौ" इति धातोर्लुङ् ॥

❀भाषाऽर्थ❀ इन्द्रजित्‌ने अपनी शक्तिको बढ़ाया, बाणोंसे दिशाओंको आच्छादित किया, अति भयङ्कर शब्द किया और लङ्कामें जाकर अपने पराक्रमको दिखानेके लिए रावणको भेजा ॥ ९९ ॥

युग्मम्—

विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ।
अपारीत् स गृहीतोल्को हतशेषान् प्लवङ्गमान्॥ १००॥
मा शोचिष्ट रघुव्याघ्रौ नाऽमृषातामिति ब्रुवन्।
अवाबुद्ध स नीलाऽऽदीन् निहतान् कपियूथपान्॥ १०१॥

अन्वयः—ततो विभीषणो रामलक्ष्मणौ सस्फुरौ अबोधि। स गृहीतोल्क (सन्) हतशेषान् प्लवङ्गमान् "मा शोचिष्ट। रघुव्याघ्रौ न अमृषाताम्" इति ब्रुवन् अपारीत्। स नीलाऽऽदीन् कपियूथपान् निहतान् अवाबुद्ध॥

व्याख्या—तत = अनन्तर, विभीषण = रावणाऽनुज, रामलक्ष्मणौ = कौशल्येयसौमित्री, सस्फुरौ = चलन्तौ, जीवन्ताविति भाव। अबोधि = ज्ञातवान्। स = विभीषण, गृहीतोल्क = आत्तज्वलदुल्मुक सन्, अन्धकारादिति भाव। हतशेषान् = व्यापादिताऽवशिष्टान्, प्लवङ्गमान् = वानरान्, मा शोचिष्ट = शोक नो कुरुत, रघुव्याघ्रौ = राघवशार्दूलौ, रामलक्ष्मणाविति भाव। न अमृषाता = न मृतौ, इति = एव, ब्रुवन् = भाषमाण सन्, अपारीत् = प्रीणितवान्। स = विभीषण, नीलादीन् = नीलप्रभृतीन्, कपियूथपान् = वानरसेनापतीन्, निहतान् = व्यापादितान्, अवाबुद्ध = अवबुद्धवान्॥

ॐव्युत्पत्तिॐ सस्फुरौ = स्फुरण स्फुर, "स्फुर सचलने" इति धातो "घञर्थे कविधानम्" इति क.। अत्र भाष्ये "स्थास्नापाव्यधिहनियुध्यर्थम्" इति यदुक्त तदुपलक्षण न परिगणनम्। स्फुरेण सहितौ सस्फुरौ, तौ "तेन सहेति तुल्ययोगे" इति बहुव्रीहि, "वोपसर्जनस्ये"ति सहस्य सभाव. मल्लिनाथमते तु—"स्फुरण स्फू, सम्पदादित्वात् क्विप्, तत्सहितौ सस्फुरौ, तौ अबोधि = "बुध अवगमन" इति धातोर्लुङ् "दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्" इति कर्तरि चिण्। गृहीतोल्का येन स। हतशेषान् = हतेभ्य शेषान्। मा शोचिष्ट = "ईशुचिर् पूतिभावे" इति धातो "माङि लुङ्" इति लुङ्, "न माङ्योगे" इत्यडागमप्रतिषेध। पूतिभाव. क्लेद, अत्र "धातूपसर्गाणामनेकाऽर्था" इति नयेन शुचधातो शोकाऽर्थता। रघुव्याघ्रौ = रघुषु (लक्षणया--रघुवशोत्पन्नेषु) व्याघ्रौ (श्रेष्ठौ), "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरा। सिंहशार्दूलनागाद्या पुसि श्रेष्ठाऽर्थगोचरा॥" इत्यमर। अमृषातां = "मृङ् प्राणत्यागे" इति धातोर्लुङ्, "उश्चे"ति सिच कित्वान्न गुण। अपारीत् = "पॄ पालनपूरणयो" इति धातोर्लुङ् "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि। कपियूथपान् = कपीनां यूथ कपियूथ, तत् पान्तीति कपियूथपास्तान्, आतो

नुपसर्गे कः" इति कप्रत्ययः । अवाबुद्ध=अवपूर्वकाद्बुधधातोर्लुङ्, "दीपजने"त्यादिना चिणोविकल्पात्तदभावपक्षे रूपम् । "झलोझलि" इति सिचो लोपः ॥

❀भाषाऽर्थः❀ तब विभीषणने राम और लक्ष्मणको हिलते हुए जाना । उन्होंने जलते हुए उल्मुकको लेकर मरनेसे अवशिष्ट वानरोंको "शोक मत करो राम और लक्ष्मण मरे नहीं है" ऐसा कह कर प्रसन्न किया । उन्होंने नील आदि वानर सेनापतियोंको मरे हुए जाना ॥ १०० ॥ १०१ ॥

तत्रेषज्जाम्बवान् प्राणीदुदमीलीच्च लोचने ।
पौलस्त्य चाऽगदीत्कच्चिदजीवीन् मारुतात्मजः ॥ १०२ ॥

अन्वयः—तत्र जाम्बवान् ईषत् प्राणीत् लोचने च उदमीलीत्, पौलस्त्य च अगदीत्—"मारुताऽऽत्मज कच्चित् अजीवीत् ? ॥

व्याख्या—तत्र = तेषु वानरेषु, जाम्बवान् = भल्लूकसेनापतिः, ईषत्=मनाक्, प्राणीत् = उच्छ्वसिति स्म, लोचने च = नेत्रे च, उदमीलीत् = उन्मीलितवान्, पौलस्त्य च = विभीषणं च, अगदीत् = गदितवान् । मारुताऽऽत्मज = हनूमान्, कच्चित् = किम्, अजीवीत् = जीवितः ॥

❀व्युत्पत्तिः❀ प्राणीत्=प्रपूर्वकात् "अन प्राणने" इति धातोर्लुङ् "अनिते" इति णत्वम् । उदमीलीत्=उत्पूर्वकात् "मील (श्मील) निमेषणे" इति धातोर्लुङ् । पौलस्त्य=पुलस्त्यस्याऽपत्य पुमान्पौलस्त्यस्तं, "तस्याऽपत्यम्" इत्यण् । अगदीत्= "गद व्यक्तायां वाचि" इति धातोर्लुङ्, "अतो हलादेर्लघोः" इति वृद्ध्यभावे रूपम् । अजीवीत्="जीव प्राणधारणे" इति धातोर्लुङ् ॥

❀भाषाऽर्थ❀ उनमें जाम्बवान्‌ने कुछ उच्छ्वसित होकर आँखोंको खोला और कहा—"हनूमान्‌जी जीये क्या ? ॥ १०२ ॥

तस्य क्षेमे महाराज ! नाऽमृष्महाखिला वयम् ।
पौलस्त्योऽशिश्रवत्तं च जीवन्तं पवनात्मजम् ॥ १०३ ॥

अन्वयः—हे महाराज ! तस्य क्षेमे अखिला वयं न अमृष्महि" । पौलस्त्य, त जीवन्त पवनाऽऽत्मजम् अशिश्रवत् ॥

व्याख्या—हे महाराज = हे राजेन्द्र !, तस्य = हनूमतः, क्षेमे = कुशले, जीवनरूप इति भावः । अखिला = सर्वे, वय = भल्लूकवानराः, न अमृष्महि = नो मृताः । पौलस्त्य = विभीषण, तं=जाम्बवन्तं, जीवन्त = प्राणान्धारयन्तं, पवनात्मज = हनूमन्तम्, अशिश्रवत् = श्रावितवान् ।

❀व्युत्पत्तिः❀ महाराज=महाँश्चाऽसौ राजा महाराजस्तत्सम्बुद्धौ, "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति समासः, "आन्महतः समानाऽधिकरणजातीययोः"

इत्यात्वम्, "राजाऽह सखिभ्यष्टच्" इति टच् । अमृष्महि = "मृङ् प्राणत्यागे" इति धातो 'आशसायां भूतवच्चे'ति लुङ् । अशिश्रवत् = 'श्रु श्रवणे" इति धातोर्ण्यन्ताच्चङि सन्वद्भावे अभ्यासोकारस्य "स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनावे"ति वैकल्पिकमित्व, तदभावपक्षे—"अशुश्रवत्" इति रूपम् ॥

ॐभाषाऽर्थॐ हे महाराज ( विभीषण ) ! उन ( हनूमान ) के कुशलमें सब हमलोग नही मरे हैं" । विभीषणजीने जाम्बवान्को "हनूमान्जी जीते हैं" ऐसा सुनाया ॥

युग्मम्—

आयिष्ट मारुतिस्तत्र तौ चाऽप्यहृषतां ततः ।
प्राहैष्टा हिमवत्पृष्ठे सर्वौषधिगिरिं ततः ॥ १०४ ॥
तौ हनूमन्तमानेतुमोषधीं मृतजीविनीम् ।
सन्धानकरणीं चाऽन्या विशल्यकरणीं तथा ॥ १०५ ॥

**अन्वयः**—तत्र मारुति आयिष्ट । तत तौ अहृषता । तत तौ मृतजीविनी सन्धानकरणी तथा अन्या विशल्यकरणीम् ओषधीम् आनेतु हनूमन्तहिमवत्पृष्ठे सर्वौषधिगिरिं प्राहैष्टाम् ॥

**व्याख्या**—तत्र = तस्मिन्स्थाने, मारुति = हनूमान्, आयिष्ट = आगत । तत = मारुत्यागमनाऽनन्तरं, तौ=जाम्बवद्विभीषणौ, अहृषता=हर्षं प्रापतु । तत = अनन्तरं, तौ = जाम्बवद्विभीषणौ, मृतजीविनी=तदाख्या, मृतजीवनप्रदामिति भाव । सन्धानकरणी = तदाख्या, क्षतसन्धायिनीमिति भाव । तथा = तेन प्रकारेण, अन्याम्=अपराम्, विशल्यकरणी = तदाख्या, विशल्यकारिणीमिति भाव । ओषधीम् = औषधम्, आनेतुम्=आहर्तुं, हनूमन्त=वायुपुत्र, हिमवत्पृष्ठे = हिमाऽऽलयपृष्ठभागे, सर्वौषधिगिरिं=सकलभेषजयुक्त पर्वतम् प्राहैष्टा = प्रहितवन्तौ ॥

ॐव्युत्पत्तिॐ आयिष्ट = आङ्पूर्वकात् "अय गतौ" इति धातोर्लुङ् । अहृषतां = "हृष तुष्टौ" इति धातोर्लुङ्, पुषादित्वात् "पुषादिद्युताद्यॢदित परस्मैपदेषु" इति अङ् । मृतजीविनी = मृत जीवयतीति मृतजीविनी, ताम् । "कृत्यल्युटो बहुलम्" इति बहुलग्रहणसामर्थ्यात्कर्तरि ल्युट्, ततः स्त्रीत्वविवक्षाया "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप" इति ङीप् । सन्धानकरणी = सन्धान करोतीति सन्धानकरणी, ताम् । पूर्ववल्ल्युट् ङीप् च । विशल्यकरणी = विगत शल्य यस्य स. विशल्य., "वा पुंसि शल्य शङ्कुर्ना" इत्यमर. । विशल्य करोतीति विशल्यकरणी, ताम्, पूर्ववत्प्रक्रिया ज्ञेया । ओषधीम्=ओषधिशब्दात् "कृदिकारादक्तिन" इति ङीष्, इत्थमेवैतत्पदसिद्धौ "ओषधेश्च विभक्तावप्रथमायाम्" इति दीर्घत्वमिति वदन्

लोके छान्दसप्रक्रियामाश्रयअयमङ्गलाचार्यं उपेन्द्य । सर्वौषधिगिरि = सर्वा ओषधयो यस्मिन्स सर्वौषधि, स चाऽसौ गिरिस्तम् । प्राहैष्टा=प्रपूर्वकात् "हि गतौ" इति धातोर्लुङ्, "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि. ॥

॥भाषाऽर्थ॥ उस स्थानमे हनूमान्‌जी आ गये तब दोनों ( जाम्बवान् और विभीषण ) प्रसन्न हुए। अनन्तर उन दोनोंने मृतजीविनी ( मरे हुएको जिलानेवाली ), सन्धानकरणी ( क्षतको सन्धान करने वाली ) और दूसरी विशल्यकरणी ( गडे हुए बाणाऽग्रको हटानेवाली ) ओषधि लानेके लिए हनूमान्‌जीको हिमालयके मध्यभागमे स्थित सपूर्ण औषधोंसे युक्त पर्वतमें भेजा ॥

प्रोदपाति नभस्तेन स च प्रापि महागिरि. ।
यस्मिन्नज्वालिषू रात्रौ महौषध्यः सहस्रशः ॥ १०६ ॥

अन्वय.—तेन नभ प्रोदपाति, स च महागिरि प्रापि । यस्मिन् रात्रौ सहस्रशो महौषध्य अज्वालिषु ॥

व्याख्या—तेन = हनूमता, नभ = आकाशं, प्रोदपाति = उत्पतित, स च = पूर्वोक्तश्च, महागिरि =महापर्वत , प्रापि=प्राप्त । यस्मिन्=महागिरौ, रात्रौ=रजन्या, सहस्रश = अनेकधा, महौषध्य = महौषधानि, अज्वालिषु = ज्वलिता ॥

॥व्युत्पत्ति॥ प्रोदपाति = प्रोत्पूर्वकात् "पत्लृ पतन" इति धातो कर्मणि लुङ् । प्रापि = प्रपूर्वकात् "आप्लृ व्याप्तौ" इति धातो कर्मणि लुङ् । सहस्रश = सहस्रेण प्रकारैरिति, "बह्वल्पाऽर्थाच्छस्कारकादन्यतरस्याम्" इति शस् । अज्वालिषु = "ज्वल दीप्तौ" इति धातोर्लुङ्, अतोर्लरान्तस्ये"ति वृद्धि ।

॥भाषाऽर्थ॥ हनूमान्‌जी आकाशकी ओर उड गये । उन्होंने उस महापर्वतको प्राप्त किया । जिसमे रातमे हजारों महौषधियाँ उद्दीप्त होती थीं ॥ १०६ ॥

निरचायि यदा भेदो नौषधीना हनूमता ।
सर्व एव समाहारि तदा शैल सहौषधि ॥ १०७ ॥

अन्वयः—हनूमता यदा ओषधीनां भेदो न निरचायि, तदा सहौषधि सर्वशैल एव समाहारि ॥

व्याख्या—हनूमता = पवननन्दनेन, यदा = यस्मिन्काले, ओषधीना = भेषजाना, भेद = विशेष , न निरचायि=नो निश्चित , तदा = तस्मिन्काले, सहौषधि = ओषधिसहित , सर्व = समस्त , शैल एव = पर्वत एव, समाहारि = समानीत ॥

॥व्युत्पत्ति॥ निरचायि = निरुपसर्गपूर्वकात् "चिञ् चयने" इति धातो कर्मणि लुङ् । सहौषधि.=ओषधिभिः सहितः । समाहारि=समाङ् पूर्वकात् "हृञ् हरण" इति धातोः कर्मणि लुङ् ॥

ॐभाषाऽर्थ ॐ हनूमान्‌जी जब औषधभेदोंका निश्चय नही कर सके तब वे औषधोंके साथ समूचे पहाडको उठा ले आये ॥ १०७ ॥

प्राणिषुर्निहता. केचित्केचित्तु प्रोदमीलिषु ।
तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चाऽपरे ॥ १०८ ॥

अन्वय—निहता केचित् प्राणिषुः । केचित्तु प्रोदमीलिषुः । अन्ये योधा. तम अहासिषु । अपरे च व्यजृम्भिषत ॥

व्याख्या—निहता =व्यापादिता , केचित् = योधा , प्राणिषुः = उच्छ्वसितवन्त , ओषधिसन्निधानादिति शेष । केचित्तु = योधा , प्रोदमीलिषु = उन्मीलितनयनाबभूवु । अन्ये=अपरे, योधा = भटा , तम = अन्धकार, मोहरूपमिति भावः । अहासिषु = त्यक्तवन्त , "तथाऽन्येऽहासिषु" इति पाठान्तरे—अहासिषु = हसितवन्त इत्यर्थ । अपरे च=अन्ये च योधा , व्यजृम्भिषत = जृम्भिका कृतवन्त. ॥

ॐव्युत्पत्ति ॐ प्राणिषु.=प्रपूर्वकात् "अन प्राणन" इति धातोर्लुङ्, "अनिते." इति णत्वम् । प्रोदमीलिषु' =प्रोत्पूर्वकत् "मील (दमील) निमेषणे" इति धातोर्लुङ् । अहासिषु ="ओहाक् त्यागे" इति धातोर्लुङ्, "यमरमनमाता सक् चे"ति सगिटौ । व्यजृम्भिषत = विपूर्वकात् "( जभी ) जृभि गात्रविनामे" इति धातोर्लुङ् ॥

ॐभाषाऽर्थ ॐ औषधोंके सामीप्यसे मारे गये कुछ कुछ वानर सास लेने लगे कुछ । नेत्रोंको खोलने लगे । अन्य योद्धा होशमे आने लगे। कुछ तो जमुहाई लेने लगे॥१०८॥

अजिघ्रपस्तथैवाऽन्यानोषधीरालिपस्तथा ।
एव तेऽचेतिषु. सर्वे वीर्य चाऽधिषताऽधिकम् ॥ १०९ ॥

अन्वयः—( योधा ) तथा एव अन्यान् ओषधी अजिघ्रपन्, तथा आलिपन् । एवं ते सर्वे अचेतिषु , अधिकं वीर्यं च अधिषत ॥

व्याख्या—तथा एव=तेन प्रकारेण एव, अन्यान्=अपरान् , ओषधी =औषधानि, अजिघ्रपन्=घ्रापितवन्त , लब्धसज्ञा योधा इति शेष । तथा=तेन प्रकारेण, आलिपन् = लिप्तवन्त , अन्यानोषधीभिरिति शेष । एवम्=अनेन प्रकारेण, ते = पूर्वोक्ता , सर्वे = समस्ता , अचेतिषु = सज्ञा प्राप्तवन्त , अधिकम्=अतिरिक्त, वीर्यं च = पराक्रम च, अधिषत = धारितवन्त ॥

ॐव्युत्पत्ति ॐ अन्यान्="अजिघ्रपन्' इत्यत्र ज्ञानविशेषाऽर्थकस्य प्रत्यवसानाऽर्थस्य वा घ्राधातोर्योगे "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणिकर्ता स णौ" इत्यणिकर्तु. कर्मत्वम्, अजिघ्रपन् ="घ्रा गन्धोपादाने" इति धातोर्णौ लुङ् । "अतिह्रीब्लीरीक्नूयीक्ष्माय्याता पुङ्णौ" इति पुगागम । "जिघ्रतेर्वा" इति इत्वम्

"णौ चङ्युपधाया ह्रस्व" इत्युपधाया ह्रस्वत्वम्। आलिपन् = आङ्पूर्वकात् "लिप उपदेहे" इति धातोर्लुङ्, "लिपिसिचिह्वश्चे" त्यङ्। अचेतिषुः = "चिती संज्ञान" इति धातोर्लुङ्। अधिषत = "डुधाञ् धारणपोषणयो." इति धातोर्लुङ्, "स्थाध्वो-रिच्चे"ति सिच कित्वमित्व च॥

❀भाषाऽर्थ❀ योद्धाओंने उसी तरह औरोंको औषध सुघाया तथा औरोंको औषधोंसे लेपन किया। इस प्रकारसे वे सब होशमे आये और अधिक शक्तिका धारण करने लगे॥ १०९॥

अजिह्लदत्स काकुत्स्थौ शेषांश्चाऽजीजिवत्कपीन्।
हनूमानथ ते लङ्कामग्निनाऽदीदिपन्द्रुतम्॥ ११०॥

अन्वयः—स हनूमान् काकुत्स्थौ अजिह्लदत्, शेषान् कपींश्च अजीजिवत्। अथ ते लङ्काम् अग्निना द्रुतम् अदीदिपन्॥

व्याख्या—स =सर्वौषधिगिर्यानेता, हनूमान् = वायुपुत्र, काकुत्स्थौ=रामलक्ष्मणौ, अजिह्लदत्=आह्लादितवान्, शेषान्=अवशिष्टान्, कपींश्च = वानरांश्च, अजीजिवत्=जीवितवान्। अथ=अनन्तर, ते=कपय, जीविता सन्त इति शेष। लङ्का= पुरीम्, अग्निना=अनलेन, द्रुत = शीघ्रम्, अदीदिपन् = दीपितवन्त॥

❀व्युत्पत्ति❀ अजिह्लदत् = "ह्लादी सुखे च"ति ण्यन्ताद्धातोर्लुङ् उपधाह्रस्वत्व-मभ्यासकार्यं च। अजीजिवत् = "जीव प्राणधारणे" इति ण्यन्ताद्धातोर्लुङ् भ्राज भासेतिह्रस्वपक्षेरूपम्। तदभावे अजिजीवत् इति। अदीदिपन् = "दीपी दीप्तौ" इति ण्यन्ताद्धातोर्लुङ्, "भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्" इत्युपधाह्रस्व-पक्षे रूपम्। तदभावे—"अदिदीपन्" इति रूपम्॥

❀भाषाऽर्थः❀ हनूमान्‌जीने राम और लक्ष्मणको आह्लादित किया और अवशिष्ट वानरोंको जिलाया। तदनन्तर जीवित उन वानरोंने लङ्का आगसे शीघ्र जला दी॥ ११०॥

समनात्सीत्ततः सैन्यममार्जीद्भल्लतोमरम्।
अमार्क्षीचाऽसिपत्रादीनबभासत्परश्वधान्॥ १११॥

अन्वयः—तत सैन्यं समनात्सीत्, भल्लतोमरम् अमार्जीत्, असिपत्रादीन् अमार्क्षीत्, परश्वधान् अबभासत्॥

व्याख्या—तत = अनन्तरं, सैन्य=सेना, रावणस्येति शेष। समनात्सीत् = सन्नद्धम्। भल्लतोमरं = भल्लाख्य तोमराख्य च शस्त्रविशेषम्, अमार्जीत् = शोधितवत्, असिपत्रादीन् = खड्गादीन्, अमार्क्षीत्=शोधितवत्, परश्वधान् = परशून्, अबभासत् = दीपितवत् "अभासीत्" इति पाठान्तर, तत्राऽपि ण्यर्थस्य अन्तर्भावितत्वात्स एवाऽर्थ॥

ॐव्युत्पत्तिःॐ समनात्सीत्=सपूर्वकात् "णह बन्धने" इति धातोर्लुङ् "नहो ध" इति धत्व "वदव्रजहलन्तस्याऽच" इति वृद्धि । अमार्जीत्="मृजूशुद्धौ" इति धातोर्लुङ्, ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इतीडागमो वैकल्पिक, "मृजेर्वृद्धि" इति वृद्धि । अमार्क्षीत्=इडागमस्य वैकल्पिकत्वात्तदभावपक्षे रूपम् । अबभासत्="भासृ दीप्तौ" इति धातोर्णौ लुङ् "भ्राजभासभाषदीपजीवमीलपीडा-मन्यतरस्याम्" इत्युपधाह्रस्वाभावपक्षे रूपम् । तदभावे—"अबीभसत्" इति रूपम् ॥

ॐभाषाऽर्थःॐ अनन्तर ( लडनेके लिए ) रावणकी सेना सन्नद्ध हुई । उसने भाला, तोमर और तलवारोंको साफ किया और फरसोंको उज्ज्वल बनाया ॥१११॥

कुम्भकर्णसुतौ तत्र समनाद्धा महाबलौ ।
निकुम्भश्चैव कुम्भश्च प्रापता तौ प्लवङ्गमान् ॥ ११२ ॥

अन्वयः—तत्र निकुम्भः कुम्भश्च महाबलौ कुम्भकर्णसुतौ समनाद्धाम् । तौ प्लवङ्गमान् आपताम् ॥

व्याख्या—तत्र = रणस्थले, निकुम्भः = तदाख्यः, कुम्भश्च = तन्नामधेयश्च, महाबलौ = महापराक्रमौ, कुम्भकर्णसुतौ = कुम्भकर्णपुत्रौ, समनाद्धा = सन्नद्धौ । तौ = निकुम्भकुम्भौ, प्लवङ्गमान् = वानरान् , प्रापता = प्राप्तवन्तौ ॥

ॐव्युत्पत्ति ॐ महाबलौ = महत् बल ययोस्तौ । समनाद्धा = सम्पूर्वकात् "णह बन्धने" इति धातोर्लुङ् । धातुरय दैवादिक । उभयपदी च । हलन्तलक्षणा वृद्धिः । प्रापता = प्रपूर्वकात् "आप्लृ व्याप्तौ" इति धातोर्लुङ्, लृदित्वादङ् ॥

ॐभाषाऽर्थःॐ वहा पर निकुम्भ और कुम्भ नाम वाले महाशक्तिसे सम्पन्न कुम्भकर्ण पुत्र युद्धके लिए सन्नद्ध हुए । वे वानरोंके पास पहुच गये ॥ ११२ ॥

अगोपिष्टां पुरीं लङ्कामगौप्तां रक्षसां बलम् ।
अत्याक्तामायुधाऽनीकमनैष्टां च क्षयं द्विषः ॥ ११३ ॥

अन्वयः—( तौ ) लङ्का पुरीम् अगोपिष्टा, रक्षसा बलम् अगौप्ताम् , आयुधाऽनीकम् अत्याक्ता, द्विष क्षयम् अनैष्टाम् ॥

व्याख्या—लङ्का = लङ्काऽभिधाना, पुरीं = नगरीम् , अगोपिष्टा = रक्षितवन्तौ, निकुम्भकुम्भाविति शेष , एव परत्राऽपि । रक्षसा = राक्षसाना, बल = सैन्यम् , अगौप्ता = रक्षितवन्तौ, आयुधाऽनीकं = शस्त्रसमूहम् , अत्याक्ता = त्यक्तवन्तौ, द्विष = शत्रून् , क्षय = नाशम्, अनैष्टा=नीतवन्तौ ॥

ॐव्युत्पत्ति ॐ अगोपिष्टा = "गुपू रक्षणे" इति धातोर्लुङ् , "स्वरतिसूतिसूयतिधूञूदितो वा" इति वैकल्पिक इडागम. "नेटी"ति वृद्धि प्रतिषेध । अगौप्तां = गुपूधातोरिडभावपक्षे लुङि रूपम् । "वदव्रजहलन्तस्याऽच" इति वृद्धिः "झलो झलि" इति

सिचो लोप । आयुधाऽनीकम् = आयुधानामनीकम्, "अनीकोऽस्त्री रणे सैन्ये" इति मेदिनीकोशादनीकशब्दस्य समूहाऽर्थवाचकत्वाऽभावेऽपि लक्षणया एषोऽर्थः । अत्याक्ता = "त्यज हानौ" इति धातोर्लुङ् । पूर्ववद्वृद्धि सिचोलोपश्च । अनैष्टा= "णीञ् प्रापण" इति धातोर्लुङ् "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि' ॥

❀भाषाऽर्थ❀ निकुम्भ और कुम्भने लङ्कापुरी की और राक्षसों की सेनाकी रक्षा की, अस्त्रसमूह को छोडा और शत्रुओंको नष्ट किया ॥ ११३ ॥

अकोकूयिष्ट तत्सैन्यं प्रपलायिष्ट चाकुलम् ।
अच्युतच्च क्षतं रक्तं हतं चाऽध्यशयिष्ट गाम् ॥ ११४ ॥

अन्वय —तत् सैन्यम् अकोकूयिष्ट, आकुलं ( सत् ) प्रपलायिष्टः क्षत ( सत् ) रक्तम् अच्युतत्, हतं ( सत् ) गाम् अध्यशयिष्ट च ॥

व्याख्या —तत् = प्रसिद्धं, सैन्यं = बलं, वानराणामिति शेष । अकोकूयिष्ट = अत्यर्थं शब्दं कृतवत, आकुलं = विहस्तं सत्, प्रपलायिष्ट = प्रपलायितवत्, क्षतं= खण्डितं सत्, रक्त = रुधिरम्, अच्युतत् = क्षरितवत्, हत = निहत सत, गा = भूमिम्, अध्यशयिष्ट च=अधिशयितवत् ॥

❀व्युत्पत्ति❀ सैन्य = सेनैव, "चतुर्वर्णादीना स्वाऽर्थ उपसख्यानम्" इति स्वाऽर्थे ष्यञ् । अकोकूयिष्ट = "कुङ् शब्दे" इति धातो "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति भृशाऽर्थे यङि "न कवतेर्यङि" इत्यभ्यासस्य चुत्वप्रतिषेध । यङन्ताल्लङ् । प्रपलायिष्ट = प्रपरापूर्वकात् "अय गतौ" इति धातोर्लुङ् । "उपसर्गस्याऽयतौ" इति रेफस्य लत्वम् । अच्युतत् = "च्युतिर् आसेचने" इति धातोर्लुङ्, "इर इत्सज्ञा वाच्या" इतीर इत्सज्ञा, "इरितो वा" इत्यङ् । गा = "गौरिला कुम्भिनी क्षमा ।" इत्यमर, अधिपूर्वकशीङ् धातोर्योगे "अधिशीङ्स्थाऽऽसा कर्मे"ति आधारस्य कर्मत्वम् । अध्यशयिष्ट = अधिपूर्वात् "शीङ् स्वप्ने" इति धातोर्लुङ् ॥

❀भाषाऽर्थ❀ तब वानरोंकी सेनाने अतिशय शब्द किया । वह आकुल होती हुई भागी, खण्डित होती हुई रक्त गिराने लगी और निहत होती हुई भूमिपर गिर पड़ी ॥ ११४ ॥

अङ्गदेनाऽहसाता तौ युध्यकम्पनकम्पनौ ।
अभ्यार्दीद्वालिनः पुत्र प्रजङ्घोऽपि समत्सरः ॥ ११५ ॥

अन्वयः—अङ्गदेन युधि तौ अकम्पनकम्पनौ अहसाताम् । प्रजङ्घोऽपि समत्सरः ( सन् ) वालिन पुत्रम् अभ्यार्दीत् ॥

व्याख्या—अङ्गदेन = वालिपुत्रेण, युधि = रणे, तौ = पूर्वोक्तौ, अकम्पनकम्पनौ = तन्नामधेयौ, राक्षसौ, अहसाता=हतौ, प्रजङ्घोऽपि = तन्नामको राक्षसोपि, समत्सरः = सकोप. सन्, वालिन पुत्रम् = अङ्गदम्, अभ्यार्दीत् = प्रहृतवान् ॥

❀व्युत्पत्ति❀ अकम्पनकम्पनौ=अकम्पनश्च कम्पनश्च "अल्पाऽच्तरम्" इति नियमेन कम्पन शब्दस्य पूर्वप्रयोगे प्राप्तेऽपि "भ्रातुर्ज्यायस" इति नियमेन अकम्पन शब्दस्य पूर्वनिपात । अहसाता="हन हिसागत्यो" इति धातो कर्मणि लुङ्, "आत्मनेपदेष्वन्यतरस्याम्" इति वधादेशाऽभावपक्षे रूपम् । समत्सर=मत्सरेण सहितः, "अथ मत्सर । असह्यपरसम्पत्तौ मात्सर्ये कृपणे क्रुधि ।" इति विश्व । अभ्यार्दीत्=अभिपूर्वकात् "अर्द हिसायाम्" इति धातोर्लुङ् "आडजादीनाम्" इत्याडागम ॥

❀भाषाऽर्थ❀ अङ्गदसे संग्राममे अकम्पन और कम्पन मारे गये । प्रजङ्घ नामके राक्षसने भी क्रोधयुक्त होकर वालिपुत्र अङ्गदको प्रहार किया ॥ ११५ ॥

तस्याऽप्यबेभिदिष्टाऽसौ मूर्धान मुष्टिनाऽङ्गदः ।
अहार्षीच्च शिरः क्षिप्रं यूपाक्षस्य निराकुल. ॥ ११६ ॥

अन्वय.—अङ्गद तस्याऽपि मूर्धान मुष्टिना अबेभिदिष्ट । निराकुलो यूपाक्षस्य शिर क्षिप्रम् अहार्षीच्च ॥

व्याख्या—अङ्गद = वालिपुत्र , तस्याऽपि = प्रजङ्घस्याऽपि, मूर्धान = शिर , मुष्टिना = सम्पिण्डिताऽङ्गुलिपाणिना, अबेभिदिष्ट = अत्यर्थं भिन्नवान् । निराकुलः = तन्नामक कश्चिद्वानर , केषा चिन्मते अङ्गद एव निराकुल = आकुलतारहित सन्नित्यर्थ । यूपाक्षस्य = तन्नामकस्य राक्षसस्य, शिर = मूर्धान क्षिप्र = सत्वरम् , अहार्षीच्च = छिन्नवाश्च ॥

❀व्युत्पत्ति❀ अबेभिदिष्ट="भिदिर् विदारणे" इति धातोर्यङन्तस्य लुङि रूपम् । "अतो लोप" इत्यकारलोप , "यस्य हल" इति यलोप । अहार्षीत्="हृञ् हरणे" इति धातोर्लुङ् , "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि ॥

❀भाषाऽर्थ❀ अङ्गदजीने प्रजङ्घके शिरको भी मुक्केसे अतिशय भिन्न किया । निराकुल नामक वानरने यूपाक्ष नामके राक्षसके शिरको छिन्न कर डाला ॥ ११६ ॥

शरीर लोहिताक्षस्य न्यभाङ्क्षीद् द्विविदस्तदा ।
क्रुद्ध कुम्भस्ततोऽभैत्सीन् मैन्द सद्विविद शरै. ॥ ११७ ॥

अन्वय —तदा द्विविद लोहिताक्षस्य शरीर न्यभाङ्क्षीत् । तत कुम्भ क्रुद्ध (सन्) सद्विविद मैन्द शरै अभैत्सीन् ॥

व्याख्या—तदा = तस्मिन्काले, द्विविद = तदाख्यो वानर , लोहिताक्षस्य = तदाख्यस्य राक्षसस्य, शरीर = देह, न्यभाङ्क्षीत् = चूर्णितवान् । तत = अनन्तरं, कुम्भ = कुम्भकर्णसुत , क्रुद्ध = कुपित सन् , सद्विविद = द्विविदसहितं, मैन्द = तन्नामान वानर, शरै = बाणै , अभैत्सीत् = भिन्नवान् ॥

❀व्युत्पत्ति❀ तदा = तस्मिन्काले इति, "सर्वैकाऽन्यकियत्तद काले दा" इति दाप्रत्यय । न्यभाङ्क्षीत् = निपूर्वकात् ' भञ्जो आमर्दने" इति धातोर्लुङ् । अभैत्सीत्= "भिदिर् विदारण" इति धातोर्लुङ् ॥

❀भाषाऽर्थ.❀ उस समय द्विविद नामक वानरने लोहिताक्ष नामक राक्षसके शरीर को चूर चूर कर डाला । अनन्तर कुम्भ नामक कुम्भकर्णके पुत्रने कुपित होकर द्विविद के साथ मैन्द नामक वानरको बाणोंसे विदीर्ण कर किया ॥ ११७ ॥

युग्मम्—

आघूर्णिष्टा क्षतौ क्ष्मा च तावाशिश्रयतामुभौ ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं वालिसुतो नगै. ॥ ११८ ॥
प्रौर्णावीच्छरवर्षेण तानपौहीन्निशाचर. ।
वानरानैजिहद्रामस्तूर्णं रक्षितुमङ्गदम् ॥ ११९ ॥

**अन्वय.**—तौ उभौ क्षतौ ( सन्तौ ) आघूर्णिष्टा, क्ष्मा च आशिश्रियताम् । बालिसुतो मातुलौ विह्वलौ दृष्ट्वा कुम्भं नगै प्रौर्णावीत् । निशाचर शरवर्षेण तान् अपौहीत् । राम अङ्गद रक्षितु तूर्णं वानरान् ऐजिहत् ॥

**व्याख्या**—तौ = पूर्वोक्तौ, उभौ = द्वौ, मैन्दद्विविदाविति भाव । क्षतौ=शरताडितौ सन्तौ, आघूर्णिष्टा = चक्रवद्भ्रान्तावित्यर्थ । अनन्तर, क्ष्मा च = भूमिं च, आशिश्रियताम् = आश्रितवन्तौ, भूमौ पतिताविति भाव । बालिसुत = अङ्गद , मातुलौ = मातृभ्रातरौ, मैन्दद्विविदौ इत्यर्थ । विह्वलौ = विक्लवौ, दृष्ट्वा = विलोक्य, कुम्भ = कुम्भकर्णपुत्र, नगै = वृक्षै , प्रौर्णावीत् = आच्छादितवान् । निशाचर = राक्षस , कुम्भ इत्यर्थ । शरवर्षेण = बाणवृष्ट्या, तान्=नगान् , अपौहीत्= निरस्तवान् । राम = रामचन्द्र , अङ्गद = वालिपुत्र, रक्षितु = त्रातु, तूर्णं=सत्वर, वानरान्=अन्यान्कपीन् , ऐजिहत् = व्यापारितवान् ॥

❀व्युत्पत्तिः❀ आघूर्णिष्टाम् = आङ्पूर्वकात् "( घुण ) घूर्ण भ्रमणे" इति धातोर्लुङ् । आशिश्रियताम् = आङ्पूर्वकात् "श्रिञ् सेवायाम्" इति धातोर्लुङ् । "णिश्रिद्रुस्रुभ्य कर्तरि चङ्" इति चङ् । इयडादेशश्च । मातुलौ = मातुर्भ्रातरौ, "पितृव्यमातुलमातामहपितामहा." "मातुर्डुलच्" इति डुलच्प्रत्ययाऽन्तो निपात , "मातुर्भ्राता तु मातुल " इत्यमर । नगै = न गच्छन्तीति नगास्तै , "अन्यत्राऽपि दृश्यत इति वक्तव्यम्" इति डप्रत्यय "नगोऽप्राणिष्वन्यतरस्याम्" इति नञ् वा प्रकृत्या । "शैलवृक्षौ नगावगौ" इत्यमरः । प्रौर्णावीत् = प्रपूर्वकात् "ऊर्णुञ् आच्छादने" इति धातोर्लुङ् "विभाषोर्णो." इति ङित्वाऽभावपक्षे "ऊर्णोतेर्विभाषा" इति पाक्षिक-

वृद्धिः । अपौहीत् = अपपूर्वकात् "ऊह वितर्के" इति धातोर्लुङ्, "उपसर्गादस्यत्यू-ह्योर्वेति वाच्यम्" इत्यात्मनेपदस्य वैकल्पिकत्वात्तदभावपक्षे रूपम् । ऐजिहत् = ईह चेष्टायाम्" इति धातोर्ण्यन्ताल्लुङ् ॥

❀भाषाऽर्थ❀ वे दोनों ( मैन्द और द्विविद ) कुम्भके बाणोंसे विद्ध होकर चक्रके सदृश घूमने लगे और जमीनपर गिर पडे । अङ्गदने अपने अपने मामाओंको विह्वल देखकर कुम्भको वृक्षोंसे आच्छादित किया । कुम्भने भी बाणोंकी वृष्टिसे उन ( वृक्षों ) को हटाया । रामचन्द्रजीने अङ्गदकी रक्षा करनेके लिए शीघ्र अन्य वानरों-को प्रेरणाकी ॥ ११८ ॥ ११९ ॥

द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसंकटात् ।
मुष्टिना कौम्भकर्णिं च क्रुद्धः प्राणैरतित्यजत् ॥ १२० ॥

अन्वय.—सुग्रीवो भ्रातृव्यं शत्रुसङ्कटात् द्रुतम् अत्रास्त । ( स ) क्रुद्धः ( सन् ) मुष्टिना कौम्भकर्णिं प्राणैः अतित्यजत् ॥

**व्याख्या**—सुग्रीवः = वानरेश्वरः, भ्रातृव्यं = भ्रातृपुत्रम्, अङ्गदमित्यर्थः । शत्रुसङ्कटात् = रिपुदुःखात्, द्रुतं = शीघ्रम्, अत्रास्त = रक्षितवान् । तमेव रक्षाप्रकारं कथयति—क्रुद्धः = कुपितः सन्, सुग्रीव इति शेषः । मुष्टिना = संपिण्डिताऽङ्गुलिपाणिना, कौम्भकर्णिं = कुम्भकर्णपुत्रं, कुम्भमित्यर्थः । प्राणैः = असुभिः, अतित्यजत् = त्याजितवान् ॥

❀व्युत्पत्ति❀ भ्रातृव्यं = भ्रातुरपत्यं पुमान् भ्रातृव्यस्तं, "भ्रातुर्व्यच्च" इति व्यत्प्रत्ययः, चाच्छप्रत्यये सति "भ्रात्रीय" इति रूपम् । अत्रास्त = "त्रैङ् पालने" इति धातोर्लुङ्, "आदेच उपदेशेऽशिति" इत्यात्वम् । कौम्भकर्णिं = कुम्भकर्णस्याऽपत्यं पुमान्कौम्भकर्णिस्तम्, "अत इञ्" इति इञ्प्रत्ययः । अतित्यजत्=त्यजेर्ण्यन्ताल्लुङ् ॥

❀भाषाऽर्थ❀ सुग्रीवने अपने भाईके पुत्र ( अङ्गद ) को शत्रुसङ्कटसे शीघ्र बचाया । उन्होंने क्रुद्ध होकर मुक्केसे कुम्भको प्राणोंसे छुड़ाया ( मारडाला ) ॥१२०॥

निकुम्भो वानरेन्द्रस्य प्राहैषीत्परिघं ततः ।
हनूमांश्चाऽऽपतन्तं तमभाङ्क्षीद्भोगिभीषणम् ॥ १२१ ॥

अन्वय.—ततो निकुम्भो वानरेन्द्रस्य परिघं प्राहैषीत् । हनूमांश्च आपतन्तं भोगिभीषणं तम् अभाङ्क्षीत् ॥

**व्याख्या**—ततः = कुम्भवधाऽनन्तरं, निकुम्भः कुम्भभ्राता, वानरेन्द्रस्य = कपिराजस्य, सुग्रीवस्येत्यर्थः समीपं इति शेषः । परिघं = परिघातनाऽपरनामानमस्त्रविशेषं, प्राहैषीत् = प्रहितवान् । हनूमांश्च = वायुपुत्रश्च । आपतन्तम् = आगच्छन्तं, भोगिभीषणं = सर्पसमभयानकं, तं = परिघम्, अभाङ्क्षीत् = भग्नवान् ॥

ॐव्युत्पत्ति ॐ परिघ = "परिघ. परिवातन" इत्यमरः। प्राहैषीत् = प्रपूर्वकात् "हि गतौ" इति धातोर्लुङ्, "सिचि वृद्धि परस्मैपदेषु" इति वृद्धि। भोगिभीषण= भोग. ( सर्पशरीरम् ) अस्यास्तीति भोगी, "अत इनिठनौ" इति नित्ययोगे इनि, "उरग. पन्नगो भोगी" त्यमर। भोगीव भीषणो भोगिभीषणस्तम्, "उपमानानि सामान्यवचनै." इति समासः। अभाङ्क्षीत्—"भञ्जो आमर्दन" इति धातोर्लुङ् ॥

ॐभाषाऽर्थ ॐ कुम्भवधके अनन्तर निकुम्भने सुग्रीवके पास परिघ नामक अस्त्र फेंका। हनूमान्‌जीने आते हुए सर्पके सदृश भयङ्कर उस अस्त्रको तोड डाला ॥१२१॥

प्रौर्णुवीत्तेजसाऽरातिमरासीच्च भयकरम्।
ग्रीवा चाऽस्य तथाक्राक्षीदजिजीवद्यथा न तम् ॥ १२२ ॥

अन्वयः—( हनूमान् ) तेजसा अरातिं प्रौर्णुवीत्, भयङ्करम् अरासीच्च, अस्य ग्रीवा तथा अक्राक्षीत्, यथा त न अजिजीवत् ॥

व्याख्या—तेजसा = विक्रमेण, अराति=शत्रुं, निकुम्भमिति भाव, प्रौर्णुवीत्= अभिभूतवान्, हनूमानिति शेष, एव परत्राऽपि, भयङ्कर = भीषण यथा तथा, अरासीच्च = शब्दितवाश्च। अस्य = निकुम्भस्य, ग्रीवा = कन्धरा, तथा = तेन प्रकारेण, अक्राक्षीत् = आकृष्टवान्, यथा = येन प्रकारेण, त=निकुम्भ, न अजिजीवत्= न जीवयामास। हनूमान्ग्रीवामाकृष्य निकुम्भ हतवानिति भाव ॥

ॐव्युत्पत्ति.ॐ प्रौर्णुवीत्=प्रपूर्वकात् "ऊर्णुञ् आच्छादने" इति धातोर्लुङ् "विभाषोर्णो" इति ङित्वपक्षे वृद्ध्यभावे रूपम्। अरासीत् = "रस शब्दे" इति धातोर्लुङ्। ग्रीवाम् = "अथ ग्रीवाया शिरोधि कन्धरेत्यपि।" इत्यमर। अक्राक्षीत् = "कृष विलेखन" इति धातोर्लुङ्, अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्" इत्यमागमपक्षे रूपम्। अजिजीवत् = "जीव प्राणधारण" इति धातोर्ण्यन्तस्य लुङि रूपम्। "आजभासभाषदीपजीवमीलपीडामन्यतरस्याम्" इति उपधाया ह्रस्वाऽभावपक्षे रूपम्। ह्रस्वपक्षे तु "अजीजिवत्" इति रूपम् ॥

ॐभाषाऽर्थ ॐ हनूमान्‌जीने तेजसे शत्रु निकुम्भको अभिभूत किया और भयङ्कर शब्द किया। उन्होंने उसकी ग्रीवाको उस प्रकारसे खींचा जैसे कि वह जीवित न रहा ॥ १२२ ॥

समगत कपिसैन्य सम्मदेनाऽतिमात्रं
विटपहरिणनाथ सिद्धिमौहिष्ट नित्याम्।
नृपतिमतिररस्त प्राप्तकामेव हर्षात्
रजनिचरपतीना सन्ततोऽतायि शोक ॥ १२३ ॥

अन्वयः—कपिसैन्य समदेन अतिमात्र समगत। विटपहरिणनाथ नित्या

सिद्धिम् औहिष्ट । नृपतिमति प्राप्तकामा इव हर्षात् अरंस्त । रजनिचरपतीना सन्तत शोक अतायि ॥

व्याख्या—कपिसैन्य = वानरसेना, समदेन = हर्षेण, अतिमात्रम् = अत्यर्थं, समगत = संगत, कुम्भकर्णादीना प्रधानवैरिणा निधनेनेति भाव । विटपहरिणनाथ = शाखामृगपति, सुग्रीव इत्यर्थ । नित्याम् = अवश्यभाविनी, सिद्धि = सफलताम्, औहिष्ट = तर्कितवान् । नृपतिमति = रामबुद्धिः, प्राप्तकामा इव = सम्पन्नाऽभिलाषा इव, हर्षात् = प्रमोदात्, अरस्त = रमते स्म । रजनिचरपतीना = राक्षसाऽधिपाना, रावणमेघनादादीनामिति भाव । सन्तत = अविच्छिन्न, शोक = मन्यु, अतायि = अवर्द्धत ॥

॥ व्युत्पत्ति ॥ समगत = सपूर्वकात् "गम्लृ गतौ" इति धातोर्लुङ् । "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदम् । "वा गम" इति सिच किस्वे "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलिक्ङिति" इति मकारलोपे "ह्रस्वादङ्गात्" इति सिचो लोप । तदभावपक्षे "समगस्त" इति रूपम् । विटपहरिणनाथ = विटपेषु ( शाखासु ) हरिणास्तेषा नाथ. । औहिष्ट = "ऊह वितर्के" इति धातोर्लुङ् । प्राप्तकामा = प्राप्त कामो यया सा । अरस्त = "रमु क्रीडायाम्" इति धातोर्लुङ् । रजनिचरपतीना = रजनौ चरन्तीति रजनिचरा, "चरेष्ट" इति ट । रजनिचराणां पतयस्तेषाम् । अतायि = "तायृ सन्तानपालनयो" इति धातोर्लुङ्, 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति कर्तरि चिण् ॥

॥ भाषाऽर्थ ॥ वानरोंकी सेना हर्षसे अतिशय सगत हुई । वानरराज सुग्रीवने अवश्य होनेवाली सफलताकी तर्कना की । रामचन्द्रजी की बुद्धि सम्पन्न अभिलाषवाली की सदृश हर्षसे क्रीडा करने लगी । राक्षसेश्वर और मेघनाद आदियोंका अविच्छिन्न शोक बढ गया ॥ १२३ ॥

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे द्वितीय परिच्छेद ( वर्ग ), तथा लक्ष्यरूपेकथानके कुम्भकर्णवधो नाम पञ्चदश सर्ग ॥



# अथ षोडशः सर्गः ।

इत प्रभृति "लृट् शेषे चे"ति सूत्रेण विधीयमानस्य लृटो विलसितमाह, कुत्रचित्तु सूत्रान्तरेण विधीयमानमपि लृटं दर्शयिष्यति । तथा चाऽत्र सर्गे सर्वत्रैव "स्यतासी लृलुटो" इति स्यप्रत्ययश्च ॥

तत' प्ररुदितो राजा रक्षसा हतबान्धवः ।
किं करिष्यामि राज्येन सीतया किं करिष्यते ॥ १ ॥

अन्वय —ततो हतबान्धवो रक्षसा राजा प्ररुदित —"राज्येन किं करिष्यामि ? सीतया किं करिष्यते ?

व्याख्या—तत =कुम्भकर्णाऽऽदिवधाऽनन्तर, हतबान्धव =निषूदितबन्धुसमूह' । रक्षसा=यातुधानाना, राजा = भूप , रावण इत्यर्थ । प्ररुदित = क्रन्दितुमारब्धः, प्ररुदितस्वरूपमाह—किमिति । राज्येन = राष्ट्रेण, किं करिष्यामि=किं विधास्यामि, सीतया = जानक्या, किं करिष्यते = किं विधास्यते, न किञ्चिदिति भाव । बान्धवनाशान्नैष्फल्यप्रसक्तेरिति तात्पर्यम् ॥

॥व्युत्पत्ति॥ हतबान्धव =बन्धुनां समूहो बान्धव, "तस्य समूह" इत्यण्, "ओर्गुण" इति गुण । हत बान्धव यस्य स । प्ररुदित' = प्रपूर्वकात् "रुदिर् अश्रुविमोचने" इति धातो' "आदिकर्मणि क्त कर्तरि चे"ति क्तप्रत्यय । राज्येन = राज्ञो भाव. कर्म वा राज्य, तेन "राजाऽसे" इति यक्प्रत्ययः । करिष्यामि="डुकृञ् करण" इति धातो "लृट शेषे चे"ति लृट् "ऋद्धनो स्ये" इतीट् । करिष्यते=कर्मणि लृट् ॥

॥भाषाऽर्थः॥ कुम्भकर्ण आदियोंके बध होनेके अनन्तर जिसके अनेको बान्धव मारे गये हैं ऐसा राक्षसराज रावण विलाप करने लगा—"मै राज्यसे क्या करूंगा और सीतासे क्या किया जायगा ? ॥ १ ॥

अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुम् ।
ह्रेपयिष्यति कः शत्रून् केन जायिष्यते यमः ॥ २ ॥

अन्वयः—वीरे अतिकाये हते जीवितु न प्रोत्सहिष्ये । क शत्रून् ह्रेपयिष्यति? केन यमो जायिष्यते ?

व्याख्या—वीरे = शूरे, अतिकाये = तन्नामके मत्पुत्रे, हते = व्यापादिते, शत्रुणेति शेष । जीवितु = प्राणान्धारयितु, न प्रोत्सहिष्ये = न प्रोत्साहं करिष्यामि, अहमिति शेष । क = अतिकायादन्यो वीर , शत्रून् = रिपून् , ह्रेपयिष्यति = लज्जयिष्यति, केन = अतिकायादन्येन वीरेण, यम = धर्मराज , जायिष्यते=जितः करिष्यते, न केनाऽपीति भाव ॥

❀व्युत्पत्तिः❀ वीरे="शूरो वीरश्च विक्रान्त" इत्यमर । प्रोत्सहिष्ये=प्रोत्पूर्वकात् "षह मर्षण" इति धातोर्लृट् । ह्रेपयिष्यति=ह्री लज्जायाम्" इति धातोर्णौ लृट् "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुगागमे "पुगन्तलघूपधस्य चे"ति गुणे रूपम् । जायिष्यते="जि जय" इति धातो कर्मणि लृट्, "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशा वा चिण्वदिट् चे"ति चिण्वदिट् च ॥

❀भाषाऽर्थ❀ वीर अतिकायके मारे जानेपर मै जीनेके लिए भी उत्साह नही करूगा । कौन शत्रुओंको लज्जित करेगा ? किससे यमराज जीता जायगा ? ॥ २ ॥

अतिकायाद्विना पाशं को वा छेत्स्यति वारुणम् ।
रावण मस्यते को वा स्वयम्भू' कस्य तोक्ष्यति ॥ ३ ॥

अन्वय.—अतिकायात् विना वारुण पाश को वा छेत्स्यति ? को वा रावणं मस्यते ? स्वयम्भू कस्य तोक्ष्यति ?

व्याख्या—अतिकायात् विना = अतिकाय विना, वारुण = वरुणसम्बन्धिन, पाश = शस्त्रविशेष, को वा = को जनो वा, छेत्स्यति=द्विधा करिष्यति, न कोऽपीति भाव । को वा=जन, रावणं=मा, मस्यते = पूजयिष्यति । स्वयम्भू =ब्रह्मा, कस्य= जनस्य, तोक्ष्यति = प्रीतिं जनयिष्यति, सर्वश्चैष श्लाघनीयो व्यापारोऽतिकायेन सहैवाऽपगत इति भाव ॥

❀व्युत्पत्ति❀ अतिकायात्="विना" पदेन योगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति पञ्चमी पक्षे द्वितीया च ॥ वारुण=वरुणस्याऽय वारुणस्त, "तस्येदम्" इत्यण् "तद्धितेष्वचामादे" इत्यादिवृद्धिश्च । छेत्स्यति="छिदिर् द्वैधीकरण" इति धातोर्लृट् । स्वयम्भू =स्वय भवतीति "भुवः सञ्ज्ञाऽन्तरयो." इति क्विप्प्रत्यय', "हिरण्यगर्भोलोकेशः स्वयम्भूश्चतुराननः ।" इत्यमर । तोक्ष्यति= "तुष प्रीतौ" इति धातोर्लृट् "षढो. क. सी"ति षस्य कत्वम्, "इण्को" इति षत्व च ॥

❀भाषाऽर्थ❀ अतिकायके विना वरुणके पाशको कौन काटेगा ? कौन ( मुझ ) रावणकी प्रतिष्ठा करेगा ? ब्रह्माजी किसको सन्तुष्ट करेगे ? ॥ ३ ॥

श्लाघिष्ये केन को बन्धून् नेष्यत्युन्नतिमुन्नतः ।
क प्रेष्यति पितृन् काले कृत्वा कत्थिष्यते न कः ॥ ४ ॥

अन्वय'—केन श्लाघिष्ये ? क उन्नत (सन्) बन्धून् उन्नति नेष्यति ? काले क पितृन् प्रेष्यति ? कृत्वा को न कत्थिष्यते ?

व्याख्या—केन=जनेन, अतिकायाद्विनेति शेष, एवं परत्राऽपि योज्यम् । श्लाघिष्ये = श्लाघा करिष्यामि, 'ममैतादृश' सर्वगुणसम्पन्न पुत्र" इति भावः ।

क = जन , उन्नत =गुणैरुन्नतियुक्त सन् , बन्धून् = आत्मबान्धवान् , उन्नति = परा कोटि, नेष्यति=प्रापयिष्यति । काले = समये, पितृक्रियोचित इति भाव । क = जन । पितृन् = पितृपितामहप्रपितामहादीन् , प्रेष्यति=तर्पयिष्यति । कृत्वा=विधाय, महदपि कार्यमिति शेष , क = जन , न कत्थिष्यते अहमेतादृशो योग्य इति आत्मश्लाघा न करिष्यति ॥

ॐव्युत्पत्ति ॐ श्लाघिष्ये = "श्लाघृ कत्थन" इति धातोर्लृट् । बन्धून् = द्विकर्मकस्य नीधातो. प्रधान कर्म । उन्नतिम् = "अकथित चे"ति कर्मत्वाद्गौण कर्म । प्रेष्यति = "प्रीञ् तर्पण" इति धातोर्लृट् । कत्थिष्यते = "कत्थ श्लाघायाम्" इति धातोर्लृट् ॥

ॐभाषाऽर्थ ॐ अतिकायके विना किससे मै अपनी श्लाघा करूंगा ? कौन उन्नत होकर अपने बन्धुओंको भी उन्नत करेगा ? पितृक्रियाके उचित कालमें कौन पितरों को तर्पण करेगा ? महत्त्वपूर्ण कार्य करके भी कौन अपने ही मुखसे अपनी बडाई नहीं करेगा ? ॥ ४ ॥

उद्यंस्यति हरिर्वज्रं विचरिष्यति निर्भय ।
भोक्ष्यते यज्ञभागांश्च शूरमानं च वक्ष्यति ॥ ५ ॥

अन्वय —हरि वज्रम् उद्यंस्यति, निर्भय ( सन् ) विचरिष्यति, यज्ञभागान् भोक्ष्यते, शूरमानं च वक्ष्यति ॥

व्याख्या—हरि = इन्द्र , वज्रं = कुलिशम् , उद्यस्यति = उत्थापयिष्यति, अतिकायाऽभावेनेति शेष· । निर्भय = भयरहित सन् , विचरिष्यति=इतस्ततो गमिष्यति । यज्ञभागान् = मखाऽशान् , स्वकीयानिति शेष । भोक्ष्यते = भक्षयिष्यति । शूरमान च "शूरोऽस्मी"ति चित्तसमुन्नतिं च, वक्ष्यति=धारयिष्यति ॥

ॐव्युत्पत्ति·ॐ हरि· = "यमाऽनिलेन्द्रचन्द्राऽर्कविष्णुसिंहाऽशुवाजिषु । शुकाऽहिकपिभेकेषु हरिर्नाकपिले त्रिषु ॥" इत्यमर । उद्यस्यति = उत्पूर्वकात् "यमु उपरमे" इति धातोर्लृट् । निर्भय = निर्गत भय यस्मात्स । भोक्ष्यते = "भुज पालनाऽभ्यवहारयो" इति धातोर्लृट् । "भुजोऽनवने" इत्यात्मनेपदम् । शूरमान = शूरस्य मानस्त, "मानश्चित्तसमुन्नति " इत्यमर । वक्ष्यति = "वह प्रापण" इति धातोर्लृट् "होढ" इति ढत्व, "षढो· क सी"ति तस्य कत्व च ॥

ॐभाषाऽर्थ ॐ अतिकायके न होने पर इन्द्र वज्र उठायेगा, निर्भय होता हुआ विचरण करेगा, यज्ञोंमें अपने भागोंको खायेगा और "मै शूर हूं" ऐसा समझकर अभिमान करेगा ॥ ५ ॥

रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत् ।
निर्वर्त्स्यत्यृतुसंघातः स्वेच्छयेन्दुरुदेष्यति ॥ ६ ॥

**अन्वयः**—रविः निःशङ्कं तप्स्यति । मरुत् अनियतं वास्यति । ऋतुसंघातो निर्वर्त्स्यति । इन्दुः स्वेच्छया उदेष्यति ॥

**व्याख्या**—रविः = सूर्यः, निःशङ्कं = शङ्कारहितं यथा तथा, तप्स्यति = तापं करिष्यति, निग्रहीतुरतिकायस्याऽभावादिति शेषः, एवं परत्राऽपि । मरुत् = वायुः, 'अनियतं = नियमरहितं यथा तथा, स्वाच्छन्द्येनेति भावः । वास्यति = गमनं करिष्यति । ऋतुसंघातः = वसन्ताद्यृतुसमुच्चयः, निर्वर्त्स्यति = निर्वृत्तो भविष्यति, अतिकायाऽभावेन मन्नगरे षड्ऋतवो वास्तव्यकुटुम्बितां हित्वा क्रमेण प्रादुर्भविष्यन्तीति भावः । एवं च इन्दुः = चन्द्रः, स्वेच्छया = निजवाञ्छया, न तु मन्नियमपारतन्त्र्येणेति भावः । उदेष्यति = उदयमेष्यति । अतिकायराहित्येन चन्द्रो मन्नगरे प्रत्यहं पूर्णमण्डलत्वेन नोद्गमिष्यतीति तात्पर्यम् ॥

***व्युत्पत्तिः*** निःशङ्कं = निर्गता शङ्का यस्मिन्कर्मणि तद्यथा तथा । तप्स्यति = "तप सन्तापे" इति धातोर्लृट् । वास्यति = "वा गतिगन्धनयोः" इति धातोर्लृट् । निर्वर्त्स्यति = निरुपसर्गपूर्वकात् "वृतु वर्तने" इति धातोर्लृट्, "वृद्भ्यः स्यसनोः" इति वैकल्पिकं परस्मैपदं, "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः । उदेष्यति = उत्पूर्वकात् "इण् गतौ" इति धातोर्लृट् ॥

***भाषाऽर्थः*** अतिकायके अभावमें सूर्य निःशङ्क होकर ताप करेगा । वायु अनियत रूपसे बहेगा । मेरे नगरमें वसन्ताऽऽदि ऋतुओंका समूह विच्छिन्न होगा ( क्रमसे एक एक ऋतुका आविर्भाव होगा )। चन्द्र अपनी इच्छासे उगेगा ( प्रतिदिन चन्द्रका पूर्णमण्डल नहीं रहेगा ) ॥ ६ ॥

तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्तिष्यते यमः ।
अतिकायस्य मरणे किं करिष्यन्ति नाऽन्यथा ॥ ७ ॥

**अन्वयः**—मेघैः तीव्रं स्यन्दिष्यते । यमः उग्रं वर्तिष्यते । अतिकायस्य मरणे ( इन्द्रादयः ) किम् अन्यथा न करिष्यन्ति ?

**व्याख्या**—मेघैः = बलाहकैः, तीव्रं = साऽतिशयं, स्यन्दिष्यते = वर्षिष्यते, रजःप्रशमनमात्रं विहायाऽधुना मेघाः पर्याप्तं वर्षिष्यन्तीति भावः । यमः = यमराजः, उग्रं = रौद्रं, वर्तिष्यते = चरिष्यति । अतिकायस्य = तदाख्यस्य मत्पुत्रस्य, मरणे = निधने, किम्, अन्यथा = विपर्ययं, न करिष्यन्ति = नो विधास्यन्ति, विधास्य-

न्त्येव, इन्द्रादय इति शेष ।'' किं भविष्यति नाऽन्यथे''ति पाठान्तरं तत्र किम् अन्यथा = वैपरीत्य, न भविष्यति ? तत्र सर्वमेतद्भविष्यत्येवेति भाव ॥

❀व्युत्पत्ति❀ स्यन्दिष्यते = ''स्यन्दू प्रस्रवण'' इति धातोर्भावे लृट्। ''न वृद्भ्यश्चतुर्भ्यः'' इतीट्प्रतिषेधो न, तत्र परस्मैपदस्य अनुवर्तनात्। वर्तिष्यते = आत्मनेपदित्वेनेट्प्रतिषेधाऽभाव ॥

❀भाषाऽर्थ❀ मेघ तीव्ररूपसे वृष्टि करेंगे। यमराज भयङ्कर आचरण करेगा। अतिकायके मरणमे इन्द्र आदि देवता क्या विपर्यय नही करेंगे ? ॥ ७ ॥

ततो नरान्तकाऽभिधान पुत्रमनूद्य शोक प्रकाशयति—

**उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतम् ।**
**आज्ञालाभोन्मुखं नम्र न द्रक्ष्यति नरान्तकम् ॥ ८ ॥**

**अन्वयः**—यत् विनयाऽऽगतम् आज्ञालाभोन्मुखं नम्र नरान्तक न द्रक्ष्यति, ( अत ) मे चक्षु वृथा उन्मीलिष्यति ॥

**व्याख्या**—यत् = यस्मात्कारणात्, विनयागत = विनीतम्, आज्ञालाभोन्मुखम् = आदेशप्राप्त्यर्थमूर्द्धवमुख, नम्र = नमनशीलं, नरान्तक = तन्नामधेयं मत्सूनु, न द्रक्ष्यति = नो विलोकयिष्यति अत इति शेष । मे=मम, रावणस्येत्यर्थ । चक्षु = नेत्रं, वृथा = व्यर्थं, निष्फलमिति भाव, उन्मीलिष्यति = उन्मीलितं भविष्यति ॥

❀व्युत्पत्ति❀ यत् = यच्छब्दप्रतिरूपकमव्ययम्। आज्ञालाभोन्मुखम् = उत् ( ऊर्ध्वम् ) मुख यस्य स उन्मुख । आज्ञाया लाभे ( विषये ) उन्मुखस्तम्। नम्र = ''णम प्रह्वत्वे शब्दे'' इति धातोः ''नमिकम्पिस्म्यजसकमहिंसदीपोर'' इति रप्रत्यय। द्रक्ष्यति = ''दृशिर् प्रेक्षणे'' इति धातोर्लृट्। ''सृजिदृशोर्झल्यमकिति'' इत्यमागम । उन्मीलिष्यति = उत्पूर्वकात् ''मील ( श्मील क्ष्मील ) निमेषणे'' इति धातोर्लृट् ॥

❀भाषाऽर्थ❀ जिस कारणसे कि विनयसे आये हुए, आज्ञालाभमे उन्मुख और नम्र नरान्तकको नहीं देखेगा इस कारणसे मेरा नेत्र व्यर्थ उन्मीलित होगा ॥ ८ ॥

**धिङ्मां त्रिशिरसा नाऽहं सन्दर्शिष्येऽद्य यत् पुनः ।**
**घानिष्यन्ते द्विषः केन तस्मिन् पञ्चत्वमागते ॥ ९ ॥**

**अन्वय**—यत् अद्य अह पुन त्रिशिरसा न सन्दर्शिष्ये, ( तत् ) मा धिक्। तस्मिन् पञ्चत्वम् आगते केन द्विषो घानिष्यन्ते ?

**व्याख्या**—यत् = यस्माद्धेतो, अद्य = अस्मिन्दिने, अह = रावण, भूय = पुनः, त्रिशिरसा = तन्नामकेन मत्पुत्रेण, न सन्दर्शिष्ये = न सद्रक्ष्ये न दृष्टो भविष्यामि, इति भाव । ( तत् = तस्माद्धेतो ) मा = रावणं, धिक्। तस्मिन् = त्रिशि-

रसि, पञ्चत्वम् = पञ्चभावम् , आगते = आयाते, मृत इति भाव । केन = अन्येन नेन जनेन, द्विष = शत्रव , घानिष्यन्ते = हनिष्यन्ते, व्यापादयिष्यन्त इति भाव ॥

ॐव्युत्पत्ति ॐ सन्दर्शिष्ये = सपूर्वकात् दृशिर्धातो कर्मणि लृट् , "स्यचिच्सीयुट्तासिष्विव"त्यादिना चिण्वदिट् च । मा = धिक्पदेन योगे "धिगुपर्यादिषु त्रिषु" इति द्वितीया । द्विष = द्विषन्तीति, "द्विष अप्रीतौ" इति धातो "सत्सूद्विषे"त्यादिना क्विप् , सर्वाऽपहारी लोप । घानिष्यन्ते = हनधातो कर्मणि लृट् , चिण्वदिट् च ॥

ॐभाषाऽर्थ ॐ जिससे आज मै फिर त्रिशिरासे नही देखा जाऊँगा, इस कारणसे मुझे धिक्कार है। उस ( त्रिशिरा ) के पञ्चत्वको प्राप्त होनेपर किससे शत्रु मारे जायगे ॥ ९ ॥

शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखम् ।
युद्धोन्मत्ताद्विना शत्रून् समास्कन्त्स्यति को रणे ॥ १० ॥

अन्वय —मत्ते शत्रुभि निहते अह सयुगे सुखं द्रक्ष्ये । रणे युद्धोन्मत्तात् विना शत्रून् क समास्कन्त्स्यति ? ॥

व्याख्या—मत्ते=तन्नामके राक्षसे, शत्रुभि=वैरिभि , निहते=व्यापादिते, अहं=रावण , संयुगे=संग्रामे, सुख=सुखपूर्वक, द्रक्ष्ये=दृष्टो भविष्यामि, पूर्व भयाद्दृष्ट पर मत्तवधाऽनन्तरं तैरेव शत्रुभिर्निर्भयमह दृष्टोभविष्यामीति भाव । रणे=सग्रामे युद्धोन्मत्ताद्विना=तन्नामकराक्षसादृते, शत्रून्=रिपून् , क =युद्धोन्मत्तात्कोऽपरो जन॰, समास्कन्त्स्यति=अभियास्यति मत्तयुद्धोन्मत्तौ नाम देवान्तकादीनामात्मपुत्राणा रक्षणाऽर्थं रावणप्रेषितौ राक्षसौ बोध्यौ ॥

ॐव्युत्पत्ति ॐ द्रक्ष्ये=दृशधातो कर्मणि लृट्, अचिण्वद्भावपक्षे रूप, चिण्वद्भावपक्षे तु "दर्शिष्ये" इति रूपम् । युद्धोन्मत्तात्="विना"पदयोगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति पञ्चमी । समास्कन्त्स्यति=समाङ्पूर्वकात् "स्कदिर् गति शोषणयोः" इति धातोर्लृट् , "खरि चे"ति चर्त्वम् ॥

ॐभाषाऽर्थ ॐ मत्तनामकराक्षसके शत्रुओंसे मारे जाने पर मै सग्राममें शत्रुओंसे सुखपूर्वक देखा जाऊँगा। युद्धमे युद्धोन्मत्तके राक्षसके विना शत्रुओंके पास कौन अभियान करेगा ॥ १० ॥

आह्वास्यते विशङ्को मा योत्स्यमानः शतक्रतुः ।
प्रकल्प्स्यति च तस्याऽर्थो निकुम्भे दुर्हणे हते ॥ ११ ॥

अन्वय —शतक्रतु योत्स्यमान विशङ्को मा युद्धाय आह्वास्यते । दुर्हणे निकुम्भे हते तस्य अर्थ प्रकल्प्स्यति च ॥

व्याख्या—शतक्रतु = इन्द्र, योत्स्यमान = युद्धं करिष्यन्, विशङ्क = शङ्कारहित, निर्भय सन्निति भाव । मा = रावण, युद्धाय=संग्रामाय, आह्वास्यते = आकारयिष्यति, दुर्हणे=दुःखेन व्यापाद्यमाने, निकुम्भे=कुम्भकर्णपुत्रे, हते=व्यापादिते सति, तस्य=इन्द्रस्य, अर्थ• = प्रयोजन, निष्कण्टकराज्यलक्षणमिति भाव । प्रकल्प्स्यति च = सपत्स्यते च ॥

※व्युत्पत्ति※ शतक्रतु = शत क्रतवो यस्य सः। योत्स्यमान =योत्स्यत इति, "युध सप्रहारे" इति धातो "लृट• सद्वा" इति शानच्प्रत्यय । आह्वास्यते=आङ् पूर्वकात् "ह्वेञ् स्पर्धाया शब्दे चे"ति धातो "स्पर्धायामाङ•" इत्यात्मनेपदम् । दुर्हणे दुःखेन हन्यत इति दुर्हणस्तस्मिन्, "ईषद्दुःसुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्" इति खल्प्रत्यय• "हन्ते" रिति णत्वमिति मल्लिनाथ• । वस्तुतस्तु अत्र णत्वे कर्तव्ये "दुर षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य" इति वार्तिकेन दुर उपसर्गत्वप्रतिषेधात् "दुर्हण" इत्यत्र णत्व प्रामादिक प्रतीयते। प्रकल्प्स्यति=प्रपूर्वकात् "कृपू सामर्थ्ये" इति धातोर्लृट्, "कृपो रो ल" इति रेफस्य लत्व, "लुटि च क्लृप" इति परस्मैपदविकल्प•, अत एव "तासि च क्लृप" इतीडागमप्रतिषेध ॥

※भाषाऽर्थ※ अब इन्द्र युद्ध करता हुआ निर्भय होकर मुझे युद्धके लिए ललकारेगा। दुःखसे मारे जाने वाले निकुम्भके मारे जानेपर इन्द्रका प्रयोजन भी सपन्न होगा ॥ ११ ॥

कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते ।
आगस्यते सुरैश्चेह रिपोर्यास्यामि वश्यताम् ॥ १२ ॥

अन्वयः—हरे• प्रीति• कल्पिष्यते । लङ्का च उपहनिष्यते । इह सुरैश्च आगंस्यते । रिपो वश्यता यास्यामि ॥

व्याख्या—हरेः=इन्द्रस्य, प्रीति = हर्षः, कल्पिष्यते=भविष्यति, शत्रुकर्तृककुम्भनिपातनश्रवणेनेति शेष । एव च लङ्का च=तदाख्या अस्मन्नगरी च, उपहनिष्यते = विलोप्स्यते, शत्रुभिरिति शेष । इह = लङ्काया, सुरैश्च=देवैश्च, आगस्यते = आयास्यते। परिणामेरिपो =शत्रो, वश्यताम्=अधीनता, यास्यामि=प्राप्स्यामि ॥

※व्युत्पत्ति※ कल्पिष्यते=कृपूधातोर्लृट्, ऊदित्त्वात् "स्वरतिसूतिसूयतिधूञूदितो वे"ति इडागमो वैकल्पिक । उपहनिष्यते = उपपूर्वकाद्धनधातोर्लृट्, अचिण्वद्भावपक्षे "ऋद्धनो स्ये" इतीट्। अत्र तृतीयचरणत्वेन निर्णयसागरे वेङ्कटेश्वरे च मुद्राऽऽलये स्थितो "देवान्तक ! त्वया त्यक्त" इत्याकारक• पाठो जयमङ्गलभरताभ्यामनभ्युपगतोऽस्ति। देवान्तको रावणास्याऽन्यतम पुत्र•। आगस्यते=आङ्पूर्वकाद्गम्लृधातोर्भावे लृट्। यास्यामि="या प्रापणे" इति धातोः कर्तरि लृट् ॥

ॐभाषाऽर्थॐ कुम्भको मारे हुए जानकर इन्द्रको हर्ष होगा। शत्रुओंसे लङ्का नष्ट की जायगी। यहाँ देवतालोग आएंगे। मैं भी शत्रुओंका अधीन हो जाऊंगा॥१२॥

मरिष्यामि विजेष्ये वा हताश्चेत्तनया मम ।
हनिष्यामि रिपूंस्तूर्णं न जीविष्यामि दुःखितः ॥ १३ ॥

**अन्वय.**—मम तनया हता चेत्, मरिष्यामि वा विजेष्ये। रिपून् तूर्णं हनिष्यामि। दुःखितो न जीविष्यामि॥

**व्याख्या**—मम = रावणस्य, तनयाः-पुत्राः, देवान्तकादय इति शेषः। हताश्चेत्=व्यापादिता यदि, तर्हि मरिष्यामि = प्राणांस्त्यक्ष्यामि, वा = अथवा, विजेष्ये= जेष्यामि, शत्रूनिति शेषः। ततो रिपून् = शत्रून्, तूर्णं=सत्वरं, हनिष्यामि=व्यापादयिष्यामि। दुःखितः = व्यथितः, सन् बन्धुनाशादिति शेषः। न जीविष्यामि = प्राणान्नो धारयिष्यामि॥

ॐव्युत्पत्तिॐ तनयाः=“आत्मजस्तनयः सूनुः सुतः पुत्रः” इत्यमरः। मरिष्यामि=“मृङ् प्राणत्यागे” इति धातोर्लृट्, “म्रियतेर्लुङ्लिङोश्चे”ति नियमात्परस्मैपदम्। विजेष्ये=विपूर्वकात् “जि जये” इति धातोर्लृट् “विपराभ्यां जेः” इत्यात्मनेपदम्। जीविष्यामि=“जीव प्राणधारणे” इति धातोर्लृट्॥

ॐभाषाऽर्थॐ मेरे पुत्र मारे गये तो मैं मरूंगा वा शत्रुओंको जीतूंगा। शत्रुओंको शीघ्र मार डालूंगा। बन्धुनाशसे दुःखित होकर नहीं जीऊंगा॥ १३ ॥

स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चाऽनिशम् ।
दशग्रीवस्य दुर्नीतेर्विनष्टं रक्षसां कुलम् ॥ १४ ॥

**अन्वय.**—मुनयः स्मेष्यन्ते। देवाः “दशग्रीवस्य दुर्नीतेः रक्षसां कुलं विनष्टम्।” (इति) अनिशं कथयिष्यन्ति॥

**व्याख्या**—मुनयः = तापसाः, स्मेष्यन्ते = ईषद्धसिष्यन्ति, हर्षादिति शेषः। देवाः = सुराः, दशग्रीवस्य = रावणस्य, दुर्नीतेः = दुर्नयात्, रक्षसां = राक्षसानां, कुलं = वंशः, विनष्टं = विनाशं गतम्, (इति = इत्थम्) अनिशं = निरन्तरं, कथयिष्यन्ति = वदिष्यन्ति॥

ॐव्युत्पत्तिॐ मुनय इति, “मन ज्ञाने” इति धातोः “मनेरुच्च” इतीनि उत्वं च। स्मेष्यन्ते=“ष्मिङ् ईषद्धसने” इति धातोर्लृट्। दशग्रीवस्य=दश ग्रीवा यस्य स दशग्रीवस्तस्य। दुर्नीतेः=दुष्टा नीतिर्दुर्नीतिस्तस्याः, “कुगतिप्रादयः” इति समासः, “दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः” इति दुर उपसर्गत्वप्रतिषेधाण्णत्वाऽभावः। कथयिष्यन्ति=“कथ वाक्यप्रबन्धे” इति धातोर्लृट्॥

❀भाषाऽर्थ❀ मुनिलोग हर्षसे मुसकुरायगे । देवगण "रावणकी दुर्नीतिसे राक्षसोंका कुल विनष्ट हो गया।" ऐसा निरन्तर कहेगे ॥ १४ ॥

केन सम्भावित तात कुम्भकर्णस्य राघवः ।
रणे कर्त्स्यति गात्राणि मर्माणि च वितर्त्स्यति ॥ १५ ॥

अन्वय'—हे तात ! "राघवो रणे कुम्भकर्णस्य गात्राणि कर्त्स्यति मर्माणि च वितर्त्स्यति ( एतत् ) केन सम्भावितम् ?

व्याख्या—हे तात = हे पित , शोकाद्बुद्धिस्थस्य पितुरभिमुखीकरणाऽर्थमियमुक्ति । राघव = राम , रणे = युद्धे, कुम्भकर्णस्य=मन्मध्यमभ्रातु , गात्राणि= अङ्गानि, रूढिमत्या लक्षणयाऽयमर्थ । कर्त्स्यति = छेत्स्यति मर्माणि च = मर्मस्थानानि च, वितर्त्स्यति = हिंसिष्यति, ( एतत् = व्यापादनम् ) केन=जनेन, सम्भावितं = निश्चितम् ॥

❀व्युत्पत्ति.❀ राघव = रघोरपत्य पुमान् , "तस्याऽपत्यम्" इत्यण् , "ओर्गुण" इत्युवर्णस्य गुणश्च । गात्राणि = "गात्र वपु सहनन शरीर वर्ष्म विग्रह ।" इत्यमर । कर्त्स्यति = "कृती छेदन ' इति धातोर्लृट् , "सेऽसिचि कृतचृतछृदतृदनृत" इत्यनेन इटो वैकल्पिकत्वात्पक्षे तदभावः । वितर्त्स्यति=विपूर्वकात् "उतृदिर् हिंसाऽनादरयो " इति धातोर्लृट् , पूर्वसूत्रेण इड्विकल्प ॥

❀भाषाऽर्थ❀ हे पिताजी ! "रामचन्द्र युद्धमे कुम्भकर्णके शरीराऽवयवोंको काटेगा और मर्मस्थानोंकी हिसा भी करेगा" यह किसने निश्चय किया था ? ॥ १५ ॥

पतिष्यति क्षितौ भानु' पृथिवी तोलयिष्यते ।
नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते ॥ १६ ॥

अन्वय.—भानु क्षितौ पतिष्यति। पृथिवी तोलयिष्यते । नभस्वान् भङ्क्ष्यते । व्योम मुष्टिभि' ताडयिष्यते ॥

व्याख्या—भानु. = सूर्य , क्षितौ = भूमौ, पतिष्यति = अधोगमिष्यति । पृथिवी = भूमि , तोलयिष्यते = ऊर्ध्वं क्षेप्स्यते । नभस्वान् = वायु , भङ्क्ष्यते=भग्न. करिष्यते, काष्ठवदिति शेषः । व्योम=आकाश, मुष्टिभि = सपिण्डिताऽङ्गुलिपाणिभि', ताडयिष्यते = हनिष्यते, "कुम्भकर्ण 'पुसा परिभविष्यते, एतानि न सम्भावितानि • • • " इत्यष्टादशश्लोकस्थै पदै सम्बन्ध । एव श्लोकान्तरेऽपि ज्ञेय । यथा सर्वाण्येतान्यसम्भाव्यानि तथैव रामकर्तृक कुम्भकर्णहननमपि नैव सम्भाव्य, परं दुर्नियतिवशात्तदेव सवृत्तमिति भाव ॥

❀व्युत्पत्तिः❀ तोलयिष्यते = "तुल उन्मान" इति धातुश्चुरादावदन्तेषु च पठ्यते,

तस्मात् कर्मणि लृट् । भङ्क्ष्यते = "भञ्जो आमर्दने" इति धातो कर्मणि लृट् । ताडयिष्यते = "तड आघाते" इति चौरादिकधातो कर्मणि लृट् ॥

ॐभाषाऽर्थॐ सूर्य जमीनपर गिरेगा । पृथिवी ऊपर फेंकी जायगी । वायु लकड़ी के सदृश तोड़ा जायगा । आकाश मुक्कोंसे पीटा जायगा ॥ १६ ॥

इन्दोः स्यन्दिष्यते वह्नि समुच्छोक्ष्यति सागर ।
जल धक्ष्यति तिग्मांशोः स्यन्त्स्यन्ति तमसा चयाः ॥ १७ ॥

अन्वय —इन्दो वह्नि स्यन्दिष्यते । सागर समुच्छोक्ष्यति । जल धक्ष्यति । तिग्माऽशो तमसा चया स्यन्त्स्यन्ति ॥

व्याख्या—इन्दो = चन्द्रात् , वह्नि = अग्नि , स्यन्दिष्यते = प्रस्रविष्यति । सागर = समुद्र , समुच्छोक्ष्यति = शोष यास्यति । जल = तोय, धक्ष्यति = दाहं करिष्यति । तिग्मांशो = सूर्यात् , तमसाम् = अन्धकाराणा, चया = समूहा , स्यन्त्स्यन्ति = क्षरिष्यन्ति एतानि नैव सम्भावितानीति भाव ॥

ॐव्युत्पत्तिॐ स्यन्दिष्यते = "स्यन्दू प्रस्रवणे" इति धातोर्लृट् "वृद्भ्य स्यसनो , इति परस्मैपदस्य वैकल्पिकत्वात्पक्षे तदभाव । समुच्छोक्ष्यति=समुत्पूर्वकात् "शुष शोषणे" इति धातोर्लृट् । धक्ष्यति = "दह भस्मीकरण" इति धातोर्लृट्, यत्तु "हो ढ" इति हस्य ढत्वमिति जयमङ्गलस्तन्न, "दादेर्धातोर्घ" इति ढत्वाऽपवादस्य घत्वस्य विधानात् । तत "एकाचो बशो भष् झषन्तस्य स्ध्वो" इति भष्भावेन दकारस्य धकारे तस्य "खरि चे"ति चर्त्वम् । तिग्माऽशो = तिग्मा अशवो यस्य स तिग्माऽशुस्तस्य । स्यन्त्स्यन्ति = स्यन्दूधातोर्लृट् "वृद्भ्य स्यसनो" इति परस्मैपदविकल्प "न वृद्भ्यश्चतुर्भ्य" इतीट्प्रतिषेध ॥

ॐभाषाऽर्थॐ चन्द्रसे अग्नि बहेगा । समुद्र सूख जायगा । जल दाह करेगा । सूर्यसे अन्धकारसमूह बहेंगे ॥

कुम्भकर्णो रणे पुसा क्रुद्ध. परिभविष्यते ।
संभावितानि नैतानि कदाचित्केनचिज्जने ॥ १८ ॥

अन्वय —कुम्भकर्णो रणे क्रुद्ध ( सन् ) पुसा परिभविष्यते । एतानि जने केनचित् कदाचित् न सम्भावितानि ॥

व्याख्या—कुम्भकर्ण = मन्मध्यमभ्राता, रणे = युद्धे, क्रुद्ध = कुपित सन् , पुंसा = मनुष्येण, परिभविष्यते = जेष्यते । एतानि = भानुपतनादीनि कुम्भकर्णपरिभवाऽन्तानि, जने = लोके, केनचित् = पुरुषेण, कदाचित् = जातुचित् , न सम्भावितानि = न चिन्तितानि ॥

❀व्युत्पत्तिः❀ परिभविष्यते=परिपूर्वकात् "भू सत्तायाम्" इति धातोः कर्मणि लृट्। अत्र भानुपतनादेः कुम्भकर्णपरिभवेन सादृश्याक्षेपान्निदर्शनाऽलङ्कारः॥

❀भाषाऽर्थ❀ कुम्भकर्ण युद्धमें कुपित होता हुआ मनुष्यसे जीता जायगा। ये ( सूर्य पतनसे लेकर कुम्भकर्णपराजयपर्यन्त विषय ) लोकमें किसी से कभी भी सम्भावित नही हुए थे॥ १८॥

कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमाः।
दङ्क्ष्यन्ति राक्षसान् दृप्ता भङ्क्ष्यन्ति च ममाश्रमान्॥ १९॥

अन्वय—कुम्भकर्णे हते प्लवङ्गमा लङ्काम् आरोक्ष्यन्ति, राक्षसान् दङ्क्ष्यन्ति दृप्ता ( सन्त ) मम आश्रमाश्च भङ्क्ष्यन्ति॥

व्याख्या—कुम्भकर्णे = मन्मध्यमभ्रातरि, हते = व्यापादिते सति, प्लवङ्गमा = वानरा, लङ्का = मन्नगरीम्, आरोक्ष्यन्ति = आक्रमिष्यन्ति, राक्षसान् = यातुधानान्, दङ्क्ष्यन्ति = दशनैः छेत्स्यन्ति, दृप्ता = दर्पयुक्ता सन्त, मम = रावणस्य, आश्रमाश्च = सौधाश्चेत्यर्थ, भङ्क्ष्यन्ति=चूर्णयिष्यन्ति॥

❀व्युत्पत्ति❀ आरोक्ष्यन्ति=आङ्पूर्वकात् "रुह बीजजन्मनि प्रादुर्भावे च"इति धातोर्लृट्। दङ्क्ष्यन्ति="दंश दशने" इति धातोर्लृट्, दशन दंष्ट्राव्यापारः। पृषोदरादित्वादनुनासिकलोपः। भङ्क्ष्यन्ति="भञ्जो आमर्दने" इति धातोर्लृट्॥

❀भाषाऽर्थ❀ कुम्भकर्णके मारे जानेपर वानर लङ्कामे आक्रमण करेंगे, राक्षसोंको दाढोंसे नोचेंगे, गर्वयुक्त होते हुए मेरे भवनोंको भी चूर्ण कर डालेंगे॥ १९॥

चर्त्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः।
तेन राक्षसमुख्येन विना तान् को निरोत्स्यति॥ २०॥

अन्वयः—( प्लवङ्गमा ) बालवृद्धान् चर्त्स्यन्ति, मुदा युता नर्त्स्यन्ति च। तेन राक्षसमुख्येन विना तान् को निरोत्स्यति?

व्याख्या—बालवृद्धान् = शिशून् जरठांश्च राक्षसान्, चर्त्स्यन्ति = व्यापादयिष्यन्ति, प्लवङ्गमा इति शेष, एवं परवाक्येऽपि। मुदा = हर्षेण युता = सम्बद्धा सन्त, नर्त्स्यन्ति च = नृत्यं च करिष्यन्ति। तेन=कुम्भकर्णेन, राक्षसमुख्येन विना= राक्षसप्रवरेण विना, तान् = प्लवङ्गमान्, को निरोत्स्यति = को निवारयिष्यति॥

❀व्युत्पत्ति❀ चर्त्स्यन्ति="चृती हिंसाग्रन्थनयो" इति तौदादिकाद्धातोर्लृट्, "सेऽसिचि कृतचृतछृदतृदनृत" इति विकल्पेनेडागम। तदभावे चर्तिष्यन्ति। नर्त्स्यन्ति="नृती गात्रविक्षेपे" इति धातोर्लृट्, पूर्वसूत्रेण विकल्पेनेडागमस्तदभावपक्षे नर्तिष्यन्तीति रूपम्। राक्षसमुख्येन="विना" पदयोगे "पृथग्विनानानाभिस्तृती-

याऽन्यतरस्याम्" इति तृतीया, पक्षे द्वितीया पञ्चमी च । निरोत्स्यति = निपूर्वकात् "रुधिर् आवरण" इति धातोर्लृट् ॥

❀भाषाऽर्थ ❀ वानर बालक और बुड्ढे राक्षसोंको भी मार डालेंगे, हर्षयुक्त होते हुए नाचेंगे भी । उस श्रेष्ठ राक्षस ( कुम्भकर्ण ) के विना उन्हें कौन रोकेगा ? ॥२०॥

अमर्षो मे परः सीतां राघवः कामयिष्यते ।
च्युतराज्यात्सुखं तस्मात्किं किलाऽसाववाप्स्यति ॥ २१ ॥

अन्वय.—( हन्त ! ) मे पर अमर्ष । राघव सीता कामयिष्यते । असौ च्युतराज्यात्तस्मात् किं किल सुखम् अवाप्स्यति ?

व्याख्या—मे = मम, रावणस्येत्यर्थ । पर = उत्कृष्ट , अमर्ष = अक्षमा, कोपो वा । अमर्षहेतु प्रतिपादयति—सीतामिति । यत् राघव = राम , सीता = जानकीं, कामयिष्यते = एषिष्यति । असौ = सीता, च्युतराज्यात् = राज्यभ्रष्टात् , तस्मात् = रामात् , किंकिल = किं नाम, किङ्किलेति समुदाय क्रोधद्योतक उपपदम् । सुख = प्रमोदम् अवाप्स्यति = प्राप्स्यति, तन्न सम्भावयामीति भाव ॥

❀व्युत्पत्ति ❀ कामयिष्यते = "कमु कान्तौ" इति धातोर्णिङन्तात् "अनवक्लृप्त्य-मर्षयोरकिंवृत्तेऽपि" इति अमर्षे ( क्रोधे अक्षमाया वा ) लृट् । च्युतराज्यात् = च्युत राज्य यस्मात्स च्युतराज्यस्तस्मात् , "निष्ठे"ति निष्ठाऽन्तस्य पूर्वनिपात. । अवाप्स्य-ति = अवपूर्वकात् "आप्लृ व्याप्तौ" इति धातो "किङ्किलाऽस्त्यर्थेषु लृट्" इति अन-वक्लृप्तौ ( असम्भावनायाम् ) किङ्किलशब्द उपपदे लृट् ॥

❀भाषाऽर्थ ❀ मुझे अतिशय क्रोध है, जो कि रामचन्द्र सीताकी इच्छा करेगा । सीता राज्यभ्रष्ट उस ( राम ) से क्या सुख पायेगी ? ॥ २१ ॥

मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः ।
भूमौ वा निखनिष्यामि विध्वंसस्याऽस्य कारणम् ॥ २२ ॥

अन्वय.— अस्य विध्वसस्य कारण वैदेही मारयिष्यामि, राक्षसै खादयिष्यामि, वा भूमौ निखनिष्यामि ॥

व्याख्या—अथ वा अस्य = सम्प्रति संवृत्तस्य विध्वसस्य = विनाशस्य, कार-ण = हेतु, वैदेही = सीता, मारयिष्यामि = हनिष्यामि, राक्षसै = यातुधानै , खाद-यिष्यामि = भोजयिष्यामि, वा=अथ वा, भूमौ=भुवि, निखनिष्यामि=अवदारयिष्यामि, गर्ते स्थापयिष्यामि इति भाव ॥

❀व्युत्पत्ति ❀ विध्वसस्य = विशिष्टो ध्वसो विध्वंसस्तस्य "कुगतिप्रादय" इति समासः । मारयिष्यामि = "मृङ् प्राणत्यागे" इति धातोर्णौ लृट् । राक्षसै = प्रत्य-

वसानाऽर्थस्य खादधातोर्योगे "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणि कर्ता सणौ" इति कर्मसञ्ज्ञाया प्राप्तायाम् "आदिखाद्योर्ने"ति निषेधात् अनभिहिते प्रयोज्यकर्तारे "कर्तृकरणयोस्तृतीये"ति तृतीया। खादयिष्यामि="खाद भक्षणे" इति धातोर्णौ लृट्। निखनिष्यामि=निपूर्वात् "खनु अवदारण" इति धातोर्लृट् ॥

॥भाषाऽर्थ॥ इस विनाशकी हेतुभूत सीताको मार डालूगा, राक्षसोंको खिला· ऊगा अथवा जमीनको खोद कर उसके भोतर डाल दूगा ॥ २२ ॥

नाऽनुरोत्स्ये जगल्लक्ष्मी घटिष्ये जीवितु न वा।
न रस्ये विषयै. शून्ये भवने बान्धवैरहम् ॥ २३ ॥

अन्वयः—जगल्लक्ष्मी न अनुरोत्स्ये। जीवितुं वा न घटिष्ये। अहं बान्धवै· शून्ये भवने विषयै न रंस्ये ॥

व्याख्या—जगल्लक्ष्मी = लोकश्रिय, न अनुरोत्स्ये = न कामयिष्ये, जीवितुं वा = प्राणान्धारयितु वा, न घटिष्ये = प्रयत्नं नो करिष्यामि। अह = रावण, बान्धवै = बन्धुभि, शून्ये = रहिते, भवने = सौधे, विषयै = शब्दस्पर्शादिभिरिन्द्रियाऽर्थै, न रंस्ये = न क्रीडिष्यामि ॥

॥व्युत्पत्ति॥ अनुरोत्स्ये=अनुपूर्वकात् "रुधिर् आवरण" इति धातोर्लृट्, अनुपूर्वको रुधेरिच्छाया यथाऽऽह भट्टमल्ल आख्यातचन्द्रिकाया "लिप्सते हर्यतीच्छाया खटत्यथानुरुध्यते।" इति। घटिष्ये="घट चेष्टायाम्" इति धातोर्लृट्। शून्ये=शुने हित शून्य, तस्मिन्, "शुन सम्प्रसारण वा च दीर्घत्वम्" इति सम्प्रसारणसहकृतो यत्प्रत्यय, दीर्घत्वस्य वैकल्पिकत्वात्पक्षे शुन्यमिति ह्रस्वत्वमपि। "शून्य तु वशिक तुच्छरिक्तके।" इत्यमर। रस्ये="रमु क्रीडायाम्" इति धातोर्लृट्, "नश्चाऽपदान्तस्य झलि" इत्यनुस्वार ॥

॥भाषाऽर्थ॥ मै लोककी लक्ष्मीकी भी इच्छा नही करूगा। जीनेके लिए भी प्रयत्न नहीं करूगा। मै बान्धवोंसे शून्य भवनमे शब्द स्पर्श आदि विषयोंसे क्रीडा नही करूगा ॥ २३ ॥

मोदिष्ये कस्य सौख्येऽहं को मे मोदिष्यते सुखे।
आदेया किङ्कृते भोगा' कुम्भकर्ण ! त्वया विना ॥ २४ ॥

अन्वयः—हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अह मोदिष्ये ? को मे सुखे मोदिष्यते ? किङ्कृते भोग। आदेया ?

व्याख्या—हे कुम्भकर्ण = हे मनुमध्यमाऽनुज !, त्वया विना = त्वा विना, कस्य=अपरस्य जनस्य, सौख्ये=सुखे, अह = रावण, मोदिष्ये = हर्षिष्ये, न कस्यचिदिति भाव। क = जन, मे = मम, सुखे = हर्षे सति, मोदिष्यते = हृष्टो भवि-

ष्यति, न कश्चिदपीति भाव । किंकृते = किं निमित्तं, भोगा =परभोगा , आदेया = आदातव्या , मयेति शेष ॥

ॐव्युत्पत्ति ॐ सौख्ये = सुखमस्याऽस्तीति सुख , "अर्श आदिभ्योऽच्" इत्यच्प्रत्यय । सुखस्य भाव सौख्य, तस्मिन् । "गुणवचनब्राह्मणादिभ्य कर्मणिचे"ति ष्यञ् । मोदिष्ये = "मुद हर्षे" इति धातोर्लृट् । किंकृते = कृते इति निमित्ताऽर्थकमव्ययम् । कस्य कृते । आदेया = आदातु योग्या, आङ्पूर्वकात् "डुदाञ् दान" इति धातो "अचो यत्" इति यत् "ईद्यति" इत्यात ईत्व गुणश्च ॥

ॐभाषाऽर्थ ॐ हे कुम्भकर्ण ! तुम्हारे विना किसके सुखमे मै हर्ष मानूगा ? कौन मेरे सुखमे हर्ष मानेगा ? अब किसके लिए दूसरोंके भोग मुझे लेने चाहिए ? ॥२४॥

या सुहृत्सु विपन्नेषु मामुपैष्यन्ति सपदः ।
ता किं मन्युक्षताऽऽभोगा न विपत्सु विपत्तयः ॥ २५ ॥

अन्वय.—सुहृत्सु विपन्नेषु या सपदो माम् उपैष्यन्ति, ता मन्युक्षताऽऽभोगा ( सत्य ) किं विपत्सु न विपत्तय ?

व्याख्या—सुहृत्सु = स्निग्धेषु, विपन्नेषु=विपत्तिप्राप्तेषु, या , सम्पद = विभूतय , मा = रावणम्, उपैष्यन्ति=उपागमिष्यन्ति, ता =सम्पद , मन्युक्षताऽऽभोगा = शोकखण्डितविस्तारा सत्य , किं, विपत्सु = विपत्तिषु मध्ये, न विपत्तय = नो विपद , क्षतक्षारसंस्थानीया भवन्तीति भाव ॥

ॐव्युत्पत्ति ॐ उपैष्यन्ति = उपाङ्पूर्वकात् "इण् गतौ" इति धातोर्लृट् । मन्युक्षताऽऽभोगा = मन्युना क्षता आभोगा यासा ता , 'आभोग परिपूर्णता" इत्यमर ॥

ॐभाषाऽर्थ ॐ स्निग्धोंके विपद्ग्रस्त होने पर जो सपत्तिया मेरे पास आयेगी, वे शोकसे खण्डित विस्तार वाली होती हुई क्या विपत्तियोंके मध्यमे विपत्ति स्वरूप नही है ? ॥ २५ ॥

विनङ्क्ष्यति पुरी क्षिप्र तूर्णमेष्यन्ति वानरा. ।
असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम् ॥ २६ ॥

अन्वय'—"असन्धित्सो तव पुरी क्षिप्रं विनङ्क्ष्यति । वानरा तूर्णम् एष्यन्ति ।" इत्येतत् विभीषणसुभाषितम् ॥

व्याख्या—असन्धित्सो = सन्धानमनिच्छो , रामेणेति शेष । तव = भवत , पुरी=नगरी, लङ्केत्यर्थ । क्षिप्र=सत्वर, विनङ्क्ष्यति = विनाशमेष्यति । वानरा = कपय , तूर्णं = सत्वरम्, एष्यन्ति = आगमिष्यन्ति ।" इत्येतत् = इत्याकरक वचन, विभीषणसुभाषित = मदनुजसुवचनम् , आसीदिति शेष । तच्च विभीषणवचन— "सन्धानमेवाऽस्तु परेण तस्मात्" ( १२-५४ ) इत्याकारक बोध्यम् ॥

ॐव्युत्पत्तिःॐ असन्धित्सोः = सन्धातुमिच्छु सन्धित्सुः, न सन्धित्सु असन्धित्सुस्तस्य "सनाशसभिक्ष उ" इत्युप्रत्यय । विनङ्क्ष्यति = विपूर्वकात् "णश अदर्शने" इति धातो "क्षिप्रवचने लृट्" इति लृट् "मस्जिनशोर्झलि" इति नुम् । एष्यति = पूर्वसूत्रेणैव लृट्, तत्र क्षिप्रपर्याये तूर्णस्याऽपि ग्रहणात् ॥

ॐभाषाऽर्थ ॐ "सन्धिकी इच्छा न करने वाले आपकी पुरी (लङ्का) शीघ्र विनष्ट हो जायगी । वानर सत्वर आजायगे" ऐसा विभीषणका सुभाषित था ॥२६॥

अर्थेन सभृता राज्ञा न भाषिष्यामहे वयम् ।
संयोत्स्यामह इत्येतत्प्रहस्तेन च भाषितम् ॥ २७ ॥

अन्वयः—"राज्ञा अर्थेन सभृता वय न भाषिष्यामहे, सयोत्स्यामहे ।" इत्येतत् प्रहस्तेन च भाषितम ॥

व्याख्या—राज्ञा = भूपेन, रावणेनेत्यर्थ, अर्थेन = धनेन, सभृताः = पोषिता, वयम् = अनुचरा, न भाषिष्यामहे = नो वक्ष्याम, सन्धिमिति शेष । सयोत्स्यामहे=युद्ध करिष्याम, इत्येतत् = इत्याकारक वचन, प्रहस्तेन च = तन्नामकेन मन्त्रिणा च, भाषित = कथितम् । यद्यपि मन्त्रनिर्णये प्रहस्तेनेदृश वचन नोक्त तथाऽपि विभीषणवचन तेनाऽङ्गीकृतमित्यनुमीयते ॥

ॐव्युत्पत्ति ॐ भाषिष्यामहे="भाष व्यक्तायां वाची"ति धातोर्लृट् । सयोत्स्यामहे= सपूर्वकात् "युध सम्प्रहार" इति धातोर्लृट् ॥

ॐभाषाऽर्थ ॐ "महाराज (रावण) से धनसे पोसे गये हम लोग सन्धिकी बात नही करेगे किन्तु युद्ध करेगे" ऐसा वचन प्रहस्तने भी कहा था ॥ २७ ॥

मानुषो नाम पत्काषी राजानं पुरुषाऽशिनाम् ।
योधयिष्यति सग्रामे दिव्याऽस्त्ररथदुर्जयम् ॥ २८ ॥

अन्वयः—मानुष पत्काषी संग्रामे दिव्याऽस्त्ररथदुर्जय पुरुषाशिना राजान योधयिष्यति नाम ।

व्याख्या—मानुष = मनुष्य, राम इति भाव सोऽपि—पत्काषी = पदाति सन्, सग्रामे=युद्धे, दिव्याऽस्त्ररथदुर्जयम् = अलौकिकाऽऽयुधस्यन्दनदुरभिभवनीयं, पुरुषाशिना=नरभक्षकाणा, राक्षसानामित्यर्थ । राजान = भूपं, मामिति भाव । योधयिष्यति=युद्ध करिष्यति, नाम=कुत्सितमित्यर्थ ॥

ॐव्युत्पत्ति ॐ मानुष = मनोरपत्य पुमान्, "मनोर्जातावञ्यतौ षुक् चे"ति अञ्प्रत्यय. षुगागमश्च । "मनुष्या मानुषा मर्त्या मनुजा मानवा नरा ।" इत्यमर. । पत्काषी = पादौ कषतीति तच्छील., पादोपपदपूर्वकात् हिसाऽर्थात् कषधातो "सुप्य

जातौ णिनिस्ताच्छील्य" इति णिनिप्रत्ययः "हिमकाषिहतिषु चे"ति पादस्य पद्भाव। दिव्याऽस्त्ररथदुर्जय=अस्त्राणि च रथाश्चेति अस्त्ररथ, द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति सेनाऽङ्गत्वात्समाहारद्वन्द्वः। दिवि भव दिव्य, "द्युप्रागपागुदक्प्रतीचो यत्" इति यत्। दिव्य च तत् अस्त्ररथदिव्याऽस्त्ररथम्। दु खेन जेतु शक्यो दुर्जयः, "ईषद्दु सुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्" इति खल्। दिव्याऽस्त्ररथेन दुर्जयो दिव्याऽस्त्ररथदुर्जयस्तम्। पुरुषाऽशिना = पुरुषान् अश्नन्तीति तच्छीला पुरुषाशिनस्तेषां, णिनिप्रत्ययः। योधयिष्यति = णिजन्तात् युधधातोर्लृट्। नाम = "नाम प्राकाश्यसभाव्यक्रोधोपगमकुत्सने।" इत्यमरः॥

❀भाषाऽर्थ❀ मनुष्य, उसपर भी पैदल ( रामचन्द्र ) सग्राममें दिव्य अस्त्र और रथोंसे दुर्जय राक्षसराज ( मुझ ) को लडायेगा। यह कुत्सित बात है॥ २८॥

सन्नत्स्याम्यथवा योद्धु न कोष्ये सत्त्वहीनवत्।
अद्य तर्प्स्यन्ति मासाऽदा भूः पास्यत्यरिशोणितम्॥ २९॥

**अन्वयः**—अथवा योद्धु सन्नत्स्यामि। सत्त्वहीनवत् न कोष्ये। अद्य मासादाः तर्प्स्यन्ति। भू अरिशोणित पास्यति॥

**व्याख्या**—अथवा = पक्षाऽन्तरे, योद्धु = युद्ध कर्तुं, सन्नत्स्यामि = सन्नद्धो भविष्यामि। सत्त्वहीनवत्=बलहीनवत्, न कोष्ये = न रोदिष्यामि। ततश्च अद्य= अस्मिन्नहनि, मासादाः = क्रव्यादाः, गृध्रादय इत्यर्थः, तर्प्स्यन्ति = तृप्ताभविष्यन्ति। एव च—भू = पृथिवी, अरिशोणित = शत्रुरुधिर, पास्यति = धास्यति॥

❀व्युत्पत्ति❀ सन्नत्स्यामि = सपूर्वकात् "णह बन्धने" इति धातोरमर्षेलृटि स्यप्रत्यय। "णो न" इति णस्य नत्व, 'नहोध' इति हस्य धत्वम्। "खरि चे"ति चर्त्वम्। सत्त्वहीनवत् = सत्त्वेन हीन सत्त्वहीनस्तेन तुल्य, "तेन तुल्यं क्रिया चेद्वति" इति वतिप्रत्ययः। कोष्ये = "कु शब्दे" इति धातोर्लृट्। मांसादा = मासमदन्तीति, "अदोऽनन्ने" इति विटिप्राप्ते "वाऽसरूपोऽस्त्रियाम्" इति न्यायेन "कर्मण्यण्" इत्यणपि। तर्प्स्यन्ति = "तृपप्रीणन" इति धातोर्लृट्। इट् पक्षे "तर्पिष्यन्ती" त्यपि। "अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्" इत्यमागमविकल्पे—"त्रप्स्यन्ती"त्यपि रूपम्। पास्यति = "पा पाने" इति धातोश्चित्रीकरणे गम्ये "शेषे लृडयदौ" इति लृट्॥

❀भाषाऽर्थ❀ अथवा लडनेके लिए सन्नद्ध हूगा। बलहीनके सदृश नही रोऊगा। आज मास खानेवाले ( गृध्र आदि ) तृप्त होंगे। पृथ्वी शत्रुओंके रुधिरको पीयेगी॥ २९॥

आक्रन्दयामि यशः शत्रूनपनेष्यामि कर्मणा।
अनुभाविष्यते शोको मैथिल्याऽद्य पतिक्षयात्॥ ३०॥

अन्वयः—यश आकर्क्ष्यामि । कर्मणा शत्रून् अपनेष्यामि । अद्य पतिक्षयात् मैथिल्या शोक अनुभाविष्यते ॥

व्याख्या—यश = कीर्तिं, सर्वयोद्धृणामिति शेष । आकर्क्ष्यामि = हरिष्यामि कर्मणा = क्रियया, युद्धरूपयेति भाव । शत्रून्=रिपून्, अपनेष्यामि दूरीकरिष्यामि, "अपचेष्यामी"ति पाठे न्यूनयिष्यामीत्यर्थ । अद्य = अस्मिन्दिने, पतिक्षयात् = भर्तृविनाशात्, मत्कर्तृकरामवधादिति भाव । मैथिल्या = सीतया, शोक = मन्यु, अनुभाविष्यते अनुभविष्यते = अनूभूत करिष्यते, इति भाव अद्य राम हनिष्यामीति भाव ।

ॐव्युत्पत्तिॐ आकर्क्ष्यामि = आङ्पूर्वकात् "कृष विलेखने" इति धातोर्लृट्, विलेखनमिहाकर्षणम् । "अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्" इत्यम्विकल्पपक्षे "आक्रक्ष्यामी"ति रूपम् । अपनेष्यामि = अपपूर्वकात् "णीञ् प्रापण" इति धातोर्लृट् । पतिक्षयात् = पत्युः क्षयस्तस्मात् । हेतौ पञ्चमी । अनुभाविष्यते = अनुपूर्वकात् भूधातो कर्मणिलृट् "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशा वा चिण्वदिट् चे"ति चिण्वदिट् ॥

ॐभाषाऽर्थःॐ सब योद्धाओंके यशका हरण करूगा । कर्मसे शत्रुओंको हटाऊगा । आज पति ( राम ) के नाशसे सीतासे शोकका अनुभव किया जायगा ॥

मन्तूयिष्यति यक्षेन्द्रो वल्गूयिष्यति नो यम. ।
ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥

अन्वय—यक्षेन्द्रो मन्तूयिष्यति । यमो नो वल्गूयिष्यति । वने वानरयोषितश्च अपतिपुत्रा. ( सत्य ) ग्लास्यन्ति ॥

व्याख्या—यक्षेन्द्र = कुबेर, मन्तूयिष्यति = दुर्मना भविष्यति रामवधेनेति भाव । यम = यमराज, नो वल्गूयिष्यति = हृष्टमना न भविष्यति । नो पूजयिष्यतीति मल्लिनाथसम्मतोऽर्थ. । वने = अरण्ये, वानरयोषितश्च = मर्कटस्त्रियश्च अपतिपुत्रा = पतिपुत्ररहिता सत्य, ग्लास्यन्ति = ग्लानिं यास्यन्ति ॥

ॐव्युत्पत्तिॐ यक्षेन्द्र =यक्षाणामिन्द्र, "कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वर ।" इत्यमर । मन्तूयिष्यति = कण्ड्वादीना धातुत्वेन प्रातिपदिकत्वेन च द्वैविध्यात् "कण्ड्वादिभ्यो यक्" इति यगन्तान्मन्तुशब्दाल्लृट् । "मन्तु अपराधे, रोष इत्येके" इति कण्ड्वादिपाठे यद्यपि दौर्मनस्यरूपाऽर्थस्य न प्राप्तिस्तथाऽपि धातूपसर्गाणामनेकाऽर्थत्वादयमर्थ प्रकरणाऽनुरूपष्टीकाकृत्सम्मत., चान्द्रे व्याकरणे "मन्तुञ् रोषणवैमनस्ययोरपराधे चे"ति दर्शनाद्व्याकरणाऽन्तरसम्मतश्चेति सर्वं निरवद्यम् । मल्लिनाथमते तु कोपिष्यतीत्यर्थ. । वल्गूयिष्यति = अत्राऽपि पूर्ववद्यगन्ताद्वल्गुशब्दाल्लृट् ।"

"वल्गु पूजामाधुर्ययो" इति कण्ड्वादिधातु । ग्लास्यन्ति = "ग्लै ( म्लै ) हर्षक्षये" इति धातोर्लृट् । "आदेच उपदेशेऽशिति" इत्यात्वम् ॥

ॐभाषाऽर्थ.ॐ रामका वध सुनकर कुबेर दुर्मना होगा । यमराजभी प्रसन्नचित्त नही होगा । वनमें वानरस्त्रियाँभी पति और पुत्रोंसे रहित होती हुई ग्लानियुक्त हो जायगी ॥ ३१ ॥

सुखं स्वप्स्यन्ति रक्षांसि भ्रमिष्यन्ति च निर्भयम् ।
न विक्रोक्ष्यन्ति राक्षस्यो नरांश्चाऽत्स्यन्ति हर्षिताः ॥ ३२ ॥

अन्वयः—रक्षासि सुख स्वप्स्यन्ति, निर्भय भ्रमिष्यन्ति च । राक्षस्यो न विक्रोक्ष्यन्ति, हर्षिता ( सत्य ) नरान् अत्स्यन्ति च ॥

व्याख्या—रक्षासि = राक्षसा , सुख = सानन्दं यथा तथा, स्वप्स्यन्ति = शयिष्यन्ते, रामवधानन्तरमिति शेष । निर्भय = भयरहितं यथा तथा, भ्रमिष्यन्ति च= भ्रमण करिष्यन्ति च । राक्षस्य = यातुधान्य , न विक्रोक्ष्यन्ति = नो क्रन्दिष्यन्ति, हर्षिता = सञ्जातहर्षा सत्य , नरान् = मनुष्यान् , अत्स्यन्ति च = भक्षयिष्यन्ति च॥

ॐव्युत्पत्ति ॐ स्वप्स्यन्ति = "ञिस्वप् शये" इति धातोर्लृट् । निर्भय = निर्गतं भय यस्मिन्कर्मणि तद्यथा तथा । भ्रमिष्यन्ति="भ्रमु अनवस्थान" इति धातोर्लृट् । विक्रोक्ष्यन्ति = विपूर्वात् "क्रुश आह्वाने रोदने चे"ति धातोर्लृट् । हर्षिता = हर्ष सञ्जात आसा ता , "तदस्य सजात तारकादिभ्य इतच्" इतीतच् । अत्स्यन्ति="अद-भक्षणे" इति धातोर्लृट् ॥

ॐभाषाऽर्थॐ रामवधके अनन्तर राक्षस सुखपूर्वक सोयेंगे और निर्भय होकर भ्रमण भी करेंगे । राक्षसिया नहीं रोयेंगी और हर्षयुक्त होती हुई घूमेंगी भी॥३२॥

युग्मम्—

प्राङ्मुहूर्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी ।
आगामिनि ततः काले यो द्वितीयः क्षणोऽपरः ॥ ३३ ॥
तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहाऽमरम् ।
ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः ॥ ३४ ॥

अन्वयः—प्रभाते मुहूर्तात् प्राक् अहं ध्रुवं सुखी भविष्यामि । तत आगामिनि काले य अपरो द्वितीय क्षण तत्र सहाऽमरं त्रिदशेन्द्रं जेतुं गमिष्यामि । तत परेण अमत्सर ( सन् ) भूय अपि लङ्काम् एष्यामि ॥

व्याख्या—प्रभाते = प्रात काले, मुहूर्तत्रयसम्मित इति भाव , घटिकाद्वयेनैको मुहूर्त सपद्यत इत्यवधेयम् । मुहूर्तात् = द्वितीयमुहूर्तादिति भाव , प्राक् = प्रथम,

प्रथमे मुहूर्ते इति भाव । अहं = रावण , ध्रुवम् = अवश्यं, सुखी=साऽऽनन्द , भविष्यामि = वर्तिष्ये, तदैव शत्रुहननादिति भाव । तत = अनन्तरम् , आगामिनि = भविष्यति, काले=समये, य., अपर = अन्य , द्वितीय = द्वयो पूरण, क्षण = मुहूर्त , तत्र = तस्मिन् , सहाऽमर = देवसहित, त्रिदशेन्द्र = देवराजम् , इन्द्रमिति भाव । जेतुं=वशीकर्तुं, गमिष्यामि = यास्यामि । तत =तस्मात् , द्वितीयमुहूर्तादिति भाव , परेण = उत्तरवर्तिना कालेन, तृतीयमुहूर्तेनेति भाव । अमत्सर =अन्यशुभद्वेषरहित सन् , सपत्नाऽभावादिति भाव । भूयोऽपि = पुनरपि, लङ्का = स्वनगरीम् एष्यामि = आगमिष्यामि । प्रात सङ्गवमध्याह्नाऽपराह्णसायङ्कालरूपविभागपञ्चकाऽवच्छिन्ने दिने मुहूर्तत्रयात्मकप्रात काले प्रथमे मुहूर्ते रामहननं विधाय द्वितीयेऽमरावत्यभियानेन ससुरमिन्द्रं पराजित्य तृतीये मुहूर्ते शत्रुपराजयेन विगतकोप सन् पुन स्वपुरी प्रत्यागमिष्यामीति दशाऽऽननमनोरथ ॥

*व्युत्पत्ति* मुहूर्तात्=अञ्चूत्तर ( प्राक् ) पदेन योगे "अन्यारादितरर्तेदिक्छब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी । सुखी=सुखमस्याऽस्तीति, "अत इनिठनौ" इतीनि । क्षण.="क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वसु ।" इति रुद्रः । सहाऽमरम्=अमरै सहितः सहाऽमरस्त, "तेन सहेति तुल्ययोगे" इति बहुव्रीहि. । भविष्यामि="कालविभागे चाऽनहोरात्राणाम्" इत्यनद्यतनवत्प्रत्ययप्रतिषेधे लृट् । तत्र हि "नाऽनद्यतनवत्क्रियाप्रबन्धसामीप्ययो" इति "भविष्यति मर्यादावचनेऽवरस्मिन्" इति चाऽनुवर्तते । एव गमिष्यामीत्यत्राऽपि । ततः="परेणे"ति पदेनयोगे "अन्यारादितरर्ते" इत्यादिना पञ्चमी, तत. "पञ्चम्यास्तसिल्" इति तसिल् । अमत्सर.=अविद्यमानो मत्सरो यस्य स , "नञोऽस्त्यर्थाना वाच्यो वा चोत्तरपदलोप" इति नञ्बहुव्रीहि । "मत्सरोऽन्यशुभद्वेषे" इत्यमर' । एष्यामि=आङ्पूर्वात् "इण् गतौ" इति धातो "परस्मिन् विभाषा" इत्यनेन विभाषालुट्प्रतिषेधाल्लृट् । तत्र हि कालविभागे सति भविष्यति काले परस्मिन् विभाषा अनद्यतनवत्प्रत्ययविधिर्न भवतीत्युक्तम् ॥

*भाषाऽर्थः* प्रात'कालमे प्रथम मुहूर्तमे मै ( रामको मारकर ) अवश्य सुखी हूगा । अनन्तर आगामी समयमे जो दूसरा मुहूर्त है उसमें देवताओंके साथ इन्द्र को जीतनेके लिए जाऊगा । उसके बाद तृतीय मुहूर्तमे कोपरहित होकर फिर भी लङ्कामें चला आऊगा ॥ ३३ ॥ ३४ ॥

तमेवंवादिनं मूढमिन्द्रजित्समुपागतः ।
युयुत्सिष्येऽहमित्येवं वदन् रिपुभयकरः ॥ ३५ ॥

अन्वयः—एवं वादिन त मूढम् "अहं युयुत्सिष्ये" इत्थेवं वदन् रिपुभयङ्कर इन्द्रजित् समुपागत ॥

व्याख्या—एवं वादिनम् = एवभाषणशील, त = पूर्वोक्त, मूढ = मूर्खं, रावणमिति भाव । अहम् = इन्द्रजित् , युयुत्सिष्ये = योद्धुमिच्छा करिष्यामि, इत्येवम् = इत्येतादृश, वदन्=भाषमाण , रिपुभयङ्कर = शत्रुभीतिजनक , इन्द्रजित्=मेघनाद , समुपागत=समुपायात· ॥

ॐव्युत्पत्ति.ॐ एवं वादिनम् = एव वदतीति तच्छील एवं वादी' तं "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्यय । युयुत्सिष्ये = "युध सम्प्रहारे" इति धातोः सन्नन्ताल्लृट् । रिपुभयङ्कर =भय करोतीति भयङ्कर , "मेघर्तिभयेषु कृञ" इति खच् "अरुर्द्विषदजन्तेषु मुम्" इति मुम् रिपूणा भयङ्कर ॥

ॐभाषाऽर्थ ॐ ऐसा कहनेवाले उस मूढ रावणके पास "मै लड़नेकी इच्छा करता हू" ऐसा कहता हुआ शत्रुओंको भय उत्पन्न करनेवाला इन्द्रजित् आ गया ॥

नाऽभिज्ञा ते महाराज ! जेष्याव. शक्रपालितम् ।
दृप्तदेवगणाकीर्णमावा सह सुरालयम् ॥ ३६ ॥

अन्वय.—हे महाराज ! ते अभिज्ञा न, शक्रपालित दृप्तदेवगणाऽऽकीर्ण सुराऽऽलयम् आवा सह जेष्यावः ॥

व्याख्या—हे महाराज=हे महाभूप, ते=तव, अभिज्ञा = स्मृति·, न=नाऽस्ति, यत् शक्रपालितम् = इन्द्ररक्षित, दृप्तदेवगणाऽऽकीर्णं = सदर्पसुरसमूहव्याप्त, सुराऽऽलयं = स्वर्गम् , आवा = भवान् अह च, द्वावेवेति भाव , सह = संभूय, जेष्याव· = जितवन्तौ ॥

ॐव्युत्पत्ति·ॐ हे महाराज = महाश्चाऽसौ राजा महाराजस्तत्सम्बुद्धौ, "राजाऽहः सखिभ्यष्टच्" इति टच् । दृप्तदेवगणाऽऽकीर्णं = दृप्ताश्च ते देवगणा दृप्तदेवगणास्तैराकीर्णस्तम् । जेष्याव ="जि जय" इति धातो स्मृतिवाचके अभिज्ञापदे उपपदे भूताऽनद्यतने "अभिज्ञावचने लृट्" इनि लृट् ॥

ॐभाषाऽर्थ.ॐ हे महाराज ! आपको स्मरण नहीं है, इन्द्रसे रक्षित दर्पसे युक्त देवगणसे व्याप्त स्वर्गको हम दोनोंने मिलकर जीता था ॥ ३६ ॥

नाऽभिज्ञा ते सयत्तेन्द्र भङ्क्ष्यावो यद्यम बलात् ।
रत्नानि चाऽऽहरिष्याव: प्राप्स्यावश्च पुरीमिमाम् ॥ ३७ ॥

अन्वय —( हे महाराज ! ) ते अभिज्ञा न, यत् ( आवाम् ) सयत्तेन्द्रं यमं बलात् भङ्क्ष्यावो रत्नानि आहरिष्याव इमा पुरी प्राप्स्यावश्च ॥

व्याख्या—हे महाराज !, ते = तव, अभिज्ञा = स्मृति , न = नाऽस्ति,यत् , सयक्षेन्द्र = धनदसहितं, यम = यमराज, बलात् = सामर्थ्यात् , भङ्क्ष्याव = भग्नवन्तौ, आवामिति शेष , एव परत्राऽपि । रत्नानि = पद्मरागादीनि, आहरिष्याव =आहृतवन्तौ, इमाम् = एता, पुरी=नगरी, लङ्कामित्यर्थं । प्राप्स्यावश्च= प्राप्तवन्तौ च ॥

ॐव्युत्पत्ति·ॐ सयक्षेन्द्र = यक्षाणामिन्द्रो यक्षेन्द्र , "कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वर· । "इत्यमर । यक्षेन्द्रेण सहितस्तम् । भङ्क्ष्याव·, आहरिष्याव , प्राप्स्यावश्च = "भञ्जो आमर्दने" इति आङ्पूर्वकात् "हृञ् हरणे" इति प्रपूर्वकात् "आप्लृ व्याप्तौ" इति धातोश्च "विभाषा साऽऽकाङ्क्षे" इति साकाङ्क्षे स्मृतिबोधिनि उपपदे लृट् । लक्ष्यलक्षणयो· सम्बन्धे प्रयोक्तुराकाङ्क्षा, तत्र भञ्जन लक्षण रत्नाऽऽहरण पुरीप्रापण च लक्ष्यम् । साधनसम्बन्धविवक्षाऽऽकाङ्क्षा ॥

ॐभाषाऽर्थ·ॐ हे महाराज ! आपको याद नही है जो कि हम दोनोंने कुबेरके साथ यमराजको बलपूर्वक पराजित किया था रत्नोंका आहरण किया था और उसके बाद हम दोनों लङ्कापुरीको प्राप्त भी हुए थे ॥ ३७ ॥

एष पेक्ष्याम्यरीन् भूयो न शोचिष्यसि रावण ! ।
जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिश· ॥ ३८ ॥

अन्वयः—एष ( अहम् ) भूय अरीन् पेक्ष्यामि। हे रावण ! न शोचिष्यसि, जगत नीरामं द्रक्ष्यसि दिश अवगाहिष्यसे ॥

व्याख्या—एष = भवत्समीपतरवर्ती, अहमिति शेष । भूय =पुन·, अरीन्= शत्रून् , रामादीनिति भाव· । पेक्ष्यामि = चूर्णयिष्यामि । येन हे रावण = हे दशाऽऽनन, न शोचिष्यसि = शोक न करिष्यसि । जगत्=लोक, नीराम = रामरहित, द्रक्ष्यसि=विलोकयिष्यसि । दिश·=आशा , अवगाहिष्यसे=व्याप्स्यसि ॥

ॐव्युत्पत्ति·ॐ पेक्ष्यामि = "पिष्लृ सचूर्णन" इति धातो· "वर्तमानसामीप्ये वर्तमानवद्वा" इति वार्तमानिकप्रत्ययस्य विकल्पेन विधानाल्लृडेव। शोचिष्यसि="शुच शोके" इति धातोर्भविष्यति लृट् । नीराम = निर्गतो रामो यस्मात्तत् , "रो रि" इति रलोप "ढ्लोपे पूर्वस्य दीर्घोऽण" इति पूर्वस्याऽणोदीर्घत्वम् । द्रक्ष्यसि = "दृशिर् प्रेक्षण" इति धातोर्लृट् , "सृजिदृशोर्झल्यमकिति" इत्यमागम· । अवगाहिष्यसे=अवपूर्वात् "गाहू विलोडने" इति धातोर्लृट् ॥

ॐभाषाऽर्थ ॐ यह मै शत्रुओंको फिर पीस डालूगा । पिताजी ! आप पीछे शोक नहीं करेंगे, जगत्को रामसे रहित देखेंगे और दिशाओंको व्याप्त करेंगे ॥ ३८ ॥

**सहभृत्य: सुरावासे भय भूयो विधास्यसि ।**
**प्रणंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम् ॥ ३९ ॥**

**अन्वयः**—( हे पित ! ) सहभृत्य ( सन् ) सुरावासे भूय भय विधास्यसि, अद्य देवेन्द्र त्वा प्रणस्यति । स सन्नति वक्ष्यति ॥

**व्याख्या**—( हे पित ) सहभृत्य = अनुचरसहित सन् , सुराऽऽवासे=स्वर्गे, भूय = पुन , भय = त्रास, विधास्यसि=करिष्यसि । अद्य=अस्मिन्दिने, देवेन्द्र = देवराज , त्वा=भवन्त, प्रणस्यति=''त्वदीयोऽहम्' इति निवेदयिष्यति । स =देवेन्द्र , सन्नतिं=नमस्कार, वक्ष्यति=वदिष्यति ॥

**⊛व्युत्पत्ति⊛** सहभृत्य =भृत्यै सहित , तुल्ययोगबहुव्रीहि सुरावासे=आ ( समन्तात् ) वसन्ति अस्मिन्निति आवास , "हलश्चे"त्यधिकरणे घञ् । सुराणामावासस्तस्मिन् । विधास्यसि=विपूर्वात् "डुधाञ् धारणपोषणयो " इति धातोर्लृट् । प्रणस्यति=प्रपूर्वकात् "णम प्रह्वत्वे शब्दे" इति धातोर्लृट् । "णो न" इति नत्वम् , "उपसर्गादसमासेऽपि णोपदेशस्ये"ति नस्य णत्वम् । सन्नति=नमन नति णमधातो "स्त्रियां क्तिन्" इति क्तिन्प्रत्यय । "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोप । सती चाऽसौ नति' सन्नतिस्ताम् । वक्ष्यति="वच परिभाषण" इति धातोर्लृट् ॥

**⊛भाषाऽर्थ⊛** पिताजी ! आप भृत्योंके साथ स्वर्गमें फिर भय उत्पन्न करेंगे, आज इन्द्र आपसे "मै आपका अनुगत हू" ऐसा निवेदन करेगा । वह आपको नमस्कार ज्ञापित करेगा ॥ ३९ ॥

**भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।**
**ज्ञास्येऽहमद्य सग्रामे समस्तैः शूरमानिभि. ॥ ४० ॥**

**अन्वयः**—(हे पित ) मुनिभि त्वत्तो भेष्यते । त्वं द्विष अधिष्ठास्यसि । अहम् अद्य सग्रामे समस्तै शूरमानिभि ज्ञास्ये ॥

**व्याख्या**—( हे पित ! ) मुनिभि =तापसै , त्वत्त =भवत , भेष्यते=त्रसिष्यते । त्व=राक्षसेश्वर , द्विष = शत्रून् , अधिष्ठास्यसि=परिभविष्यसि । अहम् = इन्द्रजित् , अद्य=अस्मिन्दिने, सग्रामे=युद्धे, समस्तै =समग्रै , शूरमानिभि =शूरम्मन्यै, ज्ञास्ये= ज्ञातो भविष्यामि ॥

**⊛व्युत्पत्ति⊛** त्वत्त' = त्वदिति, "पञ्चम्यास्तसिल्" इति तसिल्प्रत्यय , 'प्रत्ययोत्तरपदयोश्चे"ति तसिल्प्रत्यये परे युष्मच्छब्दस्य त्वदादेश । भेष्यते="ञिभी भये" इति धातोर्भावे लृट् । द्विष =अधिपूर्वकस्थाधातोर्योगे "अधिशीङ्स्थाऽऽसा कर्म"ति

कर्मसञ्ज्ञा। अधिष्ठास्यसि = अधिपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोर्लृट्। "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इति षत्वम्। शूरमानिभि = शूरमात्मान मन्यन्त इति शूरमानिनस्तै, "आत्ममाने खश्चे"ति चाणिनि.। ज्ञास्ये = "ज्ञा अवबोधने" इति धातो· कर्मणि लृट्॥

※भाषाऽर्थ※ हे पिताजी! मुनिलोग आपसे डरेंगे। आप शत्रुओंको परिभूत करेंगे। मै आज सग्राममे अपनेको शूर माननेवाले सब लोगोंसे जाना जाऊगा ॥४०॥

ज्ञायिष्यन्ते मया चाऽद्य वीरमन्या द्विषद्गणाः।
गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम् ॥ ४१ ॥

अन्वयः—अद्य मया वीरम्मन्या द्विषद्गणा ज्ञायिष्यन्ते। अद्य कृत्तै वनौकसा गात्रै क्षितिं गूहिष्यामि ॥

व्याख्या—अद्य=अस्मिन्दिने, मया = इन्द्रजिता, वीरम्मन्या = वीरमानिन·, द्विषत्गणा =शत्रुसमूहा, ज्ञायिष्यन्ते = ज्ञास्यन्ते परिच्छेत्स्यन्ते इति भाव । अद्य= अस्मिन् दिने, कृत्तै =छिन्नै, वनौकसा=वानराणा, गात्रै =शरीरै, क्षिति=पृथिवी, गूहिष्यामि=आच्छादयिष्यामि ॥

※व्युत्पत्ति※ वीरम्मन्या = वीरमात्मान मन्यन्त इति, "आत्ममाने खश्चे" ति खशप्रत्यय, "अरुर्द्विषदजन्तस्य मुम्" इति मुम्। ज्ञायिष्यन्ते= "ज्ञा अवबोधन" इति धातो· कर्मणि लृट्, "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशा वा चिण्वदिट् चे"ति चिण्वदिट्। वनौकसा = वनमोको येषां ते वनौकसस्तेषाम्। गात्रैः = "गात्र वपु सहनन शरीरं वर्ष्म विग्रह.।" इत्यमर । गूहिष्यामि = "गुहू सवरण" इति धातोर्लृट्॥

※भाषाऽर्थ※ आज मुझसे अपनेको वीर माननेवाले शत्रुओंके समूह जाने जायगे। आज काटे गये वानरोंके शरीरोंसे पृथिवीको मै आच्छादितकर दूगा ॥४१॥

आरोक्ष्यामि युगान्तवारिदघटासघट्टधीरध्वनि
निर्यास्यन् रथमुच्छ्रितध्वजधनु खड्गप्रभाभासुरम्।
श्रोष्यस्यद्य विकीर्णवृक्णविमुखव्यापन्नशत्रौ रणे
तृप्ताञ्छोणितशोणभीषणमुखान् क्रव्याऽशिनः क्रोशत ॥४२॥

अन्वय—निर्यास्यन् युगाऽन्तवारिदघटासघट्टधीरध्वनिम् उच्छ्रितध्वजधनु खड्गप्रभाभासुर रथम् आरोक्ष्यामि। अद्य विकीर्णवृक्णविमुखव्यापन्नशत्रौ रणे तृप्तान् शोणितशोणभीषणमुखान् क्रोशत क्रव्याऽशिन श्रोष्यसि ॥

व्याख्या—( हे पित ! ) निर्यास्यन् = इतो निर्गमिष्यन्। अहमिति शेष·।

युगाऽन्तवारिदघटासघट्टधीरध्वनिं = प्रलयमेघसमूहमिथ समर्दगम्भीरशब्दम् , उच्छ्रितध्वजधनु खड्गप्रभाभासुरम् = उन्नतपताकाकार्मुकाऽसिरुचिभासनशील, रथ = स्यन्दनम्, आरोक्ष्यामि = आरोहण करिष्यामि, अहमिति शेष । अद्य = अस्मिन्दिने, विकीर्णवृक्णविमुखव्यापन्नशत्रौ = विक्षिप्तच्छिन्नपराङ्मुखमृताऽरातौ, रणे = युद्धे, तृप्तान् = सुहितान्, शोणितमासोपभोगादिति भाव । शोणितशोणभीषणमुखान् = रुधिराऽरुणभयङ्कराऽननान् , क्रोशत =शब्द कुर्वाणान् , क्रव्याऽशिन =शृगालाऽऽदीन् , लक्षणया तादृशशृगालादीना शब्दान् श्रोष्यसि = आकर्णयिष्यसि, त्वमिति शेष ॥

※व्युत्पत्ति ※ निर्यास्यन् = निर्यास्यतीति, "आरोक्ष्यामी"ति क्रियाया क्रियाऽर्थायामुपपदे "लृट् शेषे चे"ति चकाराल्लृट् । युगाऽन्तवारिदघटासघट्टधीरध्वनि = युगाऽन्ते या वारिदघटा , तासा सघट्ट , तस्येव धीरोध्वनिर्यस्य स , तम् । उच्छ्रितध्वजधनु खड्गप्रभाभासुरम् = उच्छ्रितानि ध्वजधनूंषि यस्मिन् स उच्छ्रितध्वजधनु । खड्गप्रभाभिर्भासुर खड्गप्रभाभासुर । उच्छ्रितध्वजधनुश्चाऽसौ खड्गप्रभाभासुर उच्छ्रितध्वजधनु खड्गप्रभाभासुरस्तम् । यद्वा उच्छ्रिताना ध्वजधनु खड्गाना प्रभाभिर्भासुरस्तम् । आरोक्ष्यामि = आङ्पूर्वाद्रुहधातोर्लृट् । विकीर्णवृक्णविमुखव्यापन्नशत्रौ=विकीर्णा वृक्णा विमुखा व्यापन्ना शत्रवो यस्मिन्स विकीर्णवृक्णविमुखव्यापन्नशत्रुस्तस्मिन् । वृक्ण इत्यत्र "ओव्रश्चू छेदने" इति धातोर्निष्ठाया क्तप्रत्यय । "ओदितश्चे"ति निष्ठाया नत्व तस्याऽसिद्धत्वात् "चो कु" इति कुत्व च । शोणितशोणभीषणमुखान् = शोणितेन शोणानि भीषणानि मुखानि येषा ते शोणितशोणभीषणमुखास्तान् । क्रोशत = क्रोशन्तीति क्रोशन्त, तान् । "क्रुश आह्वाने रोदने चे"ति धातोर्लट् शत्रादेश । क्रव्याऽशिन = क्रव्यमश्नन्तीति तच्छीला क्रव्याऽशिनस्तान् , ताच्छील्ये णिनिप्रत्यय । श्रोष्यसि = "श्रु श्रवणे" इति धातोर्लृट् । शार्दूलविक्रीडित वृत्तम् ॥

※भाषाऽर्थ ※ हे पिताजी ! यहाँसे बाहर निकलता हुआ मैं प्रलयकालके मेघसमूहोंके परस्पर विमर्दके सदृश गम्भीर ध्वनिसे युक्त, उन्नत पताकायें और धनुषोंसे सम्पन्न एवम् खड्गोंकी कान्तियोंसे चमकनेवाले रथपर चढूंगा । आज आप बिखरे गये, छिन्न, पराङ्मुख और मृत शत्रुओंसे सम्बद्ध युद्धभूमिमें तृप्त, रुधिरसे लाल और भयङ्कर मुखवाले शृगाल आदियोंके शब्दोंको सुनेंगे ॥ ४२ ॥

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये चतुर्थे तिङन्तकाण्डे
लक्षणरूपे तृतीय परिच्छेद ( वर्ग ) तथा लक्ष्यरूपे कथानके
रावणविलापो नाम षोडश सर्ग ॥



# अथ सप्तदशः सर्गः ।

इत. प्रभृति लङ्विलसितमाह । तत्र "अनद्यतने लङ्" इति सूत्रेण भूताऽनद्यतने लङ् भवति । "अतीताया रात्रे पश्चाद्र्धेनाऽऽगामिन्या पूर्वार्द्धेन च सहितो दिवसोऽद्यतनस्तद्भिन्नोऽनद्यतन" इति । क्वचित्तु लक्षणाऽन्तरेण भूताऽनद्यतनभिन्नेऽपि लङ दर्शयति ।

**आशासत तत. शान्तिमस्नुरग्नीनहावयन् ।**
**विप्रानवाचयन् योधा. प्राकुर्वन् मङ्गलानि च ॥ १ ॥**

**अन्वयः**—ततो योधा शान्तिम् आशासत, अस्नु, अग्नीन् अहावयन्, विप्रान् अवाचयन् मङ्गलानि च प्राकुर्वन् ॥

**व्याख्या**—तत प्रतिज्ञाऽनन्तर, योधा = इन्द्रजिद्भटा, शान्ति = शमम्, उपद्रवपरिहाराऽर्थमिति भाव. । आशासत = अभीष्टवन्त । शान्ति च दर्शयति—अस्नुरित्यादिना । अस्नु = स्नाता । अग्नीन् = अनलान्, अहावयन्=हुतान् अकारयन्, ऋत्विग्भि, होम कारितवन्त इति भाव । विप्रान् = ब्राह्मणान्, अवाचयन् = स्वस्तिवाचन कारितवन्त । इत्थ च मङ्गलानि च = मङ्गलयुक्तानि कर्माणि, प्राकुर्वन्= कृतवन्त ॥

**ॐव्युत्पत्ति ॐ योधा = युध्यन्त इति, "युध सप्रहारे" इति धातो· "नन्दिग्रहिपचादिभ्योल्युणिन्यच." इत्यच्, "भटा योधाश्च योद्धार" इत्यमर । आशासत = "आङ शासु इच्छायाम्" इत्यनुदात्तेतो धातो "अनद्यतने लङ्" इति लङ् । "आत्मनेपदेष्वनत" इति झस्य अत् । अस्नु = "ष्णा शौचे" इति धातोर्लङ्, "धात्वादे· ष स" इति मूर्धन्यषकारस्य दन्त्यसकारादेशस्तत "निमित्ताऽपाये नैमित्तिकस्याऽप्यपाय" इति न्यायेन णत्वनिमित्तस्य मूर्धन्यषकारस्याऽपाये नैमित्तिकस्य णस्याऽपि अपायेन नकारभाव । "आत" इति "लङ शाकटायनस्यैवे"ति झेर्जुस्, "चुटू" इति जकारस्येत्सञ्ज्ञा तत· "उस्यपदान्तात्" इति पररूपत्वम् । अहावयन् = "हु दानाऽदनयो" इति धातोर्णौ लङ् । विप्रान् = वचधातो शब्दकर्मकत्वात् "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणिकर्ता स णौ" इत्यणि कर्तु·कर्मत्वम् । अवाचयन् = "वच परिभाषण" इति धातोर्णौ लङ् । प्राकुर्वन् = प्रपूर्वकात् "डुकृञ् करण" इति धातोर्लङ् । "आदिर्ञिटुडव" इति डोरित्सञ्ज्ञा । प्रायेणाऽत्र क्रियासमुच्चय शब्दाऽलङ्कार. ॥**

**ॐभाषाऽर्थ ॐ इन्द्रजित्के प्रतिज्ञा करनेके अनन्तर उसके योद्धाओंने शान्तिकी इच्छा की, स्नान किया, ब्राह्मणोंसे होम और स्वस्तिवाचन कराया और मङ्गलयुक्त कर्मोंको कर लिया ॥ १ ॥**

अपूजयन् कुलज्येष्ठानुपागूहन्त बालकान् ।
स्त्री समावर्धयन् साऽस्रा' कार्याणि प्रादिशंस्तथा ॥ २ ॥

अन्वय.—( योधा ) कुलज्येष्ठान् अपूजयन्, बालकान् उपागूहन्त, साऽस्रा. स्त्री समावर्धयन्, तथा कार्याणि प्रादिशन् ॥

व्याख्या—कुलज्येष्ठान् = वशवृद्धान्, अपूजयन् = पूजितवन्त , पादपतनादिनेति भाव , योधा इति शेष , एव परत्राऽपि । बालकान् = शिशून्, उपागूहन्त= आश्लिष्टवन्त । साऽस्रा = रुदत्य , नाशाऽऽशङ्कयेति भाव. । स्त्री =योषित., समावर्धयन् = सवर्धितवन्त , आश्वासितवन्त इति भाव. । तथा=तेन प्रकारेण, कार्याणि= गृहकर्माणि, प्रादिशन् = "इद कार्यम्' इति निर्दिष्टवन्त इति भाव ॥

❀व्युत्पत्ति❀ कुलज्येष्ठान् = अतिशयेन प्रशस्या ज्येष्ठा , प्रशस्यशब्दात् "अतिशायने तमबिष्ठनौ" इति इष्ठन्प्रत्यय "ज्यचे"ति प्रशस्यस्य ज्याऽऽदेश । कुले ज्येष्ठा कुलज्येष्ठास्तान्। अपूजयन्="पूज पूजायाम्" इति धातोर्लङ्। उपागूहन्त = उपपूर्वकात् "गुहू सवरण" इति धातोर्लङ् । साऽस्रा'=अस्रै सहिता साऽस्रास्ता., "तेन सहेति तुल्ययोगे" इति बहुव्रीहि, "वोपसर्जनस्ये"ति सहस्य सभाव' । स्त्री = "वाऽम्शसो " इतीयडभावपक्षे पूर्वसवर्णदीर्घपक्षे रूपम् । समावर्धयन् = "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे"ति णिचि लङ् "समावर्जयन्" इति मल्लिनाथसम्मतः पाठस्तस्य आश्वासयन्नित्यर्थः । "समावर्गयन्नि"ति पाठेप्ययमेवाऽर्थ. "तत्करोती"ति ण्यन्ताल्लङ् । प्रादिशन् = प्रपूर्वकात् "दिश अतिसर्जन" इति धातोर्लङ् ॥

❀भाषाऽर्थ❀ योद्धाओंने वशके वृद्धोंकी पूजा की, बालकोंको आलिङ्गन किया, अनिष्टकी आशङ्कासे आंखोंमे आसू भरने वाली स्त्रियोंको दिलासा दिया और गृहकार्योंका निर्देश किया ॥ २ ॥

आच्छादयन् व्यलिम्पंश्च प्राश्नन्नथ सुराऽमिषम् ।
प्रापिबन् मधु माध्वीक भक्ष्यांश्चादन् यथेप्सितान् ॥ ३ ॥

अन्वय —( योधा ) आच्छादयन्, व्यलिम्पन्, अथ सुराऽऽमिषं प्राश्नन् माध्वीक मधु प्रापिबन् यथेप्सितान् भक्ष्याश्च आदन् ॥

व्याख्या—आच्छादयन् = परिहितवन्त', वस्त्राणीति भाव , योधा इति शेष , एव परत्राऽपि । व्यलिम्पन् = समालिप्तवन्त , अङ्गराग कृतवन्त इति भाव । अथ= अनन्तरं, सुराऽऽमिष = सुरायुक्त मास, सुराणा मासमिति भरतमल्लिक । प्राश्नन्= भक्षितवन्त , माध्वीकं = मधूकपुष्पकृत, मधु=मद्य, "मधुमाध्वीकम्" इत्येक नाम केचित् तच्च द्राक्षाविकार इति भरत । "मार्द्वीकम्" इति मल्लिनाथसंमत पाठ-

स्तस्य मृद्वीकाया ( द्राक्षाया ) विकार इत्यर्थ । 'मृद्वीका गोस्तनी द्राक्षा" इत्यर्थ । प्रापिबन् = पीतवन्त । यथेप्सितान् = यथाऽभीष्टान्, भक्ष्यांश्च=खण्डपायसादींश्च, आदन्=अभ्यवहृतवन्त ॥

❀व्युत्पत्ति❀ व्यलिम्पन् = विपूर्वकात् "लिप उपदेहे" इति धातोर्लङ्, "शे मुचादीनाम्" इति नुम् । व्यलिम्पन्+च = व्यलिम्पश्च "नश्छव्यप्रशान्" इति रुत्वम्, अनुनासिकाऽभावपक्षे "अनुनासिकात्परोऽनुस्वार" इत्यनुस्वार । प्राश्नन् = प्रपूर्वकात् "अश भोजन" इति धातोर्लङ् । प्रापिबन् = प्रपूर्वकात् "पा पाने" इति धातोर्लङ्, "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदा" इति पाधातो पिबादेश । आदन् = "अद भक्षण" इति धातोर्लङ् । "अद सर्वेषाम्" इत्यडागम ॥

❀भाषाऽर्थ❀ राक्षसोंने कपड़े पहने, अङ्गराग किया, अनन्तर सुरासे युक्त मास खाया, मधूक पुष्पोंके मद्यको पीया और इच्छाके अनुसार भक्ष्य पदार्थोंको खा लिया॥३॥

न्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्मभिः ।
अध्यासत सुयानानि द्विषद्भ्यश्चाऽशपंस्तथा ॥ ४ ॥

अन्वयः—( योधा ) अभीष्टानि शस्त्राणि न्यश्यन्, वर्मभि समनह्यन्, सुयानानि अध्यासत तथा द्विषद्भ्यश्च अशपन् ॥

व्याख्या—अभीष्टानि=अभीप्सितानि, शस्त्राणि=खड्गादीन्यायुधानि, न्यश्यन्= तेजितवन्त, वर्मभि = कवचै, समनह्यन् = सन्नद्धा, कवचै शरीराणि आवृतवन्त इत्यर्थ । सुयानानि = शोभनयानानि, हस्त्यश्वरथादीनीति भाव । अध्यासत = आरूढा, तथा = तेन प्रकारेण, द्विषद्भ्यश्च=शत्रुभ्यश्च, अशपन् = "पापा ! क्व यास्यथ" इति आक्रुष्टवन्त इत्यर्थ ॥

❀व्युत्पत्ति❀ न्यश्यन् = निपूर्वकात् "शो तनूकरण" इति धातोर्लङ् । "ओत श्यनि" इत्योकारलोप । समनह्यन् = सम्पूर्वकात् "णह बन्धन" इति दैवादिकाद्धातोर्लङ् । सुयानानि = यान्ति एभिरिति यानानि, "या प्रापण" इति धातोः "करणाऽधिकरणयोश्चे"ति करणेल्युट् । शोभनानि यानानि "कुगतिप्रादय" इति समासः। तानि, अधिपूर्वकाऽऽसधातोर्योगे "अधिशीङ्स्थाऽऽसा कर्मे"ति कर्मसञ्ज्ञा । द्विषद्भ्य = द्विषन्तीति द्विषन्तस्तेभ्य, शपधातोर्योगे "श्लाघह्नुङ्स्थाशपा ज्ञीप्स्यमान" इति सम्प्रदानसञ्ज्ञा । अशपन् = "शप आक्रोशे" इति धातोर्लङ् ॥

❀भाषाऽर्थ❀ योद्धाओंने अभीष्ट शस्त्रोंको तीक्ष्ण किया। वे कवचों से सन्नद्ध हुए, घोड़े हाथी आदि उत्तम सवारियों पर आरूढ हुए और शत्रुओंको आक्रोश करने लगे ॥ ४ ॥

अपूजयंश्चतुर्वक्त्रं विप्रानार्चंस्तथाऽस्तुवन् ।
समालिपत शक्राऽरिर्यानं चाऽभ्यलषद्वरम् ॥ ५ ॥

अन्वयः—( भटाः ) चतुर्वक्त्रम् अपूजयन्, विप्रान् आर्चन् तथा अस्तुवन् । शक्राऽरिः समालिपत, वरं यानं च अभ्यलषत् ॥

व्याख्या—चतुर्वक्त्रं = ब्रह्मदेवम् , अपूजयन् = पूजितवन्तः, भटा इति शेषः, एवं परत्राऽपि । विप्रान् = ब्राह्मणान् , आर्चन् = अर्चितवन्तः , दाननमस्काराऽऽदिनेति भावः । तथा = तेन प्रकारेण, अस्तुवन् = स्तुतवन्तः , परस्परमिति शेषः । अथ शक्राऽरिः = इन्द्रशत्रुः , इन्द्रजिदित्यर्थः । समालिपत = समालिप्तवान् , अङ्गानीति शेषः । मल्लिनाथस्तु "समालभत" इति पाठान्तरमाह, तस्य चन्दनादिकमलिपदित्यर्थः । वरम्=उत्कृष्टं, यानं च=वाहनं च, अभ्यलषत्=अभीष्टवान् ॥

❀व्युत्पत्तिः❀ चतुर्वक्त्रं=चत्वारि वक्त्राणि यस्य स चतुर्वक्त्रस्तम् । आर्चन् = "अर्च पूजायाम्" इति धातोर्लङ्, "आडजादीनाम्" इत्याडागमः । अस्तुवन् = "ष्टुञ् स्तुतौ" इति धातोर्लङ् । समालिपत = समाङ्पूर्वकात् "लिप उपदेहे" इति धातोर्लङ् । यान="सर्वं स्याद्वाहनं यानं युग्मं पत्त्रं च धोरणम् ।" इत्यमरः । अभ्यलषत्= अभिपूर्वकात् "लष कान्तौ" इति धातोर्लङ् । कान्तिरिच्छेत्यर्थः ॥

❀भाषाऽर्थ❀ योद्धाओंने ब्रह्माजी की पूजा की, दान, नमस्कार आदिसे ब्राह्मणों का सत्कार किया और परस्परमे ( एकने दूसरे की ) स्तुति ( तारीफ ) की। तदनन्तर इन्द्रजित् ने चन्दन आदिसे शरीरमें लेपन किया और उत्तम सवारीका अभिलाष किया ॥ ५ ॥

आमुञ्चद्वर्म रत्नाढ्यमबध्नात्खड्गमुज्ज्वलम् ।
अध्यास्त स्यन्दनं घोरं प्रावर्तत ततः पुरः ॥ ६ ॥

अन्वयः—( शक्राऽरिः ) रत्नाढ्यं वर्म आमुञ्चत् , उज्ज्वलं खड्गम् अबध्नात्, घोरं स्यन्दनम् अध्यास्त ततः पुरः प्रावर्तत ॥

व्याख्या—रत्नाढ्यं = मणिसम्पन्नं, वर्म = कवचम् , आमुञ्चत=परिहितवान् , शक्रारिरिति शेषः, एवं परत्राऽपि । उज्ज्वलम् = अवदातं, खड्गम् = असिम् , अबध्नात् = बद्धवान् , पार्श्वे इति शेषः । घोरं = भयङ्करं, स्यन्दनं = रथम् , अध्यास्त = आरूढः , ततः = अनन्तरं, पुरः = पुरतः , प्रावर्तत = प्रवृत्तः , युद्धायेति शेषः ॥

❀व्युत्पत्तिः❀ आमुञ्चत्=आङ्पूर्वकात् "मुच्लृ मोक्षणे" इति धातोर्लङ्, "शे मुचादीनाम्" इति नुम् । स्यन्दनम् = अधिपूर्वकस्यासधातोर्योगे "अधिशीङ्-

स्थाऽऽसा कर्मे"ति कर्मसञ्ज्ञा । अध्यास्त=अधिपूर्वात् "आस उपवेशन" इति धातोर्लङ् ॥

❀भाषाऽर्थ❀ इन्द्रजित्‌ने रत्नोंसे सम्पन्न कवच पहना, बगलमे उज्ज्वल ( चमकदार ) खड्ग बाधा वह भयङ्कर रथपर चढा, तदनन्तर लडनेके लिए आगे बढा ॥६॥

आघ्नन् भेरीर्महास्वाना कम्बूश्चाऽप्यधमन् शुभान् ।
अताडयन् मृदङ्गांश्च पेराश्चाऽपूरयन् कला ॥ ७ ॥

अन्वय —महास्वाना भेरी आघ्नन्, शुभान् कम्बून् अधमन्, मृदङ्गान् अताडयन् कला· पेरा अपूरयन् ॥

व्याख्या—महास्वाना = महानादा, भेरी = दुन्दुभीन्, आघ्नन् = ताडितवन्त, वादका इति भाव, तस्मिन्प्रवृत्त इति शेष, एव परत्राऽपि। शुभान्=सुस्वरान्, कम्बून् = शङ्खान्, अधमन्=वादितवन्त, मृदङ्गान् = मुरजान्, अताडयन् = ताडितवन्त, कला = अव्यक्तमधुरस्वरा, पेरा = काहला, अपूरयन् = पूरितवन्त, मुखमारुतेनेति शेष ॥

❀व्युत्पत्ति❀ महास्वाना = "स्वान" इत्यत्र "स्वनहसोर्वा" इत्यबभावपक्षे घञि रूपम्। महान् स्वानो यासा ता महास्वानास्ता । भेरी· = "भेर्यामानकदुन्दुभी" इत्यमर । आघ्नन्=आङ्पूर्वकात् "हन हिंसागत्यो" इति धातोर्लङ्। "गमहने" त्यादिनोपधालोप । सकर्मकत्वात् "आङोयमहन" इति नात्मनेपदम्। अधमन्= "ध्मा शब्दाऽग्निसयोगयो·" इति धातोर्लङ्, "पाघ्राध्मे" त्यादिना धमादेश·। अताडयन्="तड आघात" इति चौरादिकाद्धातोर्लङ् ॥

❀भाषाऽर्थ❀ इन्द्रजित् के युद्धभूमिमे प्रवृत्त होने पर वादकोंने महान् शब्दों वाली भेरियोंको सुन्दर स्वरवाले शङ्खोंको पखावजों को और अव्यक्त मधुर शब्द वाली "कोहला" नामके वाद्योंको भी बजाया ॥ ७ ॥

अस्तुवन् वन्दिन शब्दानन्योन्य चोदभावयन् ।
अनदन् सिंहनादांश्च प्राद्रेकत हयद्विपम् ॥ ८ ॥

अन्वय·—वन्दिन· अस्तुवन्। ( सैनिका ) अन्योन्य शब्दान् उदभावयन्, सिंहनादांश्च अनदन्। हयद्विपं प्राद्रेकत ॥

व्याख्या—वन्दिन = स्तुतिपाठका, अस्तुवन् = स्तुति चक्रु "जय जीवे" त्यादिनेति शेष । अन्योन्यम्=अन्यस्य अन्यस्य च, शब्दान्=स्वनान्, साङ्ग्रामिकनामानीति भाव । उदभावयन् = उद्घाटितवन्त, सैनिका इति शेष, एव परत्राऽपि । तथा च सिंहनादांश्च = मृगेन्द्रगर्जितानि च, अनदन् = शब्दितवन्त । हयद्विपम् = अश्वगज, प्राद्रेकत = शब्दितवत् ॥

ॐव्युत्पत्ति ॐ उदभावयन् = उत्पूर्वकाद्भूधातोर्णौ लङ् । अनदन् = "णद अव्यक्ते शब्द" इति धातोर्लङ् । हयद्विप=हयाश्च द्विपाश्चेति पशुद्वन्द्वस्य "विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वाऽपराऽधरोत्तराणाम्" इति विभाषया सेनाङ्गत्वात् "द्वन्द्वश्चे" त्यादिना वा समाहारद्वन्द्व । प्राद्रेकत = "द्रेकृ शब्दोत्साहे" इत्यनुदात्तेतो धातोर्लङ् ॥

ॐभाषाऽर्थ ॐ स्तुतिपाठकोंने इन्द्रजित् की स्तुति की । सैनिकोंने परस्परमें सग्रामके नामोंका उद्घाटन किया और सिंहनाद किये । घोडे और हाथी शब्द करने लगे ॥ ८ ॥

**अनिमित्तान्यथाऽपश्यन्नस्फुटद्रविमण्डलम् ।**
**औक्षन् शोणितमम्भोदा वायवोऽवान् सुदु सहा· ॥ ९ ॥**

**अन्वय.**—अथ अनिमित्तानि अपश्यन्—रविमण्डलम् अस्फुटत् । अम्भोदा· शोणितम् औक्षन् । सुदु सहा वायव· अवान् ॥

**व्याख्या**—अथ = अनन्तरम्, अनिमित्तानि = कुत्सितनिमित्तानि अपश्यन्= दृष्टवन्त, इन्द्रजिदादय इति शेष·, एव परत्राऽपि । तान्यनिमित्तानि दर्शयति— अस्फुटदिति । रविमण्डल = सूर्यमण्डलम्, अस्फुटत् = स्फुटित, विदीर्णमित्यर्थ । अम्भोदा = मेघा, शोणित = रुधिरम्, औक्षन् = वृष्टवन्त । सुदु सहा = प्रचण्डा, वायव =वाता, अवान्=वान्ति स्म ॥

ॐव्युत्पत्ति·ॐ अनिमित्तानि = न निमित्तानि अनिमित्तानि, तानि । अत्र अप्राशस्त्ये नञ्, तद्यथा -

"तत्सादृश्यमभावश्च तदन्यत्व तदल्पता ।
अप्राशस्त्य विरोधश्च नञर्था षट् प्रकीर्तिता ॥" इति ।

अस्फुटत् = "स्फुट भेदन" इति धातोर्लङ् । अम्भोदा =अम्भासि ददतीति, "आतोऽनुपसर्गे क" इति कप्रत्यय । औक्षन् = "उक्ष सेचन" इति धातोर्लङ् । "आडजादीनाम्" इत्याडागम, "आटश्चे"ति वृद्धिश्च । अवान्="वा गतिगन्धनयो " इति धातोर्लङ् । "लङ शाकटायनस्यैव" इति शाकटायनमते झेर्जुसि तु "अवु " इति रूपम् ॥

ॐभाषाऽर्थ ॐ अनन्तर इन्द्रजित् आदियोंने अनेक अपशकुनोंको देखा—सूर्यमण्डल विदीर्ण हुआ । मेघोंने रुधिर वृष्टि की । प्रचण्ड हवायें चलने लगी ॥ ९ ॥

**आच्छॅन् वामं मृगा कृष्णा शस्त्राणा व्यस्मरन् भटा· ।**
**रक्त न्यष्ठीवदक्लाम्यदखिद्यद्वाजिकुञ्जरम ॥ १० ॥**

**अन्वयः**—कृष्णा मृगा वामम् आच्छॅन् । भटा शस्त्राणा व्यस्मरन् । वाजि कुञ्जर रक्त न्यष्ठीवत्, अक्लाम्यत् अखिद्यच्च ॥

व्याख्या—कृष्णा =श्यामला , मृगा =हरिणा , वाम=सव्यपार्श्वम् , आर्च्छन्= गता निर्गच्छतामिति शेष । भटा = योधा , शस्त्राणा व्यस्मरन् = आयुधानि विस्मृतवन्त । वाजिकुञ्जरं = हयगजं, रक्त = रुधिरं, न्यष्ठीवत् = निरसितवत् , अक्लाम्यत् = क्लान्तम् , अखिद्यच्च = खिन्न चाऽभवत् ॥

॥व्युत्पत्ति॰॥ आर्च्छन्=' ऋ गतिप्रापणयो " इति धातोर्लङ्, "पाघ्राध्मास्थाम्नादाण्दश्यर्तिसर्तिशदसदा पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदा" इति ऋच्छादेश । यद्वा "ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु" इति धातोर्लङ्। शस्त्राणाम् = अधीगर्थस्य स्मृधातोर्योगे "अधीगर्थदयेशा कर्मणी"ति कर्मणि षष्ठी। वाजिकुञ्जरं = वाजिनश्च कुञ्जराश्च, "विभाषा वृक्षमृगे"त्यादिना सेनाङ्गत्वात् "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति वा समाहारद्वन्द्व॰ । न्यष्ठीवत्=निपूर्वात् "ष्ठिवु निरसन" इति भौवादिकाद्धातोर्लङ् । "धात्वादे॰ ष स" इति प्राप्तस्य सत्वस्य "सुब्धातुष्ठिवुष्वष्कतीना सत्वप्रतिषेधो वक्तव्य" इति प्रतिषेध । अत्र द्वितीयस्थकारष्ठकारो वेति वृत्ति । आचार्येण शिष्येभ्य उभयथा प्रतिपादनादुभयमपि प्रमाणमिति व्याख्यातार इति माधवाचार्या॰ । "ष्ठिवुक्लमुचमा शिति" इति दीर्घ॰ । अक्लाम्यत्= क्लमु ग्लानौ" इति दैवादिकधातोर्लङ्, पूर्वसूत्रेणैव दीर्घत्वम् । अखिद्यत् = "खिद परिघात" इति धातोर्लङ् ॥

॥भाषाऽर्थ॥ युद्धके लिए अभियान करने वाले इन्द्रजित् आदियोंकी बाईं ओर काले मृग चलने लगे । लडाके लोग शस्त्रोंको भूलने लगे । घोड़े और हाथी रक्त वमन करने लगे, और विना परिश्रमके भी क्लान्त तथा खिन्न होने लगे ॥ १० ॥

न तानगणयन् सर्वानास्कन्दंश्च रिपून् द्विषः ।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११ ॥

अन्वयः—द्विष तान् सर्वान् न अगणयन्, रिपून् आस्कन्दन्, तीक्ष्णै॰ असिभि अच्छिन्दन्, तथा तोमरै अभिन्दन् ॥

व्याख्या—द्विष = शत्रव , राक्षसा इत्यर्थ । तान् = पूर्वोक्तान् , सर्वान् = समस्तान् , अशुभानिति भाव । न अगणयन् = नाऽऽदृतवन्त । रिपून् = शत्रून् , वानरादीनिति भाव । आस्कन्दन् = अभिगता । तीक्ष्णै = निशितै , असिभि = खड्गै , अच्छिन्दन् = छिन्नवन्त , शत्रूनिति शेष । तथा = तेन प्रकारेण, तोमरै = शर्वलाभि , अभिन्दन् = विदारितवन्त ।

॥व्युत्पत्ति॰॥ अगणयन् = "गण सख्यान" इति धातोर्लङ् । आस्कन्दन्=आङ्पूर्वकात् "स्कन्दिर् गतिशोषणयो " इति धातोर्लङ् । अच्छिन्दन्="छिदिर् द्वैधी-

करणे" इति धातोर्लङ्। तोमरैः="शर्वला तोमरोऽस्त्रियाम्" इत्यमरः। अभिन्दन्= "भिदिर् विदारणे" इति धातोर्लङ्॥

ॐभाषाऽर्थॐ राक्षसोंने उन सब अशुभोंका अनादर किया। वे शत्रुओंके सम्मुख गये। उन्होंने तीक्ष्ण तलवारोंसे शत्रुओंको काट डाला और गँडासोंसे भेदन कर डाला॥ ११॥

न्यकृन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम्।
भल्लैरविध्यन्नुग्राऽग्रैरतृंहंस्तोमरैरलम्॥ १२॥

अन्वयः—(द्विषः) चक्रधाराभिः न्यकृन्तन्, शक्तिभिः दृढम् अतुदन्; उग्राऽग्रैः भल्लैः अविध्यन् तोमरैः अलम् अतृंहन्॥

व्याख्या—चक्रधाराभिः=रथाऽङ्गधाराभिः, न्यकृन्तन्=छिन्नवन्तः, राक्षसा वानरादीनिति शेषः, एवं परत्राऽपि। शक्तिभिः=कासूपरपर्यायैः प्रहरणविशेषैः दृढम्=अत्यर्थम्, अतुदन्=व्यथितवन्तः। उग्राऽग्रैः=तीक्ष्णाऽग्रैः, भल्लैः=शस्त्र-विशेषैः, अविध्यन्=ताडितवन्तः, तोमरैः=शर्वलाभिः, अलं=पर्याप्तम्, अतृंहन्=हतवन्तः॥

ॐव्युत्पत्तिॐ न्यकृन्तन्=निपूर्वात् "कृती छेदने" इति धातोर्लङ्। "शे मुचा-दीनाम्" इति नुम्। अतुदन्="तुद व्यथने" इति धातोर्लङ्। उग्राऽग्रैः=उग्रमग्रं येषां ते उग्राऽग्रास्तैः। अविध्यन्="व्यध ताडने" इति धातोर्लङ्, "ग्रहिज्याव-यिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणम्। अतृंहन्= "तृह हिंसायाम्" इति धातोर्लङ्, रुधादिभ्यः श्नम्" इति श्नम्, "श्नसोरल्लोपः" इत्यल्लोपः, "नश्चाऽपदान्तस्य झलि" इत्यनुस्वारश्च॥

ॐभाषाऽर्थॐ राक्षसोंने चक्रोंकी धारोंसे शत्रुओंको काट डाला, शक्तियोंसे अतिशय पीडित किया, तीखी नोकवाले भालोंसे वेध डाला और गँडासोंसे पर्याप्त-रूपसे वैरियोंको मार डाला॥ १२॥

साम्प्रतं वानरकर्तृकं राक्षसविक्रमप्रतीकारमाह—

आस्यन् प्लवङ्गमा वृक्षानभूधरैर्धुन्वन् भृशम्।
अहिंसन् मुष्टिभिः क्रोधाददशन्दशनैरपि॥ १३॥

अन्वयः—प्लवङ्गमाः वृक्षान्, आस्यन्, भूधरैः भृशम् अधुन्वन्; क्रोधात् मुष्टिभिः अहिंसन्, दशनैरपि अदशन्॥

व्याख्या—प्लवङ्गमाः=वानराः, वृक्षान्=तरून्, आस्यन्=क्षिप्तवन्तः, राक्ष-सेष्विति भावः। भूधरैः=पर्वतैः, भृशम्=अत्यर्थम्, अधुन्वन्=हतवन्तः, राक्षसा-निति शेषः। "अधूर्वन्" इति पाठान्तरं, तत्राऽपि स एवाऽर्थः। क्रोधात्=कोपाद्धेतोः,

मुष्टिभि = सपिण्डिताऽङ्गुलिपाणिभि , अहिंसन् = ताडितवन्त , दशनैरपि = दन्तैरपि, अदशन् = दष्टवन्त ॥

※व्युत्पत्ति※ आस्यन् = "असु क्षेपण" इति दैवादिकाद्धातोर्लङ्, "आडजादीनाम्" इत्याडागम "आटश्चेति वृद्धिश्च। अधुन्वन् = "धुञ् कम्पने" इति स्वादिगणस्थधातोर्लङ्। "अधूर्वन्" इति पाठान्तरे हिंसाऽर्थाद्भौवादिकाद्धुर्वीधातोर्लङ् "उपधाया चे"ति दीर्घत्वम्। अहिंसन् = "हिसि हिंसायाम्" इति रौधादिकाद्धातोर्लङ्। दशनै· = "रदना दशना दन्ता रदा" इत्यमर । अदशन् = "दंशि दशन" इति धातोर्लङ्, "दंशसञ्जस्वञ्जा शपी"त्यनुनासिकलोप· ॥

※भाषाऽर्थ※ वानरोंने राक्षसोंके ऊपर वृक्षोंको फेंका, पर्वतोंसे राक्षसोंको पर्याप्तरूपसे मार डाला, क्रोधसे उन्हें मुक्कोंसे ताडित किया और दाँतोंसे भी काटा ॥१३॥

प्रादुन्वन् जानुभिस्तूर्णमतुदंस्तलकूर्परैः।
प्राहिण्वन्नरिमुक्तानि शस्त्राणि विविधानि च ॥ १४ ॥

अन्वय—( प्लवङ्गमा ) जानुभि तूर्णं प्रादुन्वन्, तलकूर्परै अतुदन्; अरिमुक्तानि विविधानि शस्त्राणि च प्राहिण्वन् ॥

अन्वय.—जानुभि =ऊरुपर्वभि , तूर्णं=सत्वर, प्रादुन्वन्=पीडितवन्त , प्लवङ्गमा राक्षसानिति शेष । एव परत्राऽपि । तलकूर्परै = चपेटै कफोणिभिश्च, अतुदन्= व्यथितवन्त , किं बहुना—अरिमुक्तानि = शत्रुप्रेरितानि, विविधानि=अनेकप्रकाराणि, शस्त्राणि = आयुधानि च, प्राहिण्वन् = प्रहितवन्त , वानरा राक्षसप्रेरितानि शस्त्राणि-तेष्वेव प्रेरितवन्त इति भाव ॥

※व्युत्पत्ति※ जानुभि = "जानूरुपर्वाऽष्ठीवदस्त्रियाम्।" इत्यमरः। प्रादुन्वन् = प्रपूर्वकात् "टुदु उपताप" इति स्वादि धातोर्लङ्। "आदिर्ञिटुडव" इति टोरित्सञ्ज्ञा। तलकूर्परै· = "स्यात्कफोणिस्तु कूर्पर" इत्यमर· । अतुदन्=तुदव्यथन" इति धातोर्लङ्, "तुदादिभ्य श" इति श· । विविधानि = विविधा विधा· ( प्रकारा ) येषा तानि विविधाति तानि। प्राहिण्वन्=प्रपूर्वकात् "हि गतौ वृद्धौचे"ति धातोर्लङ्।

※भाषाऽर्थ·※ वानरोंने राक्षसोंको घुटनोंसे शीघ्र पीडित कर दिया, थप्पड़ों और केहुनियोंसे उन्हें व्यथित किया। शत्रुओंसे छोडे गये अनेक शस्त्रोंको उन्हीके ऊपर फेंक दिया ॥ १४ ॥

अतृणेट् शक्रजिच्छत्रूनभ्राम्यच्च समन्ततः।
अध्वनच्च महाघोर न च कंचन नाऽदुनोत् ॥ १५ ॥

अन्वयः—शक्रजित् शत्रून् अतृणेट्, समन्तत अभ्राम्यत्, महाघोरम् अध्वनच्च, कंचन न अदुनोत् ( इति ) न ॥

**व्याख्या—**शक्रजित् = इन्द्रजित्, शत्रून् = अरातीन्, वानरानित्यर्थ । अतृणेट् = हिंसितवान्, समन्तत = सर्वत., अभ्राम्यत्=भ्रान्तवान्, महाघोरम्=अतिभीषण यथा तथा, अध्वनच्च=शब्दितवांश्च, कञ्चन=कमपि, शत्रुमिति शेष । न अदुनोत् ( इति ) न = न उपतापितवान् ( इति ) न, अपि तु सर्वमपि उपतापितवानेवेत्यर्थ· ॥

❀व्युत्पत्ति·❀ अतृणेट्="तृह ( हिंसि ) हिंसायाम्" इति धातोर्लङ् । रुधादित्वात् "रुधादिभ्यः श्नम्" इति श्नमि कृते "तृणह इम्" इतीमागम, हल्ङ्यादिलोप. । हकारस्य ढत्वजश्त्वचर्त्वानि । अभ्राम्यत्="भ्रमु अनवस्थाने" इति धातोर्लङ्, "शमामष्टाना दीर्घ श्यनि" इति दीर्घत्वम् । अध्वनत्="ध्वनशब्द" इति धातोर्लङ् ॥

❀भाषाऽर्थ ❀ इन्द्रजित्ने शत्रुओंकी हिसा की । वह चारों ओर घूमने लगा और भयङ्कर शब्द करने लगा । उसने किसीको पीडित नही किया यह नही, बल्कि सबको पीडित किया ॥ १५ ॥

> नाऽजानन् सन्दधानं तं धनुर्नैक्षन्त बिभ्रतम् ।
> नेषूनचेतन्नस्यन्तं हतास्तेनाऽविदुर्द्विषः ॥ १६ ॥

**अन्वयः—**द्विष सन्दधान तं न अजानन्, धनु बिभ्रत न ऐक्षन्त, इषून् अस्यन्त न अचेतन् तेन हता ( सन्त· ) अविदु ॥

**व्याख्या—**द्विष = इन्द्रजिद्वैरिण, वानरा इत्यर्थ । सन्दधान = धनुषि शरमारोपयन्त, तम् = इन्द्रजित, न अजानन् = नो ज्ञातवन्त, हस्तलाघवाद्धेतोरिति भाव, एव परत्राऽपि । एवं च धनु = कार्मुक, बिभ्रत = धारयन्तम् इन्द्रजित, न ऐक्षन्त = नो दृष्टवन्त·, इत्थमेव—इषून् = बाणान्, अस्यन्त=क्षिप्यन्तम् इन्द्रजित, न अचेतन् = नो ज्ञातवन्त, परिणामे—तेन = इन्द्रजिता, हता = शरविद्धा सन्त, अविदु = पूर्वोक्तं शरसन्धानादिमिन्द्रजिद्व्यापारं ज्ञातवन्त इत्यर्थ ॥

❀व्युत्पत्तिः❀ अजानन्="ज्ञा अवबोधने" इति क्र्यादिस्थधातोर्लङ्, "ज्ञाजनोर्जा" इति शित्प्रत्यये जाऽऽदेश । अचेतन्="चिती सञ्ज्ञाने" इति धातोर्लङ् । अचेतन् अस्यन्तमित्यत्र "ङमो ह्रस्वादचि ङमुण्नित्यम्" इति ङमुट् । अविदु="विद ज्ञाने" इति धातोर्लङ्, "सिजभ्यस्तविदिभ्यश्चे"ति झेर्जुस् ॥

❀भाषाऽर्थ ❀ वानरोंने धनुमे शरसन्धान करनेवाले इन्द्रजित्को नही जाना, धनुको धारण करते हुए उसको नहीं देखा, उसको बाण फेकते हुए भी नही पाया आखिर उससे शरविद्ध होते हुए उन लोगोंने उसे जान लिया ॥ १६ ॥

अशृण्वन्नन्यतः शब्दं प्रपलायन्त चाऽन्यतः ।
आक्रन्दमन्यतोऽकुर्वस्तेनाऽहन्यन्त चाऽन्यत. ॥ १७ ॥

**अन्वय**'—(द्विष )अन्यत शब्दम् अशृण्वन्-, अन्यत' प्रपलायन्त, अन्यत- आक्रन्दम् अकुर्वन् , तेन अन्यत अहन्यन्त ॥

**व्याख्या**—अन्यत =अन्यस्मिन्प्रदेशे, शब्द = ध्वनिम् , अशृण्वन् = श्रुतवन्त , इन्द्रजिद्द्विषो वानरा इति शेष । अन्यत =अन्यत्र प्रदेशे स्थिता , प्रपलायन्त = प्रपलायिता अन्यत =अन्यदेशेस्थिता , आक्रन्द = रोदनम् , अकुर्वन्= अकार्षु । तेन=इन्द्रजिता, अन्यत =अन्यत्र, अहन्यन्त =व्यापादिता ॥

**ॐव्युत्पत्ति.ॐ** अन्यत =अन्यस्मिन्निति,"आद्यादिभ्य उपसख्यानम्" इति तसि । अशृण्वन्="श्रु श्रवणे" इति धातोर्लङ् , "श्रुव. शृचे"ति शृभाव' श्नुप्रत्ययश्च । प्रपलायन्त=प्रपरापूर्वकात् "अयगतौ"इति धातोर्लङ् , "उपसर्गस्याऽयतौ" इति लत्वम् । अहन्यन्त"हन हिसागत्यो'" इति धातो कर्मणि लङ् ॥

**ॐभाषाऽर्थ.ॐ** कुछ वानरोंने दूसरे स्थानपर शब्द सुना । दूसरे प्रदेशमें रहे हुए कुछ भाग गये । कुछ दूसरे स्थानमें रोने लगे । इन्द्रजित्से दूसरी जगहपर कुछ वानरमारे गये ॥ १७ ॥

प्रालोठन्त व्यभिद्यन्त परितो रक्तमस्रवन् ।
पर्यश्राम्यन्नतृष्यश्च क्षतास्तेनाऽम्रियन्त च ॥ १८ ॥

**अन्वयः**—तेन क्षता ( केचित् ) प्रालोठन्त, व्यभिद्यन्त, परित रक्तम् अस्रवन्, पर्यश्राम्यन् , अतृष्यन् , अम्रियन्त च ॥

**व्याख्या**—तेन = इन्द्रजिता, क्षता = आहता' सन्त , प्रालोठन्त = भूमौ प्रलुठिता , केचिदिति शेष. । व्यभिद्यन्त = व्यनीयन्त , हता' सन्त' इतस्ततो नीता इति भावः । परित = समन्तात् , रक्तं = रुधिरम् , अस्रवन् = मुक्तवन्त., पर्यश्राम्यन्=परिश्रान्ता, अतृष्यन्=पिपासिता , अम्रियन्त च=मृताश्च ॥

**ॐव्युत्पत्ति ॐ** प्रालोठन्त = प्रपूर्वकात् "लुठ प्रतिघात" इति धातोर्लङ् । व्यभिद्यन्त = विपूर्वकात् "भिदिर विदारण" इति धातो' कर्मणिलङ् । अस्रवन्="स्रु स्रवण" इति धातोर्लङ् । पर्यश्राम्यन् = परिपूर्वकात् "श्रमु तपसि खेदे चे"ति धातोर्लङ् , दिवादित्वात् "दिवादिभ्य श्यन्" इति श्यन् । अतृष्यन् = ञितृषा पिपासायाम्" इति दैवादिकाद्धातोर्लङ् । अम्रियन्त = "मृङ् प्राणत्यागे" इति धातोर्लङ् । "म्रियतेर्लुङ् लिङोश्चे"त्यात्मनेपदम् ॥

**ॐभाषाऽर्थ ॐ** इन्द्रजित्से आहत कुछ वानर जमीनपर गिर पड़े, कुछ इधर

उधर ले जाये गये, कुछ रुधिर गिराने लगे, कुछ परिश्रान्त हुए, कुछ प्यासे हुए और कुछ मर गये ॥ १८ ॥

सौमित्रिराकुलस्तस्मिन् ब्रह्माऽस्त्रं सर्वरक्षसाम् ।
निधनायाऽऽजुहूषत्तं व्यष्टभ्नाद्रघुनन्दनः ॥ १९ ॥

**अन्वय**—तस्मिन् सौमित्रि आकुल ( सन् ) सर्वरक्षसा निधनाय ब्रह्माऽस्त्रम् आजुहूषत् । रघुनन्दन त व्यष्टभ्नात् ॥

**व्याख्या**—तस्मिन् = इन्द्रजिति, तादृशे सतीति शेष । सौमित्रि = लक्ष्मण, आकुल = व्यग्रचित्त सन्, सर्वरक्षसा=सर्वराक्षसाना, निधनाय=मरणाय, ब्रह्मास्त्र= ब्राह्ममस्त्रम्, आजुहूषत् = आह्वातुमैच्छत् । अथ रघुनन्दन = राम., त = सौमित्रिं, व्यष्टभ्नात् = निवारितवान्, विभीषणस्य निरपराधानामन्येषा च राक्षसाना नाशभयादिति भावः ॥

**ॐव्युत्पत्ति ॐ** सौमित्रि =सुमित्राया अपत्यपुमान्, "बाह्वादिभ्यश्चे"ति इञ् । आजुहूषत्=आङ्पूर्वकात् "ह्वेञ् स्पर्धाया शब्दे चे"ति धातो. सनि लङि रूपम् । "अभ्यस्तस्य चे"ति अभ्यस्तकारणस्य ह्वयते. द्विर्वचनात्प्रागेव सम्प्रसारणम् । व्यष्टभ्नात्=विपूर्वकात् "स्तन्भि प्रतिबन्धे" इति सौत्राद्धातोर्लङ् "स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्य, श्नुश्चे"ति चात् श्नाप्रत्यय । "स्तन्भे" इति सस्य ष. ॥

**ॐभाषाऽर्थ ॐ** इस प्रकारसे इन्द्रजित्के सहारक होने पर आकुल होकर लक्ष्मणने सब राक्षसोंके सहारके लिए ब्रह्मास्त्रको बुलानेकी इच्छा की। रामचन्द्रजीने उन्हें रोका ॥ १९ ॥

ततो मायामयी सीतां घ्नन् खड्गेन वियद्गत ।
अदृश्यतेन्द्रजिद्वाक्यमवदत्त मरुत्सुतः ॥ २० ॥

**अन्वयः**—तत इन्द्रजित् वियद्गत ( सन् ) मायामयी सीता खड्गेन घ्नन् अदृश्यत । मरुत्सुत त वाक्यम् अवदत् ॥

**व्याख्या**—तत = अनन्तरम्, इन्द्रजित् = मेघनाद, वियद्गत =आकाशगतः सन्, मायामयी=मायानिर्मिता, सीता=जानकी, खड्गेन = असिना, घ्नन् व्यापादयन्, अदृश्यत दृष्ट । मरुत्सुत =वायुपुत्र हनूमानित्यर्थ । तम्=इन्द्रजितं, वाक्य= वक्ष्यमाणप्रकारं वचनम्, अवदत्=भाषितवान् ॥

**ॐव्युत्पत्ति ॐ** वियद्गत =वियत् गत, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्ताऽऽपन्नै." इति द्वितीयातत्पुरुष. । अदृश्यत ="दृशिर् प्रेक्षण" इति धातोः कर्मणि

लङ्। अवदत्="वद व्यक्तायां वाचि" इति धातोर्लङ्, ब्रूधातोः समानार्थकत्वेन "अर्थ निबन्धनेय सञ्ज्ञा" इत्युक्तेर्द्विकर्मकत्वम् ॥

❀भाषाऽर्थ❀ अनन्तर इन्द्रजित् आकाशमे जाकर मायासे निर्मित सीताको खड्गसे मारता हुआ दिखाई पडा। वायुपुत्र हनूमानजीने उसे ऐसा वाक्य कहा॥२०॥

माऽपाराध्नोदियं किंचिदभ्रश्यत्पत्युरन्तिकात्।
सीता राक्षस! मा स्मैना निगृह्णाः पाप! दुःखिताम् ॥ २१ ॥

**अन्वयः**—"हे राक्षस। सीता पत्यु अन्तिकात् अभ्रश्यत्, इय किञ्चित् मा अपाराध्नोत् हे पाप। दु खिताम् एना मा स्म निगृह्णा" ॥

**व्याख्या**—हे राक्षस = हे यातुधान।, सीता=जानकी पत्यु = भर्तु, रामस्येत्यर्थ। अन्तिकात्=समीपात्, अभ्रश्यत्=अपगता, इयं=सीता किञ्चित्=किमपि, मा अपाराध्नोत् = न अपराद्धा, भवद्विषय इति शेष। तस्मात्कारणात् हे पाप = रे क्रूर।, दु खिता = व्यथिताम्, एना = सीता, मा स्म निगृह्णा - मा वधी ॥

❀व्युत्पत्ति❀ अभ्रश्यत् = "भृशु ) भ्रशु अध.पतन" इति दैवादिकाद्धातोर्लङ् "अनिदिता हल उपधाया क्ङिति" इत्यनुनासिकलोपः। मा = नाय माङ् किन्तु माशब्द, अत एतद्योगे न लुङ्। अपाराध्नोत् = अपपूर्वकात् "राध (साध) संसिद्धौ" इति स्वादिस्थधातोर्लङ्। हे पाप = पापमस्याऽस्तीति पापस्तत्सम्बुद्धौ, "अर्शआदिभ्योऽच्" इत्यच्प्रत्ययः। "नृशसो घातुकः क्रूर पाप" इत्यमरः। एना = "द्वितीयाटौस्स्वेन" इत्यन्वादेशे एनादेश। मा स्म निगृह्णाः = मास्मोपपदात् निपूर्वात् "ग्रह उपादान" इति धातो "स्मोत्तरे लङ्चे"ति वर्तमाने लङ्॥

❀भाषाऽर्थ❀ "हे राक्षस! ये ( सीता ) पति ( राम ) के समीपसे भ्रष्ट हुई ( बिछुड गई )। इन्होंने तुम्हारा कुछभी अपराध नही किया। हे क्रूर! दुःखित इनको मत मारो" ॥ २१ ॥

पीडाकरममित्राणा कर्तव्यमिति शक्रजित्।
अब्रवीत् खड्गकृष्टश्च तस्या मूर्धानमच्छिनत् ॥ २२ ॥

**अन्वयः**—"अमित्राणा पीडाकर कर्तव्यम्" इति शक्रजित् अब्रवीत्, खड्गकृष्ट ( सन् ) तस्या मूर्धानम् अच्छिनत् ॥

**व्याख्या**—अमित्राणा = शत्रूणा, पीडाकरं = व्यथोत्पादकं, कर्मेति शेष। कर्तव्यम् = अनुष्ठेयम्, अतो निरपराधाया अप्यस्या वधो युक्त इति भाव। इति= एवं शक्रजित् = इन्द्रजित्, अब्रवीत् = उक्तवान्। तत खड्गकृष्ट = आकृष्टकरवाल सन्, तस्या = पूर्वोक्ताया मायामय्या सीताया इति भाव। मूर्धान = शिर, अच्छिनत् = छिन्नवान् ॥

पीडाकर = पीडां करोतीति, "कृञो हेतुताच्छील्याऽऽनुलोम्येषु" इति हेत्वर्थे टप्रत्यय । "पीडा बाधा व्यथा दु खम्" इत्यमर । अब्रवीत् = "ब्रूञ्-व्यक्तायां वाचि" इति धातोर्लङ्। "ब्रुव ईट्" इति ईट्। खड्गकृष्ट = कृष्ट खड्गो येन स., "प्रहरणाऽर्थेभ्य परे निष्ठासप्तम्यौ" इति प्रहरणाऽर्थकस्य खड्गशब्दस्य पूर्वनिपात.। अच्छिनत् = "छिदिर् द्वैधीकरण" इति धातोर्लङ्, "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्त हल्" इति तिपो लोप ॥

❀भाषाऽर्थ ❀ "शत्रुओंको पीडा करनेवाला कर्म करना चाहिए" इन्द्रजित्ने ऐसा कहा और तलवार खींचकर उस मायामयी सीताका शिर काट डाला ॥ २२ ॥

यत्कृतेऽरीन् व्यगृह्णीम समुद्रमतराम च ।
सा हतेति वदन् राममुपातिष्ठन् मरुत्सुत ॥ २३ ॥

अन्वयः—"यत्कृते अरीन् व्यगृह्णीम, समुद्र च अतराम, सा हता" इति वदन् मरुत्सुतो रामम् उपातिष्ठत् ॥

व्याख्या—यत्कृते = यन्निमित्त, यस्या सीताया निमित्त इति भाव । अरीन् = शत्रून्, व्यगृह्णीम = विगृहीतवन्त, वयमिति शेष, एव परत्राऽपि । समुद्रं च = सागरं च-अतराम = तीर्णवन्त.। सा = सीता, हता = व्यापादिता, इन्द्रजितेति शेष.। इति = एव, वदन् = ब्रुवन्, मरुत्सुत = वायुपुत्र, हनूमानित्यर्थ । रामं = रामचन्द्रम्, उपातिष्ठत् = उपगत ॥

❀व्युत्पत्तिः❀ व्यगृह्णीम = विपूर्वात् ग्रहधातोर्लङ् "नित्य ङित" इति उत्तमपुरुषस्य सकारस्य लोप । अतराम = "तॄ प्लवनतरणयो" इति धातोर्लङ् "अतो-दीर्घोयञि" इति दीर्घत्वम्। पूर्ववत्सकारस्य लोप.। उपातिष्ठत् = उपपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोर्लङ् "पाघ्राध्मास्थाम्ने"त्यादिना तिष्ठादेशः। उपश्लेषाऽभावात् "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" इत्यनेन आत्मनेपदाऽभाव ॥

❀भाषाऽर्थ ❀ "जिन सीताजीके लिए हमलोगोंने शत्रुओंसे विग्रह किया और समुद्रतरण किया वे मारी गई" ऐसा कहते हनूमान् रामचन्द्रजीके पास गये ॥२३॥

तत प्रामुह्यता वीरौ राघवावरुतां तथा ।
उष्ण च प्राणिता दीर्घमुच्चैर्व्याक्रोशतां तथा ॥ २४ ॥

अन्वय—ततो वीरौ राघवौ प्रामुह्यता, तथा अरुताम्; दीर्घम् उष्ण च प्राणिता तथा उच्चै व्याक्रोशताम् ॥

व्याख्या—तत = हनूमद्वचनाऽनन्तर, वीरौ = शूरौ, राघवौ = रामलक्ष्मणौ,

प्रामुह्यता = प्रमोहं गतौ, तथा = तेन प्रकारेण, अरुता = क्रन्दितवन्तौ, दीर्घम् = आयतम् , उष्णं च = अशीत च, प्राणिता = निश्वसितवन्तौ, तथा = तेन प्रकारेण, उच्चै = तारस्वरेण, व्याक्रोशता = "हा सीते !" इत्याहूतवन्तौ ॥

॥व्युत्पत्ति॥ प्रामुह्यतां = प्रपूर्वकात् "मुह वैचित्ये" इति धातोर्लङ् । अरुता = "रु शब्द" इत्यादादिकाद्धातोर्लङ् , "उतो वृ द्धिर्लुकि हलि" इति वृद्धिर्न पित्त्वाऽभावात् । प्राणितां = प्रपूर्वकात् "अन प्राणन" इति धातोर्लङ । "रुदादिभ्य. सार्वधातुके" इतीट् , "अनिते" इति नस्य णत्वम् । व्याक्रोशता = व्याङ्पूर्वकात् "क्रुश आह्वाने रोदने चे"ति धातोर्लङ् ॥

॥भाषाऽर्थ॥ हनूमान्के वचनके अनन्तर वीर राम और लक्ष्मण अतिशय मोहको प्राप्त हुए रोने लगे दीर्घ और उष्ण निश्वास लेने लगे और ऊँचे स्वरसे सीताजीको पुकारने लगे ॥ २४ ॥

तावभाषत पौलस्त्यो मा स्म प्ररुदित युवाम् ।
ध्रुवं स मोहयित्वाऽस्मान् पापोऽगच्छन्निकुम्भिलाम् ॥ २५ ॥

अन्वय.—पौलस्त्य तौ अभाषत—"युवा मा स्म प्ररुदितम् । ध्रुव स पाप" अस्मान् मोहयित्वा निकुम्भिलाम् अगच्छत् ॥

व्याख्या—पौलस्त्य = विभीषण , आगत्येति शेष । तौ = राघवौ, अभाषत = उक्तवान् । युवा = रामलक्ष्मणौ, मा स्म प्ररुदितं = मा रोदिष्टम् । ध्रुवम् = अवश्य, स = इन्द्रजित् , पापः = क्रूर', अस्मान् , मोहयित्वा = मायया विमोह्य, निकुम्भिला = लङ्कास्थितामग्निशालाम् , अगच्छत् = गत ॥

॥व्युत्पत्ति॥ पौलस्त्य = पुलस्त्यस्याऽपत्य पुमान्, तस्याऽपत्यम्" इत्यण् , "तद्धितेष्वचामादे" इत्यादिवृद्धिश्च । अभाषत = "भाष व्यक्ताया वाचि" इति धातोर्लङ् । मा स्म प्ररुदित = मास्मेत्युपपदात् प्रपूर्वकात् "रुदिर् अश्रुविमोचन" इति धातो. "स्मोत्तरे लङ् चे"ति वर्तमाने लङ् । अस्मान् = मुहधातोरकर्मकत्वात् "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ" इति कर्मसज्ञा । मोहयित्वा = "मुह वैचित्य" इति धातोर्णौ "समानकर्तृकयो' पूर्वकाले" इति क्त्वा प्रत्यय । अगच्छत् = "गम्लृ गतौ" इति धातोर्लङ् , "इषुगमियमा छ" इति छत्वम् । अत्र भूताऽनद्यतनार्थकलङ्प्रयोगात् मायिकसीताहननाऽनन्तर मेघनादे निकुम्भिला प्राप्ते दिनान्तर आगत्य विभीषणोऽभाषतेत्यर्थ प्रतीयते ॥

॥भाषाऽर्थ॥ विभीषणने आकर राम और लक्ष्मणको कहा—"आप दोनों मत रोवे । अवश्य वह क्रूर इन्द्रजित् हम लोगोंको मायासे मोहित करके निकुम्भिला ( लङ्कास्थित अग्निशाला ) को चला गया है ॥ २५ ॥

मा स्म तिष्ठत तत्रस्थो वध्योऽसावहुताऽनलः ।
अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चाऽनुपार्जिते ॥ २६ ॥

**अन्वयः**—मा स्म तिष्ठत । तत्रस्थ असौ अहुतानलो ब्रह्मशिरसि उग्रे अस्त्रे स्यन्दने च अनुपार्जिते ( सति ) वध्य ॥

**व्याख्या**—मा स्म तिष्ठत = मा स्थात, विलम्बं मा कार्ष्ट यूयमिति भाव· । यत तत्रस्थ = निकुम्भिलास्थ , असौ = इन्द्रजित् , अहुताऽनल =अकृताऽग्निकार्य·, अत एव—ब्रह्मशिरसि = ब्रह्मशिरोनाम्नि, उग्रे = दु सहे, अस्त्रे = आयुधे, स्यन्दने च = रथे च अनुपार्जिते = अप्राप्ते सत्येव, वध्य = हन्तु शक्य , निकुम्भिलाया हवनेऽनुष्ठिते सति स ब्रह्मशिरो नामक महाऽस्त्र स्यन्दन चाऽऽसादयिष्यति । तदनु स हन्तुमशक्यो भविष्यत्यतस्तद्धवने सत्वर प्रत्यूहोऽनुष्ठीयतामिति भाव· ॥

**व्युत्पत्ति·** मा स्म तिष्ठत = मास्मेत्युपपदात् स्थाधातो "स्मोत्तरे लङ् चे"ति वर्तमाने लङ्। तत्रस्थ· = तत्र तिष्ठतीति, "सुपिस्थ" इत्यत्र योगविभागात्कप्रत्यय । अहुताऽनल =अहुतोऽनलो येन स । वध्य =हन्तु शक्यः, "शकि लिङ् चे"त्यत्र चात्कृत्या· । अत "हनो वा यद्वधश्च वक्तव्य" इति यत् वधादेशश्च । पक्षे "ऋहलो-र्ण्यत्" इति ण्यति "हनस्तोऽचिण्णलो·" इति तत्वे "हो हन्तेर्ञ्णिन्नेषु" इति कुत्वे च उपधावृद्धौ "घात्य' इत्यपि । यद्वा वधमर्हतीति वध्य "दण्डादिभ्य" इति यत् । "वध्य शीर्षच्छेद्य इमौ समौ" इत्यमरः ॥

**भाषाऽर्थ** आप लोग विलम्ब मत करें । निकुम्भिलामें विद्यमान इन्द्रजित् जब तक अग्नि कार्य नहीं करता है, ब्रह्मशिरा नामके दु सह अस्त्रका और रथका उपार्जन नही करता है तभी तक वह मारा जा सकता है ॥ २६ ॥

ब्रह्माऽदधाद्वध तस्य तस्मिन् कर्मण्यसंस्थिते ।
प्रायच्छदाज्ञां सौमित्रेर्यूथपानां च राघवः ॥ २७ ॥

**अन्वय**—तस्मिन् कर्मणि असस्थिते ब्रह्मा तस्य वधम् अदधात् । राघव सौमित्रे· यूथपाना च आज्ञा प्रायच्छत् ॥

**व्याख्या**—तस्मिन् = पूर्वोक्ते, हवनाऽऽख्य इति भाव , कर्मणि = अनुष्ठाने, असस्थिते = असमाप्त एव, ब्रह्मा = पितामह , तस्य = इन्द्रजित , वध = हिंसनम् अदधात् = धारितवान् , नियुक्तवानिति भाव । विभीषणवाक्यश्रवणाऽनन्तर— राघव = रामचन्द्र , सौमित्रे = लक्ष्मणस्य, यूथपाना च = वानरयूथपतीना, सुग्री-वादीना चेति भाव । आज्ञाम् = आदेशं, गन्तुमिति शेष । प्रायच्छत् = दत्तवान् ।·

‌॥व्युत्पत्ति॥ अदधात्="डु धाञ् धारणपोषणयो" इति जौहोत्यादिकाद्धातोर्लङ्, "जुहोत्यादिभ्य श्लुः" इति श्लौ "श्लौ" इति द्वित्वम् । यूथपाना=यूथ पान्तीति यूथपास्तेषाम्, "आतोऽनुपसर्गे क" इति कप्रत्यय । प्रायच्छत्= प्रपूर्वकात् "दाण् दान" इति धातोर्लङ्, "पाघ्राध्मास्थाम्नादाण्दृश्यर्ती" त्यादिना यच्छादेश ॥

॥भाषाऽर्थ॥ हवन कर्मके असमाप्त होनेपर ब्रह्माजीने इन्द्रजित्के वधका स्थापन किया है । ऐसा विभीषणका बचन सुनकर रामचन्द्रजीने लक्ष्मण और बानरयूथपतियोंको जानेकी आज्ञा देदी ॥ २७ ॥

युग्मम्—

तां प्रत्यैच्छन् सुसंप्रीतास्ततस्ते सविभीषणाः ।
निकुम्भिलां समभ्यायान्न्यरुध्यन्त च राक्षसैः॥ २८ ॥
दिक्पालैः कदनं तत्र सेने प्राकुरुता महत् ।
ऐतां रक्षांसि निर्जित्य द्रुतं पौलस्त्यलक्ष्मणौ ॥ २९ ॥

**अन्वयः**—तत ते सविभीषणा सुसप्रीता ता प्रत्यैच्छन्, निकुम्भिला समभ्यायान् दिक्पालै राक्षसै न्यरुध्यन्त च ॥ तत्र सेने महत् कदन प्राकुरुताम् । रक्षांसि निर्जित्य पौलस्त्यलक्ष्मणौ द्रुत ऐताम् ॥

**व्याख्या**—तत = रामाऽऽदेशाऽनन्तर, ते = पूर्वोक्ता, सविभीषणा = विभीषणसहिता· सौमित्रिकपियूथपा, सुप्रीता = अतिप्रसन्ना सन्त, ता = रामाज्ञा, प्रत्यैच्छन् = प्रतिगृहीतवन्त, निकुम्भिला = तदाख्या यज्ञशाला, समभ्यायान् = समभिगता तत्र च दिक्पालै =दिग्रक्षकै राक्षसै =यातुधानै, निकुम्भिलारक्षकैरिति भाव, न्यरुध्यन्त च = निरुद्धाश्च, यज्ञानुष्ठानस्थाने प्रवेश नो लब्धवन्त इति भाव ॥ तत्र = निकुम्भिलाया, सेने = उभयपक्षस्थे सैन्ये, महत् = बृहत्, कदनं = विनाशनं युद्धं, प्राकुरुता = कृतवत्यौ । रक्षासि = राक्षसान्, निर्जित्य = नि शेषेण जित्वा, पौलस्त्यलक्ष्मणौ = विभीषणलक्ष्मणौ, द्रुतं = शीघ्रम् ऐताम् = गतवन्तौ ।

॥व्युत्पत्ति॥ सविभीषणा = विभीषणेन सहिता । प्रत्यैच्छन्=प्रतिपूर्वकात् "इष इच्छायाम्" इति धातोर्लङ्, "इषुगमियमा छ" इति छ । समभ्यायान्= समभ्याङ् पूर्वकात् "या प्रापणे" इति धातोर्लङ् । "लङ शाकटायनस्यैवे"ति झेर्जुस्भावपक्षे "समभ्यायु" इति रूपम् । न्यरुध्यन्त=निपूर्वकात् "रुधिर् आवरणे" इति धातो कर्मणि लङ् ॥ कदन="कदन युद्धमाहवे" इति कोष । ऐताम्="इण् गतौ" इति धातोर्लङ् । "आटश्चे"ति वृद्धि ।

ॐभाषाऽर्थ-ॐ रामचन्द्रजी की आज्ञाको विभीषणके साथ लक्ष्मण और बानर यूथपति सुग्रीव आदियोंने ग्रहण किया। वे निकुम्भिलाको चले और वहाँ के रक्षक दिक्पाल राक्षसोंसे रोके गये ॥ २८ ॥

निकुम्भिलामे दोनों पक्षकी सेनाओंने बडी लडाई की। इसी बीचमे राक्षसोंको जीतकर विभीषण और लक्ष्मण शीघ्र गये ॥ २९ ॥

तत्रेन्द्रजितमैक्षेता कृतधिष्ण्य समाहितम्।
सोऽजुहोत्कृष्णवर्त्मानमामनन् मन्त्रमुत्तमम् ॥ ३० ॥

अन्वय.—तत्र ( तौ ) कृतधिष्ण्य समाहितम् इन्द्रजितम् ऐक्षेताम्। स उत्तमं मन्त्रम् आमनन् कृष्णवर्त्मानम् अजुहोत् ॥

व्याख्या—तत्र = निकुम्भिलाया, कृतधिष्ण्य = विहिताग्न्यगारं, समाहितम् = एकाग्रमानसम्, इन्द्रजितं = मेघनादम्, ऐक्षेता = दृष्टवन्तौ, पौलस्त्यलक्ष्मणाविति शेष। स = इन्द्रजित्, उत्तम = मुख्य, मन्त्रं = मनुम्, आमनन् = आवर्तयन्, कृष्णवर्त्मानम् = अग्निम्, अजुहोत् = हुतवान् ॥

ॐव्युत्पत्तिःॐ कृतधिष्ण्य = कृत धिष्ण्य येन स कृतधिष्ण्यस्त, "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमर। आमनन् = आमनतीति, आङ्पूर्वकात् "म्ना अभ्यास" इति धातोर्लट् शत्रादेश "पाघ्राध्मास्थाम्ने" त्यादिना मनादेश। अजुहोत् = "हु दानादनयो" इति धातोर्लङ्।

ॐभाषाऽर्थ ॐ निकुम्भिलामें विभीषण और लक्ष्मणने अग्निशालाकी रचना करने वाले एकाग्रचित्त इन्द्रजित्को देखा। उत्तम मन्त्रकी आवृत्ति करते हुए उसने ( इन्द्रजित् ) अग्निमें हवन किया ॥ ३० ॥

अध्यायच्छक्रजिद्ब्रह्म समाधेरचलन्न च।
तमाह्वयत सौमित्रिरगर्जच्च भयंकरम् ॥ ३१ ॥

अन्वय'—शक्रजित् ब्रह्म अध्यायत् समाधेश्च न अचलत्। सौमित्रि तम् आह्वयत भयङ्करम् अगर्जच्च ॥

व्याख्या—शक्रजित् = इन्द्रजित्, ब्रह्म = परमात्मानम्, अध्यायत्=चिन्तितवान्, समाधेश्च = चित्तवृत्तिनिरोधाच्च, न अचलत् = नो चलित। अत्राऽन्तरे सौमित्रि = लक्ष्मण, त = शक्रजितम्, आह्वयत = युद्धाय आहूतवान्, भयङ्कर = भीषणं यथा तथा, अगर्जच्च = गर्जन कृतवांश्च ॥

ॐव्युत्पत्ति ॐ अध्यायत् = "ध्यै चिन्तायाम्" इति धातोर्लङ्। "आदेच उपदेशेऽशिति" इति आत्व शिति न भवति। आह्वयत = आङ् पूर्वकात् "ह्वेञ् स्पर्धायां

शब्दे चे"ति धातोः लङ् । स्पर्धाया "स्पर्धायामाङः" इति आत्मनेपदम् । अगर्जत्= "गर्ज शब्दे" इति धातोर्लङ् ॥

ॐभाषाऽर्थ ॐ इन्द्रजित्‌ने परमात्माका चिन्तन किया । वह समाधिसे चलित नही हुआ। इसी बीचमे लक्ष्मणजीने उसे ललकारा और भयङ्कर गर्जन भी किया॥३१॥

अकुप्यदिन्द्रजित्तत्र पितृव्य चाऽगदद्वचः ।
त्वमत्राऽजायथा देह इहाऽपुष्यत्सुराऽमिषैः ॥ ३२ ॥

अन्वय.—तत्र इन्द्रजित् अकुप्यत् पितृव्य वचश्च अगदत्—"त्वम् अत्र अजायथा, इह देह सुराऽमिषै अपुष्यत् ॥

व्याख्या—तत्र = तस्मिन्, लक्ष्मणस्य युद्धाह्वाने गर्जने च सतीति भाव । इन्द्रजित्=मेघनाद, अकुप्यत्=कुपित, पितृव्यं=पितृभ्रातर, विभीषणमित्यर्थः। वचश्च= वचन च, वक्ष्यमाणप्रकारमिति भाव । अगदत् = उक्तवान् । त्व = विभीषण, अत्र= अस्मिन्, राक्षसकुल इति भाव । अजायथा = जातोऽसि । इह = अत्र, रक्ष कुल इति तात्पर्यम् । देह = शरीर, तवेति शेष । सुराऽमिषै = मद्यमासै, अपुष्यत् = पुष्ट । "देहमपुष्य" इति पाठान्तर तत्र देह = शरीरम्, अपुष्य = पोषितवानसि इत्यर्थ । अत्र पुषधातुरन्तर्भावितण्यर्थ इति जयमङ्गल । वस्तुतस्तु पुषधातुरपि जिधातुवत् अकर्मक सकर्मकश्च ॥

ॐव्युत्पत्ति ॐ अकुप्यत्="कुप क्रोध" इति दैवादिकाद्धातोर्लङ् । पितृव्यं = पितुर्भ्राता पितृव्यस्त, "पितृव्यमातुलमातामहपितामहा." इति सूत्रनिर्देशात् "पितुर्भ्रातरि व्यत्" इति व्यत्प्रत्यय । अगदत्="गद व्यक्ताया वाची"ति धातोर्लङ, अस्य धातोर्ब्रूधातोः समानार्थकत्वाद्द्विकर्मकत्वम् । अजायथाः='जनी प्रादुर्भावे" इति दैवादिकादनुदात्तेतो धातोर्लङ्। "ज्ञाजनोर्जा" इति जाऽऽदेश । अपुष्यत्="पुष पुष्टौ" इति दैवादिकाद्धातोर्लङ् ॥

ॐभाषाऽर्थ.ॐ लक्ष्मणजीके ललकारने और गर्जन करने पर इन्द्रजित् कुपित हुआ और पितृव्य ( चचा ) विभीषणको वचन कहने लगा—"तुम राक्षसकुलमें पैदा हुए हो और इसी कुलमें तुम्हारा शरीर सुरा और मांससे पुष्ट हुआ ॥ ३२ ॥

इहाऽजीव इहैव त्वं क्रूरमारभथा कथम् ।
नाऽपश्यः पाणिमार्द्रं त्वं बन्धुत्व नाऽप्यपैक्षथा. ॥ ३३ ॥

अन्वय.—( हे पितृव्य ! ) इह अजीव, इह एव त्वं क्रूरं ( कर्म ) कथम् आरभथा, त्वम् आर्द्रं पाणिं न अपश्य बन्धुत्वम् अपि न अपैक्षथा ॥

व्याख्या—( हे पितृव्य ! ) इह = राक्षसकुले, अजीव = जीवितोऽसि, इह

एव = अस्मिन्नेव राक्षसकुले, त्व = विभीषण , क्रूरं = दारुणं, कर्मेति शेष । कथं= केन प्रकारेण, आरभथा = आरब्धवानसि । त्व = विभीषणः, आर्द्रं = क्लिन्न, पाणि = कर, न अपश्य =नो दृष्टवानसि, भोजनाऽनन्तर यावता समयेन पाणि॰ शुष्यति तावन्तमपि समय नाऽपेक्षितवानसि इति भाव , मनोमालिन्यस्य स्वल्पेनैव कालेन पूर्वजात स्नेहबन्धनमुपकारभर च विस्मृत्य दारुणया विधयाऽपकाराचरणं कर्तु प्रवृत्तोऽसीति हार्दोऽभिप्राय । किं वहुना बन्धुत्वमपि=एकगोत्रत्वमपि, न अपे- क्षथा = नाऽपेक्षितवानसि ॥

**❀व्युत्पत्ति.❀ अजीव = "जीव प्राणधारण" इति धातोर्लङ् । आरम्भथा =आङ्- पूर्वकात् "रभ राभस्य" इति धातोर्लङ् , राभस्य नामोपक्रम । आर्द्रं = "आर्द्रं सार्द्रं क्लिन्न तिमित स्तिमित समुन्नमुत्त चे"त्यमर । बन्धुत्व = बन्धोर्भावो बन्धुत्व, तत् "तस्य भावस्त्वतलौ" इति त्वप्रत्यय. ॥**

**❀भाषाऽर्थ.❀ चाचाजी ! तुमने यही जीवन धारण किया है, तुमने यहीं पर क्रूर कर्मका कैसे आरम्भ किया ? तुमने भीगे हुए हाथको भी नही देखा और बन्धु- ताकी भी अपेक्षा नहीं की ॥ ३३ ॥**

अधर्मान्नाऽत्रसः पाप ! लोकवादान्न चाऽबिभे ।
धर्मदूषण ! नून त्व नाऽजाना नाऽशृणोरिदम् ॥ ३४ ॥

**अन्वय** — हे पाप ! ( त्वम् ) अधर्मात् न अत्रस लोकवादाच्च न अबिभे । हे धर्मदूषण ! नून त्वम् इद न अजाना॰ न अशृणो॰ ॥

**व्याख्या**—हे पाप = हे क्रूर ! अधर्मात् = पापात् , न अत्रस॰ =न त्रस्तोऽसि, त्वमिति शेष । लोकवादाच्च=जनाऽपवादाच्च, न अबिभे =नभीतोऽसि । हे धर्मदूषण= हे पुण्योच्छेदक !, नूनम् = अवश्य, त्व = विभीषण , इद = वक्ष्यमाणप्रकारक वचनं, न अजाना = नो ज्ञातवानसि, न अशृणो = नो श्रुतवानसि ॥

**❀व्युत्पत्ति ❀ अधर्मात् = भयाऽर्थकस्य त्रसीधातोर्योगे "भीत्राऽर्थाना भयहेतु॰" इत्यपादानत्व ततः "अपादाने पञ्चमी"ति पञ्चमी । अत्रस = "त्रसी उद्वेगे" इति दैवादिकाद्धातोर्लङ् , "वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष " इति श्यनो- ऽभावपक्षे शप् । लोकवादात् = अत्राऽपि पूर्वसूत्रेणाऽपादानत्वम् । अबिभे = "जिभी भय" इति—जुहोत्यादिधातोर्लङ् "श्लौ" इति द्विर्वचनम् । धातोर्गुणश्च । धर्मदू- षण = दूषयतीति दूषण , "दुष वैकृत्य" इति धातो "कृत्यल्युटो बहुलम्" इति बहु- लग्रहणसामर्थ्यात् कर्तरि ल्युट् , "दोषौ णौ" इत्युपधाया ऊत्वम् । अत्र नन्द्यादिगणे दुषधातो॰ पाठेऽपि पूजार्थत्वाऽभावात् न ल्यु॰ । धर्मस्य दूषणो धर्मदूषणस्तत्सम्बुद्धौ ।**

कुटुम्बक्षयकारककर्माऽनुष्ठातृत्वाद्धर्मदूषणत्वमवसेयम् । अजानाः = "ज्ञा अवबोधने" इति क्र्यादिस्थादुदात्तेतो धातोर्लङ् "ज्ञाजनोर्जा" इति जादेशः । अशृणो = "श्रु श्रवणे" इति धातोर्लङ्, "श्रुवः शृ च" इति शृरादेशः ॥

॥भाषाऽर्थ॥ हे नृशंस ! तुम अधर्मसे नही डरते हो और लोकाऽपवादसे भी भय नही करते हो । हे पुण्योच्छेदक ! अवश्य तुमने इस वचनको न तो जाना है और न सुना ही है ॥ ३४ ॥

तदेव वचनमाह—

निराकृत्य यथा बन्धून् लघुत्वं यात्यसंशयम् ।
पितृव्येण ततो वाक्यमभ्यधीयत शक्रजित् ॥ ३५ ॥

अन्वयः—यथा ( लोकः ) बन्धून् निराकृत्य असंशयं लघुत्वं याति" । ततः पितृव्येण शक्रजित् वाक्यम् अभ्यधीयत ॥

व्याख्या—यथा = येन प्रकारेण, बन्धून् = बान्धवान् , निराकृत्य=परित्यज्य, असंशयं = निश्चितं यथा तथा, लघुत्वं = लाघवं, याति = गच्छति, लोक इति शेषः । "त्वमिदं नाऽजाना नाऽशृणो" इति पूर्वश्लोकस्थपदैः सम्बन्धः । ततः = भ्रातृव्यवचनाऽनन्तरं, पितृव्येण = पितृभ्रात्रा, विभीषणेनेत्यर्थः । शक्रजित् = इन्द्रजित् , वाक्यं = वचनम् , अभ्यधीयत = अभिहितः ॥

॥व्युत्पत्तिः॥ असंशयं = संशयस्य अभावस्तद्यथा तथा, "अव्ययं विभक्ती"त्यादिना अर्थाऽभावेऽव्ययीभावः । वाक्य = "तिङ्सुबन्तचयो वाक्यं, क्रिया वा कारकाऽन्विता ।" इत्यमरः । अभ्यधीयत = अभिपूर्वकात् डुधाञ् धारणपोषणयो" इति धातोः कर्मणि लङ्, "दाधा घ्वदाप्" इति घुसंज्ञत्वेन "घुमास्थागापाजहातिसां हलि" इतीत्वम् ॥

॥भाषाऽर्थ॥ "जैसे कि—लोक बान्धवोंका परित्याग कर निश्चय लाघवको प्राप्त होता है" । तदनन्तर चाचा विभीषणने भतीजे इन्द्रजितको निम्नस्थ वाक्य कहा ॥ ३५ ॥

मिथ्या मा स्म व्यतिक्रामो मच्छीलं मा न बुध्यथाः ।
सत्यं समभवं वंशे पापानां रक्षसामहम् ॥ ३६ ॥

अन्वय—( हे इन्द्रजित् ! ) मिथ्या मा स्म व्यतिक्रामः, मच्छीलं मा न बुध्यथाः । अहं पापानां रक्षसां वंशे सत्यं समभवम् ॥

व्याख्या—( हे इन्द्रजित् ) मिथ्या = मृषा, मा स्म व्यतिक्रामः = व्यतिक्रमं न कुरु, त्वमिति शेषः । मच्छीलं = मत्स्वभावं, मा न बुध्यथाः = मा न बुद्धाः,

अपि तु ज्ञातवानसीति भाव । अहं = विभीषण , पापाना = क्रूराणा, रक्षसा = राक्षसाना, वशे = कुले, सत्य = तथ्य समभवं = सभूत ॥

❀व्युत्पत्ति❀ मा स्म व्यतिक्राम = मास्मोपपदात् व्यतिपूर्वकात् "क्रमु पादविक्षेप" इति धातो "स्मोत्तरे लङ् चे"ति लङ्। "क्रम परस्मैपदेषु" इति शिति दीर्घत्वम् । मा स्म बुध्यथा = मास्मोपपदपूर्वकात् "बुध अवगमन" इति दैवादिकाद्धातो. पूर्वसूत्रेण लङ् । समभव = सपूर्वकाद्भूधातोर्लङ् ॥

❀भाषाऽर्थ❀ हे इन्द्रजित्! तुम झूठमूठ व्यतिक्रम मत करो। तुम मेरे स्वभावको नही जानते हो यह नही (जानते ही हो) मै क्रूर राक्षसोंके वशमें सचमुच ही उत्पन्न हुआ हू ॥ ३६ ॥

> न त्वजायत मे शीलं तादृग्, यादृक् पितुस्तव ।
> क्षयाऽऽवहेषु दोषेषु वार्यमाणो मयाऽरमत् ॥ ३७ ॥

**अन्वयः**—तु मे शीलं तादृक् न अजायत यादृक् तव पितु (अजायत) क्षयाऽऽवहेषु दोषेषु मया वार्यमाण (दशग्रीव) आरमत् ॥

**व्याख्या**—तु = परन्तु, मम क्रूररक्षोवंशप्रसूतत्वेऽपीति भाव । मे = मम, शील = स्वभाव , तादृक् = तादृश न अजायत = न अभूत्, यादृक् = यादृशं, तव = भवत , पितु = जनकस्य, रावणस्येत्यर्थ , अजायतेति शेष । क्षयावहेषु = विनाशोत्पादकेषु, दोषेषु = दूषणेषु, परदारहरणादिष्विति भाव । मया = अनुजेन, वार्यमाण =क्रियमाणवारणोऽपि, आरमत्=रतिं कृतवान् , क्षयावहेषु दोषेष्विति भाव ॥

❀व्युत्पत्ति❀ क्षयाऽऽवहेषु = आवहन्तीति आवहा, पचाद्यच्, क्षयस्यावहा, तेषु । आरमत् = आङ्पूर्वकात् "रमु क्रीडायाम्" इतिधातो "व्याङ्परिभ्यो रम" इति परस्मैपद, ततो लङ् ॥

❀भाषाऽर्थ❀ परन्तु मेरा स्वभाव वैसा नही हुआ जैसा तुम्हारे पिता का हुआ। परस्त्रीहरण आदि नाश करनेवाले दोषोंमे मुझसे निवारित होते हुए भी रावणने उन्हींमे प्रीतिकी ॥ ३७ ॥

> दशग्रीवोऽहमेतस्मादत्यजं न तु विद्विषन्
> परस्वान्यार्जयन्नारीरन्यदीया परामृशत् ॥ ३८ ॥

**अन्वय**—अहम् एतस्मात् (दशग्रीवम्) अत्यज, न तु विद्विषन् । दशग्रीव. परस्वानि आर्जयत् , अन्यदीया नारी परामृशत् ॥

**व्याख्या**—अहं = विभीषण , एतस्मात् = कारणात् , अत्यज=त्यक्तवानस्मि, दशग्रीवमिति शेष । न तु विद्विषन्=न पुनरमित्रीभवन् , त्यक्तवानस्मीति शेष ।

दशग्रीवस्य दोषजातमाह—परस्वानीति । दशग्रीव = रावण , परस्वानि = अन्यधनानि, आर्जयत् = अन्यैर्ग्राहितवान् , अन्यदीया परकीया , नारी = ललना , परामृशत् = स्पृष्टवान् ॥

❀व्युत्पत्ति ❀ अत्यज = "त्यज हानौ" इति धातोर्लङ् । विद्विषन् = विद्वेष्टीति, विपूर्वकात् "द्विष अप्रीतौ" इति धातोर्लट "द्विषोऽमित्रे" इति शतृप्रत्ययः । आर्जयत् = "अर्ज ( सर्ज ) अर्जने" भौवादिकाद्धातोर्हेतुमण्णिचूलङ् । यद्वा "अर्ज प्रतियत्ने" इति चौरादिकात् धातोर्लङ् । अन्यदीया = अन्येषामिमा अन्यदीयास्ता , गहादेराकृतिगणत्वात् "गहादिभ्यश्चे"ति छप्रत्यय , "अषष्ठ्यतृतीयास्थस्याऽन्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु" इति दुगागम । परामृशत् = परापूर्वकात् "मृशआमर्शने" इति तौदादिकादनुदात्ततो धातोर्लङ् ॥

❀भाषाऽर्थ ❀ मैने इस कारणसे रावणको छोड़ा, वैर करते हुए नही (छोडा) रावणने परधनोंका दूसरेसे ग्रहण कराया, दूसरोंकी स्त्रियोंका स्पर्श किया ॥ ३८ ॥

व्यजिघृक्षत्सुरान्नित्य प्रामाद्यद्गुणिना हिते ।
आशङ्कत सुहृद्बन्धूनवृद्धान् बह्वमन्यत ॥ ३९ ॥

अन्वयः—( दशग्रीवः ) सुरान् नित्य व्यजिघृक्षत् , गुणिना हिते प्रामाद्यत् , सुहृद्बन्धून् आशङ्कत अवृद्धान् बहु अमन्यत ॥

व्याख्या— सुरान् = देवान् , नित्य = सतत, व्यजिघृक्षत् = विग्रहीतुमैच्छत् , दशग्रीव इति शेष , एवं परत्राऽपि । गुणिना = गुणवता, माल्यवत्प्रभृतीनामित्यर्थ । हिते = हितकारके वचने, प्रामाद्यत् = प्रमाद गतः । सुहृद्बन्धून् = मित्रज्ञातीन् , आशङ्कत = शङ्कितवान् , अवृद्धान् = अपण्डितान् , प्रहस्तादीनित्यर्थ । बहु = अधिक यथा तथा, अमन्यत = श्लाघितवान् ॥

❀व्युत्पत्ति.❀ व्यजिघृक्षत् = विपूर्वकात् "ग्रह उपादाने" इति धातो सनि लङ् । "सनि ग्रहगुहोश्चे"ति इडागमनिषेध । "ग्रहिज्ये"त्यादिना सम्प्रसारण, सनः षत्वस्याऽसिद्धत्वाद्भष्भाव । गुणिना = गुणा सन्ति एषा ते गुणिनस्तेषाम् ,"अत इनिठनौ" इतीनि । प्रामाद्यत्=प्रपूर्वकात् "मदी हर्षे" इति दैवादिकाद्धातोर्लङ् , "शमामष्टाना दीर्घ श्यनि" इति दीर्घत्वम् । सुहृद्बन्धून् = शोभन हृदय येषा ते सुहृद "सुहृद्दुर्हृदौ मित्राऽमित्रयो." इति हृदयस्य हृद्भावो निपात्यते । सुहृदश्च बन्धवश्च सुहृद्बन्धवस्तान् ॥

❀भाषाऽर्थ ❀ रावणने देवताओंसे निरन्तर लड़ने की इच्छा की, माल्यवान् आदि गुणियोंके हितकारक वचनमे प्रमाद किया, मित्रों और ज्ञातियोंमे शङ्काकी अविद्वान् प्रहस्त आदियोंकी अधिक प्रशसा की ॥ ३९ ॥

युग्मम्—

दोषैररमतैभिस्ते पिताऽत्यज्यत यैर्मया ।
ततोरुष्यदनर्दच्च द्विविंशतिभिरेव च ॥ ४० ॥
शरैरताडयद्बन्धु पञ्चविंशतिभिर्नृपम् ।
रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान् ॥ ४१ ॥

**अन्वयः**—एभि दोषै· ते पिता अरमत । यैः मया अत्यज्यत" । ततो रावणि अरुष्यत् अनर्दच्च, द्विविंशतिभि शरै· एव बन्धु पञ्चविंशतिभि शरै नृपम् अताडयत् । सौमित्रि तस्य चतुरो हयान् अमथ्नात् ॥

**व्याख्या**—एभि = पूर्वोक्तै , दोषै = दूषणै , ते = तव, पिता=जनक·, रावण इत्यर्थ । अरमत = क्रीडितवान् । यै· = दोषै , हेतुभि । मया = विभीषणेन, अत्यज्यत = त्यक्त , त्वत्पितेति शेष· । तत· = पितुर्दोषप्रकाशनवचनादनन्तर, रावणि = रावणपुत्र , इन्द्रजिदित्यर्थ । अरुष्यत् = रुष्ट , अनर्दच्च=अगर्जच्च, द्विविंशतिभि·= चत्वारिंशता, शरै = बाणै , एव, बन्धु = पितृबन्धु, पितृव्य विभीषणमिति भाव । पञ्चविंशतिभि = शतसख्यकैरिति भाव· । शरै = बाणै·, नृप = राजान, लक्ष्मणमित्यर्थ· । अताडयत् = ताडितवान् , सौमित्रि = लक्ष्मण , तस्य=रावणे , चतुर = चतु सख्यान् , हयान् = अश्वान् , रथनियुक्तानिति भावः । अमथ्नात् हिंसितवान् ॥

❀व्युत्पत्ति·❀ अत्यज्यत = "त्यज हानौ" इति धातो· कर्मणि लङ् । रावणि = रावणस्याऽपत्य पुमान् , "अत इञ्" इति इञ् । अरुष्यत् = "रुष रुष्टौ" इति दैवादिकाद्धातोर्लङ् । अनर्दत् = "नर्द ( गर्द ) शब्दे" इति धातोर्लङ् । द्विविंशतिभि· = द्वे विंशती येषा ते द्विविंशतयस्तै , अत्र द्वौच विंशतिश्च इति द्व्यधिका विंशतिर्वा इति व्याख्याने तु "द्व्यष्टन· सख्यायामबहुव्रीह्यशीत्यो " इति सूत्रेणाऽऽत्वे द्वाविंशतिस्तृतीयाया तु द्वाविंशत्या इति रूप स्यात् । पञ्चविंशतिभि = पञ्च विंशतयो येषां ते पञ्चविंशतयस्तैरत्राऽपि पूर्ववद्बहुव्रीहि·, नो चेत् "द्वाविंशत्या" इतिवत् "पञ्चविंशत्ये"ति रूप स्यात् । अमथ्नात् = "मन्थ विलोडने" इति क्र्यादिस्थ धातोर्लङ ॥

❀भाषाऽर्थ❀ इन ( पूर्वोक्त ) दोषोंसे तुम्हारे पिता ( रावण ) ने क्रीडा की, जिनके कारण मैने उन्हें छोड दिया । ऐसा सुनकर इन्द्रजित् रुष्ट हुआ और गर्जन करने लगा । उसने चालिस बाणोंसे विभीषणको और सौ बाणोंसे लक्ष्मणजीको ताडन किया । तब उन्होंने ( लक्ष्मणने ) उसके चार घोडोंको मार डाला॥४०॥४१॥

सारथि चाऽलुनाद्बाणैरभनक स्यन्दन तथा ।
सौमित्रिमकिरद्बाणैः परितो रावणिस्ततः ॥ ४२ ॥

अन्वयः—( सौमित्रि ) ( तस्य ) सारथिम् अलुनात् तथा बाणै स्यन्दनम् अभनक्। ततो रावणि सौमित्रि परितो बाणै अकिरत् ॥

व्याख्या—सारथिं = सूत, रावणेरिति शेष । अलुनात् = छिन्नवान् , सौमित्रिरिति शेष , एव परत्राऽपि । तथा = तेन प्रकारेण, बाणै = शरै , स्यन्दन=रथम्, अभनक् = भग्नवान् । तत = अनन्तर, रावणि = इन्द्रजित् , सौमित्रिं परित = लक्ष्मणमभित , बाणै = शरै , अकिरत् = छादितवान् ॥

❀व्युत्पत्ति❀ अलुनात् = "लूञ् छेदन" इति क्र्यादिस्थधातोर्लङ्, "क्र्यादिभ्य श्ना" इति श्नाप्रत्यय, "प्वादीना ह्रस्व" इति ह्रस्वत्वम् । अभनक् = "भञ्जो आमर्दने" इति रौधादिकधातोर्लङ् , "रुधादिभ्य श्नम्" इति श्नम् । सौमित्रि="परित" इति पदेन योगे "अभित परित समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । अकिरत् = "कॄ विक्षेपे" इति तौदादिकधातोर्लङ् , "तुदादिभ्य श" इति शप्रत्यय "ॠत इद्धातो" इतीत्वम् ॥

❀भाषाऽर्थ❀ लक्ष्मणजीने इन्द्रजित्के सारथिको काट डाला और बाणोंसे उसके रथको तोडा । तब इन्द्रजित्ने लक्ष्मणजीके चारों तरफ बाणोंसे आच्छादित कर दिया ॥ ४२ ॥

तावस्फावयता शक्ति बाणाश्चाऽकिरता मुहुः ।
वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित् ॥ ४३ ॥

अन्वयः—तौ शक्तिम् अस्फावयता,बाणाश्च मुहु अकिरताम्, लक्ष्मणो वारुणम् अक्षिप्यत् , इन्द्रजित् रौद्रम् अक्षिपत् ॥

व्याख्या —तौ = सौमित्रिरावणी, शक्तिं = सामर्थ्यम् , अस्फावयता = वर्धितवन्तौ, बाणाश्च = शराश्च, मुहु =वारंवारम् , अकिरता = विक्षिप्तवन्तौ । लक्ष्मण = सौमित्रि, वारुणं = वरुणदैवतमस्त्रम् , अक्षिप्यत् = क्षिप्तवान् । इन्द्रजित्=रावणि , रौद्रं=रुद्रदैवतमस्त्रं, पाशुपतमित्यर्थ । अक्षिपत्=क्षिप्तवान् ॥

❀व्युत्पत्ति❀ अस्फावयता = "स्फायी ( ओप्यायी ) वृद्धौ" इति धातोर्णौ लङ् । "स्फायो व" इति वत्वम् । वारुण = वरुणस्येदं वारुण, तत्, "तस्येदम्" इत्यण् । अक्षिप्यत् = "क्षिप प्रेरण" इति दैवादिकाद्धातोर्लङ् । रौद्र = रुद्रस्येद रौद्र, तत्, पूर्ववदण् । अक्षिपत् = "क्षिप प्रेरण" इति तौदादिकधातोर्लङ् ॥

❀भाषाऽर्थ❀ लक्ष्मण और इन्द्रजित्ने अपनी शक्ति बढाई, बाणोंकोभी वारवार फेंका । तब लक्ष्मणने वारुणाऽस्त्र फेंका उसका प्रतिकार करनेके लिए इन्द्रजित्ने पाशुपताऽस्त्र छोडा ॥ ४३ ॥

ते परस्परमासाद्य शस्त्रे नाशमगच्छताम्।
आसुरं राक्षसः शस्त्रं ततो घोरं व्यसर्जयत् ॥ ४४ ॥

अन्वयः—ते शस्त्रे परस्परम् आसाद्य नाशम् अगच्छताम्। ततो राक्षसो घोरम् आसुरं शस्त्रं व्यसर्जयत् ॥

व्याख्या—ते=सौमित्रिरावणिप्रहिते, शस्त्रे = आयुधे वारुणपाशुपतास्त्रे इति भावः। परस्परं=मिथः। आसाद्य=प्राप्य, नाशम् = अदर्शनम्, अगच्छताम् = प्राप्तौ, शस्त्रनाशाऽनन्तरं, राक्षसः=यातुधानः, इन्द्रजिदित्यर्थः, घोरं = भयङ्करम् आसुरम् = असुरदैवत, शस्त्रम् = आयुधं, व्यसर्जयत्=क्षिप्तवान् ॥

※व्युत्पत्तिः※ आसुरम्=असुरो देवताऽस्येति आसुरं, तत्र "साऽस्य देवता" इत्यण् ॥

※भाषाऽर्थ※ शस्त्र ( वारुणाऽस्त्र और पाशुपताऽस्त्र ) परस्पर प्राप्त होकर नष्ट हुए। तब इन्द्रजित्‌ने भयङ्कर आसुरास्त्र छोडा ॥ ४४ ॥

तस्मान्निरपतद्भूरि शिलाशूलेष्टिमुद्गरम्।
माहेश्वरेण सौमित्रिरस्तभ्नात्तत्सुदुर्जयम् ॥ ४५ ॥

अन्वयः—तस्मात् भूरि शिलाशूलेष्टिमुद्गरं निरपतत्। सौमित्रिः सुदुर्जयं तत् माहेश्वरेण अस्तभ्नात् ॥

व्याख्या—तस्मात् = इन्द्रजित्प्रहितादासुराऽस्त्रात्, भूरि = प्रचुरं, शिलाशूलेष्टिमुद्गरं = पाषाणशूलखड्गद्रुघणं, निरपतत् = निर्गतम्। सौमित्रिः = लक्ष्मणः, अतिशयदुःखेन जेतुं शक्यं, तत् = पूर्वोक्तम्, आसुराऽस्त्रमित्यर्थः। माहेश्वरेण = माहेश्वराऽस्त्रेण, अस्तभ्नात् = स्तम्भितवान् ॥

※व्युत्पत्तिः※ शिलाशूलेष्टिमुद्गरं=शिलाश्च शूलानि च इष्टयश्च मुद्गराश्चेति समाहारद्वन्द्वः। इष्टिः प्रहरणविशेष इति जयमङ्गलः। "इष्टिः खड्गः प्रसारोऽसिर्धर्मपालः प्रजाकरः।" इति वैजयन्तीति भरतः। सुदुर्जयं=दुःखेन जेतुं शक्यं दुर्जयम्, "ईषद्दुःसुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्" इति खल्प्रत्ययः। अत्यन्तं दुर्जयं सुदुर्जयं, तत्र "कुगतिप्रादयः" इति समासः। माहेश्वरेण=महेश्वरो देवता ऽस्येति माहेश्वरं, तेन "साऽस्य देवता" इत्यण्। अस्तभ्नात्=रोधनाऽर्थात् सौत्रात्स्तम्भुधातोः लङ् "स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च" इति चात् श्नाप्रत्ययः ॥

※भाषाऽर्थः※ इन्द्रजित्‌से प्रेरित उस आसुराऽस्त्रसे प्रचुर पत्थर, शूल, तलवार और मुद्गर गिर पडे। लक्ष्मणजीने अतिशय दुःखसे जीते जानेवाले उस आसुराऽस्त्रको माहेश्वरास्त्रसे रोका ॥ ४५ ॥

ततो रौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत् ।
तेनाऽऽगम्यत घोरेण शिरश्चाऽह्रियत द्विषः ॥ ४६ ॥

अन्वय —ततो लक्ष्मणो रौद्रसमायुक्त माहेन्द्रम् अस्मरत् । घोरेण तेन आगम्यत, द्विष शिरश्च अह्रियत ॥

व्याख्या—तत = अनन्तर, लक्ष्मण = सौमित्रि, रौद्रसमायुक्तं = रौद्राऽस्त्रसहित, माहेन्द्र=महेन्द्रदैवतमस्त्रम्, अस्मरत् = चिन्तितवान् । घोरेण = भयङ्करेण तेन = अस्त्रेण, आगम्यत = आगत, द्विष = शत्रो, इन्द्रजित इत्यर्थ । शिरश्च = मूर्धा च, अह्रियत = हृत, छिन्नमित्यर्थ, तेनाऽस्त्रेणेति शेष ॥

❀व्युत्पत्ति❀ आगम्यत = आङ्पूर्वकाद्गम्लृधातोर्भावे लङ् । अह्रियत = "हृञ् हरण" इति धातो कर्मणि लङ् ॥

❀भाषाऽर्थ❀ तदनन्तर लक्ष्मणजीने रौद्र अस्त्रसे युक्त माहेन्द्र अस्त्रका चिन्तन किया । भयङ्कर उस अस्त्रने आनेके अनन्तर ही शत्रु ( इन्द्रजित् ) के शिरको काट डाला ॥ ४६ ॥

अतुष्यन्नमरा सर्वे प्राहृष्यन् कपियूथपाः ।
पर्यष्वजत सौमित्रिं मूर्ध्न्यजिघ्रच्च राघव ॥ ४७ ॥

अन्वय—सर्वे अमरा अतुष्यन् । कपियूथपा प्राहृष्यन् । राघव सौमित्रिं पर्यष्वजत मूर्ध्नि अजिघ्रच्च ॥

व्याख्या—इन्द्रजिति हते सति, सर्वे = समस्ता, अमरा = देवा, अतुष्यन् = तुष्टा । कपियूथपा = वानरसङ्घपतय, सुग्रीवादय इत्यर्थ । प्राहृष्यन् = प्रहृष्टा । राघव = रामचन्द्र, सौमित्रिं = लक्ष्मण, पर्यष्वजत = आलिङ्गितवान्, मूर्ध्नि = शिरसि, अजिघ्रच्च = आघ्रातवांश्च ॥

❀व्युत्पत्ति❀ प्राहृष्यन्=प्रपूर्वकात् "हृष तुष्टौ" इति दैवादिकाद्धातोर्लङ् । पर्यष्वजत=परिपूर्वकात् "ष्वञ्ज परिष्वङ्गे" इति धातोर्लङ्, "दंशसञ्जस्वञ्जां शपि" इति शपि अनुनासिकलोप । "प्राक्सितादड्व्यवायेऽपि" इति वचनात् "परिनिविभ्य सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इति षत्वम् । अजिघ्रत् = "घ्रा गन्धोपादाने" इति धातोर्लङ्, "पाघ्राध्मे"त्यादिना जिघ्रादेश ॥

❀भाषाऽर्थ❀ इन्द्रजित्के मारे जानेपर सब देवता सन्तुष्ट हुए । वानरसमूहके अधिपति सुग्रीव आदि प्रसन्न हो गये । रामचन्द्रजीने लक्ष्मणको आलिङ्गन किया और उनके शिरमें सूंघा भी ॥ ४७ ॥

अरोदीद्राक्षसाऽनीकमरोदन्नृभुजां पतिः ।
मैथिल्यै चाऽशपद्धन्तुं तां प्राक्रमत चाऽऽतुरः ॥ ४८ ॥

अन्वय —राक्षसाऽनीकम् अरोदीत् । नृभुजा पति अरोदत् । ( स ) मैथिल्यै अशपत् , ता हन्तुम् आतुर· ( सन् ) प्राक्रमत च ॥

व्याख्या—राक्षसाऽनीक = यातुधानसैन्यम् , अरोदीत् = रुदितम् । नृभुजा= मनुष्यभक्षकाणा, राक्षसानामित्यर्थ । पति = स्वामी, रावण इत्यर्थ । अरोदत् = रुदित । मैथिल्यै अशपत् = सीताम् आक्रुष्टवान् , सर्वदोषस्य मूलमिति मत्वेति भाव । स इति शेष । ता = सीता, हन्तु = व्यापादयितुम् , आतुर = शोकपीडित सन् , प्राक्रमत च = प्रारब्धवाश्च ॥

※व्युत्पत्ति·※ अरोदीत् = "रुदिर् अश्रुविमोचने ' इति धातोर्लङ् "रुदश्च पञ्चभ्य" इतीट् । अरोदत् = रुदिधातोर्लङि पक्षान्तरे "अङ् गार्ग्यगालवयो·" इत्यडागम· । मैथिल्यै = शपधातोर्योगे "श्लाघह्नुङ्स्थाशपा ज्ञीप्स्यमान " इति कर्मणि संप्रदानसञ्ज्ञा । अशपत् = "शप आक्रोश" इति धातोर्लङ् । प्राक्रमत = प्रपूर्वकात् "क्रमुपादविक्षेपे" इति धातो "प्रोपाभ्या समर्थाभ्याम्" इति आत्मनेपदम् ॥

※भाषाऽर्थ·※ इन्द्रजित्के मारे जानेपर राक्षसोंकी सेना रोने लगी । राक्षसेश्वर रावणभी रोने लगा । वह सीताको गाली देने लगा और उन्हें मारनेके लिए शोक पीडित होकर आरम्भ करने लगा ॥ ४८ ॥

अयुक्तमिदमित्यन्ये तमाप्ताः प्रत्यवारयन् ।
न्यरुन्धश्चाऽस्य पन्थान बन्धुता शुचमारुणत् ॥ ४९ ॥

अन्वय·—अन्ये आप्ता इदम् अयुक्तम् इति त प्रत्यवारयन् , अस्य पन्थान च न्यरुन्धन् । बन्धुता अस्य शुचम् आरुणत् ॥

व्याख्या—अन्ये = अपरे, आप्ता = विश्वस्ता राक्षसा , इद = सीताहननरूपं कार्यम् , अयुक्तम् = अनुचितम् , इति = एवम् , उक्त्वेति शेष । त = रावण, प्रत्यवारयन् = निवारितवन्त । अस्य = रावणस्य, पन्थान च = मार्ग च, न्यरुन्धन् = निरुद्धवन्त , हस्तपादादिग्रहणेनेति शेष । बन्धुता = बान्धवसमूह , अस्य = रावणस्य, शुच = शोकम् , आरुणत् = अपनीतवती ॥

※व्युत्पत्ति※ आप्ता = "आप्त प्रत्ययित समौ" इत्यमर । प्रत्यवारयन् = प्रतिपूर्वकात् "वृञ् आवरण" इति चौरादिकाद्धातोर्लङ् । न्यरुन्धन् = निपूर्वकात् "रुधिर् आवरणे" इति धातोर्लङ् । बन्धुता = बन्धूनां समूह , "ग्रामजनबन्धुसहायेभ्यस्तल्" इति तल्प्रत्ययः । आरुणत् = आङ्पूर्वाद्रुधधातोर्लङ् , हल्ङ्यादिलोपो धकारस्य जश्त्व च ॥

※भाषाऽर्थ·※ दूसरे आप्त राक्षसोंने "स्त्री की हत्या अनुचित है" ऐसा कहकर

रावणको निवारण किया और उसके मार्गको भी रोका। बन्धुसमूहने उसके शोकको हटाया ॥ ४९ ॥

आस्फायताऽस्य वीरत्वममर्षश्चाऽप्यतायत ।
रावणस्य ततः सैन्य समस्तमयुयुत्सयत् ॥ ५० ॥

अन्वयः—अस्य रावणस्य वीरत्वम् आस्फायत अमर्षश्च अपि अतायत । तत ( स ) समस्तं सैन्यम् अयुयुत्सयत् ॥

व्याख्या—अस्य = एतस्य, रावणस्य=दशाननस्य, वीरत्व=शौर्यम् , आस्फायत = अवर्द्धत, अमर्षश्चअपि = कोपश्च, अपि अतायत = विस्तीर्णं । तत =वीरत्वाऽमर्षोप चयाऽनन्तरं, समस्तं = सकलं, सैन्य = सेनाम्, अयुयुत्सयत् = युद्धेच्छामकारयत्, रावण इति शेष ॥

ॐव्युत्पत्ति.ॐ आस्फायत=आङ्पूर्वात् "स्फायी (ओप्यायी) वृद्धौ" इति धातोर्लङ्। अमर्ष ="कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियाम् ।" इत्यमर.। अतायत="तायृ सन्तानपालनयोः" इति धातोर्लङ्। सन्तानः प्रबन्ध.। सैन्य= सेनैव सैन्य, तत् "चतुर्वर्णादीनां स्वाऽर्थ उपसख्यानम्" इति स्वाऽर्थे (प्रकृत्यर्थे) ष्यञ्। अयुयुत्सयत="युध सम्प्रहारे" इति सन्नन्ताद्धातोर्णिचि लङ्॥

ॐभाषाऽर्थ.ॐ रावणकी वीरता बढ़ी और क्रोध भी विस्तीर्ण हुआ। अनन्तर उसने सम्पूर्ण सेनाको लड़नेकी इच्छासे युक्त कराया ॥ ५० ॥

अग्नीनवरिवस्यंश्च तेऽनमस्यश्च शङ्करम् ।
द्विजानप्रीणयन् शान्त्यै यातुधाना भवद्भियः ॥ ५१ ॥

अन्वयः—ते यातुधाना भवद्भिय ( सन्त ) अग्नीन् अवरिवस्यन्, शङ्करम् अनमस्यन्, शान्त्यै द्विजान् अप्रीणयन् ॥

व्याख्या—ते = पूर्वोक्ता , यातुधाना = राक्षसा , भवद्भिय = उत्पद्यमानभया. सन्त , अग्नीन् = अनलान्, अवरिवस्यन् = परिचरितवन्त शङ्करं = महादेवम् , अनमस्यन् = पूजितवन्तः, शान्त्यै = शमाऽर्थं, द्विजान्=ब्राह्मणान्, अप्रीणयन् = प्रीणितवन्त ॥

ॐव्युत्पत्ति ॐ यातुधानाः=यातूनि (यातना.) धीयन्ते एषु, "करणाऽधिकरणयोश्च"त्यधिकरणे ल्युट्, "यातुधान पुण्यजनो नैर्ऋतो यातुरक्षसी ।" इत्यमर.। भवद्भिय =भवन्ती भीर्येषा ते। "पुवत्कर्मधारयजातीयदेशीयेषु" इति पूर्वपदस्य पुवद्भावः। अवरिवस्यन्="नमोवरिवश्चित्रङ. क्यच्" इति वरिवस परिचर्यायां क्यच्, तदन्ताल्लङ्। शङ्कर=श करोतीति शङ्करस्त, "शमि.धातो सञ्ज्ञायाम्" इत्यच्, टाऽपवादः। अनमस्यन्=पूर्वसूत्रेणैव नमस. पूजायां क्यच्, तदन्ताल्लङ्।

अप्रीणयन्="प्रीञ् तर्पण" इति चौरादिकधातोर्लङ्, "धूञ्प्रीञोर्नुग्वक्तव्य" इति नुक् ॥

❀भाषाऽर्थ❀ राक्षसोंने भययुक्त होकर अग्निमे हवन किया महादेवजीकी पूजा की और शान्तिके लिए ब्राह्मणोंको प्रसन्न किया ॥ ५१ ॥

परित. पर्यवाद्वायुराज्यगन्धिर्मनोरम' ।
अश्रूयत सपुण्याह स्वस्तिघोषः समुच्चरन् ॥ ५२ ॥

अन्वय —आज्यगन्धि मनोरमो वायु परित पर्यवात् । सपुण्याह समुच्चरन् स्वस्तिघोष अश्रूयत ॥

व्याख्या—आज्यगन्धि = घृतगन्धि , मनोरम =चेतोहर , वायु = वात , परित = सर्वत , पर्यवात्=वाति स्म । सपुण्याह = पुण्याहशब्दसहित , समुच्चरन्= समुद्गच्छन् , स्वस्तिघोष =स्वस्त्ययनशब्द , अश्रूयत = श्रुत ॥

❀व्युत्पत्ति.❀ आज्यगन्धि =अत्र समासाऽन्त इप्रत्यय सन्दिग्ध , "आज्यगन्धी"ति इन्प्रत्ययाऽन्तत्वे तु न काऽपि विचिकित्सा । मल्लिनाथस्तु आज्यगन्धोऽस्याऽस्तीति "अर्श आदिभ्योच्" इत्यच् इति "आज्यगन्ध" इति पाठ स्वीचकार । मनोरम ="कान्त मनोरम रुच्य मनोज्ञ मञ्जु मञ्जुलम् ।" इत्यमरः । पर्यवात्= परिपूर्वकात् "वा गतिगन्धनयो." इति धातोर्लङ् । सपुण्याह =पुण्य च तत् अहः पुण्याह, "राजाऽह सखिभ्यष्टच्" इति टच् । "अह्नोऽह्न एतेभ्य" इति प्राप्तस्य अह्ना देशस्य "उत्तमैकाभ्या चे"ति निषेधः, अत्रोत्तमशब्दोऽन्त्यार्थ' पुण्यशब्दमाह । पुण्याहेन सहित., "तेन सहेति तुल्ययोगे" इति बहुव्रीहि , "वोपसर्जनस्य" इति सहस्य सभाव. । अश्रूयत=श्रुधातो कर्मणि लङ् ॥

❀भाषाऽर्थ❀ घीके गन्धसे युक्त चित्तको हरण करने वाला वायु चारों ओर बहने लगा। पुण्याहशब्दसे युक्त उत्पन्न होता हुआ स्वस्तिवाचनका शब्द सुनाई पड़ा ॥ ५२ ॥

योद्धारोऽबिभरु. शान्त्यै साऽक्षतं वारि मूर्धभिः ।
रत्नानि चाऽददुर्गाश्च समवाञ्छन्नथाऽशिष' ॥ ५३ ॥

अन्वयः—योद्धार शान्त्यै साऽक्षतं वारि मूर्धभि' अबिभरु, रत्नानि गाश्च अददु , अथ आशिष समवाञ्छन् ॥

व्याख्या—योद्धार = भटा , शान्त्यै = शान्त्यर्थं, साऽक्षतन् = अक्षततण्डुलैर्युक्तं, सलाज चेति शेष । वारि = जल, मूर्धभि'=शिरोभि', अबिभरु = धृतवन्त , रत्नानि = मणीन् , गाश्च = धेनूश्च = ,अददु = दत्तवन्त , ब्राह्मणेभ्य इति शेष । अथ = अनन्तरम्, आशिष = आशीर्वादान्, समवाञ्छन् = काङ्क्षितवन्त , ब्राह्मणेभ्य इति शेष ॥

❀व्युत्पत्ति❀ योद्धार =युध्यन्त इति, "युध सम्प्रहारे" इति धातो "ण्वुल्तृचौ" इति तृच्, "झषस्तथोर्धोऽध" इति तस्य धत्वम्। "भटा योधाश्च योद्धार" इत्यमर.। अबिभरु -"डुभृञ् धारणपोषणयो" इति जौहोत्यादिकधातोर्लङ्, "भृञामित्" इतीत्व "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुस्, "जुसि चे"ति गुण। रत्नानि = रत्न मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि चे"त्यमर। अददु.= "डुदाञ् दाने" इति जौहोत्यादिकधातोर्लङ्, पूर्ववज्जुस्। समवाञ्छन् = सपूर्वकात् "वाछि इच्छायाम्" इति धातोर्लङ्॥

❀भाषाऽर्थ❀ राक्षस भटोंने शान्तिके लिए अक्षतयुक्त जलको शिरसे धारण किया, रत्नों और गायोंको ब्राह्मणोंको दिया अनन्तर उनसे आशीर्वादोंकी इच्छाकी॥ ५३॥

अदिहश्चन्दनैः शुभ्रैर्विचित्रं समवस्त्रयन्।
अधारयन् स्रजः कान्ता वर्म चाऽन्येऽदधुर्द्रुतम्॥ ५४॥

**अन्वयः**—( योद्धार ) शुभ्रै. चन्दनै अदिहन्, विचित्र समवस्त्रयन्, कान्ता स्रज अधारयन्। अन्ये वर्म द्रुतम् अदधु॥

**व्याख्या**—शुभ्रै. = शुक्लै, चन्दनै = श्रीखण्डलेपै, अदिहन् = लिप्तवन्त, गात्राणीति शेष योद्धार इति शेष। विचित्र = शोभन यथा तथा, समवस्त्रयन् = समाच्छादितवन्त, कान्ता = रुचिरा, स्रज = पुष्पमाला, अधारयत्=धृतवन्त। अन्ये = अपरे राक्षसा, वर्म = कवच, द्रुत = शीघ्रम्, अदधु = धृतवन्त॥

❀व्युत्पत्ति❀ अदिहन् = "दिह उपचये" इति धातोर्लङ्। समवस्त्रयन् = वस्त्रेण सम्यगाच्छादयन्, वस्त्रपर्यदधत इति वा, "मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्योणिच्" इति "वस्त्रात्समाच्छादने" इति कृञर्थे णिचि लङ्। अधारयन् = "धृञ् धारण" इति धातोर्लङ्, स्वार्थे णिच्। अदधु = "डुधाञ् धारणपोषणयो" इति धातोर्लङ्॥

❀भाषाऽर्थः❀ योद्धाओंने सफेद चन्दनोंसे शरीरोंको लिप्त किया, विचित्र प्रकारसे वस्त्रोंको धारण किया और सुन्दर मालाओंको धारण किया। औरोंने कवचको शीघ्र पहना॥ ५४॥

समक्ष्णुवत शस्त्राणि प्रामृजन् खड्गसंहती.।
गजाऽऽदीनि समारोहन्प्रातिष्ठन्ताऽऽथ सत्वरा॥ ५५॥

**अन्वय**—( योद्धार ) शस्त्राणि समक्ष्णुवत, खड्गसहती प्रामृजन्, गजादीनि समारोहन् अथ सत्वरा प्रातिष्ठन्त॥

**व्याख्या**—शस्त्राणि = आयुधानि, समक्ष्णुवत = निशितानि चक्रु, योद्धार इति शेष, एवं परत्राऽपि। खड्गसंहती = असिसमूहान्, प्रामृजन् = शोधितवन्त।

गजादीनि = हस्त्यादीनि यानानि, "गजादिषु" इति पाठान्तरं, तत्राऽधिकरणत्वं विवक्षितम् । समारोहन् = समारूढा । अथ = अनन्तर, सत्वरा =त्वरायुक्ता सन्त, प्रातिष्ठन्त = प्रस्थिता, युद्धार्थमिति शेष ॥

❀व्युत्पत्ति❀ समक्ष्णुवत = सपूर्वकात् "क्ष्णु तेजने" इति धातोर्लङ्, "समक्ष्णुव" इत्यात्मनेपदम् । खड्गसहती = खड्गाना सहतयस्ता "स्त्रिया तु सहतिर्वृन्द निकुरम्ब कदम्बकम् । इत्यमर । प्रामृजन् = प्रपूर्वकात् "मृजू शुद्धौ इति धातोर्लङ्, "मृजेर्वृद्धि" इत्यत्र "क्ङित्यजादौ वेष्यते" इति वचनात् वृद्ध्यभावे रूपम् । वृद्धौ तु "प्रामार्जन्" इति रूपम् । गजादीनि = गज आदिर्येषा तानि, तानि । प्रातिष्ठन्त = प्रपूर्वकात् स्थाधातोर्लङ् "समवप्रविभ्य स्थ" इत्यात्मनेपदम् ॥

❀भाषाऽर्थ❀ योद्धाओंने अस्त्रोको तीक्ष्ण किया, खड्गसमूहोंको साफ किया, वे हाथी आदि सवारियोंपर चढे और शीघ्रतापूर्वक चल पडे ॥ ५५ ॥

अपूरयन्नभ' शब्दो बलसवर्तसभव. ।
अपूर्यन्त च दिग्भागास्तुमुलैस्तूर्यनिस्वनैः ॥ ५६ ॥

**अन्वयः**—बलसवर्तसंभव शब्दो नभ अपूरयत् । तुमुलै तूर्यनिस्वनै दिग्भागा अपूर्यन्त च ॥

**व्याख्या**—बलसंवर्तसभव. = सैन्यैकीभावोत्पन्न, शब्द = निनाद, नभ = आकाशम्, अपूरयत् = पूरितवान् । तुमुलै = सङ्कुलै,' तूर्यनिस्वनै,=वाद्यघोषै, दिग्भागा = दिशाऽशा, अपूर्यन्त च = पूर्णाश्च ॥

❀व्युत्पत्ति❀ बलसवर्तसभव = बलाना सवर्तो बलसवर्त, तस्मात् सभवो यस्य स इति व्यधिकरणबहुव्रीहि । अपूरयत् = "पूरी आप्यायने" इति चौरादिक-धातोर्लङ् । अपूर्यन्त=पूरीधातो कर्मणि लङ् ॥

❀भाषाऽर्थ❀ सेनाओंके इकट्ठे हो जानेसे उत्पन्न शब्दने आकाशको व्याप्त किया । सङ्कुल वाद्यघोषोंसे दिशाओंके भाग पूर्ण किये गये ॥ ५६ ॥

आसीद्द्वारेषु संघट्टो रथाऽश्वद्विपरक्षसाम् ।
सुमहाननिमित्तैश्च समभूयत भीषणैः ॥ ५७ ॥

**अन्वयः**—द्वारेषु रथाऽश्वद्विपरक्षसा सुमहान् सघट्ट आसीत् । भीषणै अनिमित्तै समभूयत ॥

**व्याख्या**—द्वारेषु = प्रतीहारेषु, लङ्काया इति शेष । रथाऽश्वद्विपरक्षसा = स्यन्दनहयहस्तिराक्षसाना, सुमहान् = अतिप्रभूत, संघट्ट = सम्बाध, मल्लिनाथस्तु "संमर्द" इति पाठमाह, अर्थ स एव । आसीत् = अभूत् । भीषणै = भयङ्करै, अनिमित्तै = अपशकुनै, समभूयत = संभूतम् ॥

॥व्युत्पत्ति॥ रथाऽश्वद्विपरक्षसां = रथाश्च अश्वाश्च द्विपाश्च रक्षांसि च, तेषाम् । "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति परवल्लिङ्गत्वम् । आसीत् = "अस भुवि" इति धातोर्लङ्, "अस्तिसिचोऽपृक्त" इतीट् । समभूयत = सपूर्वकाद्भूधातोर्भावे लङ् ॥

॥भाषाऽर्थ॥ द्वारोंमे रथ, घोड़े, हाथी और राक्षसोंकी बडी भारी भीड़ होगई । भयङ्कर अपशकुन हुए ॥ ५७ ॥

कपयोऽबिभयुस्तस्मिन्नभञ्जश्च महाद्रुमान् ।
प्रोदखायन् गिरींस्तूर्णमगृह्णश्च महाशिलाः ॥ ५८ ॥

अन्वयः—तस्मिन् कपयः अबिभयुः, महाद्रुमान् अभञ्जन्, गिरीन् तूर्णं प्रोदखायन् महाशिलाश्च अगृह्णन् ॥

व्याख्या—तस्मिन्=रावणे, निर्गत इति शेषः । कपयः=वानराः, अबिभयुः= भीताः, महाद्रुमान् = बृहत्तरून्, अभञ्जन् = भग्नवन्तः, गिरीन् = पर्वतान्, तूर्णं = क्षिप्रं, प्रोदखायन् = प्रोत्खातवन्तः, महाशिलाश्च = बृहत्पाषाणाश्च, अगृह्णन् = गृहीतवन्तः ॥

॥व्युत्पत्तिः॥ तस्मिन् = "यस्य च भावेन भावलक्षणम्" इति सप्तमी । अबिभयुः = "ञिभी भये" इति धातोर्लङ्, "सिजभ्यस्तविदिभ्यश्चे"ति झेर्जुसि "जुसि चे"ति गुणे अयादेशः । अभञ्जन् = "भञ्जो आमर्दने" इति धातोर्लङ् । प्रोदखायन् = प्रोत्पूर्वकात् "खै खदने" इति धातोर्लङ्, शपि शित्यात्वाऽभाव आयादेशः । महाशिलाः = महत्यश्च ताः शिला महाशिलास्ताः, "पाषाणप्रस्तरग्रावोपलाऽश्मानः शिला दृषत् ।" इत्यमरः । "आन्महतः समानाऽधिकरणजातीययोः" इत्यात्वम् ॥

॥भाषाऽर्थ॥ रावणके निकलनेपर वानरलोग डर गये । उन्होंने बडे बडे पेड़ोंको तोड़ा, पर्वतोंको शीघ्र उखाड़ा और बड़े बडे पत्थरोंको ले लिया ॥ ५८ ॥

ततः समभवद्युद्धं प्राहरन् कपिराक्षसाः ।
अन्योन्येनाऽभ्यभूयन्त विमर्दमसहन्त च ॥ ५९ ॥

अन्वयः—ततो युद्धं समभवत् । कपिराक्षसाः प्राहरन्, अन्योन्येन अभ्यभूयन्त विमर्दम् असहन्त च ॥

व्याख्या—ततः = अनन्तरं, युद्धं = सङ्ग्रामः, समभवत् = प्रवृत्तम्, कपिराक्षसाः = वानरयातुधानाः, प्राहरन् = प्रहृतवन्तः, अन्योन्येन अभ्यभूयन्त = इतरेतरेण अभिभूताः, कपयो राक्षसैः राक्षसाश्च कपिभिरिति भावः । विमर्दं = प्रहारम्, असहन्त च = सोढवन्तश्च, नाऽश्राम्यन्निति भावः ॥

॥व्युत्पत्तिः॥ युद्धम् = "युद्धमायोधनं जन्यम्" इत्यमरः । प्राहरन् = प्रपूर्वकात्

"हृञ् हरण" इति धातोर्लङ् । अभ्यभूयन्त = अभिपूर्वकात् भूधातोः कर्मणि लङ् । असहन्त = "षह मर्षण" इति धातोर्लङ्, "धात्वादेः ष स" इति षस्य सत्वम् ॥

&&भाषाऽर्थः&& तब युद्ध हुआ, वानर और राक्षसलोग प्रहार करने लगे। वे परस्परमें वानर राक्षसोंसे और राक्षस वानरोंसे अभिभूत किये गये और प्रहारको सहने लगे ॥ ५९ ॥

प्रावर्धत रजो भौमं तद्व्याश्नुत दिशो दश ।
पराऽऽत्मीयविवेकं च प्रामुष्णात्कपिरक्षसाम् ॥ ६० ॥

**अन्वय.**—भौम रज प्रावर्धत। तत् दश दिशो व्याश्नुत, कपिरक्षसा पराऽऽत्मीयविवेक च प्रामुष्णात् ॥

**व्याख्या**—भौम = पार्थिव, रज = धूलि, रथाऽश्वादिक्षोभसंभवेति भावः । प्रावर्धत = प्रवृद्धम् । तत् = रज, दश = दशसख्यका, दिश = आशा, व्याश्नुत= व्याप्नोत्, एव च कपिरक्षसा = वानरयातुधानानां, परात्मीयविवेकच=स्वपरविवेकं च, मल्लिनाथस्तु परात्मीयविभागं चे"ति पाठं स्वीचकार । प्रामुष्णात्=अपनीतवत् ॥

&&व्युत्पत्तिः&& भौमं = भूमेरिद, "तस्येदम्" इत्यण्, "तद्धितेष्वचामादे" इत्यादिवृद्धिश्च । प्रावर्द्धत = प्रपूर्वकात् "वृधु वृद्धौ" इति धातोर्लङ् । व्याश्नुत=व्याङ्पूर्वकात "अशू व्याप्तौ" इति धातोर्लङ् । परात्मीयविवेक = परश्च आत्मीयश्च परात्मीयौ, तयोर्विवेकस्त, विवेक:पृथगात्मतेत्यमर । प्रामुष्णात् = प्रपूर्वकात् "मुष स्तेय" इति क्रैयादिकधातोर्लङ् ॥

&&भाषाऽर्थ&& रथ और घोडे आदियोंके क्षोभसे धूल बढ़ गई। उसने दश दिशाओंको व्याप्त कर दिया और वानरों और राक्षसोंका "यह अपना है और यह पराया है" ऐसे विवेकको हटा दिया ॥ ६० ॥

ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसा ।
अद्विषन्वानराश्चैव वानरेभ्योऽपि निर्दयाः ॥ ६१ ॥

**अन्वय.**—ततो निरालोके राक्षसा स्वेभ्य अन्येभ्यश्च अद्विषु । वानराश्च निर्दया ( सन्त ) वानरेभ्य अपि अद्विषन् ॥

**व्याख्या**—तत = रजोव्यापनात्, निरालोके = प्रकाशरहिते, रण इति शेष । राक्षसा = यातुधाना., स्वेभ्य. = आत्मीयेभ्य, राक्षसेभ्य इति भाव । अन्येभ्यश्च वानरादिशत्रुभ्यश्चेति भाव । अद्विषु = अक्रुध्यन् । एवमेव वानराश्च = कपयश्च, निर्दया = निष्करुणा सन्त, मल्लिनाथस्तु "निर्भया" इति पाठान्तरमाह । वानरेभ्य. = कपिभ्य, आत्मीयेभ्य इति भाव । अपि = अपिशब्दात् राक्षसेभ्यश्च,

अद्विषन् = अक्रुध्यन् , उभयेऽपि ते प्रागेव कोपान्धा अथ रजोन्धाश्चेत्येवमाचरणं युक्तमिति भाव ॥

॥व्युत्पत्ति॥ निरालोके = निर्गत आलोको यस्मात्तस्मिन् । स्वेभ्योऽन्येभ्य = क्रोधार्थकद्विषधातोर्योगे "क्रुधद्रुहेर्ष्यासूयाऽर्थानां य प्रति कोप" इति सम्प्रदानत्वाच्चतुर्थी । अद्विषु ="द्विष अप्रीतौ" इति धातोर्लङ् , आदादिकत्वात् "अदिप्रभृतिभ्य शप" इति शपो लुक् । "द्विषश्चे"त्यनेन शाकटायनमतेन झेर्जुस् । वानरेभ्य = पूर्ववद्द्विषधातोर्योगे "क्रुधे"त्यादिना सम्प्रदानत्वाच्चतुर्थी । अद्विषन्=द्विषधातो शाकटायनेतरमते झोऽन्ताऽऽदिकार्यम् ॥

॥भाषाऽर्थ॥ अनन्तर प्रकाशरहित रणस्थलमे राक्षस आत्मीयों ( राक्षसों ) से और परजनों ( वानर आदियों ) से क्रोध करने लगे । इसी प्रकारसे वानर भी निर्दय होते हुए वानरोंसे और राक्षसोंसे भी क्रोध करने लगे ॥ ६१ ॥

**अघुरस्ते महाघोरमश्च्योतदथ शोणितम् ।**
**समपद्यत रक्तेन समन्तात्तेन कर्दम ॥ ६२ ॥**

**अन्वयः**—अथ ते महाघोरम् अघुरन् शोणितम् अश्च्योतन् । तेन रक्तेन समन्तात् कर्दम समपद्यत ॥

**व्याख्या**—अथ = अनन्तर, ते = हताः, वानरा राक्षसाश्चेति भावः । महाघोरम् = अतिभयङ्कर यथा तथा, अघुरन् = शब्द चक्रु , शोणित = रुधिरम् , अश्च्योतन् = अक्षरत् । तेन = पूर्वप्रतिपादितेन, रक्तेन = रुधिरेण, समन्तात्=सर्वत , कर्दम = पङ्क , शोणितमय इति भाव । समपद्यत = सम्पन्न ॥

॥व्युत्पत्ति॥ अघुरन् = "घुर भीमाऽर्थशब्दयो." इति धातोर्लङ् । शोणित = "रुधिराऽसृग्लोहिताऽस्ररक्तक्षतजशोणितम् ।" इत्यमर । अश्च्योतत् = "श्च्युतिर् क्षरणे" इति धातोर्लङ् । रक्तेन = "हेतौ" इति तृतीया । समपद्यत = सपूर्वकात् "पद गतौ" इति धातो कर्तरि लङ् । मल्लिनाथस्तु "समपाद्यत" इति पाठान्तरमाह, तस्य सम्पादित इत्यर्थः, तत्र पद्यतेर्ण्यन्तात्कर्मणि लङ् ॥

॥भाषाऽर्थ॥ अनन्तर ताडित उन वानर और राक्षसोंने अतिभयङ्कर शब्द किया । लोहू बहने लगा । उस लोहूसे चारों ओर रुधिरमय कीचड़ उत्पन्न हुआ॥६२॥

**गम्भीराः प्रावहन्नद्य समजायन्त च ह्रदाः ।**
**वृद्धं च तद्रजोऽशाम्यत्समवेद्यन्त च द्विष ॥ ६३ ॥**

**अन्वय**—गम्भीरा नद्य. प्रावहन् , ह्रदाश्च समजायन्त । वृद्ध तत् रजश्च अशाम्यत् , द्विषश्च समवेद्यन्त ॥

**व्याख्या**—गम्भीरा = अगाधा , नद्य = रुधिरसरित , प्रावहन् = प्रवृत्ता ,

तेन रक्तेनेति शेष । ह्रदाश्च = रुधिरतडागाश्च, समजायन्त = सजाता । वृद्ध = सम्मृद्धं, तत् = पूर्वोक्त, रजश्च = धूलिश्च, अशाम्यत् = शान्तम् । रज शमनाऽनन्तर च—द्विषश्च = शत्रवश्च, समवेद्यन्त = सज्ञाता , तत स्वपरविवेकलाभाच्छत्रव प्रहता इति भाव ॥

❀व्युत्पत्ति.❀ रज = पाशुर्ना न द्वयो रज " इत्यमर । अशाम्यत् = "शमु उपशम" इति धातोर्लङ् , "शमामष्टाना दीर्घ श्यनि" इति दीर्घत्वम् । समवेद्यन्त = सपूर्वकात् "विद चेतनाख्याननिवासेषु" इति चौरादिकधातो कर्मणि लङ् ॥

❀भाषाऽर्थ ❀ उस रुधिरसे गहरी नदिया बहने लगी, और रुधिरके तालाव भी उत्पन्न हुए । उससे बढी हुई वह धूल शान्त होगई, इस कारणसे शत्रु भी पहचाने गये ॥ ६३ ॥

ततोऽचित्रीयताऽस्त्रौघैर्धनुश्चाऽधूनयन्महत् ।
राम समीहित तस्य नाऽचेतन् स्वे न चाऽपरे ॥ ६४ ॥

अन्वयः—ततो राम शस्त्रौघै अचित्रीयत, महत धनुश्च अधूनयत् । तस्य समीहित स्वे अपरे च न अचेतन् ॥

व्याख्या—तत = अनन्तर, राम = रामचन्द्र , शस्त्रौघै = आयुधसमूहै , अचित्रीयत = चित्रम् ( आश्चर्यम् ) अकरोत्, महत् = बृहत्, धनुश्च = कार्मुक च, अधूनयत् = अधुनोत् । तस्य = रामस्य, समीहित = चेष्टित, शरसन्धानादिरूपमिति भाव । स्वे = आत्मीया , अपरे च = परकीयाश्च, न अचेतन् = नो ज्ञातवन्त , तस्य तादृशहस्तलाघवादिति भाव ॥

❀व्युत्पत्ति ❀ अचित्रीयत = "चित्रङ् आश्चर्ये" इति धातो "नमोवरिवश्चित्रङ क्यच्" इति आश्चर्याऽर्थे क्यच् । ङित्करणात् "अनुदात्तङित आत्मनेपदम्" इत्यात्मनेपदम् । "क्यचि चे"ति ईकार । ततो लङ् । अधूनयत् = "धूञ् कम्पन" इति धातोर्लङ् , "धूञ्प्रीणोर्नुग्वक्तव्य" इति नुक् । अचेतन् = "चिती सज्ञान" इति धातोर्लङ् ॥

❀भाषाऽर्थ ❀ तब रामचन्द्रजीने शस्त्रोंके समुदायोंसे आश्चर्य कर डाला और बडेसे धनुको कम्पित किया । उनकी शरसन्धान आदि चेष्टाको आत्मीयों ( वानर आदि ) और परकीयों ( राक्षस आदि ) ने नही जाना ॥ ६४ ॥

छिन्नानैक्षन्त भिन्नाश्च समन्ताद्रामसायकै. ।
क्रुष्ट हाहेति चाऽशृण्वन्न च रामं न्यरूपयन् ॥ ६५ ॥

अन्वय·—रामसायकै समन्तात् छिन्नान् भिन्नाश्च ऐक्षन्त, हा ! हा !! इति क्रुष्टं च अशृण्वन् राम च न न्यरूपयन् ॥

व्याख्या—रामसायकै = रामचन्द्रबाणै, समन्तात् = सर्वत, छिन्नान् = द्विधाकृतान्, भिन्नाश्च = विदारिताश्च, ऐक्षन्त = अपश्यन्, रणस्था जना इति शेष, एवं परत्राऽपि। हा हा इति क्रुष्ट च = हा हा इति शब्द च, अशृण्वन् = श्रुतवन्त, पर—राम च = राम तु, न न्यरूपयन् = नो निश्चितवन्त, अयमेव चेष्टत इति न निरधारयन्निति भाव ॥

ॐव्युत्पत्ति ॐ रामसायकै = रामस्य सायकै, "शरे खड्गे च सायक." इत्यमरः। क्रुष्टं = क्रोशन क्रुष्ट, तत् "नपुसके भावेक्त" इति भावेक्त। न्यरूपयन् = निपूर्वकात् "रूप व्याक्रियायाम्" इति चौरादिकधातोर्लङ्॥

ॐभाषाऽर्थ ॐ रणभूमिमें स्थित पुरुषोंने रामके बाणोंसे चारों ओर छिन्न और भिन्न पुरुषोंको देखा, हा हा !! ऐसे शब्दको भी सुना परन्तु वे "रामचन्द्रजी ही यह शरसन्धान आदि चेष्टा कर रहे है" ऐसा नही जान सके ॥ ६५ ॥

अभिनच्छत्रुसघातानक्षुणद्वाजिकुञ्जरम्।
अपिनट्च रथाऽनीक न चाऽज्ञायत सचरन्॥ ६६ ॥

अन्वय —( स ) शत्रुसघातान् अभिनत्, वाजिकुञ्जरम् अक्षुणत्; रथाऽनीकम् अपिनट् सञ्चरन् न अज्ञायत ॥

व्याख्या—शत्रुसंघातान् = वैरिसमूहान्, अभिनत् = भिन्नवान्, राम इति शेष। एव परत्राऽपि। वाजिकुञ्जर=हयगजम्, अक्षुणत् = अचूर्णयत्। रथाऽनीक= स्यन्दनसमूहम्, अपिनट् = पिष्टवान्, पर सञ्चरन् = सञ्चरण कुर्वन् राम, न अज्ञायत = नो ज्ञात, तादृक्तस्य सञ्चारलाघवमित्यर्थ ॥

ॐव्युत्पत्ति ॐ अभिनत् = "भिदिर् विदारण" इति रौधादिकधातोर्लङ्, परत्राऽपि धातोरौधादिकत्वमवसेयम्। वाजिकुञ्जर = वाजिनश्च कुञ्जराश्च वाजिकुञ्जर, तत् "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति समाहारद्वन्द्व। अक्षुणत् = "क्षुदिर् सम्पेषण" इति धातोर्लङ्। अपिनट् = "पिष्लृ सचूर्णने" इति धातोर्लङ्। अज्ञायत = "ज्ञा अवबोधन" इति धातो. कर्मणि लङ्॥

ॐभाषाऽर्थ ॐ रामचन्द्रजीने शत्रु समूहोंका विदारण किया, घोड़ों और हाथियों-को चूर चूर किया, रथोंके समूहको पीस डाला परन्तु इस तरह सञ्चरण करते हुए भी आत्मीयों और परोंसे किसीसे भी नही जाने गये ॥ ६६ ॥

युग्मम्—

श्लोकद्वयेन रामस्य हस्तलाघवमाह—

दश दन्तिसहस्राणि रथिना च महाऽऽत्मनाम्।
चतुर्दश सहस्राणि साऽऽरोहाणा च वाजिनाम्॥ ६७ ॥

लक्षे च द्वे पदातीनां राघवेण धनुर्भृता ।
अनीयन्ताष्टमे भागे दिवसस्य परिक्षयम् ॥ ६८ ॥

अन्वयः—धनुर्भृता राघवेण दिवसस्य अष्टमेभागे दश दन्तिसहस्राणि महात्मना रथिना साऽऽरोपाणा वाजिना च चतुर्दश सहस्राणि पदातीना द्वे लक्षे च परिक्षयम् अनीयन्त ॥

व्याख्या—धनुर्भृता = धानुष्केण, राघवेण = रामेण, दिवसस्य = वासरस्य, अष्टमे = अष्टाना पूरणे, भागे = अंशे, अर्धप्रहर इति भाव । दश, दन्तिसहस्राणि= दशहस्तिसहस्राणि, महात्मना = महामनसा, रथिना = रथारूढाना, सारोहाणा = सादिसहिताना, वाजिना च = अश्वाना च, चतुर्दश सहस्राणि = चतुर्दश दशशत्य॰, पदातीना = पत्तीना, द्वे लक्षे च = लक्षद्वितयच, तथा चैते सर्वेऽपि परिक्षय = नाशम्, अनीयन्त = नीता॰ । "अनीयते"ति पाठान्तर, तत्र सर्वमेतदनीयतेति योज्यम् ॥

**ॐव्युत्पत्ति॰ॐ अष्टमे = अष्टाना पूरणे, "तस्य पूरणे डट्" इति डट्, "नान्तादसख्यादेर्मट्" इति मट् । मल्लिनाथस्तु "अष्टभागेने"ति पाठान्तरमाह व्याचख्यौ च "अर्द्धप्रहरेणेत्यर्थ । सख्याशब्दस्य वृत्तिविषये पूरणार्थत्व त्रिभागादिवत्" इति । साऽऽरोहाणाम् = आरोहन्तीति आरोहा, पचाद्यच् । आरोहै॰ सहिता सारोहास्तेषा, "तेन सहेति तुल्ययोग" इति बहुव्रीहि, "वोपसर्जनस्य" इति सहस्य सभाव॰ । पदातीना = पादाभ्यामतन्तीति पदातयस्तेषाम् "अज्यतिभ्या पादे चे"ति इण्प्रत्यय॰, "पादस्य पदाज्यातिगोपहतेषु" इति पादस्य पदादेश । अनीयन्त = "णीञ् प्रापण" इति द्विकर्मकाद्धातो प्रधानकर्मणि लङ् ॥**

**भाषाऽर्थ ॐ धनुर्धारी रामचन्द्रजीने दिनके आठवें भागमे ( आध प्रहरमे ) दशहजार हाथी चौदह हजार मनस्वी रथी और घुड़सवार, सहित घोड़े दो लाख पैदल सेनाये इन सबको नष्ट कर डाला ॥ ६७ ॥ ६८ ॥**

यमलोकमिवाग्रथ्नाद्रुद्राऽऽक्रीडमिवाऽकरोत् ।
शैलैरिवाऽचिनोद्भूमि बृहद्भीराक्षसैर्हतैः ॥ ६९ ॥

अन्वयः ( स ) बृहद्भि हतै राक्षसै भूमि यमलोकम् इव अग्रथ्नात्, रुद्राक्रीडम् इव अकरोत् शैलै इव अचिनोत् ॥

व्याख्या—बृहद्भि =महद्भि, हतै =व्यापादितै, राक्षसै = यातुधानै, भूमि= पृथिवी यमलोकम् इव = अन्तकभुवनम् इव, अग्रथ्नात् = सन्दर्भितवान्, यमलोकमिव अकरोदित्यर्थ राम इति शेष । रुद्राक्रीडम् इव = हरक्रीडास्थानम् इव, श्मशानमिवेति भाव । अकरोत् = कृतवान् । शैलै इव = पर्वतै इव, अचिनोत् = आच्छादितवान् ॥

॥व्युत्पत्ति॥ राक्षसै = रक्षास्येव राक्षसास्तै, स्वार्थेऽण्। अग्रथ्नात् "( ग्रन्थ ) ग्रन्थ सन्दर्भे" इति क्र्यादिस्थधातोर्लङ्। अचिनोत्="चिञ् चयने" इति स्वादिस्थ धातोर्लङ्, "स्वादिभ्य श्नु" इति श्नु। अत्रोत्प्रेक्षात्रयस्य मिथोऽनपेक्षया स्थितेः संसृष्टि ॥

॥भाषाऽर्थ॥ रामचन्द्रजीने मारे गये बडे बडे राक्षसोंसे भूमिको यमलोकके सदृश बनाडाला, श्मशानके सदृश किया और जैसे पर्वतोंसे आच्छादित कर दिया॥६९॥

अस्तुवन्देवगन्धर्वा व्यस्मयन्त प्लवङ्गमा ।
कपीन्द्रेऽतन्यत प्रीति पौलस्त्योऽमन्यताऽद्भुतम् ॥ ७० ॥

अन्वय —देवगन्धर्वा ( तम् ) अस्तुवन्। प्लवङ्गमा व्यस्मयन्त। कपीन्द्र प्रीति अतन्यत। पौलस्त्य अद्भुतम् अमन्यत ॥

व्याख्या—देवगन्धर्वा = सुरतद्गायना, अस्तुवन् = स्तुतवन्त, राममिति शेष। प्लवङ्गमा =वानरा, व्यस्मयन्त=विस्मिता रामविक्रम इति भाव। कपीन्द्रे= वानरराजे, सुग्रीव इति भाव। प्रीति = प्रेम, अतन्यत = विस्तृता, सुग्रीवोऽपि सन्तुष्ट इति भाव। पौलस्त्य =विभीषण, अद्भुतम्=आश्चर्यम्, अमन्यत=ज्ञातवान् ॥

॥व्युत्पत्ति॥ अस्तुवन्="ष्टुञ् स्तुतौ" इति धातोर्लङ्। व्यस्मयन्त = विपूर्वकात् "स्मिङ् ईषद्धसन" इति धातोर्लङ्, ङित्वात् "अनुदात्तङित आत्मनेपदम्" इत्यात्मनेपदम्। स्मिङ्धातोरीषद्धसनाऽर्थत्वेऽपि उपसर्गयोगेन "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।" इति नयेनाऽत्राऽर्थान्तरवाचकत्वम्। अतन्यत="तनु विस्तारे" इति धातो कर्मकर्तरि लङ् ॥

॥भाषाऽर्थ॥ देवता और गन्धर्वोंने रामचन्द्रजीकी स्तुति की। वानरलोग विस्मित हुए। सुग्रीवमें प्रीति विस्तृत हुई। विभीषणने आश्चर्य माना ॥ ७० ॥

राक्षस्य प्रारुदन्नुच्चैः प्राजुगुप्सन्त रावणम् ।
अमुह्यद्बालवृद्धं च समरौदितरो जन ॥ ७१ ॥

अन्वयः—राक्षस्य उच्चै प्रारुदन्, रावण प्राजुगुप्सन्त। बालवृद्धम् अमुह्यत्। इतरो जन समरौत् ॥

व्याख्या—राक्षस्य = राक्षसस्त्रिय, उच्चै = तारस्वर, प्रारुदन्=प्ररुदितवत्य, भर्त्रादिवधदु खेनेति भाव। रावण = दशाऽऽनन, प्राजुगुप्सन्त = अगर्हन्त। बालवृद्ध = शिशुजरठं, मल्लिनाथस्तु "अमुह्यन् बालवृद्धाश्चे"ति पाठान्तर स्वीचकार। अमुह्यत् = अमूर्च्छत्, भयादिति भाव। इतर = राक्षसीबालवृद्धेभ्योऽन्य, जन = लोक, समरौत्=आक्रुष्टवान् ॥

※व्युत्पत्ति※ प्रारुदन् = प्रपूर्वकात् "रुदिर् अश्रुविमोचन" इति धातोर्लङ्, "रुदादिभ्य सार्वधातुके" इतीट् न अहलादित्वात । प्राजुगुप्सन्त = प्रपूर्वकात् "गुपे र्निन्दायाम्" इति धातो "गुप्तिज्किद्भ्य सन्" इति सन्, तदन्ताल्लङि "झोऽन्त" इत्यन्तादेश । बालवृद्ध = बालाश्च वृद्धाश्चेति "सर्वो द्वन्द्वो विभाषयैकवद्भवती"ति नयेन समाहारद्वन्द्वता । अमुह्यत् = "मुह वैचित्ये" इति दैवादिकधातोर्लङ । समरौत् = सपूर्वकात् "रु शब्द" इत्यादादिकधातोर्लङ्, शपो लुक्। "उतो वृद्धिर्लुकि हलि" इति वृद्धि ॥

※भाषाऽर्थ.※ राक्षसियाँ ऊँचे स्वरसे रोने लगी और रावणकी निन्दा करने लगी । लडके और बुड्ढे मूर्च्छित हुए। अन्य जन रोने लगे ॥ ७१ ॥

सर्वतश्चाऽभय प्राप्नोन्नैच्छन्नृभ्यस्तु रावण ।
फलं तस्येदमभ्यायाद्दुरुक्तस्येति चाऽब्रुवन् ॥ ७२ ॥

**अन्वयः**—( अपरे ) "रावण सर्वतश्च अभय प्राप्नोत्, नृभ्यस्तु न ऐच्छत् ; तस्य दुरुक्तस्य इद फलम् अभ्यायात् ।" इति च अब्रुवन् ॥

**व्याख्या**—रावण = दशाऽऽनन, सर्वतश्च = देवादिभ्यश्च, अभयं = भयाऽभावम्, अवध्यत्ववरप्राप्त्यैति भाव. । प्राप्नोत् = प्राप्तवान् । पर नृभ्यस्तु = मनुष्येभ्यस्तु, न ऐच्छत् = न इष्टवान्, अनादरात् ब्रह्मण. सकाशे मनुष्येभ्योऽभय न वव्र इति भाव । तस्य = तादृशस्य, दुरुक्तस्य = दुर्वचनस्य, इद = सन्निकृष्टस्थ, फल = राक्षसविनाशरूप परिणाम, अभ्यायात् = आयातम्, इति च = एव च, अब्रुवन् = अकथयन् अपरे जना इति शेष ॥

※व्युत्पत्तिः※ अभय = भयस्याऽभावोऽभय, तत् "अव्यय विभक्ती" त्यादिना अर्थाऽभावेऽव्ययीभाव । अभ्यायात् = अभ्याङ्पूर्वकात् "या प्रापणे" इति धातोर्लङ् । अब्रुवन् = "ब्रूञ् व्यक्तायां वाचि" इति धातोर्लङ् ॥

※भाषाऽर्थ※ लङ्कावासी और लोगोंने "रावणने देवादियोंसे अभय पा लिया परन्तु अनादरके कारण मनुष्योंसे अभयकी इच्छा नही की, उस दुर्वचनका लङ्का-नाशरूप ऐसा परिणाम आ पडा।" ऐसा भी कहा ॥ ७२ ॥

ततोऽधावन्महाघोरं रथमास्थाय रावण ।
अद्मायत मही गृध्रा समारार्यन्त भीषणा ॥ ७३ ॥

**अन्वयः**—ततो रावणो महाघोर रथम् आस्थाय अधावत् । मही अद्मायत । भीषणा गृध्रा समारार्यन्त ॥

**व्याख्या**—तत = रामपराक्रमाऽनन्तर, रावण = दशाऽऽनन, महाघोरम् =

अतिभयङ्करं, रथं = स्यन्दनम्, आस्थाय = आरुह्य, अधावत् = गतवान्, राम प्रतीति शेष । तस्मिन्समये दुर्निमित्तमाह—अक्ष्मायतेति । मही = पृथिवी, अक्ष्मायत=कम्पिता । भीषणा =भयङ्कराः, गृध्रा =दाक्षाय्या·, समारार्यन्त=अत्यर्थं गता ॥

॥व्युत्पत्ति॥ ततः = तस्मादिति, "पञ्चम्यास्तसिल्" इति तसिलप्रत्ययः । अधावत् = "धावु गतिशुद्ध्योः" इति धातोर्लङ् । अक्ष्मायत = "क्ष्मायी विधूनने" इति धातोर्लङ् । समारार्यन्त = समाङ्पूर्वकात् "ऋ गतौ" इति धातो· "सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्य" इति यङि "यङि चे"ति गुणे "समार्येति" स्थिते "यकारपररेफस्य न द्वित्वनिषेध" "अरार्यते" इति भाष्योदाहरणात्" इति वचनेन रेफसहितस्य यकारस्य द्वित्वेऽभ्यासकार्ये दीर्घे समारार्येति यङन्ताल्लङि तङि शपि "झोन्तः" इत्यन्तादेशे अजादित्वात् "आडजादीनाम्" इत्याडागमे समारार्यन्तेति रूपम् ॥

॥भाषार्थ॥ तदनन्तर रावण अतिभयङ्कर रथपर चढ़कर दौड़ा। उस समय पृथ्वी काँपी और भयङ्कर गृध्र ( गीध ) खूब घूमने लगा ॥ ७३ ॥

मेघाः सविद्युतोऽवर्षंश्चेलक्नोपं च शोणितम् ।
अवान्भीमा नभस्वन्तः प्रारुवन्नशिवा शिवा· ॥ ७४ ॥

अन्वयः—सविद्युतो मेघाश्च चेलक्नोप शोणितम् अवर्षन् । भीमा नभस्वन्त अवान् । अशिवा शिवा· प्रारुवन् ॥

व्याख्या—सविद्युत = तडित्सहिता, मेघाश्च = बलाहकाश्च, चेलक्नोपं = वस्त्रक्लेदनप्रमाणं, शोणितं = रुधिरम्, अवर्षन् = वर्षितवन्त, यावता शोणितेन वस्त्रं सिच्यते तावत्प्रमाण रुधिर वर्षितवन्त इति भाव । भीमा· = भयङ्करा, नभस्वन्त = वायव, अवान्=ववु । अशिवा =अमङ्गला, शिवा =शृगाला, प्रारुवन्=ववाशिरे ॥

॥व्युत्पत्ति॥ चेलक्नोप = चेल क्नोपयित्वा ( सिक्त्वा ) इति, "क्नूयी शब्द उन्दने चे"ति धातोर्ण्यन्तात् "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुगागमे "चेले क्नोपे·" इति णमुल्प्रत्यय·, "कृन्मेजन्त" इत्यव्ययत्वम् । नभस्वन्तः = "नभस्वद्वातपवनपवमानप्रभञ्जना· ।" अवान् = "वा गतिगन्धनयो" इति धातोर्लङ्, "लङः शाकटायनस्यैवे"ति नियमादन्यमते झेर्जुसभावपक्षे "झोऽन्त" इत्यन्तादेशे रूपम् । अशिवा· = अविद्यमान शिव यासां ता·, "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोप·" इति नञ्बहुव्रीहि । शिवा ="स्त्रिया शिवा भूरिमायगोमायुमृगधूर्तकाः ।" प्रारुवन्= प्रपूर्वकात् "रु शब्दे" इति धातोर्लङि रूपम् ॥

॥भाषार्थ॥ बिजलीसे युक्त मेघोंने जितने रुधिरसे वस्त्र भींगता है उतना रुधिर बरसाया । भयङ्कर वायु बहने लगे। अमङ्गलरूप शृगाल रोने लगे ॥ ७४ ॥

आटाट्यताऽवमत्याऽसौ दुर्निमित्तानि संयुगे ।
अधुनोद्धनुरस्त्रौघै प्रौर्णोनूयत विद्विष. ॥ ७५ ॥

**अन्वयः**—असौ दुर्निमित्तानि अवमत्य सयुगे आटाट्यत, धनु अधुनोत् अस्त्रौघै विद्विष प्रौर्णोनूयत ॥

**व्याख्या**—असौ = रावण , दुर्निमित्तानि = अपशकुनानि, अवमत्य=अनादृत्य, सयुगे = संग्रामे आटाटयत = भृशमाटत् , धनु = कार्मुकम् , अधुनोत् = कम्पितवान् , अस्त्रौघै =आयुधसमूहै , विद्विष =शत्रून् , प्रौर्णोनूयत=भृशम् आच्छादयत् ॥

***व्युत्पत्ति*** दुर्निमित्तानि = दुष्टानि निमित्तानि दुर्निमित्तानि, तानि "कुगति प्रादय" इति समास । आटाट्यत = "अट गतौ" इति धातो "सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्य" इति यङि द्वितीयैकाचोद्विर्वचनेऽभ्यासकार्ये यङन्ताल्लङि तङि शबादिकार्ये च अजादित्वात् "आडजादीनाम्" इत्याडागम । अधुनोत् = "धू विधूनने" इति स्वादिस्थधातोर्लङ् । प्रौर्णोनूयत = प्रपूर्वकात् "ऊर्णुञ् आच्छादने" इति धातोर्णुवद्भावात् "सूचिसूत्री"त्यादिना यङ् । "अजादेर्द्वितीयस्ये"ति द्वित्वे "नन्द्रा सयोगादय" इति रेफस्य द्वित्वाऽभाव. । नु शब्दस्य द्वित्वम् । "गुणो यङ्लुको" इत्यभ्यासस्य गुण. "अकृत्सार्वधातुकयोर्दीर्घ" इति दीर्घत्व, ततो यङन्ताल्लङि आत्मनेपदम् , आट्वृद्धिश्च ॥

***भाषाऽर्थ*** रावण अपशकुनोंका अनादर करके रणभूमिमें अतिशय घूमने लगा । उसने धनुको कम्पित किया और अस्त्रसमूहोंसे शत्रुओंको अत्यधिक आच्छादित कर डाला ॥ ७५ ॥

युग्मम्—

व्यनाशयंस्तत' शत्रून् सुग्रीवाऽस्ता महीभृत ।
ततो व्यरसदग्लायदध्यशेत महीतलम् ॥ ७६ ॥
आश्च्योतद्रुधिरं तोयमलषच्चाऽति विह्वलम् ।
अशीयत नृमांसाऽदां बल सुग्रीवबाधितम् ॥ ७७ ॥

**अन्वयः**— तत सुग्रीवाऽस्ता महीभृत शत्रून् व्यनाशयन् । तत सुग्रीवबाधित नृमासादा बलं व्यरसत् , अग्लायत् , महीतलम् अध्यशेत, रुधिरम् आश्च्योतत् , विह्वलं च ( सत् ) तोयम् अलषत् अशीयत च ॥

**व्याख्या**—तत = रावणपराक्रमाऽनन्तरं, सुग्रीवाऽस्ता =सुग्रीवप्रेरिता , महीभृत. = पर्वता , शत्रून् = रिपून् , राक्षसानिति भाव । व्यनाशयन् = हतवन्त । तत = अनन्तरं, सुग्रीवबाधितं = सुग्रीवपीडितं, नृमासादा = नरमासभक्षकाणा, राक्ष-

सानामिति भाव । बल—सैन्य, व्यरसत् = आक्रन्दत् , अग्लायत् = ग्लानि गत, महीतलम् अध्यशेत = भूतले पतित, रुधिर = रक्तम् , आश्च्योतत् = अक्षरत् , विह्वलं च = विक्लव च सत् , तोय = जलम् , अलषत् = अभिललाष, अतृष्यदिति भाव । अशीयत च = अवसन्न च ॥

❀व्युत्पत्ति.❀ सुग्रीवाऽस्ता = सुग्रीवेणाऽस्ता , "अस्ता" इत्यत्र "असु क्षेपण" इति धातोर्निष्ठाया क्तप्रत्यय । व्यनाशयन् = विपूर्वकात् ण्यन्तात् "णश अदर्शन" इति धातोर्लङ् । नृमासादा = नृमासमदन्तीति नृमांसादस्तेषा, 'अदोऽनन्ने" इति विट्प्रत्यय । व्यरसत् = विपूर्वकात् "रस शब्दे" इति धातोर्लङ् । अग्लायत् = "ग्लै ( म्लै ) हर्षक्षय" इति धातोर्लङ् । शिति आत्वाऽभावादायादेश' । महीतलम्=अधि पूर्वकशीङ्धातोर्योगे "अधिशीङ्स्थाऽऽसा कर्मे"ति आधारस्य कर्मत्वम् । आश्च्योतत् = आङ्पूर्वकात् "श्च्युतिर् क्षरणे" इति धातोर्लङ् । अलषत् = "लष कान्तौ" इति धातोर्लङ् , मल्लिनाथस्तु "अभ्यलषत्" इति पाठान्तरमाह । "वा भ्राशभ्लाश-भ्रमुक्रमुक्लमुत्रसित्रुटिलष" इति श्यनो वैकल्पिकत्वात्पक्षे तदभाव । अशीयत = "शद्लृ शातने" इति धातोर्लङ् "शदे शित" इत्यात्मनेपदम् । "पाघ्राध्मास्थाम्ना-दाण्दृश्यर्तिसर्तिशदसदा पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदा " इति शीयादेश' ॥

**❀भाषाऽर्थ ❀ रावणके पराक्रमके अनन्तर सुग्रीवसे फेंके गये पर्वतोंने शत्रुओंको नष्ट किया। अनन्तर सुग्रीवसे पीडित राक्षसोंकी सेना चिल्लाने लगी, ग्लानियुक्त हुई, पृथ्वीपर गिर पडी, लोहू गिराने लगी, विह्वल होती हुई पानी पीनेकी इच्छा करने लगी और अवसन्न हो गई ॥ ७६ ॥ ७७ ॥**

विरूपाक्षस्ततोऽक्रीडत्संग्रामे मत्तहस्तिना ।
मुष्टिनाऽदालयत्तस्य मूर्धानं वानराऽधिप· ॥ ७८ ॥

अन्वय:—ततो विरूपाक्ष सग्रामे मत्तहस्तिना अक्रीडत । वानराऽधिप तस्य मूर्धान मुष्टिना अदालयत् ॥

**व्याख्या**— तत = सुग्रीवविक्रमाऽनन्तरं, विरूपाक्ष = तदाख्य कश्चिद्राक्षस , सग्रामे = युद्धे, मत्तहस्तिना = उत्कटगजेन वाहनेन, अक्रीडत् = क्रीडितवान् , भ्रान्त-वानिति भाव । वानराऽधिप· = कपीश्वर , सुग्रीव इत्यर्थ । तस्य = विरूपाक्षस्य, मूर्धान = शिर , मुष्टिना = सपिण्डिताऽङ्गुलिपाणिना, अदालयत् = विदारितवान् ॥

**❀व्युत्पत्ति ❀ मत्तहस्तिना = हस्तोऽस्याऽस्तीति हस्ती, "अत इनिठनौ" इति नित्ययोगे इनि । मत्तश्चाऽसौ हस्ती, तेन । "मत्ते शौण्डोत्कटक्षीबा." इत्यमर । अदालयत् = "दल विदारण" इति चौरादिकधातोर्लङ् ॥**

ॐभाषाऽर्थ ॐ सुग्रीवके पराक्रम प्रकाशनके अनन्तर विरूपाक्ष नामका राक्षस युद्धमें मत्त हाथी पर चढकर क्रीडा करने लगा। सुग्रीवने उसके शिरको मुक्केसे विदारित कर डाला ॥ ७८ ॥

अचूर्णयच्च यूपाक्षं शिलया तदनन्तरम् ।
सक्रुद्धो मुष्टिनाऽतुभ्नादङ्गदोऽलं महोदरम् ॥ ७९ ॥

अन्वयः—( वानराऽधिप ) तदनन्तर यूपाक्ष शिलया अचूर्णयत् । अङ्गदः संक्रुद्ध ( सन् ) महोदर मुष्टिना अलम् अतुभ्नात् ॥

व्याख्या—तदनन्तर = विरूपाक्षवधाऽनन्तर, यूपाक्ष = तन्नामानं कंचिद्राक्षसं, शिलया = पाषाणेन, अचूर्णयत् = चूर्णितवान् , वानराऽधिप इति शेष । अङ्गद = वालिपुत्र , सक्रुद्ध = सकुपित सन्, महोदर = तदाख्य राक्षस, मुष्टिना = सपिण्डिताङ्गुलिपाणिना, अल = पर्याप्त यथा तथा, अतुभ्नात् = व्यापादितवान् ॥

ॐव्युत्पत्ति ॐ अचूर्णयत् = "चूर्ण सङ्कोचन" इति चौरादिकधातो "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्योणिच्" इति ण्यन्ताल्लङ् । अतुभ्नात् = "( नभ ) तुभ हिंसायाम्" इति क्र्यादिस्थधातोर्लङ्, "क्र्यादिभ्यः श्ना" इति श्नाप्रत्यय ॥

ॐभाषाऽर्थ ॐ सुग्रीवजीने उसके बाद यूपाक्ष नामके राक्षसको पत्थरसे चूर्णकर डाला । अङ्गदने कुपित होते हुए महोदर नामके राक्षसको मुक्केसे पर्याप्त रूपसे मार डाला ॥ ७९ ॥

ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान्वनौकसाम् ।
अगोपायच्च रक्षांसि दिशश्चाऽरीनभाजयत् ॥ ८० ॥

अन्वय —ततो दशग्रीव क्रुद्ध ( सन् ) वनौकसा प्राणान् अकुष्णात् , रक्षांसि अगोपायत् अरींश्च दिश अभाजयत् ॥

व्याख्या—तत = सुग्रीवाऽङ्गदविक्रमप्रकाशनाऽनन्तरं, दशग्रीव = रावण , क्रुद्ध = कुपित. सन् , वनौकसा = वानराणा, प्राणान् = असून् , अकुष्णात्=चकर्ष, रक्षांसि = राक्षसान् , अगोपायत् = अरक्षत , अरींश्च=शत्रूंश्च, वानरादीनिति भाव । दिश = आशा अभाजयत् = प्रहितवान् ॥

ॐव्युत्पत्ति ॐ वनौकसा = वनमोको येषां ते वनौकसस्तेषाम् । अकुष्णात् = "कुष निष्कर्षे" इति क्रैयादिकधातोर्लङ् । अगोपायत् = "गुपू रक्षण" इति धातोः "गुपूधूपविच्छिपणिपनिभ्य आय" इति आयप्रत्यय स्वाऽर्थे ( प्रकृत्यर्थे ), तदन्ताल्लङ् । अभाजयत् = "भज सेवायाम्" इति धातोर्ण्यन्ताल्लङ् ॥

ॐभाषाऽर्थःॐ तब रावणने क्रुद्ध होकर वानरोंके प्राणोंको खींचा, राक्षसोंकी रक्षाकी और शत्रुओंको दिशाओंमे भगाया ॥ ८० ॥

आलोकयत्स काकुत्स्थमधृष्णोद्घोरमध्वनत् ।
धनुरभ्रमयद्भीममभीषयत विद्विषः ॥ ८१ ॥

अन्वय.—स काकुत्स्थम् आलोकयत्, अधृष्णोत्, घोरम् अध्वनत्, भीम धनु॰ अभ्रमयत् विद्विष अभीषयत ॥

व्याख्या—स = रावण, काकुत्स्थ = रामम्, आलोकयत् = अपश्यत्, अधृष्णोत् = धृष्ट स्थित, घोरं = भयङ्करम्, अध्वनत् = ध्वनितवान्, भीमं = भयङ्कर, धनु॰ = कार्मुकम्, अभ्रमयत् = भ्रमितवान्, विद्विष = शत्रून्, अभीषयत = त्रासितवान् ॥

ॐव्युत्पत्ति॰ॐ आलोकयत् = आङ्पूर्वकात् "लोकृ दर्शने" इति धातोर्लङ्। अधृष्णोत् = "ञिधृषा प्रागल्भ्य" इति स्वादिस्थधातोर्लङ्। अध्वनत् = "ध्वन शब्द" इति धातोर्लङ्। अभ्रमयत् = "भ्रमु अनवस्थाने" इति णिजन्ताद्धातोर्लङ्, मान्तत्वात् "मिता ह्रस्व" इति ह्रस्वत्वम्। अभीषयत् = "ञिभी भये" धातोर्णिजन्ताल्लङ् "भीस्म्योर्हेतुभये" इत्यात्मनेपदं "भियो हेतुभयेषुक्" इति षुक् ॥

ॐभाषाऽर्थ॰ॐ रावणने रामचन्द्रजीको देखा। वह ढीठ होकर रहा। उसने भयङ्कर धनु घुमाया और शत्रुओंको त्रास दिया ॥ ८१ ॥

आस्कन्दल्लक्ष्मण बाणैरत्यक्रामच्च त द्रुतम् ।
राममभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभिः ॥ ८२ ॥

अन्वयः—जिष्णु ( स ) लक्ष्मणं बाणै आस्कन्दत्, त द्रुतम् अत्यक्रामत्; रामम् अभ्यद्रवत् इषुवृष्टिभि अस्कुनाच्च ॥

व्याख्या—जिष्णु = जयशील, रावण इति शेष। लक्ष्मणं = रामाऽनुजं, बाणै॰ = शरै॰ आस्कन्दत् = पीडितवान्, तं = लक्ष्मणं, द्रुत=शीघ्रम्, अत्यक्रामत्= अतिक्रान्त, अनन्तरं रामं = रामचन्द्रम्, अभ्यद्रवत्=अभिमुखं गत, इषुवृष्टिभि = बाणवर्षै, अस्कुनाच्च = आवृणोच्च ॥

ॐव्युत्पत्तिःॐ जिष्णुः = जिधातोः "ग्लाजिस्थश्च ग्स्नु." इति ग्स्नुः। आस्कन्दत्= आङ्पूर्वकात् "स्कन्दिर् गतिशोषणयो" इति धातोर्लङ्। अत्यक्रामत् = अतिपूर्वकात् "क्रमु पादविक्षेप" इति धातोर्लङ्, "क्रम॰ परस्मैपदेषु" इति दीर्घत्वम्। अभ्यद्रवत् = अभिपूर्वकात् "द्रु गतौ" इति धातोर्लङ्। इषुवृष्टिभि = इषूणां वृष्टिभिः, "वृष्टिर्वर्षम्" इत्यमर॰। अस्कुनात् = "स्कुञ् आप्रवणे" इति धातोर्लङ्, आप्रवणमावरणम्। "स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्चे"ति श्नात् श्नाप्रत्ययः ॥

ॐभाषाऽर्थॐ जयशील रावणने लक्ष्मणजीको बाणोंसे पीडित किया उनका शीघ्र लङ्घन किया। तब वह रामचन्द्रजीके सम्मुख गया और उसने बाणवृष्टियोंसे उन्हें आच्छादित कर डाला ॥ ८२ ॥

अपौहद्बाणवर्षं तद्भल्लै रामो निराकुलः ।
प्रत्यस्कुनोद्दशग्रीवं शरैराशीविषोपमैः ॥ ८३ ॥

अन्वय—रामो निराकुल ( सन् ) तद् बाणवर्षं भल्लै अपौहत्, आशीविषोपमै शरै दशग्रीव प्रत्यस्कुनोत् ॥

व्याख्या—राम = रामचन्द्र, निराकुल = आकुलतारहित सन्, तत् = पूर्वं रावणप्रहित, बाणवर्ष = शरवृष्टिं, भल्लै = बाणविशेषै अपौहत् = अपाकरोत्, आशीविषोपमै = सर्पसदृशै, दु सहत्वादिति भाव । शरै = बाणै, दशग्रीवं=रावण, प्रत्यस्कुनोत् = प्रत्यावृणोत् ॥

ॐव्युत्पत्तिॐ निराकुल =निर्गत आकुल ( आकुलभाव ) यस्मात्स । अपौहत्= अपपूर्वकात् "ऊह वितर्के" इति धातोर्लङ् उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इति पक्षे परस्मैपदम् । आशीविषोपमै=आशीषु ( दंष्ट्रासु ) विष येषां ते आशीविषा, "आशी स्यादहिदंष्ट्रेऽपी"ति कोश । "आशीविषो विषधरश्चक्री व्याल सरीसृप ।" इत्यमर । आशीविषा उपमा येषा ते आशीविषोपमास्तै । प्रत्यस्कुनोत्=प्रतिपूर्वकात् "स्कुञ् आप्रवण" इति धातोर्लङ्, "स्तन्भिव"त्यादिना श्नु । मल्लिनाथस्तु "प्रत्यस्कुभ्नोत्"इति पाठान्तर प्राह, तत्र "स्कुन्भु आवरणे" इति धातोर्लङ् पूर्वसूत्रेणैव श्नु ॥

ॐभाषाऽर्थॐ रामचन्द्रजीने आकुल न होकर रावणसे प्रेरित उस बाणवृष्टिको भल्ल नाम के बाणविशेषों से हटाया, और सर्पसदृश बाणोंसे रावणको प्रत्याच्छादित कर डाला ॥ ८३ ॥

मण्डलान्याटता चित्रमच्छिन्तां शस्त्रसंहतीः ।
जगद्व्यस्मापयेता तौ न च वीरावसीदताम् ॥ ८४ ॥

अन्वयः—वीरौ तौ चित्रं मण्डलानि आटता, शस्त्रसंहती अच्छिन्ता, जगत् व्यस्मापयेता न च असीदताम् ॥

व्याख्या—वीरौ = शूरौ, तौ = रामरावणौ, चित्रम् = आश्चर्यं यथा तथा, मण्डलानि आटता = चक्रवद्भ्रान्तौ, शस्त्रसहती = परस्पराऽऽयुधसमूहान्, अच्छिन्ता = छिन्नवन्तौ, जगन् = लोकं व्यस्मापयेता = विस्मापितवन्तौ, न च असीदता = न च अवसन्नौ ॥

ॐव्युत्पत्तिॐ चित्र="विस्मयोऽद्भुतमाश्चर्यं चित्रम्" इत्यमरः । आटताम्=

"अट गतौ" इति धातोर्लङ् "आडजादीनाम्" इत्याडागम॰ "आटश्चे"ति वृद्धिश्च। अच्छिन्ता="छिदिर् द्वैधीकरणे" इति रौधादिकधातोर्लङ्। व्यस्मापयेतां=विपूर्वात् स्मिङ्धातोर्ण्यन्ताल्लङि "भीस्म्योर्हेतुभये" इत्यात्मनेपद "नित्य स्मयते" इत्यात्वे पुगागमश्च। असीदता="षद्लृ विशरणगत्यवसादनेषु" इति धातोर्लङ्, "पाघ्राध्मे" त्यादिना सद सीदादेश॰॥

※भाषाऽर्थः※ वीर राम और रावण विचित्र रूपसे चक्रके सदृश घूमने लगे, एक दूसरेके शस्त्रसमूहोंको काटने लगे, लोकको विस्मित करने लगे परन्तु खिन्न नहीं हुए॥ ८४॥

व्योम प्राचिनुतां बाणैः क्ष्मामक्ष्मापयतां गतैः।
अभिन्तां तूर्णमन्योन्य शिक्षाश्चाऽतनुतां मुहुः॥ ८५॥

अन्वय —( तौ ) बाणै॰ व्योम प्राचिनुता, गतै॰ क्ष्माम् अक्ष्मापयता, तूर्णम् अन्योन्यम् अभिन्ता शिक्षाश्च मुहु अतनुताम्॥

व्याख्या—बाणै = शरै॰, व्योम = आकाश, प्राचिनुताम् = आच्छादितवन्तौ, ताविति शेष। एव परत्राऽपि। गतै॰ = गमनै, "हतै"रिति मल्लिनाथसम्मते पाठे रक्ष कपिभि रित्यर्थ। क्ष्मा=पृथिवीम्, अक्ष्मापयता=कम्पितवन्तौ, तूर्णं=क्षिप्रम्, अन्यो॰य = परस्पर अभिन्ता = विदारितवन्तौ, शिक्षाश्च = अभ्यासपाटवानि च, आयुधप्रहार इति शेष। मुहु=वारं वारम् अतनुता=विस्तारितवन्तौ॥

※व्युत्पत्ति※ प्राचिनुतां=प्रपूर्वकात् "चिञ् चयने" इति धातोर्लङ्। क्ष्मा= "क्ष्माऽवनिर्मेदिनी मही"त्यमर॰। अक्ष्मापयता="क्ष्मायी विधूनने" इति धातोर्ण्यन्ताल्लङ, "अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इति पुक् यकारलोपश्च। अभिन्ता="भिदिर् विदारण" इति धातोर्लङ्, तसस्तामादेश "श्नसोरल्लोप" इत्यल्लोप, चर्त्वेन च तकार॰। अतनुता="तनु विस्तार" इति तनादिधातोर्लङ्, "तनादिकृञ्भ्य उ" इति उप्रत्ययः॥

※भाषाऽर्थ※ राम और रावणने बाणोंसे आकाशको आच्छादित कर डाला, अपने गमनोंसे पृथ्वीको कम्पित किया, शीघ्र एकने दूसरेको विदारित किया और आयुधप्रहारमे अभ्यास पाटवोंको वारवार फैलाया॥ ८५॥

समाधत्ताऽऽसुरं शस्त्रं राक्षसः क्रूरविक्रमः।
तदक्षरन् महासर्पान् व्याघ्रसिंहाश्च भीषणान्॥ ८६॥

अन्वय —क्रूरविक्रमो राक्षस आसुरं शस्त्र समाधत्त। तत् भीषणान् महासर्पान् व्याघ्रसिंहाश्च अक्षरत्॥

**व्याख्या**—क्रूरविक्रम = नृशंसपराक्रम, "क्रूरविग्रह" इति मल्लिनाथसम्मते पाठे भयङ्करशरीरो भयङ्करकलहो वेत्यर्थ । राक्षस = यातुधान, रावण इत्यर्थ । आसुरम् = असुरदैवत, शस्त्र = बाण समाधत्त = सन्दधे, धनुषीति शेष । तत् = आसुर शस्त्र, भीषणान् = भयानकान्, महासर्पान् = बृहद्भुजगान्, व्याघ्रसिंहाश्च= शार्दूलमृगेन्द्राश्च, अक्षरन् = असृजदिति भाव ॥

**॥ व्युत्पत्ति ॥ क्रूरविक्रम = क्रूरो विक्रमो यस्य स । आसुरम् = असुरो देवताऽस्येति आसुर, तत् "साऽस्य देवता" इत्यण्। समाधत्त = समाङ्पूर्वकात् "डुधाञ् धारणपोषणयो" इति धातोर्लङ्, श्लौ द्वित्वमभ्यासकार्यं च "श्नाऽभ्यस्तयोरात" इत्याकारलोप "दधस्तथोश्चे"ति भष्भाव· "अध" इति प्रतिषेधात् "झषस्तथोर्धोऽध" इति तकारस्य धत्व न ॥**

**॥ भाषाऽर्थ ॥ क्रूर पराक्रमवाले राक्षस ( रावण ) ने असुर देवतावाले शस्त्रका धनुमे सन्धान किया। उस शस्त्रने भयङ्कर बडे बडे सर्प और व्याघ्र तथा सिंहोंको भी प्रकट किया ॥ ८६ ॥**

> न्यषेधत् पावकाऽस्त्रेण रामस्तद्राक्षसस्तत· ।
> अदीव्यद्रौद्रमत्युग्र मुसलाऽऽद्यगलत्तत· ॥ ८७ ॥

**अन्वयः**—राम तत् पावकाऽस्त्रेण न्यषेधत् । ततो राक्षस अत्युग्रं रौद्रम् अदीव्यत्, ततो मुसलादि अगलत् ॥

**व्याख्या**—राम = रामचन्द्र, तत् = रावणप्रहितमासुर शस्त्र, पावकाऽस्त्रेण= आग्नेयाऽस्त्रेण, न्यषेधत् = निषिद्धवान्, न्यवारयदिति भाव तत = आसुराऽस्त्रनिवारणाऽनन्तर, राक्षस = रावण, अत्युग्रम् = अतिभयङ्कर, रौद्र = रुद्रदैवतमस्त्रम्, अदीव्यत्=व्यवहृतवान्, प्रयुक्तवानित्यर्थ· । तत =तस्मात्, रौद्राऽस्त्रादिति भाव । मुसलादि = मुसलाद्यनेकशस्त्रम्, अगलत् = निर्गतम् ॥

**॥ व्युत्पत्ति ॥ पावकाऽस्त्रेण = पावकदैवतमस्त्रं पावकाऽस्त्र, तेन "शाकपार्थिवादीना सिद्धय उत्तरपदलोपस्योपसख्यानम्" इति मध्यमपदलोपी समास· । न्यषेधत् = निपूर्वकात् "षिध गत्याम्" इति धातोर्लङ् "प्राक्सितादड्व्यवायेऽपि" इति षत्वम् । उपसर्गेण धातोरर्थान्तरत्वम् । रौद्र = रुद्रो देवताऽस्येति रौद्र तत्, अण्प्रत्यय· । अदीव्यत् = "दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्न कान्तिगतिषु" इति धातो र्व्यवहाराऽर्थे लङ् "हलि चे"ति दीर्घत्वम्। अगलत्= "गल अदन" इति धातोर्लङ् ' धातोरनेकार्थत्वादत्र गलिर्निर्गलनेर्थे ॥**

**॥ भाषाऽर्थ ॥ रामचन्द्रजीने रावणसे प्रेरित उस आसुराऽस्त्रको आग्नेयाऽस्त्रसे**

निवारित किया। तब रावणने अतिभयङ्कर रौद्र अस्त्र छोडा, उससे मुसल आदि अनेक अस्त्र निकले ॥ ८७ ॥

गान्धर्वेण न्यविध्यत्तत् क्षितीन्द्रोऽथ नराऽशनः ।
सर्वमर्मसु काकुत्स्थमौम्भत्तीक्ष्णैः शिलीमुखैः ॥ ८८ ॥

अन्वयः—क्षितीन्द्र तत् गान्धर्वेण न्यविध्यत्। अथ नराशन तीक्ष्णै शिलीमुखै काकुत्स्थ सर्वमर्मसु औम्भत् ॥

व्याख्या—क्षितीन्द्र = राम, तत् = रावणप्रेरितं रौद्राऽस्त्रं, गान्धर्वेण = गन्धर्वाऽस्त्रेण, न्यविध्यत् = ताडितवान्, न्यवारयदित्यर्थ । अथ = रौद्राऽस्त्रनिवारणाऽनन्तर, नराशन =मनुष्यभक्षक, रावण इति भाव । तीक्ष्णै =निशितै, शिलीमुखै = बाणै, काकुत्स्थ = रामं, सर्वमर्मसु = सकलमर्मस्थानेषु, औम्भत् = अपूरयत् ।

ॐव्युत्पत्ति.ॐ गान्धर्वेण =गन्धर्वो देवताऽस्येति गान्धर्वं, तेन "साऽस्य देवता" इत्यण्। न्यविध्यत् = निपूर्वात् "व्यध ताडने" इति धातोर्लङ् "ग्रहिज्यावयिव्यधी" त्यादिना सम्प्रसारणम् । नराशन. = नरान् अश्नातीति, "कृत्यल्युटो बहुलम्" इत्यत्र बहुलग्रहणसामर्थ्यात्कर्तरि ल्युट्। औम्भत् = "उम्भ पूरणे" इति तौदादिकधातोर्लङ्, आड्वृद्धिः ॥

ॐभाषाऽर्थॐ रामचन्द्रजीने रावणसे प्रेरित उस रौद्राऽस्त्रको गन्धर्वाऽस्त्रसे निवारित किया। तब रावणने तीखे बाणोंसे रामचन्द्रजीके सपूर्ण मर्म स्थानोंमे पूर्ण कर दिया ॥ ८८ ॥

ततस्त्रिशिरसं तस्य प्रावृश्चल्लक्ष्मणो ध्वजम् ।
अमथ्नात्सारथिं चाऽऽशु भूरिभिश्चाऽतुदच्छरैः ॥ ८९ ॥

अन्वय—ततो लक्ष्मण तस्य त्रिशिरस ध्वज प्रावृश्चत, सारथिम् अमथ्नात्, भूरिभि शरै आशु अतुदत् ॥

व्याख्या—तत. = रावणविक्रमाऽनन्तर, लक्ष्मण = रामाऽनुज, तस्य = रावणस्य, त्रिशिरसं = त्रिशिख, त्रिशूलाग्रमिति भाव । ध्वज = पताका, प्रावृश्चत् = छिन्नवान्, सारथिं = रावणसूतम्, अमथ्नात् = जघानेति भाव । भूरिभि = प्रचुरै, शरै =बाणै, आशु=शीघ्रम्, अतुदत्=व्यथितवान्, रावण मिति शेष ॥

ॐव्युत्पत्ति ॐ त्रिशिरस =त्रीणि शिरासि यस्मिन् स त्रिशिरास्तम् । प्रावृश्चत् = प्रपूर्वकात् "ओव्रश्चू छेदन" इति तौदादिकधातोर्लङ्। अमथ्नात् = "मन्थ विलोडन" इति क्र्यादिस्थधातोर्लङ्। अतुदत् = "तुद व्यथन" इति धातोर्लङ् । "तुदादिभ्यः श" इति शप्रत्यय. । लघूपधगुण बाधित्वा नित्यत्वात् शे कृते तस्य अपित्वात् "सार्वधातुकमपित्" इति ङित्वात् "क्ङिति चे"ति गुणनिषेध. ॥

❀भाषाऽर्थः❀ तब लक्ष्मणजीने अग्रभागमें त्रिशूलके चिह्नवाले रावणके ध्वजको काट डाला, रावणके सारथिको मारा और प्रचुर बाणोंसे रावणको भी शीघ्र पीडित किया ॥ ८९ ॥

अश्वान् विभीषणोऽतुभ्नात्स्यन्दनं चाऽक्षिणोद्द्रुतम् ।
नाऽक्षुभ्नाद्राक्षसो भ्रातुः शक्तिं चोदवृहद्गुरुम् ॥ ९० ॥

अन्वय—विभीषण अश्वान् अतुभ्नात्, स्यन्दन च द्रुतम् अक्षिणोत्। राक्षसो न अक्षुभ्नात्, भ्रातु गुरु शक्तिम् उदवृहत् ॥

व्याख्या—विभीषण = रावणाऽनुज, अश्वान् = रावणरथहयान्, अतुभ्नात् = हतवान्, स्यन्दन च = रावणरथं च, द्रुत = शीघ्रम्, अक्षिणोत् = बभञ्जेति भाव। राक्षस = यातुधान, रावण इति भाव। न अक्षुभ्नात् = क्षोभं न गत, भ्रातु = विभीषणस्य, कृते इति शेष। गुरु = गुर्वी, 'शक्तिं = कासूम्' उदवृहत् = उद्यतवान् ॥

❀व्युत्पत्तिः❀ अतुभ्नात् = "(नभ) तुभ हिंसायाम्" इति क्र्यादिधातोर्लङ्। अक्षिणोत् = "क्षिणु हिंसायाम्" इति तनादिधातोर्लङ्। "तनादिकृञ्भ्य उ." इति उप्रत्यये गुण। अक्षुभ्नात् = "क्षुभ सञ्चलन" इति क्र्यादिधातोर्लङ्। गुरु = "वोतो गुणवचनात्" इति ङीषो वैकल्पिकत्वात् पक्षे तदभाव। उदवृहत् = उत्पूर्वकात् "वृहू उद्यमने" इति तौदादिकधातोर्लङ् ॥

❀भाषाऽर्थ❀ विभीषणने रावणके घोडों को मार डाला, रथको भी शीघ्र तोड़ डाला। रावण क्षुब्ध नहीं हुआ और उसने भाई को मारनेके लिए बडी सी शक्ति उठाई ॥ ९० ॥

युग्मम्—

तामापतन्तीं सौमित्रिस्त्रिधाऽकृन्तच्छिलीमुखैः ।
अशब्दायन्त पश्यन्तस्ततः क्रुद्धो निशाचरः ॥ ९१ ॥
अष्टघण्टां महाशक्तिमुदयच्छन् महत्तराम् ।
रामाऽनुजं तयाऽविध्यत्स महीं व्यसुराश्रयत् ॥ ९२ ॥

अन्वय—सौमित्रि आपतन्ती ता शिलीमुखैं त्रिधा अकृन्तत्। पश्यन्त अशब्दायन्त। तत निशाचर क्रुद्ध (सन्) अष्टघण्टा महत्तरा महाशक्तिम् उदयच्छत्। तया रामाऽनुजम् अविध्यत्। स व्यसु (सन्) महीम् आश्रयत् ॥

व्याख्या—सौमित्रि = लक्ष्मण, आपतन्तीम् = आयान्ती, विभीषणोपरीति शेष, ता = शक्ति, शिलीमुखै = बाणै, त्रिधा = खण्डत्रयेण, अकृन्तत् = छिन्न-

वान् । तत• पश्यन्त = तत्कर्म प्रेक्षमाणा जना•, अशब्दायन्त = शब्द कृतवन्त । तत = शक्तिकृन्तनाऽनन्तर, निशाचर = राक्षस, रावण इति भाव । क्रुद्ध = कुपित सन्, अष्टघण्टा = घण्टाऽष्टकोपेता, महत्तरा = महाप्रमाणा, महाशक्ति = बृहत्कासूम्, उदयच्छत् = उद्यतवान्, तया = महाशक्त्या, रामाऽनुज = लक्ष्मणम्, अविध्यत् = विद्धवान् । •स = लक्ष्मण, व्यसु = विगतप्राण सन्, मही = आश्रयत् = पृथिवीम्, आश्रित, मह्या पपातेति भाव ॥

※व्युत्पत्ति※ सौमित्रि• = सुमित्राया अपत्य पुमान्, "बाह्वादिभ्यश्चे"ति इञ्। त्रिधा = त्रिभि• प्रकारै, "सख्याया विधाऽर्थे धा" इति धाप्रत्यय । अकृन्तत् = "कृती छेदन" इति तुदादिधातोर्लङ्, "शे मुचादीनाम्" इति नुम् । अशब्दायन्त = "शब्दवैरकलहाऽभ्रकण्वमेघेभ्य• करणे" इति करोत्यर्थे क्यङ्, तदन्तात्तङ् । ङित्त्वा• दात्मनेपदम् । निशाचर = निशासु चरतीति, "चरेष्ट" इत्यधिकरण उपपदे टप्रत्यय• । अष्टघण्टाम् = अष्टौ घण्टा यस्या साऽष्टघण्टा, ताम् । महत्तराम् = अतिशयेन महती महत्तरा, ताम् "द्विवचनविभज्योपपदे तरबीयसुनौ" इति तरप्प्रत्यय । उदयच्छत् = उत्पूर्वकात् "यमु उपरम" इति धातोर्लङ् "इषुगमियमा छ" इति छ । अकर्त्रभिप्रा• यत्वात् "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपद न । रामाऽनुज = राममनुजातवा• निति रामानुजस्तम्, "अनौ कर्मणि" इति ड• । अविध्यत् = "व्यध ताडने" इति धातोर्लङ्, "ग्रहिज्यावयिव्यधी" त्यादिना सम्प्रसारणम् । व्यसु• = विगता असवो यस्मात्स । आश्रयत् = आङ्पूर्वकात् "श्रिञ् सेवायाम्" इति धातोर्लङ् ॥

※भाषाऽर्थ※ लक्ष्मणजीने विभीषणके ऊपर आ पड़ती हुई उस शक्तिके तीन टुकड़े कर दिये । उस कर्मको देखने वाले शब्द करने लगे । तब रावणने क्रुद्ध होकर आठ घण्टाओंसे युक्त बडी भारी शक्ति उठाई । उससे लक्ष्मणको विद्ध किया । तब निष्प्राण हो कर लक्ष्मणजी जमीन पर गिरपड़े ॥ ९१ ॥ ९२ ॥

राघवस्याऽभृशायन्त सायकास्तैरुपद्रुत• ।
ततस्तूर्णं दशग्रीवो रणक्ष्मां पर्यशेषयत् ॥ ९३ ॥

**अन्वयः**—राघवस्य सायका अभृशायन्त । तत तै उपद्रुतो दशग्रीव तूर्णं रणक्ष्मा पर्यशेषयत् ॥

**व्याख्या**—राघवस्य = रामस्य, सायका = बाणा, अभृशायन्त = शीघ्रगतयो जाता इति भाव । तत• = अनन्तर, तै = सायकै, उपद्रुत = पीडित, दशग्रीव = रावण, तूर्णं = क्षिप्र, रणक्ष्मा युद्धभूमि, पर्यशेषयत् = शेषयति स्म, आत्मपलायनेन तामेव शेषितवानित्यर्थ•, त्यक्तवानिति भाव ॥

※व्युत्पत्ति•※ अभृशायन्त = अभृशा भृशा अभवन्, "भृशादिभ्यो भुव्यच्वेर्लो•

पश्च हल" इति च्व्यर्थे क्यङन्ताल्लङ् । पर्यशेषयत् = परिपूर्वकात् "शिष असर्वोपयोगे" इति चौरादिकधातोर्लङ् ॥

ॐभाषाऽर्थ ॐ तब रामके बाण शीघ्रगतिवाले हो गये। उसके अनन्तर उन बाणोंसे पीडित हो कर रावणने युद्ध भूमिको शीघ्र छोड दिया ॥ ९३ ॥

सस्फुरस्योदकर्षच्च सौमित्रेः शक्तिमग्रज ।
असिञ्चदोषधीस्ता याः समानीता हनूमता ॥ ९४ ॥

अन्वयः—अग्रज सस्फुरस्य सौमित्रे शक्तिम् उदकर्षत्, या हनूमता समानीता ता ओषधी असिञ्चत् ॥

व्याख्या—अग्रज = ज्येष्ठभ्राता, राम इत्यर्थ । सस्फुरस्य = उच्छ्वसत, अन्तर्लीनप्राणस्येति भाव । सौमित्रे = लक्ष्मणस्य, शक्ति = कासू, हृदयलग्नामिति भाव. । उदकर्षत् = उद्धृतवान् । मल्लिनाथस्तु "अस्फुरत्" इति पाठान्तर प्राह तत्र सौमित्रे अग्रज अस्फुरत् = अचेष्टतेत्यर्थ । या = ओषध्य , हनूमता = पवनतनयेन, समानीता = आहृता , ता = तादृशी , ओषधी = औषधान् , मृतसञ्जीविनीप्रमुखानिति भाव । असिञ्चत् = अक्षरत् , व्रणेषु इति भाव ॥

ॐव्युत्पत्ति ॐ सस्फुरस्य = स्फुरतीति स्फुर अन्तःस्फुरन्प्राणवायु । "इगुपधज्ञाप्रीकिर क" इति कप्रत्यय । स्फुरेण सहित सस्फुरस्तस्य, "तेन सहेति तुल्ययोगे" इति बहुव्रीहि , "वोपसर्जनस्य" इति सहस्य सादेश । असिञ्चत् = "षिच क्षरणे" इति धातोर्लङ् "शे मुचादीनाम्" इति नुम् ॥

ॐभाषाऽर्थ ॐ ज्येष्ठ भ्राता रामचन्द्रजीने अन्तर्लीन प्राणवाले लक्ष्मणके हृदयमें लगी हुई शक्तिको निकाल डाला। हनूमानूजी जिनको ले आये थे मृतसञ्जीविनी आदि उन औषधोंको लक्ष्मणजीके व्रणस्थानोंमे रामचन्द्रजीने सेचन किया ॥ ९४ ॥

उदजीवत् सुमित्राभूर्भ्राताऽऽश्लिष्यत्तमायतम् ।
सम्यङ्मूर्धन्युपाशिङ्घदपृच्छच्च निरामयम् ॥ ९५ ॥

अन्वय —सुमित्राभू उदजीवत् । भ्राता तम् आयतम् आश्लिष्यत् ; मूर्द्धनि सम्यक् उपाशिङ्घत् निरामय च अपृच्छत् ॥

व्याख्या—सुमित्राभू = सौमित्रि , लक्ष्मण इत्यर्थ , पराजितत्वान्मातृसम्बन्धेन व्यपदेशो बोध्य । उदजीवत्=उज्जीवित ओषधीसेचनसमकालमेवेति भाव । भ्राता = राम , त = लक्ष्मणम् , आयत = दीर्घकाल यथा तथा, आश्लिष्यत्=आलिङ्गितवान् , मूर्द्धनि = शिरसि, सम्यक् = यथाशास्त्रम् , उपाशिङ्घत् = आजिघ्रत् , निरामय च=आमयाऽभाव च, व्यथाशान्ति चेति भाव । अपृच्छत्=पृष्टवान् ॥

*व्युत्पत्ति* सुमित्राभू = सुमित्राया भवतीति । उदजीवत् = उत्पूर्वकात् "जीव प्राणधारण" इति धातोर्लङ् । आश्लिष्यत् = आङ्पूर्वकात् "श्लिषआलिङ्गन" इति धातोर्लङ् । मूर्द्धनि = "विभाषा ङिश्यो" इत्यल्लोपाऽभावपक्षे रूपम् । अल्लोपपक्षे "मूर्ध्नि" इति रूपम् । उपाशिङ्घत् = उपाङ्पूर्वकात् "शिघि आघ्राण" इति धातोर्लङ् ॥

*भाषाऽर्थ* लक्ष्मण जी उज्जीवित हो गये । भाई रामचन्द्रजीने उन्हें दीर्घ कालतक आलिङ्गन किया, शिरमें शास्त्रके अनुसार सूँघा और कुशल प्रश्न भी किया॥९५॥

ततः प्रोदसहन् सर्वे योद्धुमभ्यद्रवत् परान् ।
अकृच्छ्रायत च प्राप्तो रथेनाऽन्येन रावणः ॥ ९६ ॥

अन्वय.—तत सर्वे योद्धुं प्रोदसहन् । रावण अन्येन रथेन प्राप्त परान् अभ्यद्रवत् अकृच्छ्रायत च ।

व्याख्या—तत = लक्ष्मणोज्जीवनाऽनन्तरं, सर्वे = रामाऽऽदय , योद्धुं = युद्धं कर्तुं, प्रोदसहन् = प्रोत्सेहिरे । रावण = दशानन , अन्येन = अपरेण, रथेन = स्यन्दनेन, प्राप्त = आसादित सन् , परान् = शत्रून् , उत्सहत इति भाव । "हरीन्" इति मल्लिनाथसम्मत पाठस्तस्य वानरानित्यर्थ । अभ्यद्रवत् = अभिमुख गत·, अकृच्छ्रायत च = कृच्छ्राय ( पापाय ) अक्रामच्च, हन्तु प्रवृत्तश्चेति भाव· ॥

*व्युत्पत्ति* प्रोदसहन् = प्रोत्पूर्वकात् "षह मर्षणे" इति चौरादिकात् परस्मैपदिनो धातो "आधृषाद्वे"ति णिजभावपक्षे लङ् । भौवादिकात्तु धातोरात्मनेपदमेवेति पूर्वे व्याख्यातार । भट्टमल्लस्तु—"तितिक्षतेऽधि कुरुते क्षान्तौ सहति सह्यति । मृष्यत्यामर्षति चेति आत्मनेऽपि चतुष्टयम् ॥" इत्याचष्टेति मल्लिनाथः । अभ्यद्रवत् = अभिपूर्वकात् "द्रु गतौ" इति धातोर्लङ् । अकृच्छ्रायत = "कष्टाय क्रमण" इत्यत्र "सत्रकक्षकष्टकृच्छ्रगहनेभ्य· कण्वचिकीर्षायामिति वक्तव्यम्" इति क्यङन्तात्कृच्छ्रायधातोर्लङ् । कण्वम् = पापमित्यर्थ ॥

*भाषाऽर्थ* लक्ष्मणजीके जीनेके अनन्तर रामचन्द्र आदि सब लोगोंने युद्ध करने के लिए उत्साह किया । रावण दूसरे रथसे आकर उत्साह करने वाले शत्रुओंके सम्मुख गया और उन्हें मारने के लिए प्रवृत्त हुआ ॥ ९६ ॥

भूमिष्ठस्याऽसम युद्ध रथस्थेनेति मातलिः ।
आहरद्रथमत्युग्र सशस्त्र मघवाऽऽज्ञया ॥ ९७ ॥

अन्वय.—भूमिष्ठस्य रथस्थेन युद्धम् असमम् इति मघवाऽऽज्ञया मातलि· अत्युग्र सशस्त्र रथम् आहरत् ॥

व्याख्या—भूमिष्ठस्य = भूस्थितस्य, रामस्येति भाव· । रथस्थेन = स्यन्दनस्थितेन, रावणेन सहेति भावः । युद्धं = सग्रामः, असमम् = अतुल्यम् , अयुक्तमित्यर्थ· ।

इति = एवम्, निरूप्य इति शेष । मघवाऽऽज्ञया = इन्द्राऽऽदेशेन, मातलिः = इन्द्र-सारथि, अत्युग्रम् = अतिभीषण, रथं = स्यन्दनम्, आहरत् = आनयत् ॥

❀व्युत्पत्ति❀ भूमिष्ठस्य = भूमौ तिष्ठतीति भूमिष्ठस्तस्य, "सुपि स्थ" इति कप्रत्यय "अम्बाऽऽम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थ" इति मूर्धन्यत्वे ष्टुत्वम्। रथस्थेन = रथे तिष्ठतीति, तेन, पूर्ववत्कः। मघवाऽऽज्ञया = मघोन आज्ञा मघवाऽऽज्ञा, तया। "वासवाऽऽज्ञया" इति मल्लिनाथसम्मत पाठ। सशस्त्र = शस्त्रैः सहित सशस्त्रस्तम् ॥

❀भाषाऽर्थ❀ भूमिस्थित रामचन्द्रजीका रथस्थित रावणसे युद्ध अनुचित है ऐसा विचार कर इन्द्रकी आज्ञासे मातलि अति भयङ्कर तथा शस्त्रोंसे युक्त रथ ले आये ॥ ९७ ॥

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपत तत॰ ।
निरास्यत दशाऽऽस्यस्तच्छक्राऽस्त्रेणाजयन् नृप॰ ॥ ९८ ॥

**अन्वय.**—स रामेण अध्यष्ठीयत्। ततो दशाऽऽस्यः पाशुपतं शस्त्रं निरास्यत। नृप॰ तत् शक्राऽस्त्रेण अजयत् ॥

**व्याख्या**—स = मातल्याहृतोरथ, रामेण = रामचन्द्रेण, अध्यष्ठीयत = अधिष्ठित । तत = रामकर्तृकरथाऽधिष्ठानाऽनन्तरं, दशाऽऽस्य = रावण, पाशुपतं = पशुपतिदैवत, शस्त्रम् = आयुध, निरास्यत = क्षिप्तवान्। नृप = राजा, राम इत्यर्थ॰। तत्=दशाऽऽस्यनिरस्त पाशुपताऽस्त्र, शक्राऽस्त्रेण=इन्द्रास्त्रेण, अजयत्=जितवान् ॥

❀व्युत्पत्ति❀ अध्यष्ठीयत = अधिपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातो कर्मणि लङ्। "घुमास्थागापाजहातिसा हलि" इत्यात ईत्वम् "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इत्यनेन "प्राक्सितादड्व्यवायेऽपी"ति नियमेनाड्व्यवायेऽपि षत्वम् । पाशुपत = पशुपतिर्देवताऽस्येति पाशुपत, तत् "साऽस्य देवता" इत्यण्। निरास्यत = निरुपसर्गपूर्वकात् "असु क्षेपण" इति धातोर्लङ्, "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इत्यात्मनेपदम्। शक्राऽस्त्रेण = शक्रदैवत शस्त्र शक्राऽस्त्र, तेन, मध्यमपदलोपी समास॰ ॥

❀भाषाऽर्थ❀ रामचन्द्रजी मातलिसे लाये गये उस रथपर आरूढ हुए। तब रावणने पाशुपत शस्त्रको छोडा। राजा रामने उस शस्त्रको इन्द्राऽस्त्रसे जीत लिया॥९८॥

तत शतसहस्रेण रामः प्रौर्णोन्निशाचरम् ।
बाणानामक्षिणोद्धुर्यान् सारथिं चाऽदुनोद्द्रुतम् ॥ ९९ ॥

**अन्वय**—ततो रामो बाणाना शतसहस्रेण निशाचर प्रौर्णोत्, धुर्यान् अक्षिणोत् सारथिं च द्रुतम् अदुनोत् ॥

**व्याख्या**—तत = पाशुपताऽस्त्रजयाऽनन्तरं, रामः = रामचन्द्र , बाणाना = शराणा, शतसहस्रेण = लक्षेण, निशाचर = राक्षसराज रावण प्रौर्णोत् = आच्छादयत्, धुर्यान्=रथाऽश्वान् , अक्षिणोत् = हतवान् , सारथि च=सूतं च, द्रुत = शीघ्रम् , अदुनोत् = उपतापितवान् ॥

**ॐव्युत्पत्ति ॐ** शतसहस्रेग = शतानां सहस्र शतसहस्र, तेन । प्रौर्णोत् = प्रपूर्वकात "ऊर्णुञ् आच्छादन" इति धातोर्लङ् "गुणोऽपृक्त" इति गुण । धुर्यान् = धुरं वहन्तीति धुर्यास्तान् , "धुरो यड्ढकौ" इति यत् । अक्षिणोत् = "क्षिणु हिंसायाम्" इति तनादेर्धातोर्लङ् । अदुनोत् = "टुदु उपतापे" इति स्वादिस्थधातोर्लङ् ॥

**ॐभाषाऽर्थ ॐ** तब रामचन्द्रजीने लाख बाणों से राक्षसराज रावणको आच्छादित कर डाला, उसके रथके घोड़ोंको मारा और सारथिको भी शीघ्र पीडित कर दिया॥९९॥

अदृश्यन्ताऽनिमित्तानि प्राह्वलत्क्षितिमण्डलम् ।
रावण प्राहिणोच्छूल शक्तिं चैन्द्रीं महीपति ॥ १०० ॥

**अन्वय'**—अनिमित्तानि अदृश्यन्त ।' क्षितिमण्डल प्राह्वलन् । रावण शूल, महीपतिश्च ऐन्द्रीं शक्तिं प्राहिणोत् ॥

**व्याख्या**—अनिमित्तानि = अशकुनानि, अदृश्यन्त = दृष्टानि, रावणस्याऽग्र इति शेष । क्षितिमण्डल = भूगोल, प्राह्वलत् = चलितम् । रावण॰ = दशाऽऽनन , शूलं = ब्रह्मदत्तमायुधविशेष, महीपतिश्च = भूपश्च, रामश्चेति भाव । ऐन्द्रीम् = इन्द्र देवताम् इन्द्रप्रदत्ता वा, शक्तिं = कासू, प्राहिणोत् = प्रायुङ्क्त ॥

**ॐव्युत्पत्ति ॐ** अदृश्यन्त=दृशधातो कर्मणि लङ् । प्राह्वलत् = प्रपूर्वकात् "ह्वल-चलने" इति धातोर्लङ् । प्राहिणोत् = प्रपूर्वकात् "हि गतौ" इति स्वादिस्थधातोर्लङ् "हिनुमीना" इति णत्वम् ॥

**ॐभाषाऽर्थ ॐ** रावणके आगे अशकुन देखे जाने लगे । भूमण्डल डोलने लगा । रावणने ब्रह्माजीसे दिये गये शूलको छोड़ा, उसको हटाने के लिए राजा रामने इन्द्र की शक्ति छोडी ॥ १०० ॥

युग्मम्—

ताभ्यामन्योन्यमासाद्य समवाप्यत संशम' ।
लक्षेण पत्रिणा वक्ष क्रुद्धो रामस्य राक्षसः ॥ १०१ ॥
अस्तृणादधिकं रामस्ततोऽदेवत सायकैः ।
अक्राम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ १०२ ॥

**अन्वय.**—ताभ्याम् अन्योन्यम् आसाद्य सशम॰ समवाप्यत । क्रुद्धो राक्षसः

पत्रिणा लक्षेण रामस्य वक्ष अस्तृणात् । ततो राम अधिक सायकै· अदेवत । रावण अक्लाम्यत् । तस्य सूतो रथम् अनाशयत् ॥

**व्याख्या**—ताभ्या = शूलशक्तिभ्याम्, अन्योन्य = परस्परम्, आसाद्य = प्राप्य, संशम = संक्षय, समवाप्यत = सम्प्राप्त । अथ क्रुद्ध· = कुपितः, राक्षस = रावण, पत्रिणा = बाणाना, लक्षेण = शतसहस्रेण, रामस्य = रामचन्द्रस्य, वक्ष· = उर·स्थलम्, अस्तृणात् = आच्छादितवान् । तत = अनन्तर, राम = रामचन्द्रः, अधिकं = रावणादधिकं यथा तथा, सायकै = बाणै, अदेवत = अक्रीडत् । ततो रावण = दशानन, अक्लाम्यत् = क्लान्तोऽभूत्, मूर्च्छित इति भाव । अथ तस्य = रावणस्य, सूत = सारथि, रथ = स्यन्दनम्, अनाशयत् = अदर्शनमगमयत्, अन्यतोऽनैयदिति भाव·, रावणरक्षाऽर्थमिति तात्पर्यम् ॥

***व्युत्पत्ति*** सशमः = सशमन सशम·, "भावे" इति घञ् "न'दात्तोपदेशस्य मान्तस्याऽनाचमे" इति वृद्धिनिषेधः । समवाप्यत = समवपूर्वकात् "आप्लृ व्याप्तौ" इति धातो· कर्मणि लङ् । अस्तृणात् = "स्तॄञ् आच्छादने" इति क्र्यादिस्थ धातोर्लङ् "प्वादीना ह्रस्व·" इति ह्रस्वत्वम् । अदेवत = "(तेवृ) देवृ देवने" इति भौवादिकादनुदात्तेतो धातोर्लङ् । अक्लाम्यत् = "क्लमु ग्लानौ" इति धातो लंङ् । सूत· = "सूतः क्षत्ता च सारथिः" इत्यमर· । अनाशयत् = "णश अदर्शन" इति धातोर्णिजन्ताल्लङ् ॥

***भाषाऽर्थ*** शूल और शक्ति परस्पर मिलकर नष्ट हो गये । क्रुद्ध होकर रावणने लाख बाणोंसे रामचन्द्रजी की छातीको आच्छादित कर डाला । तब रामचन्द्रजी ने बाणोंसे पर्याप्त क्रीडा की । रावण मूर्च्छित हुआ । तब सारथि उसकी रक्षाके लिए रथको युद्ध भूमिसे दूर ले गया ॥ १०१ ॥ १०२ ॥

राक्षसोऽतर्जयत्सूत पुनश्चाऽढौकयद्रथम् ।
निरास्येतामुभौ बाणानुभौ धुर्यानविध्यताम् ॥ १०३ ॥

**अन्वयः**—राक्षस सूतम् अतर्जयत्, पुनश्च रथम् अढौकयत् । उभौ बाणान् निरास्येताम् । उभौ धुर्यान् अविध्यताम् ॥

**व्याख्या**—राक्षस = यातुधान, रावण इति भाव· । सूतं = सारथिम्, अतर्जयत् = भर्त्सितवान्, रणस्थानाद्रथस्य दूराऽपनयनादिति भाव· । पुनश्च = भूयोऽपि, रथं = स्यन्दनम्, अढौकयत् = अगमयत्, रामसमीपमिति शेषः । उभौ = रामरावणौ, बाणान् = शरान्, निरास्येता = क्षिप्तवन्तौ । उभौ = द्वौ, रामरावणाविति भाव· । धुर्यान् = अश्वान्, अविध्यता = ताडितवन्तौ ॥

ॐव्युत्पत्ति·ॐ अतर्जयत्="तर्ज भर्त्सन" इति भौवादिकाद्धातोर्णिचि लङ् । मल्लिनाथस्तु "तर्ज ( भर्त्स ) तर्जने" इति चौरादिकधातोरनुदात्तत्वेऽपि तस्य चक्षिङादेशस्य ङित्करणाज्ज्ञापकादनित्यत्वज्ञापनात्परस्मैपदप्रयोग इति जग्रन्थ। अढौकयत्=गत्यर्थाड्ढौकृधातोर्णौ लङि रूपम् । निरास्येता=निरुपसर्गपूर्वकात् "असु क्षेपण" इति धातोः "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इत्यात्मनेपद, ततो लङ् । अजादित्वात् "आडजादीनाम्" इत्याडागम । धुर्यान्=धुर वहन्तीति धुर्यास्तान्, "धुरो यड्ढकौ" इति यत्प्रत्यय । अविध्यताम्="व्यध ताडन" इति दैवादिकधातोर्लङ् "ग्रहिज्यावयिव्यधी" त्यादिना सम्प्रसारणम् ॥

ॐभाषाऽर्थॐ रावणने रथको युद्ध भूमिसे दूर ले जानेके कारण सारथिको भर्त्सन किया और फिर रथको युद्ध भूमिमे पहुँचाया । राम और रावण दोनोंने बाणोंको छोडा । दोनोंने एकने दूसरेके घोडोंको बाणोंसे बेध डाला ॥ १०३ ॥

उभावकृन्ततां केतूनव्यथेतामुभौ न तौ ।
अदीप्येतामुभौ धृष्णू प्रायुञ्जाता च नैपुणम् ॥ १०४ ॥

अन्वय·—उभौ केतून् अकृन्तताम् । तौ उभौ न अव्यथेताम् । उभौ अदीप्येता, धृष्णू ( सन्तौ ) नैपुण च प्रायुञ्जाताम् ॥

व्याख्या—उभौ = द्वौ, रामरावणावित्यर्थ । केतून् = ध्वजान्, अकृन्तता = छिन्नवन्तौ । तौ = पूर्वोक्तौ, उभौ = द्वौ, रामरावणौ । न अव्यथेता = नो भीतौ नो चलितौ वा । उभौ = रामरावणौ, अदीप्येताम् = अराजताम्, धृष्णू = धर्षणशीलौ सन्तौ, रामरावणाविति शेष । नैपुणं च = युद्धकौशलं च, प्रायुञ्जाता = प्रयुक्तवन्तौ ॥

ॐव्युत्पत्ति·ॐ अकृन्ततां="कृती छेदने" इति तौदादिकाद्धातोर्लङ् "शे मुचादीनाम्" इति नुम् । अव्यथेतां="व्यथ भयचलनयोः" इति धातोर्लङ् । अदीप्येता= "दीपी दीप्तौ" इति धातोर्लङ् । धृष्णू="धृष प्रसहने" इति चौरादिकाद्धातोः "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः । प्रायुञ्जातां=प्रपूर्वकात् "युजिर् योगे" इति धातोर्लङ् ।

ॐभाषाऽर्थःॐ राम और रावण दोनोंने एकने दूसरेके ध्वजोंको काट डाला। दोनों पीडित अथवा बिचलित नहीं हुए । दोनों शोभित हो गये और धर्षणशील होते हुए उन्होंने युद्धकौशलका प्रयोग किया ॥ १०४ ॥

उभौ मायां व्यतायेतां वीरौ नाऽश्राम्यतामुभौ ।
मण्डलानि विचित्राणि क्षिप्रमाक्रामतामुभौ ॥ १०५ ॥

अन्वयः—उभौ माया व्यतायेताम् । उभौ वीरौ न अश्राम्यताम् । उभौ विचित्राणि मण्डलानि क्षिप्रम् आक्रामताम् ॥

व्याख्या—उभौ=रामरावणौ माया = कपटप्रयोग, व्यतायेता = व्यतनुताम् । उभौ = द्वौ, वीरौ = शूरौ, रामरावणाविति भाव । न अश्राम्यता = नो श्रान्तौ । उभौ = रामरावणौ, विचित्राणि = अद्भुतानि, मण्डलानि = चक्रवालानि, क्षिप्र=द्रुतम्, आक्रामताम्=आचरताम् , तावुभौ विचित्रमण्डलाकारेण भ्रान्ताविति भाव ॥

ॐव्युत्पत्तिःॐ व्यतायेतां = विपूर्वात् "तायृ सन्तानपालनयोः" इति भौवादिकाद्धातोर्लङ् । अश्राम्यता = "श्रमु तपसि खेदे चे"ति धातोर्लङ् । क्षिप्र = "लघु क्षिप्रमर द्रुतम्" इत्यमर । आक्रामताम्=आङ् पूर्वकात् "क्रमु पादविक्षेप" इति धातोर्लङि "वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष "इति श्यनो वैकल्पिकत्वात्पक्षे शप् ॥

ॐभाषाऽर्थ ॐ राम और रावण दोनोंने कपट प्रयोग फैलाया । दोनों वीर श्रान्त नही हुए । दोनों विचित्र मण्डलों को दिखलाते हुए घूमने लगे ॥ १०५ ॥

न चोभावप्यलक्ष्येता यन्तारावाहतामुभौ ।
स्यन्दनौ समपृच्येतामुभयोर्दीप्तवाजिनौ ॥ १०६ ॥

अन्वयः—उभौ अपि न अलक्ष्येताम् । उभौ यन्तारौ आहताम् । दीप्तवाजिनौ उभयो स्यन्दनौ समपृच्येताम् ॥

व्याख्या—उभौ अपि = द्वौ अपि, रामरावणाविति भावः, न अलक्ष्येता = नोदृष्टौ, प्रेक्षकैरिति शेष , मण्डलाचारवेगादिति भाव । उभौ = द्वौ, रथिनौ रामरावणावित्यर्थ । यन्तारौ = अन्योन्यसारथी इति भाव । आहता = प्राहरताम् । दीप्तवाजिनौ = उज्ज्वलहयौ, चामरादिमण्डनादिति भाव । उभयो = द्वयो , रामरावणयोरिति भाव । स्यन्दनौ = रथौ, समपृच्येता = संपृक्तौ ।

ॐव्युत्पत्ति ॐ अलक्ष्येता = "लक्ष दर्शनाङ्कनयोः" इति धातोः कर्मणि लङ् । आहताम् = आङ् पूर्वकात् "हन हिंसागत्यो." इति धातोर्लङि तसः "तस्थस्थमिपां तान्तन्ताम" इति तामादेश. । "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोप. । दीप्तवाजिनौ = दीप्तौ वाजिनौ ययोस्तौ । "दीप्रवाजिनौ" इति मल्लिनाथसम्मतः पाठस्तत्राऽप्ययमेवाऽर्थः । दीपनशीला दीप्रा. "नमिकम्पिस्म्यजसकमहिंसदीपो र." इति दीपीधातो रप्रत्यये दीप्रपदसिद्धिः । "दृप्तवाजिनौ" इति पाठे बलिष्ठाऽश्वावित्यर्थ. । समपृच्येतां = सम्पूर्वकात् "पृची सम्पर्के" इति धातोः कर्मणि लङ् ॥

ॐभाषाऽर्थ.ॐ प्रेक्षकोंसे वे दोनों ( राम और रावण ) मण्डलाचारके वेगसे नहीं देखे गये । दोनोंने एकने दूसरेके सारथिपर प्रहार किया । उज्ज्वल घोड़ों वाले दोनों के रथोंका परस्परमें सम्पर्क हुआ ॥ १०६ ॥

ततो मायामयान्मूर्ध्नो राक्षसोऽप्रथयद्रणे ।
रामेणैकशतं तेषां प्रावृश्च्यत शिलीमुखैः ॥ १०७ ॥

अन्वयः—ततो राक्षसो मायामयात् मूर्ध्नः अप्रथयन् । रामेण तेषाम् एकशत शिलीमुखैः प्रावृश्च्यत ॥

व्याख्या—ततः = अनन्तर, रणे = युद्धे, राक्षस = यातुधान, रावण इति भाव । मायामयान् = मायास्वभावान्, मूर्ध्नः = शिरांसि, अप्रथयन् = विस्तारितवान् । स्वाभाविकमस्तकरक्षणार्थं मायया मस्तकान्तराणि कल्पितवानिति भाव । रामेण = रामचन्द्रेण, तेषां = मूर्ध्नाम्, एकशतम् = एकोत्तरशत, शिलीमुखैः = बाणैः, प्रावृश्च्यत = छिन्नम् ॥

॥व्युत्पत्तिः॥ मायामयान् = "तत्प्रकृतवचने मयट्" इति मयट् । अप्रथयत् = "प्रथ प्रख्याने" इति घटादेर्धातोर्लङ् । एकशतम् = एकोत्तरं शतम्, "शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्" इति मध्यमपदलोपी समासः । शिलीमुखैः = "अलिबाणौ शिलीमुखौ" इत्यमरः । प्रावृश्च्यत = प्रपूर्वकात् "ओ व्रश्चू छेदने" इति धातोः कर्मणि लङ् ॥

॥भाषाऽर्थः॥ तब युद्धमे रावणने मायामय शिरोंको फैलाया । रामचन्द्रजीने उन एक सौ एक शिरोंको बाणों से काट डाला ॥ १०७ ॥

समक्षुभ्नन्नुदन्वन्तः प्राकम्पन्त महीभृतः ।
सन्त्रासमबिभः शक्रः प्रैङ्खच्च क्षुभिता क्षितिः ॥ १०८ ॥

अन्वयः—उदन्वन्तः समक्षुभ्नन् । महीभृतः प्राकम्पन्त । शक्रः सन्त्रासम् अबिभः प्रैङ्खच्च । क्षितिश्च क्षुभिता ॥

व्याख्या—उदन्वन्तः = समुद्राः, समक्षुभ्नन् = सञ्चलिताः, शिरःपातभरादिति शेष । महीभृतः = पर्वताः, प्राकम्पन्त = कम्पिताः । शक्रः = इन्द्रः, सन्त्रासं = भीतिम्, अबिभः = भृतवान् प्रैङ्खच्च = क्षुभितश्च । क्षितिश्च = पृथिवी च क्षुभिता = चलिता ॥

॥व्युत्पत्तिः॥ समक्षुभ्नन् = संपूर्वकात् "क्षुभ सञ्चलने" इति क्र्यादिस्थधातोर्लङ् । अबिभः = "डुभृञ् धारणपोषणयोः" इति धातोर्लङ्, "श्लौ" इति द्वित्वं "भृञामित्" इत्यभ्यासस्येत्वं, धातोर्गुणो रपरस्तल्लोपे रेफस्य विसर्जनीयः । प्रैङ्खत् = प्रपूर्वकात् इखिधातोर्भौवादिकाल्लङ्, इदित्वान्नुम् आड्वृद्धिश्च ॥

॥भाषाऽर्थ॥ रावणके गिरे हुए शिरोंके भारसे समुद्रसञ्चलित हुए । पर्वत काँपने लगे । इन्द्र त्रस्त और क्षुभित हुए । पृथ्वी भी क्षुब्ध हुई ॥ १०८ ॥

ततो मातलिना शस्त्रमस्मर्यत महीपतेः।
वधाय रावणस्योग्रं स्वयम्भूर्यदकल्पयत् ॥ १०९ ॥

**अन्वय.**—स्वयम्भू रावणस्य वधाय उग्रं यत् अकल्पयत् , ततो मातलिना ( तत् ) अस्त्र महीपते अस्मर्यत ॥

**व्याख्या**—स्वयम्भू• = ब्रह्मा, रावणस्य = दशाऽऽननस्य, वधाय = सहाराय, उग्र = भयङ्करं, यत् = अस्त्रम् , अकल्पयत् = कल्पितवान् , तत = रावणस्य शिर• प्ररोहाऽनन्तर, मातलिना = इन्द्रसारथिना, ( तत् ) अस्त्रम् = आयुध, महीपते = राज्ञ , रामस्येति भाव । अस्मर्यत=स्मारितम् ॥

**ॐव्युत्पत्ति ॐ** अकल्पयत्="कृपू सामर्थ्ये" इति धातोर्णौ लङ् । गुण•, "कृपो रोल" इति लत्व च । महीपते =मह्या पतिर्महीपतिस्तस्य, "स्मृधातोर्योगे" "अधीगर्थदयेशा कर्मणी"ति कर्मणि षष्ठी । अस्मर्यत="स्मृ आध्याने" इति धातोर्णौ कर्मणि लङ् । मल्लिनाथस्तु "अस्मार्यत महीपति" रिति पाठमकल्पयत् व्याख्यच्च—"मातलिना महीपति =स्मर्यतेर्बुद्ध्यर्थत्वात् "गतिबुद्धीत्यादिना कर्मत्वम् अभिहिते कर्मणि प्रथमा । अत्र शेषत्वाऽविवक्षाया न "अधीगर्थे" त्यादिना कर्मणि शेषे षष्ठी" इति । शस्त्र="कर्मणि द्वितीया" इति द्वितीया ॥

**ॐभाषाऽर्थ ॐ** ब्रह्माजीने रावण के वधके लिए भयङ्कर जिस अस्त्रकी रचना की थी रावण के शिर प्ररोह के अनन्तर मातलिने रामको उसी अस्त्रका स्मरण दिलाया ॥ १०९ ॥

युग्मम्—

नभस्वान् यस्य वाजेषु फले तिग्माशुपावकौ ।
गुरुत्व मेरुसङ्काश देह• सूक्ष्मो वियन्मय• ॥ ११० ॥
राजितं गारुडैः पक्षैर्विश्वेषा धाम तेजसाम् ।
स्मृत तद्रावणं भित्त्वा सुघोर भुव्यशाययत् ॥ १११ ॥

**अन्वय•**—यस्य वाजेषु नभस्वान् , फले तिग्माऽशुपावकौ, गुरुत्वं मेरुसङ्काशं देहो वियन्मय सूक्ष्म , गारुडै पक्षै राजित, विश्वेषा तेजसा धाम, स्मृत सुघोर तत् रावणं भित्वा भुवि अशाययत् ॥

**व्याख्या**—यस्य = शस्त्रस्य वाजेषु=पक्षेषु, नभस्वान्=वायु सन्निहित इति शेष• । फले=शल्ये, तिग्माऽशुपावकौ=सूर्याऽनलौ, गुरुत्व गौरवं मेरुसङ्काश=सुमेरुसदृश, "दृढत्व मेरुसङ्काशम्" इति पाठान्तर तत्र दृढत्व = दार्ढ्यमित्यर्थ । देह = शरीर, वियन्मय -आकाशात्मक , अत एव सूक्ष्म =अतीन्द्रिय , गारुडै =गरुडस-

म्बन्निवभि', पक्षैं =पतत्त्रै , राजित = शोभितं, "वाजितम्" इति मल्लिनाथसम्मते पाठे—पक्षवत् यत्कृतम् । विश्वेषा=समस्ताना, तेजसा = धाम्ना, धाम = सर्वदेवतेजोमयं स्थानं, स्मृत = ध्यात, सुघोरम् = अतिभयङ्कर, तत् = शस्त्रं, रावण=दशानन, भित्त्वा = विदार्य, भुवि = भूमौ, अशाययत् = शायितवत् , अपातयदिति भाव·॥

॥व्युत्पत्ति·॥ वाजेषु = "छद· पत्त्रो गरुद्वाज" इति यादव । तिग्माऽशुपावकौ= तिग्मा अशवो यस्य स तिग्माऽशु , तिग्मांऽशुश्च पावकश्चेति द्वन्द्वः । मेरुसङ्काश = मेरुणा सदृश, "निभसङ्काशनीकाशप्रतीकाशोपमादय ।" इत्यमरः । "मेरुवत्" इति मल्लिनाथसमत· पाठस्तत्र मेरोरिवेति विग्रहे "तत्र तस्येवे"ति वति प्रत्यय । गारुडै· = गरुडस्येमे गारुडास्तै·, "तस्येदम्" इत्यण् , "तद्धितेष्वचामादे" इत्यादि वृद्धिश्च । राजित = "राजृ दीप्तौ" इति धातो· क्तप्रत्यय·, "वाजितम्" इति पाठे वा· जोऽस्ति अस्मिंस्तत् वाजवत् ."तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् "मादुप धायाश्च मतोर्वोऽयवादिभ्य" इति मस्य व । वाजवत्कृत वाजित, वाजवच्छब्दात् "तत्करोति तदाचष्टे" इति ण्यन्तात्कर्मणिक्तप्रत्यय· । णाविष्ठवद्भावात् "विन्मतोर्लुक् इति मतोर्लुक् । अशाययत्="शीङ् स्वप्ने" इति ण्यन्ताद्धातोर्लङ् ॥

॥भाषाऽर्थ·॥ जिस शस्त्रके पत्तोंमे वायु, शल्य ( नोक ) में सूर्य और अग्नि विद्यमान है, जिसकी गुरुता सुमेरु पर्वतके सदृश, शरीर आकाशात्मक अतीन्द्रिय है, गरुडजीके पत्तोंसे शोभित, सब देवताओंके तेजोमय और स्मृत अतिभयङ्कर उस अस्त्रने रावणको विदीर्ण कर पृथ्वीमें सुला दिया ॥ ११० ॥ १११ ॥

**आबध्नन् कपि–वदनानि संप्रसादं, प्राशसत्सुर–समितिर्नृप जिताऽरिम् ।**
**अन्येषां विगतपरिप्लवा दिगन्ताः, पौलस्त्योऽजुषत शुचं विपन्नबन्धुः ॥११२॥**

**अन्वय**—कपिवदनानि संप्रसादम् आबध्नन् । सुरसमिति जिताऽरि नृपम् प्राशसत् । अन्येषा दिगन्ता विगतपरिप्लवा ( जाता )। विपन्नबन्धु पौलस्त्य शुचम् अजुषत ॥

**व्याख्या**—कपिवदनानि = वानरमुखानि, संप्रसाद=प्रसन्नता, "सप्रहासम्" इति पाठे संप्रहास्यमित्यर्थ । आबध्नन् = सेवितवन्ति, रावणे हते सुग्रीवादिकपय सुप्रसन्ना जाता इति भाव· । एव सुरसमिति = देवसमूह·, जिताऽरिं=जितशत्रुं, नृप=राजान, रामचन्द्रमित्यर्थः । प्राशसत्=तुष्टाव । अन्येषाम्=इन्द्रादिदिक्पालाना, दिगन्ता = आशाऽन्ता , तत्तत्पाल्यविभागा इति भाव·, विगतपरिप्लवा = निरुपद्रवा , जाता इति शेष । विपन्नबन्धु =विनष्टभ्रातृक इति भाव । पौलस्त्य =विभीषण इत्यर्थ । शुच = शोकम् , अजुषत = अभजत, दुष्टबान्धवस्याऽपि वियोगो दु·सह इति भाव ॥

❀व्युत्पत्तिः❀ आबध्नन्=आङ्पूर्वात् "बन्ध बन्धन" इति धातोर्लङ्। जिताऽरिं= जितोऽरिर्येन स जिताऽरिस्तम्। विगतपरिप्लवा.=विगत परिप्लवो येभ्यस्ते। विपन्नबन्धु =विपन्नो बन्धुर्यस्य स । अजुषत="जुषी प्रीतिसेवनयो" इति तौदादिकादनुदात्तेतो धातोर्लङ्॥ प्रहर्षिणी वृत्तम्। तल्लक्षण यथा - "म्नौ ज्रौ गस्त्रिद शयति. प्रहर्षिणीयम्।" इति।

❀भाषाऽर्थ❀ रावणके मारे जानेपर सुग्रीव आदि वानरोंके मुख प्रसन्न हुए। देवताओंके समूहने शत्रुको जीतने वाले राजा रामकी प्रशसा की। इन्द्र आदि दिक्पालोंकी तत्तद्दिशाए उपद्रवरहित हो गयीं। भाई रावणके मारे जानेसे विभीषणजी शोकयुक्त हो गये ॥ ११२ ॥

इति श्रीचन्द्रकलाव्याख्यया मण्डिते भट्टिकाव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे चतुर्थ परिच्छेद ( वर्ग ), तथा लक्ष्यरूपे कथानके रावणवधो नाम लङ्विलासाख्य सप्तदश. सर्गः।

---

# अथ अष्टादशः सर्गः ।

अत प्रभृति "वर्तमाने लट्" इति विधीयमान लटमधिकृत्याऽऽह व्यश्नुत इति। कुत्रचित्तु वर्तमानादन्यत्राऽपि दर्शयिष्यति।

व्यश्नुते स्म तत' शोको नाभिसम्बन्धसम्भवः।
विभीषणमसावुच्चै रोदिति स्म दशाऽऽननम्॥ १॥

**अन्वय.**—ततो नाभिसम्बन्धसम्भव. शोको विभीषण व्यश्नुते स्म। असौ दशाऽऽननम् उच्चै रोदिति स्म।

**व्याख्या**—ततः = रावणवधादनन्तरं, नाभिसम्बन्धसम्भवः = एकोदरसम्भूत, शोक = मन्यु, विभीषणं = रावणाऽनुज, व्यश्नुते स्म = व्याप्नोत्। असौ = विभीषण, दशाऽऽनन = रावणम्, उद्दिश्येति शेष। उच्चै = तारस्वरेण, रोदिति स्म = विललाप॥

❀व्युत्पत्ति❀ नाभिसम्बन्धसम्भवः = नाभिसम्बन्धात्सभवो यस्य स'। व्यश्नुते स्म = विपूर्वकात् "अशू व्याप्तौ" इति धातो. स्मयोगे "लट् स्मे" इति भूताऽनद्यतनपरोक्षे लट्। रोदिति स्म = "रुदिर् अश्रुविमोचन" इति धातोः पूर्ववल्लट्, "इर इत्सञ्ज्ञा वाच्या" इतीर इत्सञ्ज्ञा "रुदादिभ्य सार्वधातुके" इतीट्॥

❀भाषाऽर्थ❀ रावणवधके अनन्तर एक उदरके सम्बन्धसे उत्पन्न शोकने विभीषणको व्याप्त किया। वे रावणका उद्देश्य करके ऊँचे स्वरसे विलाप करने लगे॥ १॥

'भूमौ शेते दशग्रीवो महार्हशयनोचितः ।
नेक्षते विह्वलं मां च न मे वाचं प्रयच्छति ॥ २ ॥

अन्वयः—महाऽर्हशयनोचितो दशग्रीवो भूमौ शेते, विह्वल मा न ईक्षते मे वाच न प्रयच्छति ॥

व्याख्या—रोदनप्रकारमाह—भूमाविति । महाऽर्हशयनोचित = अभ्यस्तोत्तमशय्य, दशग्रीव = रावण, भूमौ = पृथिव्या, शेते=स्वपिति, एवं च—विह्वलं= विक्लव, मा = भ्रातर विभीषण, न ईक्षते = नो पश्यति, मे = मह्य, वाच = वाणी, न प्रयच्छति = नो ददाति, न मया सम्भाषत इति भाव ॥

व्युत्पत्ति. महाऽर्हशयनोचितः = महान् अर्हो (मूल्यम्) यस्य तत् महाऽर्हं, तच्च तत् शयन, तस्मिन्नुचित. । यद्वा उचित महाऽर्हशयन यस्य स, "वाऽऽहिताग्न्यादिषु" इति उचितपदस्य विकल्पेन परनिपात. । पक्षान्तर "उचितमहाऽर्हशयन" इत्यपि प्रयोगो भवति। शेते = "शीङ् स्वप्ने" इति धातो· "वर्तमाने लट्" इति वर्तमाने लट् । प्रारब्धाऽपरिसमाप्तक्रियाश्रयत्व वर्तमानत्वम् । प्रयच्छति = प्रपूर्वकात् "दाण् दाने" इति धातोर्लटि "पाघ्राध्मास्थाम्नादाणि"त्यादिना यच्छादेश ॥

भाषाऽर्थ उत्तम शय्यामे सोनेका अभ्यास करनेवाले रावण जमीनपर सो रहे है, मुझे नही देख रहे हैं और न मेरे साथ भाषण ही कर रहे है ॥ २ ॥

विपाकोऽयं दशग्रीव ! सदृष्टो ऽनागतो मया ।
त्वं तेनाऽभिहितः पथ्यं किं कोपं न नियच्छसि ॥ ३ ॥

अन्वय.—हे दशग्रीव ! अय विपाको मया अनागत· (एव) सदृष्ट· । तेन त्व पथ्यम् अभिहित, कोप किं न नियच्छसि ? ॥

व्याख्या—हे दशग्रीव = हे रावण !, अयम् = ईदृक्, मरणरूप इति भावः । विपाक = परिणाम, मया = भवद्भ्रात्रा, अनागत = भविष्यन्नेव, सदृष्ट = समवलोकित, उपलब्ध इति भाव । तेन = कारणेन, संदर्शनरूपेणेति भाव । त्वं = भवान्, पथ्य = हितम्, अभिहित = उक्त, "सीता मुञ्च"ेति भाव । तथाऽपि—कोप = क्रोध, किं न नियच्छसि = किमिति न अपनयसि, नाऽस्तीह मदीयो दोष इति भाव ॥

व्युत्पत्ति विपाक = विपच्यत इति, कर्मणि घञ्। पथ्य = पथ अनपेत पथ्यं, तत्, "धर्मपथ्यर्थन्यायादनपेते" इति यत् । अभिहित =अभिपूर्वकात् "डुधाञ् धारणपोषणयो" इति धातोर्ब्रूधातो समानाऽर्थकत्वाद्दुहादित्वेन अप्रधाने कर्मणि क्त· । नियच्छसि "वर्तमानसामीप्ये वर्तमानवद्वा" इति सामीप्ये वर्तमानप्रत्ययः निपूर्वात् "यमु उपरमे" इति धातोः "इषुगमियमां छ" इति छत्वम् ॥

※भाषाऽर्थ※ हे रावण ! मैने पहले ही ऐसे परिणामको जान लिया था। इस कारणसे मैने आपको हितवचन कहा था। आप क्यों क्रोधको नहीं हटा रहे हैं ? ॥४॥

भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः ।
तान् मदान् नाऽवतिष्ठन्ते ये मते न्यायवादिनाम् ॥ ४ ॥

अन्वयः—ये न्यायवादिनां मते मदात् न अवतिष्ठन्ते, तान् विपदः तूर्णं भजन्ति सम्पदश्च अतिक्रामन्ति ॥

व्याख्या—ये = प्रभवः, न्यायवादिनां = हितोपदेशकानां, माल्यवत्सदृशाना-मिति भावः । मते = इष्टेऽर्थे, मदात् = अभिमानात्, न अवतिष्ठन्ते = नाऽवस्थितिं कुर्वन्ति, तान् = तादृशान्पुरुषान्, विपदः = आपत्तयः, तूर्णं = सत्वरं, भजन्ति = आश्रयन्ति, सम्पदश्च = सम्पत्तयश्च, अतिक्रामन्ति=उल्लङ्घयन्ति । तान् इत्यत्र "ते" इति मल्लिनाथसमतः पाठः ॥

※व्युत्पत्तिः※ न्यायवादिनां = न्यायं वदन्तीति तच्छीलास्ते न्यायवादिनस्तेषां, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययः । अवतिष्ठन्ते = अवपूर्वकात्स्था-धातोः "समवप्रविभ्यः स्थः" इत्यात्मनेपदेलट् । भजन्ति = "भज सेवायाम्" इति धातोर्लट् ॥

※भाषाऽर्थ※ जो न्यायवादियोंके मतमें मदसे अवस्थित नहीं होते हैं, उन्हें विपत्तियां शीघ्र आश्रय करती हैं और सम्पत्तियां उल्लङ्घन करती हैं ॥ ४ ॥

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः ।
प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः ॥ ५ ॥

अन्वयः—अनुजीविनः आयतौ अपथ्यं प्रियम् आमनन्ति । यः तेभ्यः शृणोति सम्पदः तं न ऋच्छन्ति ॥

व्याख्या—न्यायवादिमताऽतिक्रमिणो नश्यन्तीत्युक्तमेवमनाप्तवाक्यश्राविणो-ऽपि नश्यन्तीति प्रतिपादयति—अपथ्यमिति । अनुजीविनः = भृत्याः, प्रहस्ताऽऽ-दिसदृशा इति भावः । आयतौ = उत्तरकाले, अपथ्यम् = अहितं प्रियम् = अभीष्ट-मर्थम्, आमनन्ति = उपदिशन्ति, "साधु इदम्" इति शेषः । यः = प्रभुः, तेभ्यः = तादृशेभ्यः, अपथ्याऽभिधायिभ्य इति भावः । शृणोति = आकर्णयति, तदपथ्यमिति शेषः । सम्पदः = सम्पत्तयः, तं = तादृशम्, अपथ्यश्रवणशीलं प्रभुमिति भावः । न ऋच्छन्ति = न गच्छन्ति । प्रहस्तादिमूढवाक्यश्रवणादीदृशी ते मतिरिति भावः ॥

※व्युत्पत्तिः※ अनुजीविनः = अनुजीवन्तीति, णिनिप्रत्ययः । आमनन्ति = आङ्-पूर्वकात् "म्ना अभ्यासे" इति धातोर्लट् "पाघ्राध्मास्थाम्ने"त्यादिना मनादेशः ।

तेभ्य'="आख्यातोपयोगे" इति अपादानत्वात्पञ्चमी। ऋच्छन्ति="ऋ गतौ" इति धातोः "पाघ्रे"त्यादिना ऋच्छादेशः ॥

※भाषाऽर्थ※ भृत्यलोग लोभके कारण उत्तर कालमे अहित प्रिय वचनका उपदेश करते है। जो प्रभु उनसे प्रिय वचन सुनते है, सम्पत्तियाँ उनके पास नहीं जाती है ॥ ५ ॥

प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च।
तेऽवज्ञाता महाराज ! क्लाम्यन्ति विरमन्ति च ॥ ६ ॥

अन्वय.—प्राज्ञा तेजस्विन सम्यक् पश्यन्ति वदन्ति च। हे महाराज ! ते अवज्ञाता ( सन्त ) क्लाम्यन्ति विरमन्ति च ॥

व्याख्या—प्राज्ञा = प्रज्ञावन्त, तेजस्विन = प्रतापयुक्ताश्च, अस्मत्सदृशा इति भाव। सम्यक् = साधु, पश्यन्ति = अवलोकयन्ति, वदन्ति च = उपदिशन्ति चेति भाव। हे महाराज = हे भूपाल !, ते = तादृशा, सम्यक्दर्शिनो हितोपदेशकाश्चेति भाव। अवज्ञाता = तिरष्कृता सन्त, क्लाम्यन्ति = खिद्यन्ते, विरमन्ति च = उदासते च दुर्दान्तप्रभुपरिचारिणामीदृशी दशेति भाव ॥

※व्युत्पत्तिः※ प्राज्ञाः=प्रज्ञाऽस्ति एषां ते, "प्रज्ञाश्रद्धाऽर्चाभ्योण" इति णप्रत्यय। "धीरो मनीषी ज्ञ सख्यावान्पण्डित. कवि.।" इत्यमर.। तेजस्विन =प्रशस्त तेजोऽस्ति एषा ते, "अस्मायामेधास्रजोविनि" इति विनिप्रत्यय.। महाराज = महाश्चाऽसौ राजा महाराजस्तत्सम्बुद्धौ, "सन्महत्परमोत्तमोत्कृष्टा पूज्यमानै" इति समास' "आन्महत समानाऽधिकरणजातीययोः" इत्यात्व, "राजाऽह सखिभ्यष्टच्" इति समासाऽन्तष्टच्। "अवज्ञाता" इत्यत्र "अभिभूता" इति मल्लिनाथसमत पाठ.। क्लाम्यन्ति = "क्लमु ग्लानौ" इति दैवादिकधातोर्लट्, "वा भ्राशभ्लासभ्रमुक्रमुक्लमुत्रसित्रुटिलष" इति वैकल्पिक' श्यन्, तदभावे "क्लामन्ति" इति च। विरमन्ति= विपूर्वात् "रमु क्रीडायाम्" इति धातोर्लट् "व्याङ्परिभ्यो रम" इति परस्मैपदम् ॥

※भाषाऽर्थ※ बुद्धिमान् और प्रतापी लोग ठीक ठीक देखते है और हितका उपदेश करते हैं। हे महाराज ! वे तिरस्कृत होनेपर खिन्न और उदासीन हो जाते है ॥६॥

लेढि भेषजवन्नित्य य' पथ्यानि कटून्यपि।
तदर्थ सेवते चा ऽऽप्तान् कदाचिन्न 'स' सीदति ॥ ७ ॥

अन्वयः—यो भेषजवत् कटूनि अपि पथ्यानि नित्य लेढि, तदर्थम् आप्तांश्च सेवते स कदाचित् न सीदति।

व्याख्या—यः = प्रभु, भेषजवत् = औषधवत्, कटूनि अपि = तत्कालतीक्ष्णानि अपि, "यत्तदग्रे विषमिव परिणामेऽमृतोपमम्" इति वचनाऽनुसारेणेति

भाव । पथ्यानि = हितानि, परिणामसुखानि हितवचनानीति भाव । नित्यं=निरन्तरं लेढि = आस्वादयति, लक्षणया—शृणोतीति भाव । तदर्थं = पथ्यपरिज्ञानाऽर्थम्, आप्ताश्च = वृद्धाश्च, सेवते = आश्रयते, स = प्रभु, पथ्याकर्णनशील इति भाव । कदाचित् = जातुचिन्, न सीदति = न नश्यति ॥

❀व्युत्पत्ति❀ भेषजवत् = भेषजेन तुल्य, "तेन तुल्य क्रिया चेद्वति." इति वति-प्रत्यय', "भेषजौषधभैषज्यान्यगदो जायुरित्यपि ।" इत्यमर । पथ्यानि = पथोऽनपेतानि पथ्यानि, तानि "धर्मपथ्यर्थन्यायादनपेते" इति यत्। लेढि =, 'लिह आस्वादन" इति धातोर्लटि "अदिप्रभृतिभ्य शप" इति शपो लुकि ढत्वादिकार्ये "पुगन्तलघूपधस्य च" इति लघूपधगुण. । आप्तान् = "आप्त प्रत्ययित समौ" इत्यमर. ॥

❀भाषार्थ❀ जो राजा औषधके सदृश कटु होने पर भी हित वचनोंको नित्य सुनता रहता है और उसके लिए वृद्धोंकी सेवा करता है वह कभी नष्ट नहीं होता ॥७॥

सर्वस्य जायते मानः स्वहिताच्च प्रमाद्यति, ।
वृद्धौ भजति चाऽपथ्यं नरो येन विनश्यति ॥ ८ ॥

अन्वय.—सर्वस्य वृद्धौ ( सत्याम् ) मानो जायते। (स ) स्वहिताच्च प्रमाद्यति, अपथ्यं च भजति येन नरो विनश्यति ॥

व्याख्या—सर्वस्य=समस्य जनस्य, वृद्धौ = समृद्धौ सत्याम्, मान = गर्व, जायते=उत्पद्यते, वृद्धेश्चित्तविकारित्वादिति भाव । तत स्वहिताच्च = आत्मपथ्याच्च, प्रमाद्यति = स्खलति, तत्परिणामस्वरूपम् अपथ्य च=अहितकारक कर्मच, भजति= सेवते, स इति शेष । येन = अपथ्येन, नर = जन । विनश्यति=विनाश गच्छति, अतो हितेच्छुना पुरुषेण वृद्धौ मानिना न भाव्यमिति भाव ॥

❀व्युत्पत्ति❀ स्वहितात् = स्वस्मै, हित स्वहित, तस्मात् "हितयोगे च" इति चतुर्थी, "चतुर्थी तदर्थार्थबलिहितसुखरक्षितै" इति चतुर्थीतत्पुरुष । "प्रमाद्यती"ति पदेन योगे "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति पञ्चमी। भजति = "भज सेवायाम्" इति धातोर्लट्। विनश्यति = विपूर्वात् "णश अदर्शने" इति दैवादिकधातोर्लट् ॥

❀भाषाऽर्थ❀ वृद्धि होनेपर सबको अहङ्कार उत्पन्न होता है, तब वह अपने हितमे प्रमाद करता है और अपथ्यसेवन भी करने लगता है जिससे मनुष्य नष्ट होता है ॥ ८ ॥

द्वेष्टि प्रायो गुणेभ्यो यन्न च स्निह्यति कस्यचित् ।
वैरायते महद्भिश्च शीयते वृद्धिमानपि ॥ ९ ॥

अन्वयः—यत् वृद्धिमान् प्रायो गुणेभ्यो द्वेष्टि, कस्यचिच्च न स्निह्यति, महद्भिः वैरायते च, शीयते अपि ।

व्याख्या—यत् = यस्माद्धेतो , वृद्धिमान् = समृद्धिसम्पन्नो जन , प्राय = बाहुल्येन, गुणेभ्य = वृद्धसेवित्वादिभ्य , द्वेष्टि = द्रुह्यति, कस्यचिच्च = कस्मिन्नपि जने इति भाव । न स्निह्यति=नो प्रीयते, महद्भि = वृद्धै सह, वैरायते च = वैर करोति च, तत स शीयते अपि = नश्यति अपि ॥

ॐव्युत्पत्ति.ॐ वृद्धिमान्=प्रशस्ता वृद्धिरस्ति अस्य, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्प्रत्यय । गुणेभ्य = क्रोधार्थक द्विषधातोर्योगे "क्रुधद्रुहेर्ष्यासूयार्थाना य प्रति कोपः" इति सम्प्रदानत्वात् चतुर्थी । कस्य = सम्बन्धसामान्ये षष्ठी । वैरायते = "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इति क्यङन्ताल्लट् । शीयते = "शद्लृ शातन" इति धातोर्लट् । "पाघ्राध्मास्थाम्नादाणदृश्यर्तिसर्तिशदसदा पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदा" इति शदे शीयादेश ॥

ॐभाषाऽर्थ.ॐ जिस कारणसे कि वृद्धिसम्पन्न मनुष्य अकसर गुणोंसे द्वेष करता है, किसी पर भी स्नेह नहीं करता है, बड़ोंसे वैर करता है और उसके फलस्वरूप नष्ट भी हो जाता है ॥ ९ ॥

समाश्वसिमि केनाऽहं कथं प्राणिमि दुर्गतः ।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ ॥ १० ॥

अन्वयः—यस्य मे लोकत्रयपति भ्राता क्षितौ स्वपिति दुर्गत अहं केन समाश्वसिमि ? कथं प्राणिमि ? ॥

व्याख्या—यस्य, मे=मम, विभीषणस्येत्यर्थ । लोकत्रयपति = त्रिलोकेश्वर, भ्राता=अग्रजो बन्धु, रावण इति भाव । क्षितौ = भूमौ, स्वपिति=शेते, दुर्गत = दीन , अह = विभीषण, केन=उपायेन, समाश्वसिमि = स्वस्थो भवामि, कथ = केन प्रकारेण, प्राणिमि = जीवामि, न कथञ्चिदिति भाव ॥

ॐव्युत्पत्ति ॐ लोकत्रयपति = त्रयोऽवयवा यस्य तत् त्रय, "सङ्ख्याया अवयवे तयप्" इति तयप्प्रत्यय "द्वित्रिभ्यां तयस्याऽयज् वा" इति अयजादेश । लोकाना त्रय, तस्य पति । "अथो जगती लोको विष्टप भुवन जगत् ।" इत्यमर । स्वपिति = "ञिष्वप् शये" इति धातोर्लट् "रुदादिभ्य. सार्वधातुके" इतीट् । समाश्वसिमि = समाङ् पूर्वकात् "श्वस प्राणने" इति धातोर्लट् । पूर्वसूत्रेण इट् । प्राणिमि = प्रपूर्वकात् "अन प्राणन" इति धातोर्लट्, पूर्ववदिट्, "अनितेः" इति नस्य णत्वम् ॥

ॐभाषाऽर्थःॐ जिस मेरे तीन लोकोंके स्वामी भाई रावण जमीनपर सो रहे है, दुःखी वैसा मैं किस उपायसे स्वस्थ हूगा और कैसे प्राणधारण करूगा ॥ १० ॥

अहो जागर्ति कृच्छ्रेषु दैव यद्वलभिज्जितः ।
लुठ्यन्ति भूमौ क्लिद्यन्ति बान्धवा मे स्वपन्ति च ॥ ११ ॥

**अन्वय.**—अहो ! कृच्छ्रेषु दैव जागर्ति । यत् बलभिज्जितो मे बान्धवा भूमौ लुठ्यन्ति क्लिद्यन्ति स्वपन्ति च ॥

**व्याख्या**—अहो=आश्चर्यम्, कृच्छ्रेषु = दु खेषु विषये, दैव = भाग्य, जागर्ति= चेष्टते, दु खोत्पादने दैवं नित्यं जागरूकमिति भाव । यत् = यस्मात्कारणात्, बल-भिज्जित = इन्द्रजयिन, मे=मम, विभीषणस्य । बान्धवा =ज्ञातय, रावणकुम्भक-र्णादय इति भाव । भूमौ=पृथिव्या, लुठ्यन्ति=परिवर्तन्ते, क्लिद्यन्ति = क्लेदयुक्ता भवन्ति, स्वपन्ति च = दीर्घ निद्रान्ति चेति भाव ॥

❀व्युत्पत्ति❀ कृच्छ्रेषु="स्यात्कष्ट कृच्छ्रमाभीलम्" इत्यमर. । जागर्ति="जागृ निद्राक्षये" इत्यादादिकाद्धातोर्लट् । बलभिज्जित =बल भिनत्तीति बलभित्, "क्विप् चे"ति क्विप् । "बलाऽराति शचीपति" इत्यमर । बलभिद जयन्तीति, बलभिजित "सम्पदादिभ्य. क्विप्" इति क्विप्प्रत्यय । लुठ्यन्ति="(रुठ) लुठ लोठने" इति दैवादिकाद्धातोर्लट् । क्लिद्यन्ति="क्लिदू आर्द्रीभावे" इति धातोर्लट् ॥

❀भाषाऽर्थ❀ आश्चर्य है, दु खोंके विषयमें भाग्य चेष्टा करता रहता है। जो कि इन्द्रको जीतनेवाले रावण आदि मेरे बान्धव भूलुण्ठित और क्लेदयुक्त होकर सो रहे है ॥ ११ ॥

शिवा कुष्णन्ति मासानि भूमि पिबति शोणितम् ।
दशग्रीवसनाभीना समदन्त्यामिष खगा ॥ १२ ॥

**अन्वय.**—दशग्रीवसनाभीना मासानि शिवा कुष्णन्ति, शोणितं भूमि पिब-ति, आमिष खगा समदन्ति ।

**व्याख्या**—दशग्रीवसनाभीना=रावणसपिण्डाना मासानि=पिशितानि, शिवाः= शृगाला, कुष्णन्ति = कर्षन्ति, शोणित = रुधिर, भूमि = पृथिवी, पिबति = धयति आमिषं = मासशोणितातिरिक्तमन्त्रवसादिक, खगा = पक्षिण, काकगृध्रादय इति भाव । समदन्ति = सम्यग्भक्षयन्ति । एकस्य दशग्रीवस्य दुर्नयात्तत्सपिण्डाना की-दृशी दुर्दशा समजनीति भाव ॥

❀व्युत्पत्ति❀ दशग्रीवसनाभीना=दश ग्रीवा यस्य स दशग्रीव । समाना नाभि (मूलपुरुष.) येषा ते सनाभय, "ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णव-योवचनबन्धुषु" इति समानस्य सभाव. । दशग्रीवस्य सनाभयो दशग्रीवसनाभय-स्तेषाम् । "सपिण्डास्तु सनाभय" इत्यमर । कुष्णन्ति="कुष निष्कर्षे" इति क्र्यादिस्थधातोर्लट् । समदन्ति=सपूर्वकात् "अद भक्षणे" इति धातोर्लट् ॥

ॐभाषाऽर्थःॐ रावणके सपिण्डोंके मासोंको स्यार लोग खीच रहे है, लोहूको जमीन पी रही है और चरबी आदि आमिषको कौवे और गीध आदि पत्ती खा रहे है ॥ १२ ॥

येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाऽऽहवे ।
तस्याऽपीन्द्रजितो दैवाद् ध्वांक्षैः शिरसि लीयते ॥ १३ ॥

अन्वय.—येन महाऽऽहवे पूतक्रतो मूर्ध्नि स्थीयते स्म । तस्य इन्द्रजितः अपि शिरसि दैवात् ध्वाङ्क्षै लीयते ॥

व्याख्या—येन = इन्द्रजिता, महाऽऽहवे = महायुद्धे, पूतक्रतो = इन्द्रस्य, मूर्ध्नि = शिरसि, स्थीयते स्म = स्थितम् । तस्य = तादृशस्य, महावीरस्येति भाव । इन्द्रजितोऽपि = मेघनादस्याऽपि, अन्यस्य तु रक्षस. का कथेति भाव. । शिरसि= मूर्ध्नि, दैवात् = दुर्भाग्यवशादिति भाव । ध्वाङ्क्षै = काकै, लीयते = स्थीयते इति भाव ॥

ॐव्युत्पत्ति ॐ पूतक्रतो = पूताः ( पवित्री कृता. ) क्रतव ( यज्ञा ) येन स पूतक्रतुस्तस्य । स्थीयते स्म = "ष्ठा गतिनिवृत्तौ" इति धातोर्भावे लट् "अपरोक्षे चे"ति स्मशब्दयोगे भूताऽनद्यतनाऽपरोक्षाऽर्थे लट्, इन्द्रजित्कृतेन्द्रजयस्य पुरा विभीषणस्याऽपरोक्षत्वात् । ध्वाङ्क्षैः = "ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ।" इत्यमर । लीयते = "लीङ् श्लेषणे" इति दैवादिकधातोर्भावे वर्त्तमाने लटि "सार्वधातुके यक्" इति यक् ॥

ॐभाषाऽर्थ ॐ जिस इन्द्रजितसे महायुद्धमे इन्द्रके शिरमे रहा गया था, आज उसके भी शिरमे दुर्भाग्यसे कौवोंसे रहा जा रहा है ॥ १३ ॥

स्वर्भानुर्भास्कर ग्रस्तं निष्ठीवति कृताऽह्निकः ।
अभ्युपैति पुनर्भूति रामग्रस्तो न कश्चन ॥ १४ ॥

अन्वयः—कृताह्निक स्वर्भानु ग्रस्त भास्कर निष्ठीवति । रामग्रस्त कश्चन पुन भूतिं न अभ्युपैति ॥

व्याख्या—कृताऽह्निक = विहिताऽऽहार, स्वर्भानु = राहु, ग्रस्त = कवलितं, भास्कर = सूर्यम्, उपलक्षणमेतदतश्चन्द्रमसमपि, निष्ठीवति=निरस्यति, स्वमुखादिति शेष· । राहुग्रस्तोऽपि सूर्य पुनर्जीवन प्राप्नोतीति भाव, पर-रामग्रस्त = रामाऽभिभूत, कश्चन = कोऽपि जन, पुन = भूय, भूति = वृद्धि, न अभ्युपैति = न प्राप्नोति । अत्रोपमानभूताद्राहोरुपमेयभूतस्य रामस्योत्कर्षवर्णनाद्व्यतिरेकाऽलङ्कार ॥

ॐव्युत्पत्तिःॐ कृताऽऽह्निक.=अह्नानिर्वृत्तमाह्निक, "तेन निर्वृत्तम्, इति ठञ्।

कृतमाह्निक येन स॰। स्वर्भानु॰="तमस्तु राहु स्वर्भानु सैंहिकेयो विधुन्तुद"। इत्यमर। भास्कर=भा करोतीति भास्करस्त, "दिवाविभे" त्यादिना टप्रत्यय। "कस्कादिषु चे"ति विसर्गस्य सत्वम्। निष्ठीवति=निपूर्वकात् "ष्ठिवु निरसन" इति भौवादिकाद्धातोर्लट्। "ष्ठिवुक्लमुचमा शिति" इति दीर्घत्वम्। अभ्युपैति=अभ्युप-पूर्वकात् "इण् गतौ" इति धातोर्लट्, "एत्येधत्यूठ्सु" इति पररूपबाधिनी वृद्धि॰॥

❀भाषाऽर्थ॰❀ आहार करने वाला राहु खाये गये सूर्यको फेक देता है। परन्तु रामसे अभिभूत कोई भी फिर वृद्धि नही पाता है॥ १४॥

त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमम्।
दातु नेच्छसि सीता स्म विषयाणा च नेशिषे॥ १५॥

अन्वयः—हे राजन्! त्वम् इदम् अजानन् स्वविक्रमम् ईडिषेस्म, सीता दातुं न इच्छसिस्म, विषयाणा च न ईशिषेस्म॥

व्याख्या—हे राजन्=हे महाराज!, त्वम्, इदम्=ईदृश, रामसामर्थ्यमिति भाव, अजानन्=अनवगच्छन्, स्वविक्रमम्=आत्मपराक्रमम्, ईडिषेस्म=स्तुतवानसि, तत एव-सीता-जानकीं, दातु=रामाय अर्पयितु, न इच्छसिस्म=न इष्टवानसि, विषयाणा च=शब्दस्पर्शादीना च, न ईशिषेस्म=न प्रभवसिस्म, अजितेन्द्रियत्वात्त्व विषयान्न जितवानसीति भाव॥

❀व्युत्पत्ति॰❀ ईडिषेस्म="ईड स्तुतौ" इति धातो "अपरोक्षे चे"ति लट्, एव परत्रापि। "ईश से" "ईडजनोर्ध्वे च" इतीडागम। योगविभागो वैचित्र्याऽर्थ। विषयाणाम्=ईशधातोर्योगे "अधीगर्थदयेशा कर्मणि" इति कर्मणि षष्ठी। ईशिषेस्म="ईश ऐश्वर्ये" इति धातो॰ पूर्ववल्लट्॥

❀भाषाऽर्थ❀ हे महाराज! आपने ऐसे रामचन्द्रजीके पराक्रमको न जान कर अपने पराक्रमकी तारीफ की, सीताजीको लौटानेकी इच्छा नही की और शब्दस्पर्श आदि विषयोंको नही जीता॥ १५॥

मन्त्रे जातु वदन्त्यज्ञास्त्व तानप्यनुमन्यसे।
कथं नाम भवांस्तत्र नाऽवैति हितमात्मन॰॥ १६॥

अन्वयः—मन्त्रे जातु अज्ञा वदन्ति। त्व तान् अपि अनुमन्यसे। तत्र भवान् आत्मनो हित कथ नाम न अवैति?

व्याख्या—मन्त्रे=विचारकाले, जातु=कदाऽपि, अज्ञा=मूढा, वदन्ति=ब्रुवन्ति, उपदिशन्तीति भाव, गर्हितमेतत्। त्व, तान् अपि=तादृशान् अज्ञान् अपि, अनुमन्यसे=अनुमतवानसि, आप्तत्वेनाऽङ्गीकरोषीति भाव॰। एतदपि गर्हि-

तम् । इत्थं च द्वयमप्यतद्गर्हितमिति भाव । तत्र भवान्=स भवान्, आत्मन =स्वस्य, हित = पथ्य, कथं नाम=केन प्रकारेण इदम्, न अवैति=न जानाति, विदुषस्ते गर्हितमेतदित्यर्थ ॥

ॐव्युत्पत्तिःॐ अज्ञा' = जानन्तीति ज्ञा', "इगुपधज्ञाप्रीकिरः क" इति कप्रत्यय.। न ज्ञा अज्ञा । वदन्ति-अनुमन्यसे = उभयत्र क्रमेण जातुशब्दस्य अपिशब्दस्य च प्रयोगे "गर्हायां लडपि जात्वो." इति कालसामान्ये लट् । तत्र भवान्="इतराभ्योऽपि दृश्यन्ते" इति भवदादिशब्दयोगे सार्वविभक्तिकस्त्रल्प्रत्यय । अवैति=अत्र कथ पदेन योगे "विभाषा कथमि लिङ् चे"ति च शब्दात् गर्हाया लट् ॥

ॐभाषाऽर्थ ॐ विचारके समयमे कदाचित् मूर्ख उपदेश करते हैं, आप ऐसे मूर्खों को भी आप्त मान बैठते है, यह दोनों बात गर्हित है माननीय आप अपने हितको कैसे नही जानते हैं ? यह भी गर्हित बात है ॥ १६ ॥

अपृष्टो नु ब्रवीति त्वा मन्त्रे मातामहो हितम् ।
न करोमीति पौलस्त्य ! तदा मोहात्त्वमुक्तवान् ॥ १७ ॥

अन्वय —मन्त्रे अपृष्टो मातामह त्वा हित नु ब्रवीति । हे पौलस्त्य ! तदा त्वं मोहात् "न करोमि" इति उक्तवान् ॥

व्याख्या—मन्त्रे = विचारकाले, अपृष्ट = अननुयुक्त , मातामह =मातृपिता, माल्यवानिति भावः । त्वा = भवन्त, हित नु = पथ्य नु, हे रावण ! त्वं सीता प्रत्यर्पयेत्याकारकं हितवचनमिति भाव ब्रवीति = उक्तवान् । हे पौलस्त्य = हे रावण ! तदा = तस्मिन्काले त्वं = रावण , मोहात्=अज्ञानात् न करोमीति=नाऽऽचरामीति, उक्तवान्=अभिहितवान् , तस्यैव फलं साम्प्रतमनुभूतमिति भाव ॥

ॐव्युत्पत्ति.ॐ ब्रवीति = नुशब्द उपपदे "नन्वोर्विभाषा" इति नुशब्द उपपदे पृष्टप्रतिवचने भूतार्थे लट् । न करोमि = न शब्द उपपदे पूर्वसूत्रेण लट् ॥

ॐभाषाऽर्थ ॐ मन्त्रमें पूछे गये मातामह ( नाना ) माल्यवान्ने आपको हितवचन कहा था, हे रावण ! उस समय आप नेमोहसे "मै नही करूगा" ऐसा कहा ॥ १७ ॥

त्वं स्म वेत्थ महाराज ! यत्स्माऽऽह न विभीषणः ।
पुरा त्यजसि यत्क्रुद्धो मा निराकृत्य ससदि ॥ १८ ॥

अन्वय —हे महाराज ! विभीषणो यत् आह स्म त्व ( तत् ) न वेत्थ स्म, यत् क्रुद्ध ( सन् ) ससदि मा निराकृत्य पुरा त्यजसि ॥

व्याख्या—हे महाराज = हे राजश्रेष्ठ !, विभीषण = त्वदनुज , यत् = वचनम् , आह स्म = उक्तवान् , त्वं=न वेत्थ स्म = नो विदितवानसि तदिति शेष ।

तद्वचन हितत्वेन न ज्ञातवानसीति भाव । तज्ज्ञापक लिङ्गमाह—पुरेति । यत् = यस्माद्धेतो , क्रुद्ध =कुपित सन्, 'सीता प्रत्यर्पये'ति यदुपदेशेनेति शेष । ससदि = सभाया, मा = हितोपदेष्टारं भ्रातर, निराकृत्य=प्रत्यादिश्य, पादप्रहारेणेति भाव । पुरा त्यजसि=पूर्वं त्यक्तवानसि ॥

ॐव्युत्पत्तिॐ आह स्म = "ब्रूञ् व्यक्ताया वाचि" इति धातो "ब्रुव पञ्चानामादित आहो ब्रुव" इति लटि तिपो णलादेशो ब्रुवश्चाऽऽहादेश । "अपरोक्षे च" इत्यपरोक्षे लट् । वेत्थस्म = "विद ज्ञाने" इति धातो पूर्ववल्लट् "विदो लटो वे"ति विदेर्लटि सिपस्थादेश. । निराकृत्य = "प्रत्यादेशो निराकृति." इत्यमर. । त्यजसि = "त्यज हानौ" इति धातो. "पुरि लुङ् चाऽस्मे" इति स्मशब्दवर्जिते पुराशब्द उपपदे भूताऽनद्यतने लट् ॥

ॐभाषाऽर्थॐ हे महाराज ! विभीषणने जो वचन कहा था, उसे आपने नही जाना । जो कि आपने क्रुद्ध होकर सभामें मुझे पादप्रहारसे निराकरण कर छोड़ दिया ॥ १८ ॥

हविर्जक्षिति निःशङ्को मखेषु मघवानसौ ।
प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः ॥ १९ ॥

अन्वय.—असौ मघवान् मखेषु नि शङ्क हवि. जक्षिति । वायु स्वेच्छया प्रवाति, भास्करश्च उद्गच्छति ॥

व्याख्या—असौ=अमरावतीस्थ , मघवान् = इन्द्र , मखेषु=यज्ञेषु, नि·शङ्क = आतङ्करहित सन् , हवि = हवनीयद्रव्य , चरुपुरोडाशादिकमित्यर्थ· । जक्षिति = भक्षयति, भवति सति तादृशो व्यतिकरो नाऽभूदिति भाव , एव परत्राऽपि । वायु = वात , स्वेच्छया = आत्मवाञ्छया, स्वतन्त्रतया न तु परतन्त्रत ति भाव । प्रवाति= गच्छति, "पवत" इति पाठान्तर तत्र पवित्रीकरोतीत्यर्थ । एव च भास्करश्च=सूर्यश्च, उद्गच्छति = स्वेच्छया तपन्नुदेतीति भाव ॥

ॐव्युत्पत्तिॐमघवान्=मह्यते ( पूज्यते ) इति, "मह पूजायाम्" इति धातोः "श्वन्नुक्षन्नि"त्यादिना औणादिकसूत्रेण "मघव"न्निति निपातितम् । "मघवा बहुलम्" इति पक्षेत्रादेश "उगिदचा सर्वनामस्थानेऽधातो" इति नुमागम , सयोगाऽन्तलोप स्याऽसिद्धत्वान्न नलोपः । त्रादेशाऽभावपक्षे "मघवे"ति रूपम् । "इन्द्रो मरुत्वान्मघवा विडौजा पाकशासन ।" इत्यमर । जक्षिति = "जक्ष भक्षहसनयो" इति धातोर्लट् "रुदादिभ्य सार्वधातुके" इतीट् । भास्कर = "भास्कराऽहस्करब्रध्नप्रभाकरविभाकरा ।" इत्यमर ॥

ॐभाषाऽर्थ.ॐअब इन्द्र यज्ञोंमे निःशङ्क होकर आज्य आदि हवनीयपदार्थको

खायगे, वायुदेव अपनी इच्छासे बहेंगे और सूर्य भी अपनी इच्छासे ताप करते हुए उगेंगे ॥ १९ ॥

धनानामीशते यक्षा यमो दाम्यति राक्षसान् ।
तनोति वरुणः पाशमिन्दुनोदीयते ऽधुना ॥ २० ॥

अन्वय.—अधुना यक्षा धनानाम् ईशते । यमो राक्षसान् दाम्यति । वरुण पाश तनोति । इन्दुना उदीयते ॥

व्याख्या—अधुना = साम्प्रतं, यक्षा =कुबेरादय , धनाना=द्रव्याणाम् , ईशते= प्रभवन्ति, स्वाम्य लभन्त इति भाव । यमः = यमराज॰, राक्षसान् = यातुधानान् , दाम्यति = वशीकरोति । वरुण = पाशी, पाश = नागपाशं, तनोति = विस्तारयति । इन्दुना = चन्द्रमसा, उदीयते=वृद्धिक्षयाभ्यामुदितेन भूयते न तु प्रागिव नित्यपूर्णेनेति भाव । एतत्सर्वं भवदभावे जातमिति भाव ॥

॥व्युत्पत्ति॥ धनानाम् = ईशधातोर्योगे "अधीगर्थदयेशा कर्मणि" इति कर्मणि षष्ठी । ईशते = "ईश ऐश्वर्ये" इति धातोर्लट् , शपो लुकि "आत्मनेपदेष्वनत" इति झस्याऽदादेश । दाम्यति = "दमु उपशमे" इति दैवादिक धातोर्लट् "शमामष्टाना दीर्घ॰ श्यनि" इति दीर्घत्वम् । तनोति = "तनु विस्तार" इति धातोर्लट् , "तनादि- कृञ्भ्य उ " इत्यु । उदीयते = उत्पूर्वकात् "इण् गतौ" इति धातोर्भावे लट् , "अ- कृत्सार्वधातुकयोर्दीर्घ" इति दीर्घत्वम् ॥

॥भाषाऽर्थ॥ इस समय कुबेर आदि यक्षलोग अर्थों की प्रभुताको प्राप्त करेंगे। यमराज राक्षसोंको वशमे करेंगे। वरुण नागपाश फैलायेंगे। चन्द्रदेव पारी पारीसे वृद्धि और क्षयका अवलम्बन कर उदित होंगे ॥ २० ॥

शाम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः ।
नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति ना ऽमराः ॥ २१ ॥

अन्वयः—ऋतुसमाहार शाम्यति । वनौकस तपस्यन्ति । अमरा ते बन्धून् नो नमस्यन्ति न वरिवस्यन्ति ( च ) ॥

व्याख्या—ऋतुसमाहार = वसन्तादिऋतूना संभूयाऽवस्थान, शाम्यति = अ- पैति, पूर्व तु त्वत्परिचरणाऽर्थमृतूना सम्भूयवृत्तिरासीदिति भाव । वनौकसः=अरण्य- वासिन , मुनय इति भाव । तपस्यन्ति = तपश्चरन्ति, प्रतिबन्धकाऽभावादिति तात्प- र्यम् । अमरा = देवा , ते = तव, बन्धून् = बान्धवान् , नो नमस्यन्ति = पूर्ववन्न पूजयन्ति, न वरिवस्यन्ति = न परिचरन्ति च ॥

॥व्युत्पत्ति॥ शाम्यन्ति="शमु उपशमे" इति दैवादिकाद्धातोर्लट् , "शमाम-

ष्ठाना दीर्घ श्यनि" इति दीर्घत्वम् । वनौकस = वनमोको येषा ते । तपस्यन्ति = "कर्मणो रोमन्थतपोभ्या वर्तिचरो." इति क्यङ्, "तपस परस्मैपद चे"ति परस्मैपदत्वम् । नमस्यन्ति = नमस पूजायां "नमोवरिवश्चित्रङ. क्यच्" इति क्यच् । वरिवस्यन्ति = वरिवस परिचर्याया पूर्वसूत्रेण क्यच् ॥

❀भाषाऽर्थ❀ अब ऋतुओंका मिलजुलकर सदा रहना बन्द हो जायगा । मुनिलोग नि शङ्कतासे तपस्या करेंगे । देवतालोग पहलेकी तरह आपके बन्धुओंकी पूजा और सेवा नहीं करेंगे ॥ २१ ॥

श्रीर्निष्कुष्यति लङ्काया विरज्यन्ति समृद्धय. ।
न वेद तन्न यस्याऽस्ति मृते त्वयि विपर्यय. ॥ २२ ॥

अन्वय:—लङ्काया श्री निष्कुष्यति, समृद्धयो विरज्यन्ति । त्वयि मृते यस्य विपर्ययो न अस्ति तत् न वेद ॥

व्याख्या—लङ्काया = पुर्यां, श्री = लक्ष्मी , निष्कुष्यति=कुप्यति, 'न हृष्यति" इति भरतमल्लिसम्मत पाठस्तस्य च न हृष्टा भवतीत्यर्थ । समृद्धय = सम्पत्तय , विरज्यन्ति = विरक्ता भवन्ति, त्वयि = भवति, रावण इति भाव । मृते=पञ्चत्वं गते सति, यस्य = वस्तुन , विपर्यय = वैपरीत्यं, न अस्ति = न वर्तते, तत् = वस्तु, न वेद = न वेद्मि, भवदभावात्सर्वं विपर्यस्तमिति भावः ॥

❀व्युत्पत्ति❀ निष्कुष्यति = निष्पूर्वकात् "कुष निष्कर्ष" इति क्र्यादिस्थ धातो "कुषिरञ्जो· प्राचां श्यन्परस्मैपद चे"ति कर्मकर्तरि यगात्मनेपदाऽपवादी श्यन्प्रत्यय । धातूपसर्गाणामनेकार्थत्वादत्र कुषधातो कोपाऽर्थता । विरज्यन्ति = विपूर्वकात् "रञ्ज राग" इति धातो. पूर्ववत् श्यन्प्रत्यय. । वेद = "विद ज्ञान" इति धातोः "विदो लटो वे"ति मिपो वैकल्पिकोणलादेश , तदभावपक्षे "वेद्मी"ति रूपम् ॥

❀भाषाऽर्थ❀ लङ्कामें लक्ष्मी रूठेगी, सम्पत्तिया स्वयम् ही विरक्त होंगी। आपके मरनेपर जिस वस्तुका वैपरीत्य नही होगा ऐसी वस्तु मै नहीं जानता हू ॥२२॥

शक्ति सस्वजते शक्रो गोपायति हरि: श्रियम् ।
देवबन्द्यः प्रमोदन्ते चित्रीयन्ते घनोदया. ॥ २३ ॥

अन्वय:—शक्र शक्ति सस्वजते । हरि श्रियं गोपायति । देवबन्द्य प्रमोदन्ते । घनोदया चित्रीयन्ते ॥

व्याख्या—शक्र = इन्द्र , शक्ति=कासूं ( प्रहरण विशेषं ) सामर्थ्यं वा, क्वचित् "शचीम्" इति पाठस्तस्य इन्द्राणीमित्यर्थ । सस्वजते = गृह्णाति । हरि. = विष्णु , श्रिय=लक्ष्मीं, पुरा त्वत्पुरवर्तिनीमिति भाव । गोपायति=रक्षति, स्वायत्तीकरोतीति

भाव । देवबन्ध = बन्दीकृता देवस्त्रिय , प्रमोदन्ते=हृष्यन्ति, मुक्तिलाभादिति भाव । एवं च घनोदया॰=मेघोन्नतयश्च चित्रीयन्ते=आश्चर्यीभवन्ति, नानाविधरूपैरिति तात्पर्यम् । सर्वं चैतत्तवाऽभावादेव भविष्यतीति आकूतम् ॥

॥व्युत्पत्ति॥ सस्वजते = सम्पूर्वकात् "स्वञ्ज परिष्वङ्गे" इति धातोर्लट् "दंशसञ्जस्वञ्जा शपी" त्यनुनासिकलोप । गोपायति = "गुपूरक्षण" इति धातोर्लट् , "गुपूधूपविच्छिपणिपनिभ्य आय" इति स्वार्थं आयप्रत्ययः । प्रमोदन्ते = प्रपूर्वकात् "मुद हर्षे" इति धातोर्लट् । चित्रीयन्ते = "चित्रङ् आश्चर्ये" इति धातो "नमोवरिवश्चित्रङ क्यच्" इति क्यजन्ताल्लट् । ङित्करणात् "अनुदात्तङित आत्मनेपदम्" इत्यात्मनेपदम्॥

॥भाषाऽर्थ॥ अब इन्द्र अपने सामर्थ्यका ग्रहण करेंगे । विष्णु लक्ष्मीको अपनी अधीन करेंगे । बन्दी बनायी गयी देवस्त्रियाँ मुक्ति लाभके कारण प्रसन्न होंगी । मेघोंकी उन्नतिया भी अनेक रूपोंसे आश्चर्य पूर्ण हो जायगी ॥ २३ ॥

बिभ्रत्यस्त्राणि साऽमर्षा रणकाम्यन्ति चाऽमरा ।
चकासति च मासाऽदा तथा रन्ध्रेषु जाग्रति ॥ २४ ॥

अन्वयः—अमरा॰ साऽमर्षा ( सन्त ) अस्त्राणि बिभ्रति रणकाम्यन्ति चकासति च, तथा मासादा रन्ध्रेषु जाग्रति ॥

व्याख्या—अमरा = देवा , साऽमर्षा = सकोपा सन्त॰, अस्त्राणि = आयुधानि, बिभ्रति = धारयन्ति, रणकाम्यन्ति = आत्मनो रणमिच्छन्ति, चकासति च = प्रकाशन्ते च, तथा = तेनैव प्रकारेण, मासादा=राक्षसाना, रन्ध्रेषु=छिद्रेषु, जाग्रति= सावधाना भवन्ति ॥

॥व्युत्पत्ति॥ सामर्षा॰ = अमर्षेण सहिता , तुल्ययोगबहुव्रीहि । बिभ्रति = "डुभृञ् धारणपोषणयो॰" इति ह्वादिधातोर्लटि झौ रूपम् । शप॰ "जुहोत्यादिभ्यः श्लु॰" इति श्लौ, "श्लौ" इति द्वित्वे "भृञामित्" इतीत्वे अभ्यस्तसञ्ज्ञायाम् "अदभ्यस्तात्" इत्यत् । रणकाम्यन्ति = "काम्यच्चे"ति काम्यच्प्रत्यये "सनाद्यन्ता धातव" इति तदन्तस्य धातुत्व, ततो लट् । चकासति = "चकासृ दीप्तौ" इति धातोर्लट् । मांसादा = मासमदन्तीति मासादस्तेषाम्, "अदोऽनन्न" इति विट् । जाग्रति="जागृ निद्राक्षय" इति धातोर्लट् । "जक्षित्यादय षट्" इत्यभ्यस्तसञ्ज्ञा, "अदभ्यस्तात्" इति झस्याऽदादेश ॥

॥भाषाऽर्थ॥ अब देवगण क्रोधयुक्त होते हुए अस्त्रोंको धारण करेंगे, लडनेकी इच्छा करेंगे और शोभित भी होंगे तथा राक्षसोंके छिद्रोंमें सावधान ( होशियार ) रहेंगे ॥ २४ ॥

चञ्चूर्यन्तेऽभितो लङ्कामस्मांश्चाऽप्यतिशेरते ।
भूमयन्ति स्वसामर्थ्यं कीर्ति न: कनयन्ति च ॥ २५ ॥

अन्वय:—( अमरा ) लङ्काम् अभित चञ्चूर्यन्ते, अस्मान् अपि च अतिशेरते, स्वसामर्थ्यं भूमयन्ति न कीर्ति कनयन्ति च ॥

व्याख्या—लङ्काम् अभित = लङ्काम् उभयत , अन्तर्बहिश्चेति भाव । चञ्चूर्यन्ते = गर्हित चरन्ति, स्वच्छन्द चरन्तीत्यर्थ , अमरा इति शेष , एव परत्राऽपि । अस्मान् अपि च = अस्मादृशराक्षसान् अपि च, अतिशेरते=अतिक्रामन्ति, स्वसामर्थ्यम् = आत्मशक्ति, भूमयन्ति = वर्धयन्ति, न = अस्माक, राक्षसानामिति भाव । कीर्ति = यश , कनयन्ति च = अल्पयन्ति च ।

❀व्युत्पत्ति❀ लङ्काम् = "अभित" इति पदेन योगे "अभित परित समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । अभित =अभिशब्दात् "पर्यभिभ्या चे"ति तसिप्रत्यय । चञ्चूर्यन्ते = चरधातो "लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" इति भावगर्हाया यङ् "चरफलोश्चे"ति अभ्यासस्य नुगागम', "उत्परस्यात" इत्युत्व "हलि चे"ति दीर्घत्वम् । अतिशेरते = अतिपूर्वकात् "शीङ् स्वप्ने" इति धातोर्लट् "शीङो रुट्" इति रुडागम । स्वसामर्थ्यं = समर्थस्य भाव कर्म वा सामर्थ्यं "गुणवचनब्राह्मणादिभ्य' कर्मणि चे"ति ष्यञ् । स्वस्य सामर्थ्यं, तत् । भूमयन्ति=बहोर्भावो भूमा, बहुशब्दात् "पृथ्वादिभ्य इमनिज्वा" इतीमनिच् । "बहोर्लोपो भू च बहो" इति बहोर्भूरादेश , इमनिजादिलोपश्च । भूमवत्कुर्वन्तीति भूमयन्ति, मत्वन्ताद्भूमवत्शब्दात् "तत्करोति तदाचष्टे" इति णिचि णाविष्ठवद्भावे "विन्मतोर्लुक्" इति मतोर्लुकि टिलोपे च साधुत्वम् । कनयन्ति = अल्पां कुर्वन्ति इति विग्रहे अल्पशब्दात् "तत्करोति तदाचष्टे" इति णिचि णाविष्ठवद्भावे "युवाल्पयो कनन्यतरस्याम्" इति अल्पशब्दस्य वैकल्पिक कनादेश ॥

❀भाषाऽर्थ❀ देवगण लङ्काके भीतर और बाहर दोनों तरफ स्वच्छन्द हो कर घूमेंगे, हम लोगोंका भी लङ्घन करेंगे अपने सामर्थ्य को बढायेंगे और हमारी कीर्ति को अल्प कर देंगे ॥ २५ ॥

दिशो व्यश्नुवते दृप्तास्त्वत्कृता जहति स्थितिम् ।
क्षोदयन्ति च नः क्षुद्रा, हसन्ति त्वा विपद्गतम् ॥ २६ ॥

अन्वय —( अमरा ) दृप्ता ( सन्त ) दिशो व्यश्नुवते, त्वत्कृता स्थिति जहति, क्षुद्रा विपद्गत त्वा हसन्ति क्षोदयन्ति च ॥

व्याख्या—दृप्ता = दर्पयुक्ता सन्त , दिश = आशा , व्यश्नुवते=व्याप्नुवन्ति, अमरा इति शेष । एवं परत्राऽपि त्वत्कृता = भवद्विहिता, स्थिति = मर्यादा, जहति=

त्यजन्ति । क्षुद्रा = अल्पा , ते देवा । विपद्गतं = विपन्न, त्वा = भवन्तं, हसन्ति= तिरस्कुर्वन्ति, क्षोदयन्ति च = क्षुद्रमाचक्षते च ॥

॥व्युत्पत्ति॥ व्यश्नुवते = विपूर्वकात् "अशू व्याप्तौ" इति धातोर्लट् । त्वत्कृता = त्वया कृताम्, "प्रत्ययोत्तरपदयोश्चे"ति उत्तरपदे परे युष्मच्छब्दस्य त्वदादेश । स्थिति = "सस्था तु मर्यादा धारणस्थिति·" इत्यमर । जहति = "ओहाक् त्यागे" इति धातोर्लट्, अभ्यस्तत्वात् झेरदादेशे "श्नाऽभ्यस्तयोरात" इत्याल्लोप । विपद्गत= विपद गतो विपद्गतस्त, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्तापन्नैः" इति द्वितीयातत्पुरुष· । क्षोदयन्ति = क्षुद्रमाचक्षत इति क्षुद्रशब्दात् "तत्करोति तदाचष्ट" इति णिचि णाविष्ठवद्भावे "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणा यणादिपर पूर्वस्य च गुण" इति यणादिपरलोप पूर्वस्य च गुण ।

॥भाषाऽर्थ॥ देवगण दर्पयुक्त होते हुए दिशाओंको व्याप्त करेंगे, आपसे की गयी मर्यादा का त्याग करेंगे। क्षुद्र वे लोग आपद्ग्रस्त आपकी हँसी करेंगे और आप को ही क्षुद्र कहेंगे भी ॥ २६ ॥

शम शम नभस्वन्तः पुनन्ति परितो जगत् ।
उज्जिहीषे महाराज ! त्व प्रशान्तो न कि पुनः ॥ २७ ॥

अन्वयः—नभस्वन्त शम शम परितो जगत् पुनन्ति । हे महाराज ! त्व पुन प्रशान्त ( सन् ) किं न उज्जिहीषे ?

व्याख्या—नभस्वन्त·=वायवः, शम शम = शान्त्वा शान्त्वा, परित =सर्वत·, जगत् = लोकं, पुनन्ति = पवित्रयन्ति, शान्ता अपि पुन प्रवहन्तीति भाव· । हे महाराज = हेभूपालश्रेष्ठ !, त्व, पुन = भूय , प्रशान्त =निर्वाण सन् , किं=किमर्थं, न उज्जिहीषे = नोत्तिष्ठसि, नोज्जीवसीति भाव ॥

॥व्युत्पत्ति॥ शम शमं = "शमु उपशम" इति धातो "आभीक्ष्ण्ये णमुल्" इति णमुल्, "नोदात्तोपदेशस्य मान्तस्याऽनाचमे·" इति वृद्धिप्रतिषेधः, आभीक्ष्ण्ये द्वे भवत । "कृन्मेजन्त" इत्यव्ययत्वम् । पुनन्ति = "पूञ् पवन" इति धातोर्लट्, "प्वादीनां ह्रस्व" इति ह्रस्वत्वम् । उज्जिहीषे = उत्पूर्वकात् "ओहाङ् गतौ" इति धातोर्लट् "भृञामित्" इत्यभ्यासस्येत्वम् " ई हल्यघो " इतीत्वम् ॥

॥भाषाऽर्थ॥ वायु शान्त हो हो कर चारों तरफ जगत् को पवित्र कर रहे है। हे महाराज ! आप प्रशान्त हो कर फिर क्यों उज्जीवित नहीं हो रहे हैं ? ॥ २७ ॥

प्रोर्णोति शोकश्चित्तं मे सत्व सशाम्यतीव मे ।
प्रमार्ष्टि दुःखमालोक मुञ्चाम्यूर्ज त्वया विना ॥ २८ ॥

अन्वय —( हे महाराज । ) त्वया विना शोको मे चित्त प्रोर्णोति, मे सत्वं संशाम्यति इव । दु खम् आलोकं प्रमार्ष्टि । ऊर्जं मुञ्चामि ॥

**व्याख्या**—त्वया विना = भवन्तम् अन्तरेण, शोक=मन्यु, मे = मम, चित्त= मानस, प्रोर्णोति = आच्छादयति, मे = मम, सत्त्व = प्राण, सशाम्यति इव = विरमति इव। दुःखं = व्यथा, आलोकं = प्रकाश, प्रमार्ष्टि = अपनयति। ऊर्जं = बल, मुञ्चामि = त्यजामि, अहमिति शेष ॥

॥व्युत्पत्तिः॥ त्वया = "विने" तिपदेन योगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति तृतीया, पक्षे पञ्चमीद्वितीये च। प्रोर्णोति = प्रपूर्वकात् "ऊर्णुञ् आच्छादन" इति आदादिकाद्धातोर्लट्, "ऊर्णोतेर्विभाषा" इति वृद्ध्यभावपक्षे रूपम्। मल्लिनाथस्तु "प्रोर्णौति" इति पाठमाह, तत्र वृद्धि। सत्त्व = "प्राणे बलेऽन्त करणे" इति सत्त्वार्थेषु यादव। सशाम्यति = सम्पूर्वकात् "शमु उपशमे" इति धातोर्लट् "शमामष्टाना" मित्यादिना दीर्घत्वम्। आलोकम् = "आलोकौ दर्शनद्योतौ" इत्यमर। प्रमार्ष्टि = प्रपूर्वकात् "मृजू शुद्धौ" इत्यादादिकाद्धातोर्लट्, "मृजेर्वृद्धि" इति वृद्धि। मुञ्चामि = मुच्लृ मोक्षण इति तौदादिकाद् धातोर्लट्, "शेमुचादीनाम्" इति नुम् ॥

॥भाषार्थः॥ हे महाराज! आपके विना शोक मेरे चित्तको आच्छादित कर रहा है, मेरा प्राण जैसे शान्त हो रहा है। दुःख प्रकाश हटा रहा है। मै अपने बल का त्याग कर रहा हू ॥ २८ ॥

> के न संविद्रते नाऽन्यस्त्वत्तो बान्धववत्सलः।
> विरौमि शून्ये प्रोर्णौमि कथ मन्युसमुद्भवम् ॥ २९ ॥

**अन्वयः**—त्वत्त अन्य बान्धववत्सलो न (इति) के न सविद्रते? शून्ये विरौमि। मन्युसमुद्भव कथ प्रोर्णौमि?

**व्याख्या**—हे महाराज! त्वत्तः = भवतः, अन्य, = अपर, बान्धववत्सल = बन्धुप्रिय, न = नाऽस्ति, (इति = इदम्) के = जना, न संविद्रते = न जानन्ति, सर्वेऽपि जानन्तीति भाव। अतोऽह शून्ये = रिक्ते सति, विरौमि = क्रन्दामि। मन्युसमुद्भव = शोकोदय, कथं = केन प्रकारेण, प्रोर्णौमि = आच्छादयामि, वारयामीति भाव ॥

॥व्युत्पत्तिः॥ त्वत्त = त्वदिति, युष्मच्छब्दात् "पञ्चम्यास्तसिल्" इति तसिल्प्रत्यये परे "प्रत्ययोत्तरपदयोश्चे"ति तस्य त्वदादेश। बान्धववत्सल = बन्धव एव बान्धवा, "प्रज्ञादिभ्यश्चे"ति स्वाऽर्थेऽण्। वत्सशब्दात् कामवत्यर्थे "वत्साऽसाभ्यां कामबले" इति लच्प्रत्यय, "स्निग्धस्तु वत्सल" इत्यमर। बान्धवेषु वत्सल। सविद्रते = सपूर्वकात् "विद ज्ञाने" इति धातोर्लट्, "समो गम्यृच्छिभ्याम्" इत्यधिकारे विदिप्रच्छिस्वरतीनामुपसख्यानम्" इत्यात्मनेपद "वेत्तेर्विभाषा" इति झादेशस्याऽ-

तो रुडागम । विरौमि = विपूर्वात् "रु शब्दे" इति धातोर्लट् "उतोवृद्धिर्लुकि हलि" इति वृद्धि, "तुरुस्तुशम्यम सार्वधातुके" इतीट्पक्षे "विरवीमी"ति रूपम् ॥

❀भाषाऽर्थ❀ हे महाराज ! आपके अतिरिक्त बन्धुप्रिय दूसरा नहीं है, इस बात को कौन नही जानते है ? इस लिए मै उस स्थानके रिक्त होने पर रो रहा हू । मै शोकके उदयको कैसे हटाऊँ ॥ २९ ॥

रोदिम्यनाथमात्मान बन्धुना रहितस्त्वया ।
प्रमाणं नोपकाराणामवगच्छामि यस्य ते ॥ ३० ॥

अन्वयः—बन्धुना त्वया रहित अनाथम् आत्मान रोदिमि । यस्य ते उपकाराणा प्रमाण न अवगच्छामि ॥

व्याख्या—बन्धुना=बान्धवेन, त्वया=भवता, रहित=शून्यः, अहमिति शेष । अनाथ = रक्षकरहितम् , आत्मान=स्वम्, उद्दिश्येति शेष । रोदिमि = परिदेवये । यस्य = कृतकार्यस्य, ते = तव, उपकाराणाम् = उपकृतीना, प्रमाणम् = इयत्ता, न अपगच्छामि = न जाने, तादृश त्वामुद्दिश्य कथ न शोचामीति भाव ॥

❀व्युत्पत्ति❀ अनाथम् = अविद्यमानो नाथो यस्य, त "नञोऽस्त्यर्थाना वाच्यो वा चोत्तरपदलोप" इति नञ्बहुव्रीहि ॥

❀भाषाऽर्थ❀ आपके ऐसे बान्धवसे बिछुडकर अनाथ होकर मै अपने लिए विलाप कर रहा हू । मै आपके उपकारोंकी इयत्ता नही जान रहा हू ॥ ३० ॥

नेदानी शक्रयक्षेन्द्रौ बिभीतो न दरिद्रितः ।
न गर्वं जहितो दृप्तौ न क्लिश्नीतो दशाऽऽनन ! ॥ ३१ ॥

अन्वय—हे दशाऽऽनन ! इदानी शक्रयक्षेन्द्रौ न बिभीत , न दरिद्रित , दृप्तौ गर्वं न जहित न क्लिश्नीत ॥

व्याख्या—हे दशाऽऽनन = हे रावण !, इदानी = साम्प्रतं, शक्रयक्षेन्द्रौ = इन्द्रकुबेरौ, न बिभीत = नो भय कुरुत , न दरिद्रित = नो दरिद्रौ भवत , पुनरात्मसम्पत्तिलाभादिति भाव । अपि तु दृप्तौ = दर्पयुक्तौ सन्तौ, ताविति शेष । गर्वम्= अभिमान, न जहित = नो त्यजत , एव च—न क्लिश्नीत = न त्वद्भयेनाऽऽत्मान पीडयत इत्यर्थ ॥

❀व्युत्पत्ति❀ शक्रयक्षेन्द्रौ = शक्रश्च यक्षेन्द्रश्च, "अल्पाऽऽच्तरम्" इति "अभ्यर्हित चे"ति वा शक्रपदस्य पूर्वनिपात । बिभीत = "ञिभी भये" इति धातोर्लट् , "भियोऽन्यतरस्याम्" इति इत्वाऽभावपक्षे रूपम् । इत्वे तु "बिभित" इति रूपम् । दरिद्रितः = "दरिद्रा दुर्गतौ" इत्यादादिकाद्धातोर्लट् । तसि शपो लुक् "इद्दरिद्रस्य"

इति हलादौ क्ङिति सार्वधातुक इत् । जहित = "ओहाक् त्यागे" इति जौहो-त्यादिकाद्धातोर्लट् "जहातेश्च" इतीत्वम् । क्लिश्नीत· = "क्लिशू विबाधने" इति क्रैयादिकधातोर्लट् "ई हल्यघो" इतीत्वम् । "शात्" इति श्चुत्वनिषेध, धातुरयं सकर्मक ॥

❀भाषाऽर्थ❀ हे रावण ! इस समय इन्द्र और कुबेर भीत नहीं हो रहे हैं, दरिद्र नहीं हो रहे हैं, दर्पयुक्त होकर घमण्ड नहीं छोड रहे है, आपके भयके कारण चिन्ता आदिमे अपनेको पीडित नही कर रहे है ॥ ३१ ॥

त्वयाऽपि नाम रहिता· कार्याणि तनुमो वयम् ।
कुर्मश्च जीविते बुद्धि, धिक् तृष्णा कृतनाशिनीम् ॥ ३२ ॥

अन्वय—वय त्वया रहिता कार्याणि अपिनाम तनुम ? जीविते च बुद्धि कुर्म । कृतनाशिनी तृष्णा धिक् ॥

व्याख्या—वय = बन्धव·, त्वया = भवता, रहिता = त्यक्ता सन्त , कार्याणि= अपि कृत्यानि अपि, सन्धिविग्रहादीनीति भाव । नामेति कुत्सने । तनुम·—कुर्म , न करिष्याम इत्यर्थ· । जीविते च = जीवने च, बुद्धि = मतिं, कुर्म = तनुम । तत् कृतनाशिनी = कृतघ्नरूपा, मल्लिनाथमते तु "कृतनाशिनाम्" इति पाठस्तस्य कृत-घ्नानामित्यर्थ । तृष्णा=गर्वां, रक्षकाऽभावेऽपि कार्याचरण—जीवनमतिरूपामिति भाव । धिक्=धिगस्तु, महोपकार रक्षक त्वा विना जीवित गर्हितमिति भाव ॥

❀व्युत्पत्ति❀ नाम = "नाम प्रकाश्यसभाव्यक्रोधोपगमकुत्सने ।" इत्यमरः । तनुम = "तनु विस्तारे" इति धातो "गर्हाया लडपिजात्वो" इति भविष्यति लट् । तृष्णां=धिग्योगे "धिगुपर्यादिषु त्रिषु" इति द्वितीया ॥

❀भाषाऽर्थ❀ हे महाराज ! हम आपसे रहित होकर क्या सन्धिविग्रह आदि कार्य भी करेगे ? और जीवनधारण करनेमे बुद्धि रक्खेगे ? तब इस कृतघ्न तृष्णाको धिक्कार है ॥ ३२ ॥

तृणेह्मि देहमात्मीय, त्व वाचं न ददासि चेत् , ।
द्राघयन्ति हि मे शोक स्मर्यमाणा गुणास्तव ॥ ३३ ॥

अन्वय·—( हे महाराज ! ) त्व वाच न ददासि चेत् आत्मीय देह तृणेह्मि । हि स्मर्यमाणा तव गुणा मे शोक द्राघयन्ति ॥

व्याख्या—( हे महाराज ! ) त्वं वाच=वाणी, न ददासि चेत् = नो वितरसि यदि, न संभाषसे चेदिति भाव । अहम्, आत्मीयं=स्वकीयं, देह = शरीर, तृणेह्मि= हिनस्मि । हि = यत , स्मर्यमाणा = स्मृतिविषयीकृता , तव=भवत गुणा =शौर्य-

रक्षणादिरूपा इति भाव·, मे = मम, शोक = मन्यु, द्राघयन्ति = दीर्घीकुर्वन्ति ॥

ॐव्युत्पत्ति ॐ तृणेह्मि = "तृह ( हिसि ) हिसायाम्" इति धातोर्लट्, "तृणह इम्" इति इमागम· । द्राघयन्ति = दीर्घशब्दात् "तत्करोति तदाचष्टे" इति णिचि णाविष्ठवद्भावे "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणा प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दा·" इति द्राघ्यादेशः ॥

ॐभाषाऽर्थ·ॐ हे महाराज ! आप मुझसे सभाषण नही करते है तो मै अपने शरीरको नष्ट कर डालता हू । क्योंकि स्मरण करने पर आपके गुण मेरे शोकको फैला रहे है ॥ ३३ ॥

उन्मुच्य स्रजमात्मीयां मा स्रजयति को हसन् ।
नेदयत्यासन को मे, कर्हि मे वदति प्रियम् ॥ ३४ ॥

अन्वय·—आत्मीया स्रजम् उन्मुच्य को हसन् मा स्रजयति ? को मे आसन नेदयति ? कर्हि को मे प्रियं वदति ?

**व्याख्या**—आत्मीया = स्वकीया, स्रजं=मालाम्, उन्मुच्य = अपनीय, देहादिति शेष । क, हसन्=हास्यं कुर्वन्, परितोषादिति भाव । मा = भ्रातर स्रजयति = स्रग्विणं करोति, क, मे = मम, आसनम् = उपवेशनस्थान नेदयति = अन्तिकं करोति, कर्हि = कदा, क, मे = मम, प्रिय = प्रीतिजनक वचनं, वदति = वदिष्यति ॥

ॐव्युत्पत्ति·ॐ स्रजयति=स्रग्विन्शब्दात् "तत्करोति तदाचष्टे" इति णिचि णाविष्ठवद्भावे "विन्मतोर्लुक्" इति विनो लुकि "प्रकृत्यैकाच्" इति प्रकृतिभावान्न टिलोप । नेदयति = अत्राऽपि णाविष्ठवद्भावात् "अन्तिकबाढयोर्नेदसाधौ" इत्यन्तिकशब्दस्य नेदादेश । कर्हि = "अनद्यतने र्हिलन्यतरस्याम्" इति किमो र्हिल्प्रत्यय । वदति = "विभाषा कदाकर्ह्यो·" इति कदाशब्दस्य प्रयोगाद्भविष्यदर्थे लट् ॥

ॐभाषाऽर्थ ॐ अपनी मालाको उतारकर हसता हुआ कौन मुझे पहना देगा? कौन मेरे आसनको अपने आसनके समीप रक्खेगा? कौन मुझसे प्रियवाक्य बोलेगा ॥ ३४

न गच्छामि पुरा लङ्कामायुर्यावद् दधाम्यहम् ।
कदा भवति मे प्रीतिस्त्वां पश्यामि न चेदहम् ॥ ३५ ॥

अन्वय —अहं यावत् आयु दधामि ( तावत् ) लङ्का पुरा न गच्छामि । अह त्वा न पश्यामि चेत् कदा मे प्रीति भवति ॥

**व्याख्या**—( हे महाराज ! ) अह = भवदनुज, यावत् = यत्कालपर्यन्तम्, आयु = जीवितं, दधामि = धारयिष्यामि, जीविष्यामीति भाव । ( तावत् = तत्काल पर्यन्त ) लङ्का = तदाख्या पुरी, पुरा न गच्छामि = न गमिष्यामि । अहं = भव·

द्भ्राता विभीषण , त्वा = भवन्तं, पितृ समं ज्येष्ठभ्रातरमिति भाव । न पश्यामि= नो विलोकयामि, चेत् = यदि कदा = कस्मिन्काले, मे = मम, पुत्रसमस्य कनिष्ठ-भ्रातुरिति भाव । प्रीति = प्रसन्नता, भवति=भविष्यतीत्यर्थ ॥

❀व्युत्पत्ति❀ दधामि="डुधाञ् धारणपोषणयो" इति धातोर्यावत्पदेन योगे "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट । पुरा न गच्छामि=पुरापदेन योगे "गम्लृगतौ" इति धातो पूर्वसूत्रेण लट् । कदा="सर्वैकान्यकिंयत्तद कालेदा" इति दाप्रत्यय । भवति=कदाशब्दयोगात् "विभाषा कदाकर्ह्यो" इति भविष्यदर्थे लट् ॥

❀भाषाऽर्थ❀ हे महाराज ! मै जब तक जीऊगा तब तक लङ्कामें नहीं जाऊगा । मै आपको नहीं देखूंगा तो कब मुझे प्रीति होगी ? ॥ ३५ ॥

ऊर्ध्वं म्रिये मुहूर्ताद्धि विह्वल. क्षतबान्धवः ।
मन्त्रे स्म हितमाख्यामि, न करोमि तवाऽप्रियम् ॥ ३६ ॥

अन्वय'—क्षतबान्धवो विह्वल (अहम्) मुहूर्तात् ऊर्ध्वं म्रिये हि । मन्त्रे हितम् आख्यामि स्म । तव अप्रिय न करोमि ॥

व्याख्या—( हे महाराज ! ) क्षतबान्धव = हृतबन्धु , अत एव—विह्वल = विवश , अहमिति शेष , एव परत्राऽपि । अत प्राप्तकालत्वात्—मुहूर्तात् = कस्माच्चित्क्षणात् , ऊर्ध्वम्=उपरि, म्रिये=मरिष्यामि, हि=निश्चयेन । स्वकीयमपराधाऽभावं प्रतिपादयति—मन्त्र इति । मन्त्रे=मन्त्रविचारकाले, हितं=पथ्यम् , आख्यामि स्म=आख्यम् । तव=भवत , अप्रियम्=अनभीष्ट, न करोमि=नाऽकार्षम् ॥

❀व्युत्पत्ति❀ क्षतबान्धव =बन्धव एव बान्धवा , "प्रज्ञादिभ्यश्चे"ति स्वाऽर्थेऽण् । क्षता बान्धवा यस्य स । म्रिये="मृङ् प्राणत्यागे" इति धातो "म्रियतेर्लुङ्लिङोश्चे"ति चकारात् शितश्चात्मनेपदम् , "लिङ् चोर्ध्वमौहूर्तिके" इति लोडर्थलक्षणे भविष्यति लट् , प्राप्तकाललक्षणश्चाऽत्र लोडर्थ । आख्यामि स्म=आङ्पूर्वकात् "ख्या प्रकथन" इति धातो "लट् स्मे" "अपरोक्षे चे"ति भूताऽपरोक्षे लट् । न करोमि= नशब्दयोगे कृधातो "नन्वोर्विभाषा" इति पृष्टप्रतिवचने भूते लट् ॥

❀भाषाऽर्थ❀ बान्धवोंके नष्ट होनेके कारण विह्वल होकर मै मुहूर्तके अनन्तर ही निश्चय मर जाऊगा । हे महाराज ! मैने मन्त्रविचारके समयमें हितवचन कहा था, आपका अप्रिय नही किया था" ॥ ३६ ॥

अन्त पुराणि पौलस्त्य पौराश्च भृशदु खिताः ।
सश्रुत्य स्माऽभिधावन्ति हत रामेण सयुगे ॥ ३७ ॥

अन्वयः—पौलस्त्य संयुगे रामेण हत सश्रुत्य अन्त पुराणि पौराश्च भृशदु - खिता ( सन्त ) अभिधावन्ति स्म ॥

**व्याख्या**—पौलस्त्यं = रावण, संयुगे = सग्रामे, रामेण = रामचन्द्रेण, हतं = व्यापादित, सश्रुत्य = आकर्ण्य, अन्त पुराणि = अवरोधा , लक्षणया अन्त पुरस्त्रिय इत्यर्थ । पौराश्च = नागरिकाश्च, भृशदु खिता = अतिशयव्यथिताः सन्त , अभिधावन्ति स्म = अभ्यधावन् ॥

**ॐव्युत्पत्तिःॐ** पौलस्त्य = पुलस्त्यस्याऽपत्य पुमान्पौलस्त्यस्तम् , "तस्याऽपत्यम्" इत्यण् । पौरा = पुरि भवा', "तत्र भव" इत्यण् । भृशदु.खिता = भृश दु खिता' = "सह सुपा" इति समासः । अभिधावन्ति स्म = अभिपूर्वकात् "धावु गतिशुद्धयो." इति धातो. "लट् स्मे" इति भूते लट् ॥

**ॐभाषाऽर्थ ॐ** सग्राममे "रामसे रावण मारा गया" ऐसा सुनकर अन्त पुरकी स्त्रिया और लङ्काके नागरिक भी अतिशय दु खित होते हुए उसके सम्मुख गये॥३७॥

**मूर्धजान् स्म विलुञ्चन्ति, क्रोशन्ति स्माऽतिविह्वलम् ,**
**अधीयन्त्युपकाराणां मुहुर्भर्तुः प्रमन्यु च ॥ ३८ ॥**

**अन्वयः**—( अन्त पुराणि ) मूर्धजान् विलुञ्चन्ति स्म, अतिविह्वल क्रोशन्ति स्म, प्रमन्यु भर्तुः उपकाराणा मुहु अधीयन्ति स्म ॥

**व्याख्या**—अन्त पुरचेष्टितान्याह—मूर्धजानिति । मूर्धजान् = केशान्, विलुञ्चन्ति स्म = अपानयन् , अन्त पुराणीति शेष , एवं परत्राऽपि । अतिविह्वलम् = अतिविक्लवतापूर्वक, क्रोशन्ति स्म = रावणमाह्वयन्, अरुदन् वा । प्रमन्यु = प्रकृष्टशोक यथा तथा, भर्तु = स्वामिन , रावणस्येत्यर्थ । उपकाराणाम् = उपकृतीना, रावणलब्धसौख्यानीति भाव । मुहु = वारं वारम्, अधीयन्ति स्म = अस्मरन्, इत्थङ्कारमन्त पुररमण्य शोकं प्राकाशयन्निति भाव ॥

**ॐव्युत्पत्ति ॐ** मूर्धजान् = मूर्ध्निजाता मूर्धजास्तान्, "सप्तम्या जनेर्ड" इति डप्रत्ययः । "चिकुर कुन्तलो बाल कच केश शिरोरुह. ।" इत्यमर । विलुञ्चन्ति स्म = विपूर्वकात् "लुञ्च अपनयने" इति धातो' "लट् स्मे" इति भूताऽर्थे लट् । प्रमन्यु = प्रकृष्टो मन्युर्यस्मिंस्तद् यथा तथेति क्रियाविशेषणम् । उपकाराणा = अधिपूर्वकेण इग्धातुना योगे "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी । अधीयन्ति स्म = अधिपूर्वकात् "इक् स्मरणे" इति धातो "लट् स्मे" इति भूतार्थे लट्, शपो लुक् "झोऽन्त" इति झस्याऽन्तादेश इयङादेश', अध्युपसर्गे च सवर्णदीर्घ ॥

**ॐभाषाऽर्थ ॐ** रावणके अन्त पुरकी स्त्रिया केशोंको नोचने लगी, अति विह्वल होकर रोने और पुकारने लगी और अतिशय शोकके साथ पतिसे किये गये उपकारोंका वारवार स्मरण ( याद ) करने लगीं ॥ ३८ ॥

रावणस्य नमन्ति स्म पौराः सास्रा रुदन्ति च ।
भाषते स्म ततो रामो वचः पौलस्त्यमाकुलम् ॥ ३९ ॥

**अन्वयः—**पौरा साऽस्रा ( सन्त ) रावणस्य नमन्ति स्म रुदन्ति स्म च । ततो राम आकुल पौलस्त्य वचो भाषते स्म ॥

**व्याख्या—**पौरा = नागरिकाश्च, साऽस्रा = सवाष्पा सन्त, रावणस्य = दशाननस्य, पादाविति शेष, यद्वा रावणम् । नमन्तिस्म = प्रणता, रुदन्ति स्म च = अश्रूणि मुमुचुश्च, 'रुवन्ति" इति मल्लिनाथसम्मत पाठस्तस्य चुकुशुरित्यर्थ । तत = राम = रामचन्द्र, आकुलं = व्याकुल, पौलस्त्य = विभीषणं, वच = वचनं, वक्ष्यमाणप्रकारमिति भाव । भाषते स्म = बभाषे ॥

**ॐव्युत्पत्तिॐ साऽस्रा = अस्रै सहिता', तुल्ययोग बहुव्रीहि । रावणस्य = "कर्मादीनामपि सम्बन्धमात्रविवक्षाया षष्ठ्येवे" तिषष्ठी वा । नमन्ति स्म = "णम प्रह्वत्वे शब्देच" इति धातो "लट् स्मे" इति स्मयोगे भूते लट्, एव परत्राऽपि । रुदन्ति स्म = "रुदिर् अश्रुविमोचन" इति धातो पूर्ववल्लट् । "इर इत्सञ्ज्ञा वाच्या" इतीर इत्वम् । भाषते स्म = "भाष व्यक्ताया वाची" ति द्विकर्मकाद्धातो पूर्ववल्लट् ॥**

**ॐभाषाऽर्थ ॐ नागरिक आँखोंमे आसू भरते हुए रावणको नमस्कार करने लगे और रोने भी लगे । तब रामचन्द्रजीने आकुल विभीषणको निम्नस्थ वचन कहा ॥३९॥**

दातु स्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितु पितॄन् ।
युद्धाऽभग्नाऽऽविपन्नस्य किं दशाऽऽस्यस्य शोचसि ४० ॥

**अन्वय—**( हे विभीषण ! ) दातु, द्विषा मूर्ध्नि स्थातु, यष्टु, पितॄन् तर्पयितु युद्धाऽभग्नाऽऽविपन्नस्य दशाऽऽस्यस्य किं शोचसि ?

**व्याख्या—**( हे विभीषण ! ) दातु = दानशीलस्य, द्विषा = शत्रूणाम्, इन्द्रादीनामिति भाव । मूर्ध्नि = शिरसि, स्थातु = स्थितिशीलस्य, यष्टु = यज्ञशीलस्य, अथवा पूजकस्य, शिवस्येति भाव । पितॄन् = अग्निष्वात्तादीन्, तर्पयितु = तर्पणशीलस्य, युद्धाऽभग्नाऽविपन्नस्य = युद्धे सग्रामे अभग्नाऽविपन्नस्य—( अभग्नस्य = अपलायितस्य, अतएव अविपन्नस्य = अप्राप्तविपत्ते, धर्मयुद्धे—अभिमुखहतत्वादितिभाव । "युध्यभग्नविपन्नस्य" मल्लिनाथसम्मत पाठस्तत्र युधीति व्यस्त पद, तस्य सग्राम इत्यर्थ । अभग्नविपन्नस्य = अभिमुखहतस्ये ति भाव । एतादृशस्य दशाऽऽस्यस्य = रावणस्य, किं = किमर्थं, शोचसि = शोक करोषि, इत्थ नाम रावणस्य विषये शोच्यत्वमेव नाऽस्ति प्रत्युत सन्तोष्टव्यं वर्तत इति भाव ॥

※व्युत्पत्ति※—दातु = ददातीति तच्छीलो दाता, तस्य "तृन्" इति तृन्प्रत्यय., एव परत्राऽपि । स्थातु = तिष्ठतीति तच्छील स्थाता, तस्य पूर्ववत्तृन् । यष्टु = यजत इति यष्टा, तस्य । पितॄन् = "तर्पयितु" इति कृदन्तपदेन योगे "कर्तृकर्मणो कृति" इति कर्मणिषष्ठ्या प्राप्ताया तस्या. "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति प्रतिषेध । तर्पयितु = तर्पयतीति तर्पयिता, तस्य "तृप तृप्तौ" इति चौरादिकाद्धातोस्तृन् । युद्धाऽभग्नाऽविपन्नस्य = अभग्नश्चाऽसौ अविपन्न अभग्नाविपन्न', कर्मधारयसमास:। युद्धे अभग्नाऽविपन्नस्य । शोचसि = "शुच शोके" इति धातोर्वर्तमाने लट् ॥

※भाषाऽर्थ※ "हे विभीषण ! दानशील, शत्रुओंके शिरमे रहनेवाले, यज्ञ करनेवाले, पितरोंको तर्पण करनेवाले और युद्धमें न भागकर प्राण परित्याग करनेवाले रावण के विषयमे क्यों शोक कर रहे हो ? ॥ ४० ॥

बोभवीति न सम्मोहो व्यसने स्म भवादृशाम् ।
किं न पश्यसि सर्वोऽयं जनस्त्वामवलम्बते ॥ ४१ ॥

अन्वय:—भवादृशा व्यसने सम्मोहो न बोभवीति स्म । अय सर्वोजन त्वाम् अवलम्बते, किं न पश्यसि ?

व्याख्या—भवादृशा = भवत्सदृशाना महात्मनामितिभाव । व्यसने = विपदि, सम्मोह = अज्ञान, न बोभवीति स्म = अत्यर्थं नाऽभवत् । अयं = निकटस्थ, सर्व = समस्त, जन = लोक, लङ्काऽऽलय इति भाव । त्वा = भवन्तम्, अवलम्बते = आश्रयते, किं नपश्यसि = किं न विलोकयसि, अत पर लङ्कालया लोकास्तवैव पालनीया इति भाव ॥

※व्युत्पत्ति※ भवादृशा = भवन्त इव इमे पश्यन्ति = ( ज्ञानविषया भवन्ति ) इति भवादृशस्तेषा, "त्यदादिषु दृशोऽनालोचने कञ्च" इति क्विन्, "आसर्वनाम्न" इति सर्वनाम्न आकारोऽन्तादेश । व्यसने = "व्यसन विपदि भ्रशे दोषे कामजकोपजे ।" इत्यमर । बोभवीति = "भूसत्तायाम्" इति धातो "धातोरेकाचोहलादे- क्रियासमभिहारेयङ्" इति यङि "यङोऽचिचे" ति तस्य लुक, "गुणो यङ्लुको:" इत्यभ्यासस्य गुण., "यङो वा" इतीट्, गुणावादेशौ च, इडभावपक्षे—'बोभोति इति रूपम्, अवलम्बते = अवपूर्वकात् "लबि अवस्रसने" इति धातोर्लट् ॥

※भाषाऽर्थ※ हे विभीषणजी ! तुम्हारे ऐसे लोगोंको विपत्तिमें अज्ञान ज्यादा नहीं होता था । लङ्कामे रहनेवाले ये सब लोग तुम्हारा आश्रय ले रहे है, क्या नहीं देख रहे हो ? ॥ ४१ ॥

त्वमर्हसि भ्रातुरनन्तराणि कर्तुं जनस्याऽस्य च शोकभङ्गम् ।
धुर्ये विपन्ने त्वयि राज्यभारो मज्जत्यनूढः क्षणदाचरेन्द्र ! ॥ ४२ ॥

अन्वयः—हे क्षणदाचरेन्द्र ! त्व भ्रातु अनन्तराणि अस्य जनस्य शोकभङ्ग च कर्तुम् अर्हसि, धुर्यें त्वयि विपन्ने राज्यभार अनूढ ( सन् ) मज्जति ॥

हे क्षणदाचरेन्द्र = हे राक्षसेश्वर !, त्व = विभीषण , भ्रातु = रावणस्य, अनन्तराणि = अग्निसस्कारादीनि कर्माणि, अस्य = रावणस्य, जनस्य = पौरकलत्रादिरूपस्य लोकस्य, शोकभङ्ग च = दु खशान्ति च कर्तुं = विधातुम् , अर्हसि = युज्यसे, अन्यथा—धुर्यें = कुलधुरन्धरे, त्वयि = भवति, विपन्ने = विनष्टे, सति, भ्रातृशोकभारादिति भाव । "विषण्णे" इति मल्लिनाथसम्मत पाठस्तस्य खिन्ने इत्यर्थ । राज्यभार = राष्ट्रभर , अनूढ = अधृत सन , मज्जति = नश्यतीत्यर्थ , तस्माद्धैर्यधारणपूर्वकं लङ्काराज्य स्वीकुर्विति भाव ॥

**॥व्युत्पत्ति॥ क्षणदाचरेन्द्र = क्षण ददातीति क्षणदा, "आतोऽनुपसर्गे क" इति कप्रत्यय । "निशानिशीथिनी रात्रिस्त्रियामाक्षणदा क्षपा ।" इत्यमर. । क्षणदायां चरन्तीति क्षणदाचरा , "चरेष्ट" इति टप्रत्यय । क्षणदाचराणामिन्द्रस्तत्सम्बुद्धौ । धुर्ये = धुर वहतीति धुर्यस्तस्मिन् , "धुरो यड्ढकौ" इति यत्प्रत्यय । राज्यभार = राज्ञो भाव कर्म वा राज्य, "राजाऽसे" इति यक् प्रत्यय । राज्यस्य भार , मज्जति= "टुमस्जो शुद्धौ" इति धातोर्लट् । धातोरनेकार्थत्वादत्राऽस्य नाशरूपोऽर्थो बोध्य. । इन्द्रवज्रावृत्तम् ॥**

**॥भाषाऽर्थ॥ हे राक्षसेन्द्र ! तुम अपने भाई रावणके अग्निसस्कार आदि कर्म और रावणके पौर और कलत्र आदियोंके शोकभङ्ग भी करनेके लिए योग्य हो। राज्यके धुरन्धर तुम्हारे शोकसे नष्ट होनेपर राज्यभार धारण नही किये जानेसे नष्ट हो जायगा ॥ ४२ ॥**

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे पञ्चम परिच्छेद. ( वर्ग ) तथा लक्ष्यरूपे कथानके विभीषणप्रलापो नाम अष्टादश. सर्गः ।



## अथ एकोनविंशः सर्गः ।

अथ लिङ्विलासमाह । सर्वत्र "विधिनिमन्त्रणाऽमन्त्रणाऽधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इति लिङ् । विशेषश्च तत्र तत्र वक्ष्यते ।

अपमन्युस्ततो वाक्य पौलस्त्यो राममुक्तवान् ।
अशोच्योऽपि व्रजन्नस्त सनाभिर्दुनुयान् न किम् ॥ १ ॥

अन्वय'—तत पौलस्त्य अपमन्यु (सन्) राम वाक्यम् उक्तवान्—'अशोच्योऽपि सनाभि' अस्त व्रजन् कि न दुनुयात् ?

व्याख्या—तत = रामवाक्याऽनन्तर, पौलस्त्य = विभीषण, अपमन्यु = अपगतशोक सन्, राम = रामचन्द्र, वाक्य = पदसमूह, वक्ष्यमाणप्रकारकमिति भाव । उक्तवान् = अब्रवीत् । अशोच्योऽपि = शोकाऽनर्होऽपि, भवदुक्तरीत्येति शेष । सनाभि = सपिण्ड, बन्धुरिति भाव. । अस्त = नाश, व्रजन् = गच्छन् सन्, कि न दुनुयात् = कि न उपतापयेत्, वियोगेन विवेकिनमपि अवश्यमुपतापयेदेवेति भाव । 'किम्' इत्यत्र "कम्" इति मल्लिनाथसम्मत पाठस्तस्य जनमिति शेषोऽर्थ ॥

☸व्युत्पत्ति☸ अपमन्यु = अपगतो मन्युर्यस्य स.—अपगतमन्यु, पक्षे—अपमन्यु. "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप" इति समास उत्तरपदलोपश्च । "उपमन्यु"रिति मल्लिनाथसम्मत पाठस्तस्य उपगतशोक इत्यर्थ. । समासप्रक्रिया पूर्ववद्बोध्या । सनाभि' = समानो नाभि (मूलपुरुष) यस्य स "ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु" इति समानस्य सभाव', "सपिण्डास्तु सनाभय" इत्यमर । व्रजन् = व्रजतीति "व्रज गतौ" इति धातोर्लटः शत्रादेश । दुनुयात् = "टुदु उपतापे" इति धातो सम्भावनायां लिङ् "स्वादिभ्य श्नु." इति श्नु प्रत्यय "यासुट् परस्मैपदेषूदात्तो ङिच्चे"ति यासुडागम. ॥

☸भाषाऽर्थ☸ तब विभीषणने शोकरहित होकर रामचन्द्रजीको ऐसा वाक्य कहा—"अशोच्य होते हुए भी बन्धु नष्ट होनेपर क्या पीडित नही करते ? ॥ १ ॥

तं नो देवा विधेयासुर्येन रावणवद्वयम् ।
सपत्नाश्चाऽधिजीयास्म सग्रामे च मृषीमहि ॥ २ ॥

अन्वय'—देवा न त विधेयासु, येन वयं रावणवत् सपत्नान् अधिजीयास्म, सग्रामे च मृषीमहि ॥

व्याख्या—अथ किञ्चिद्धैर्यमवलम्ब्याऽऽह—तं न इति । देवा = सुरा, हरिहरादय इति भाव । न = अस्माक, तम् = उपाय, मल्लिनाथस्तु "तद्" इति पाठ-

माह तस्य भाग्यमिति भाव । विधेयासु =क्रियासु । येन=उपायेन, वयं, रावणवत्= दशाऽऽननवत् , सपत्नान् = शत्रून् , अधिजीयास्म = अविजितान् क्रियास्म यद्वा अभिभूयास्म । मल्लिनाथमते तु 'अधिजीव्यास्मे'ति पाठस्तस्य अतिशय्य जीव्यास्मेत्यर्थ । सग्रामे च = युद्धे च मृषीमहि = प्राणास्त्यज्यास्म ॥

ॐव्युत्पत्तिॐ विधेयासु = विपूर्वात् "डुधाञ् धारणपोषणयो" इति जौहोत्यादिकाद्धातो "आशिषि लिङ् लोटौ" इत्याशिषि लिङ् । यासुडागमे, "घुमास्थागापाजहातिसा हलि" इत्यनुवृत्तौ "एर्लिङि" इत्येकारादेश । रावणवत = रावणेन तुल्य "तेन तुल्य क्रिया चेद्वति" इति वति प्रत्यय । अधिजीयास्म = अधिपूर्वकात् "जि जये" इति धातोराशीर्लिङ् "अकृत्सार्वधातुकयोर्दीर्घ" इति दीर्घत्वम् । अत्रोपसर्गवशादकर्मकधातो "उपसर्गेण धात्वर्थो बलादन्य प्रतीयते ।" इति नयात्सकर्मकता । यद्वा "जि ( ज्रि ) अभिभवे" इति धातोराशीर्लिङ् । अभिभवो न्यूनीकरण न्यूनीभवन च । अत्र आद्योऽर्थ । मृषीमहि = "मृङ् प्राणत्यागे" इति धातोराशीर्लिङ् , "उश्चे"ति कित्वात् "क्ङिति चे"ति गुणनिषेध । आर्धधातुकत्वात् "लिङ सलोपोऽनन्त्यस्ये"ति न लिङ्सलोप ॥

ॐभाषाऽर्थॐ हरिहर आदि देवता हमारे ऐसे उपायको करदें, जिससे हम रावणके समान होकर शत्रुओंको जीते और सम्मुख युद्धमे प्राणोंका त्याग करे ॥२॥

क्रियेरञ्च दशाऽऽस्येन यथाऽन्येनाऽपि नः कुले ।
देवद्र्यञ्चो नराऽहारा न्यञ्चश्च द्विषता गणा. ॥ ३ ॥

अन्वय'—दशाऽऽस्येन यथा न कुले अन्येन अपि नराहारा देवद्र्यञ्चो द्विषता गणा न्यञ्चश्च क्रियेरन् ॥

व्याख्या—दशाऽऽस्येन यथा = रावणेन इव, न = अस्माकं कुले = वशे, अन्येन अपि=अपरेण अपि, मादृशेनेति भाव । नराऽऽहारा =राक्षसा , देवद्र्यञ्च = देवसङ्घर्षिण', द्विषता = शत्रूणा, गणा = समूहा , न्यञ्चश्च = नीचाश्च, क्रियेरन् = कृता भूयासु ॥

ॐव्युत्पत्तिॐ देवद्र्यञ्चः = देवान् अञ्चन्तीति, देवोपपदपूर्वकात् "अञ्चु गतिपूजनयो" इति धातो "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चे"ति क्विन्प्रत्यय "कृदतिङ्" इति तस्य कृत्सञ्ज्ञा, "विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" इति टेरद्र्यादेश । न्यञ्च. = पूर्ववत्क्विन्प्रत्यय , "न्यङ्नीचखर्वह्रस्वा स्यु" इत्यमर । क्रियेरन् = "डुकृञ् करणे" इति धातोराशिषि कर्मणि लिङ् ॥

ॐभाषाऽर्थॐ हमारे कुलमे रावणके समान दूसरा ( मेरा-ऐसा ) भी राक्षसोंको देवताओंके साथ सङ्घर्ष करनेवाले और शत्रुओंको नीच बना दे ॥ ३ ॥

स एव धारयेत् प्राणानीदृशे बन्धुविप्लवे ।
भवेदाश्वासको यस्य सुहृच्छक्तो भवादृशः ॥ ४ ॥

अन्वयः—ईदृशे बन्धुविप्लवे स एव प्राणान् धारयेत्, यस्य शक्तो भवादृश सुहृत् आश्वासको भवेत् ॥

व्याख्या—ईदृशे = एतादृशे, बन्धुविप्लवे = बान्धवनाशे, स एव, प्राणान् = असून्, धारयेत् = बिभृयात्, यस्य = बन्धुविमुक्तस्य, शक्त = समर्थ, शोकनिवारण इति शेष । भवादृश = भवत्सदृश, सुहृत् = मित्रम्, आश्वासक• = आश्वासयिता, सान्त्वयितेति भाव• । भवेत् = सभवेत् ॥

ॐव्युत्पत्ति•ॐ भवादृश• = भवाऽनिवाऽय पश्यति, "त्यदादिषु दृशोऽनालोचने कञ्च" इति कञ्प्रत्यय•, "आ सर्वनाम्न" इति दीर्घत्वम् । सुहृत् = शोभन हृदय यस्य स, "सुहृद्दुर्हृदौ मित्राऽमित्रयो" इति हृदयस्य हृद्भावो निपात्यते । धारयेत्, उभयत्राऽपि सम्भावनायां लिङ् ॥

ॐभाषाऽर्थःॐ ऐसे बान्धवनाशके अवसरमे वही प्राणोंको धारण करेगा जिसके आपके ऐसे शोक हटानेमे समर्थ सुहृत् सान्त्वना देनेवाले होंगे ॥ ४ ॥

म्रियेयोर्ध्वं मुहूर्ताद्धि न स्यास्त्वं यदि मे गतिः ।
आशंसा न हि नः प्रेते जीवेम दशमूर्धनि ॥ ५ ॥

अन्वय•—त्व मे गति न स्या• यदि, मुहूर्तात् ऊर्ध्वं म्रियेय । दशमूर्द्धनि प्रेते जीवेम ( इति ) न आशंसा न हि ॥

व्याख्या—त्वं = राम, मे = मम, हतबन्धो । गति = शरणं, न स्या यदि = नो भवेश्चेत्, मुहूर्तात् = रावणमरणमुहूर्तात, ऊर्ध्वम् = अनन्तर, म्रियेय = प्राणास्त्यजेयम्, अहमिति शेष । यत —दशमूर्धनि = रावणे, प्रेते = मृते, जीवेम = प्राणान्धारयाम, ( इति = एवम् ) न = अस्माकम्, आशंसा = आकाङ्क्षा, न हि = नो वर्तते हि ॥

ॐव्युत्पत्तिॐ म्रियेय = "मृङ् प्राणत्यागे" इति धातो• प्राप्तकाले गम्यमाने "लिङ चोर्ध्वमौहूर्तिके" इति लिङ् । दशमूर्धनि = दश•मूर्धानो यस्य स दशमूर्धा, तस्मिन् । जीवेम = "जीव प्राणधारण" इति धातोराशसापद उपपदे "आशसावचने लिङ्" इति लिङ् ॥

ॐभाषाऽर्थ ॐ हे राम ! आप मेरे शरण नहीं होते तो मै रावण मरणके मुहूर्तके अनन्तर ही मर जाता। रावणके मरनेपर जीयेंगे ऐसी हमारी आकाङ्क्षा नहीं थी॥५॥

प्रकुर्याम वयं देशे गर्ह्यां तत्र कथं रतिम् ।
यत्र विंशतिहस्तस्य न सोदर्यस्य सम्भवः ॥ ६ ॥

अन्वयः—यत्र देशे सोदर्यस्य विंशतिहस्तस्य सम्भवो न तत्र वय गर्ह्यां रति कथ प्रकुर्याम ?

व्याख्या—यत्र = यस्मिन्, देशे = स्थाने, सोदर्यस्य = सहोदरस्य, विशतिहस्तस्य = रावणस्य, सम्भव = सत्ता, न = नाऽस्ति, तत्र = तस्मिन् देशे, वय, गर्ह्यां = निन्द्या, रतिं = प्रीतिं, कथ = केन प्रकारेण, प्रकुर्याम = विद्धीमहि, न कुर्म इति भाव ॥

※व्युत्पत्ति※ यत्र = यस्मिन्निति, "सप्तम्यास्त्रल्" इति त्रल् । सोदर्यस्य = समानमुदर सोदर, यप्रत्यये विवक्षिते "विभाषोदरे" इति समानस्य सभावस्तत समान उदरे शयित• ( स्थित ) सोदर्यस्तस्य, "सोदराद्य" इति यप्रत्यय, "समानोदर्यसोदर्यसगर्भ्यसहजा समा• ।" इत्यमर• । विशतिहस्तस्य = विशतिर्हस्ता यस्य तस्य । वयम्="अस्मदो द्वयोश्चे"ति अस्मदो बहुवचनम् । प्रकुर्याम=प्रपूर्वात् कृधातो "विभाषा कथमि लिङ् चे"ति कथ शब्द उपपदे गर्हाया लिङ् ॥

※भाषाऽर्थ※ जिस देशमें सहोदर भाई रावणकी सत्ता नहीं है उस देशमें हम गर्हणीय प्रीति कैसे करेंगे ? ॥ ६ ॥

आमन्त्रयेत तान् प्रह्वान् मन्त्रिणोऽथ विभीषणः ।
गच्छेत त्वरितं लङ्कां राजवेश्म विशेत च ॥ ७ ॥

अन्वय•—अथ विभीषण प्रह्वान् तान् मन्त्रिण आमन्त्रयेत—'त्वरित लङ्का गच्छेत राजवेश्म विशेत च ॥

व्याख्या—अथ=अनन्तरं, विभीषण =रावणाऽनुज , प्रह्वान्=प्रणतान , तान्= स्वाऽनुचरान् , मन्त्रिणः =सचिवान् , आमन्त्रयेत=नियुक्तवानिति भाव , अत्र भूताऽर्थो लक्षणीय । आमन्त्रणस्वरूपमाह—गच्छेतेति । त्वरित = शीघ्र, लङ्का = तदाख्या पुरी, गच्छेत = यात यूयमिति शेष । एव च—राजवेश्म = सौधं, विशेत च=प्रविशत च ॥

※व्युत्पत्ति※ मन्त्रिण• = मन्त्रयन्त इति मन्त्रिणस्तान् , "मन्त्रि गुप्तपरिभाषण' इति धातो "नन्दिग्रहिपचादिभ्यो ल्युणिन्यच" इति ग्रह्यादित्वाण्णिनि । आमन्त्रयेत = निमन्त्रणे ( नियोगकरणे ) लिङ् । गच्छेत गम्लृधातोर्लिङि "तस्थस्थमिपां तान्तन्ताम" इति थस्य तादेश• । यासुटि सलोपः "अतो येय" इतीयादेशे गुणयलोपौ, एवमुत्तरत्राऽपि । विशेत = "विश प्रवेशन" इति धातोर्लिङ् ॥

❀भाषाऽर्थ❀ तब विभीषणजीने अपने अनुचर मन्त्रियोंको आज्ञा दी–"तुमलोग शीघ्र लङ्कामे जाओ और राजभवनमे प्रवेश करो ॥ ७ ॥

आददीध्वं महाऽर्हाणि तत्र वासांसि सत्वराः ।
उद्धुनीयात सत्केतून् निर्हरेताऽग्र्यचन्दनम् ॥ ८ ॥

अन्वयः—( हे मन्त्रिणः ! ) तत्र सत्वराः ( सन्तः ) महाऽर्हाणि वासांसि आददीध्वं, सत्केतून् उद्धुनीयात अग्र्यचन्दनं निर्हरेत ॥

व्याख्या—( हे मन्त्रिणः ! ) तत्र = राजभवने, सत्वराः = त्वरासहिताः, यूयमिति शेषः । महार्हाणि = बहुमूल्यानि, वासांसि = वस्त्राणि, आददीध्वं=गृह्णीत, सत्केतून् = महाध्वजान्, उद्धुनीयात = उच्छ्राययत, अग्र्यचन्दनं = श्रेष्ठचन्दनं, निर्हरेत = आहरेतेत्यर्थः ॥

❀व्युत्पत्तिः❀ सत्वराः =त्वरया सहिताः, तुल्ययोगे बहुव्रीहिः । "सम्भ्रमस्त्वरा ।" इत्यमरः । महाऽर्हाणि = महान् अर्हो ( मूल्यम् ) येषां, तानि । आददीध्वम् =आङ्पूर्वात् "डुदाञ् दाने" इति धातोर्लिङि तङि ध्वमि सीयुट् "श्नाभ्यस्तयोरातः" इत्याकारलोपः "लिङः सलोपोऽनन्त्यस्ये"ति सलोपश्च । सत्केतून् = सन्तश्च ते केतवः सत्केतवस्तान्, "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति समासः । उद्धुनीयात= उत्पूर्वकात् "धूञ् कम्पने" इति क्र्यादिस्थधातोर्विधौ लिङ् "प्वादीनां ह्रस्वः" इति ह्रस्वत्वम् "ई हल्यघोः" इतीत्वं च । मल्लिनाथस्तु "उद्धूनुयाते"ति पाठान्तरं लिखित्वा उत्पूर्वकात् "धूञ् कम्पने" इति स्वादिस्थ धातोर्विधौ लिङ् । तत्र "यासुटि थस्य तादेशः । क्रैयादिकस्यैव प्वादित्वान्न ह्रस्वः इत्याह ।

❀भाषाऽर्थ❀ ( हे मन्त्रिगण ! ) राजभवनमें शीघ्रता करते हुए तुमलोग बहुमूल्य वस्त्रोंको ले लो, ऊंचे ध्वजोंको फहराओ और उत्तम चन्दनको ले आओ ॥८॥

मुञ्चेताऽऽकाशधूपांश्च ग्रथ्नीयात स्रजः शुभाः ।
आनयेताऽमितं दारु कर्पूराऽगुरुकुङ्कुमम् ॥ ९ ॥

अन्वयः—( हे मन्त्रिणः ! यूयम् ) आकाशधूपान् मुञ्चेत, शुभाः स्रजो ग्रथ्नीयात, अमितं दारु कर्पूराऽगुरुकुङ्कुमं (च) आनयेत ॥

व्याख्या—( हे मन्त्रिणः ! यूयम् ) आकाशधूपान् = नभोव्यापिनो धूपान्, मुञ्चेत = मुञ्चत, प्रसारयतेत्यर्थः । शुभाः =कल्याणरूपाः, स्रजः = पुष्पमालाः, ग्रथ्नीयात = गुम्फत, अमितम् = अपरिमितं, दारु = काष्ठं, कर्पूराऽगुरुकुङ्कुमं च = घनसाराऽगुरुकेसरं च, आनयेत = आहरत ॥

❀व्युत्पत्तिः❀ आकाशधूपान् = आकाशव्यापिनो धूपा आकाशधूपास्तान्, शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्" इति मध्यमपदलोपी समासः ।

स्रज' = सृज्यन्त इति, "सृज विसर्गे" इति धातोः "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चे"ति क्विन्, सर्वाऽपहारी लोप., ऋकारात्परोऽमागम, मकार इत् ऋकारस्य यण् रेफ.। "माल्य मालास्रजो मूर्ध्नि" इत्यमरः। ग्रथ्नीयात = "(श्रन्थ,) ग्रन्थ सन्दर्भे" इति क्र्यादिस्थधातोर्विधौ लिङ् "ई हल्यघो." इतीकार.॥

❀भाषाऽर्थ·❀ हे मन्त्रिगण ! तुमलोग आकाशमें फैलनेवाले धूपोंको फैलाओ, शुभ पुष्पमालाओंका गुम्फन करो, अपरिमित काष्ठ और कर्पूर, अगुरु और केशरको ले आओ ॥ ९ ॥

उह्येरन् यज्ञपात्राणि ह्रियेत च विभावसु'।
भ्रियेत चाऽऽज्यमृत्विग्भिः कल्प्येत च समित्कुशम् ॥ १० ॥

अन्वयः—( हे मन्त्रिण ! ) यज्ञपात्राणि उह्येरन्, विभावसुः ह्रियेत, ऋत्विग्भि आज्यं भ्रियेत समित्कुशं च कल्प्येत ॥

व्याख्या—( हे मन्त्रिण ! ) यज्ञपात्राणि = अध्वरभाजनानि, जुह्वादीनीति भाव। उह्येरन् = उह्यन्ता, नीयन्तामित्यर्थ। युष्माभिरिति शेष। विभावसुः = अग्नि., दक्षिणाऽग्न्यादिरिति भाव। ह्रियेत=ह्रियता, नीयतामिति भावः। "ह्रियेरन्नग्रतोऽग्नय." इति मल्लिनाथसम्मत पाठान्तरम्। ऋत्विग्भि =यज्ञकृद्भि, अध्वर्य्वादिभिरिति भाव। आज्यं = घृतादिक हवि, भ्रियेत = संभ्रियतामित्यर्थ। समित्कुश च = काष्ठदर्भं च, कल्प्येत = कल्प्यता, सपाद्यतामिति भाव ॥

❀व्युत्पत्ति❀ उह्येरन् = "वह प्रापण" इति धातो' विधौ कर्मणि लिङ्, यजादित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणम्। ह्रियेत = पूर्ववत्कर्मणि लिङ्, एव परत्राऽपि। ऋत्विग्भि = "आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते।" इत्यमर.। भ्रियेत = "भृञ् भरण" इति धातो' पूर्ववल्लिङ्। समित्कुश = समिधश्च कुशाश्चेति समाहार' द्वन्द्व ॥

❀भाषाऽर्थ❀ हे मन्त्रिगण ! तुमलोग यज्ञपात्रोंको और दक्षिणाग्नि आदि अग्निको ले जाओ। अध्वर्यु आदि यज्ञ करनेवाले घृत आदि हवि इकट्ठा करे और समिधा और कुशोंका सम्पादन करें ॥ १० ॥

स्नानीयैः स्नापयेताऽऽशु रम्यैर्लिम्पेत वर्णकैः।
अलङ्कुर्यात रत्नैश्च रावणाऽर्हैर्दशाऽऽननम् ॥ ११ ॥

अन्वय.—( हे मन्त्रिण यूयम् ) दशानन स्नानीयै आशु स्नापयेत, रम्यै वर्णकै लिम्पेत; रावणाऽर्हैं रत्नैश्च अलङ्कुर्यात ॥

व्याख्या—( हे मन्त्रिण. ! यूयम् ) दशाऽऽनन = रावणं, स्नानीयै = स्नानसाधनै', आशु = शीघ्रं, स्नापयेत = स्नापयत। रम्यै' = सुन्दरै, वर्णकै. = विलेपन-

द्रव्यैः, चन्दनकुङ्कुमादिभिरिति भाव लिम्पेत = लिम्पत । रावणाऽर्हैः=रावणयोग्यैः, रत्नैश्च=रत्नाऽभरणैश्च, अलङ्कुर्यात=अलङ्कुरुत ॥

**ॐव्युत्पत्तिःॐ** स्नानीयैः=स्नान्ति एभिरिति स्नानीयानि, तैः "कृत्यल्युटो बहुलम्" इति बाहुलकात् करणे अनीयर्। स्नापयेत="ष्णा शौच" इति ण्यन्ताद्धातोर्विधौ लिङ् थस्य तादेश । "ग्लास्नावनुवमा चे"ति पक्षे मित्त्वाऽलाभान्न ह्रस्व.। लिम्पेत="लिप उपदेहे" इति धातोर्विधौ लिङ् "शे मुचादीनाम्" इति नुम् ॥

**ॐभाषाऽर्थःॐ** हे मन्त्रिगण ! तुमलोग रावणको स्नानके साधनोंसे शीघ्र स्नान कराओ, सुन्दर चन्दन कुङ्कुम आदि विलेपनद्रव्योंसे लिप्त करो और रावणके योग्य रत्नोंसे अलङ्कृत करो ॥ ११ ॥

वासयेत सुवासोभ्यां मेध्याभ्या राक्षसाऽऽधिपम् ।
ऋत्विक् स्रग्विणमादध्यात् प्राङ्मूर्धान मृगाऽजिने ॥ १२ ॥

**अन्वय**—( हे मन्त्रिण ! यूयम् ) राक्षसाऽधिप मेध्याभ्या सुवासोभ्या वासयेत । ऋत्विक् स्रग्विणं प्राङ्मूर्धानं ( तम् ) मृगाऽजिने आदध्यात् ॥

**व्याख्या**—( हे मन्त्रिणः ! यूयम् ) राक्षसाऽधिप = यातुधानपतिं, रावणमित्यर्थः, मेध्याभ्या = पवित्राभ्या, सुवासोभ्या = बहुमूल्यवस्त्राभ्या, वासयेत = परिधापयत । ऋत्विक् = अध्वर्यु, स्रग्विणं = मालाधारिण, प्राङ्मूर्धान = पूर्वशिरसं, राक्षसाऽधिपमिति शेष । मृगाऽजिने = कृष्णसारमृगचर्मणि, आदध्यात् = स्थापयेत् ।

**ॐव्युत्पत्ति ॐ** सुवासोभ्यां = शोभने वाससी सुवाससी, ताभ्याम् । वासयेत् = "वस आच्छादने" इति ण्यन्ताद्धातोर्लिङि थस्य ताऽऽदेश.। स्रग्विण = प्रशस्ता स्रगस्ति यस्य स स्रग्वी, तम् "अस्मायामेधास्रजो विनिः" इति मत्वर्थीयो विनिः। प्राङ्मूर्धान = प्राचि मूर्धा यस्य स प्राङ्मूर्धा, तम् ॥

**ॐभाषाऽर्थ ॐ** हे मन्त्रिगण ! तुमलोग राक्षसराज ( रावण ) को पवित्र ( उत्तरीय और अधरीय ) दो वस्त्रोंसे आच्छादित करो । ऋत्विक् उनको माला पहनाकर और पूर्वाऽभिमुख कर कृष्णसार मृगके चर्ममें रक्खे ॥ १२ ॥

यज्ञपात्राणि गात्रेषु चिनुयाच्च यथाविधि ।
जुहुयाच्च हविर्वह्नौ गायेयुः साम सामगाः ॥ १३ ॥

**अन्वयः**—( हे मन्त्रिण ! ऋत्विक् ) यज्ञपात्राणि गात्रेषु यथाविधि चिनुयात्, वह्नौ हविश्च जुहुयात् सामगा साम गायेयु ॥

**व्याख्या**—( हे मन्त्रिण, ! ) यज्ञपात्राणि = अध्वरभाजनानि, स्रुवादीनीति भाव. गात्रेषु = अङ्गेषु, नासिकादिष्विति भाव । यथाविधि = विधिपूर्वकं, चिनुयात्=

उपदध्यात्, ऋत्विगिति शेष । वह्नौ = अग्नौ, हविश्च = आज्यादिकं च, जुहुयात्= हुतं कुर्यात्, सामगा = उद्गातार, साम = सामवेदमन्त्रं, गायेयु = गान कुर्यु ॥

ॐव्युत्पत्ति ॐ चिनुयात् = "चिञ् चयन" इति स्वादिस्थधातोर्विधौ लिङ् । जुहुयात् = "हुदानाऽदनयो" इति धातोर्विधौ लिङ् । सामगा = साम गायन्तीति "आतोऽनुपसर्गे क" इति क । गायेयु = "( कै ) गै शब्दे" इति धातोर्विधौ लिङ् ॥

ॐभाषाऽर्थ ॐ हे मन्त्रिगण ! ऋत्विक् यज्ञपात्रोंको नासिका आदि अङ्गोंमे विधिपूर्वक रक्खे, अग्निमे आज्य आदि हविका हवन करे। सामवेदी साममन्त्रका गान करें।१३।

गत्वाऽथ ते पुरीं लङ्का कृत्वा सर्व यथोदितम् ।
समीपेऽन्त्याऽऽहुतेः साऽस्राः प्रोक्तवन्तो विभीषणम् ॥ १४ ॥

**अन्वयः**—अथ ते लङ्का पुरीं गत्वा यथोदितं सर्वं कृत्वा अन्त्याऽऽहुते समीपे साऽस्रा ( सन्त ) विभीषण प्रोक्तवन्त ॥

**व्याख्या**—अथ = अनन्तरं, ते = विभीषणमन्त्रिण , लङ्का = तदाख्या, पुरीं= नगरी, गत्वा = यात्वा, यथोदित = यथाऽऽज्ञप्त, सर्वं = सकलं, कर्मेति शेष । कृत्वा = विधाय, अन्त्याऽऽहुते = प्रेताऽऽहुते , समीपे = निकटकाले, साऽस्राः = साऽश्रुनयना सन्त , विभीषण = स्वप्रभु, प्रोक्तवन्त = अब्रुवन्, वक्ष्यमाणप्रकारं वचनमिति भाव ॥

ॐव्युत्पत्ति ॐ साऽस्राः = अस्रै सहिता , "तेन सहेति तुल्ययोगे" इति बहुव्रीहि "वोपसर्जनस्ये" ति सहस्य सभाव ॥

ॐभाषाऽर्थ ॐ तब वे विभीषणके मन्त्री लङ्कापुरीमें जाकर आज्ञाके अनुसार सब कर्म कर प्रेतके दाहकालके समीपमें आँखोंमें आँसू भरते हुए विभीषणको कहने लगे ॥ १४ ॥

कृतं सर्व यथोद्दिष्टं कर्तुं वह्निजलक्रियाम् ।
प्रयतेथा महाराज ! सह सर्वैः स्वबन्धुभिः ॥ १५ ॥

**अन्वयः**—हे महाराज ! यथोद्दिष्टं सर्वं कृत, सर्वै स्वबन्धुभि सह वह्निजलक्रिया कर्तु प्रयतेथा ॥

**व्याख्या**—हे महाराज = हे भूपाल ! यथोद्दिष्ट = यथाऽऽज्ञप्तं, सर्वं = सकलं, कर्मेति शेष । कृत = विहितम्, अस्माभिरिति शेष सर्वै = सम्पूर्णै , स्वबन्धुभि = आत्मबान्धवै , सह = सम, वह्निजलक्रिया = दाहसंस्कार जलदानक्रियां च, कर्तुं = विधातुं, प्रयतेथा = प्रयत्नं कुरु ॥

ॐव्युत्पत्ति ॐ महाराज = महांश्चाऽसौ राजा महाराजस्तस्सम्बुद्धौ, "सन्महत्पर-

मोत्तमोत्कृष्टा' पूज्यमानैः" इति समासः, "आन्महत समानाऽधिकरणजातीययोः" इत्यात्व "राजाऽह'सखिभ्यष्टच्" इति समासाऽन्तष्टच् । स्वबन्धुभिः = स्वे च ते बन्धवः, स्वस्य बन्धवो वा, तैः । सहपदेन योगे "सहयुक्तेऽप्रधाने' इति तृतीया। वह्निजलक्रियां = वह्निश्च जल च वह्निजल, "जातिरप्राणिनाम्" इति समाहारद्वन्द्व'। वह्निजलस्य क्रिया, ताम् । प्रयतेथा' = प्रपूर्वकात् "यती प्रयत्ने" इति धातोः प्रार्थनाया लिङ् ॥

❀भाषाऽर्थः❀ हे महाराज ! आपकी आज्ञाके अनुसार सब काम किया गया। आप अपने सब बन्धुओंके साथ दाहसस्कार और जलदान करनेके लिए प्रयत्न करें।१५॥

अज्ञवन्नोत्सहेथास्त्वं धेया धीरत्वमच्युतम् ।
स्थेयाः कार्येषु बन्धूनां हेयाः शोकोद्भवं तमः ॥ १६ ॥

अन्वयः—( हे महाराज ! ) अज्ञवत् किं न उत्सहेथा ? अच्युतं धीरत्व धेया । बन्धूना कार्येषु स्थेया । शोकोद्भवं तमो हेया ॥

व्याख्या—एवमुक्तेऽपि शोचन्तं विभीषण मन्त्रिणो बोधयन्ति अज्ञवदिति । ( हे महाराज ! ) यज्ञवत् = मूढवत, किं = किमर्थं, न उत्सहेथा = उत्साह न कुर्या, त्वमिति शेष । गर्हितमेतदिति भाव । अच्युतम् = अक्षत, धीरत्वं = धैर्यं, धेया = धारय । बन्धूना = बान्धवाना, कार्येषु = प्रयोजनेषु स्थेया = तिष्ठ । शोकोद्भवं = मन्यूत्पन्न, तम = मोह, हेया = जहीहि ॥

❀व्युत्पत्ति❀ अज्ञवत् = जानातीति ज्ञ , "इगुपधज्ञाप्रीकिर॰ क" इति कप्रत्यय.। न ज्ञः अज्ञ , तेन तुल्य, "तेन तुल्य क्रिया चेद्वति." इति वति प्रत्ययः। उत्सहेथा = उत्पूर्वकात् "षह मर्षणे" इति धातो. "कि वृत्ते लिङ्लृटौ" इति कि शब्दयोगे गर्हायां लिङ्। धेया = "डुधाञ् धारणपोषणयो'" इति धातो. "आशिषिलिङ्लोटौ" इत्याशिषि लिङ् , "एर्लिङि" इत्येत्वम्, एव परत्राऽपि । शोकोद्भवं = शोकात् उद्भवो यस्य तत् । हेया. = "ओहाक् त्यागे" इति धातोराशिषि लिङ् ॥

❀भाषाऽर्थः❀ हे महाराज ! आप अनजानके समान होकर क्यों उत्साह नहीं कर रहे हैं ? यह गर्हित है। आप अक्षत धैर्यका धारण करे, बान्धवोंके कार्योंमें स्थित हों और शोकसे उत्पन्न मोहका त्याग करें ॥ १६ ॥

नाऽवकल्प्यमिदं ग्लायेद्यत् कृच्छ्रेषु भवानपि ।
न पृथग्जनवज्जातु प्रमुह्येत्पण्डितो जनः ॥ १७ ॥

अन्वय —यत् भवान् अपि कृच्छ्रेषु ग्लायेत्, इदं न अवकल्प्यम् । पण्डितो जन पृथग्जनवत् जातु न प्रमुह्येत् ॥

व्याख्या—यत् भवान् अपि = विद्वान् अपि, कृच्छ्रेषु = दु.खेषु, ग्लायेत् =

विषीदेत्, इदं = विषादन, न अवकल्प्य=न सम्भाव्यम् । पण्डितो जन=विद्वज्जन, पृथग्जनवत् = साधारणजनवत्, जातु = कदाऽपि, न प्रमुह्येत् = मोह न गच्छेत् ॥

ᪿव्युत्पत्तिᪿ कृच्छ्रेषु="स्यात्कष्ट कृच्छ्रमाभीलम्" इत्यमर । ग्लायेत्="ग्लै (म्लै) हर्षक्षये" इति धातो "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इति अनवक्लृप्तौ (असम्भावनायाम्) लिङ् । पण्डित = सदसद्विवेकवती बुद्धि पण्डा, सा सञ्जाताऽस्येति, "तदस्य सञ्जात तारकादिभ्य इतच्" इतीतच्प्रत्यय । प्रमुह्येत् = प्रपूर्वकात् "मुह वैचित्त्य" इति धातोर्जातुशब्दयोगात् "जातुयदोर्लिङ्" इति अनवक्लृप्तावेव लिङ् ॥

ᪿभाषाऽर्थᪿ हे महाराज ! जो आप ( ऐसे विद्वान् ) भी दुखों में विषण्ण होंगे, यह बात सम्भावनीय नहीं है। पण्डित साधारण मनुष्यके समान कभी मोह को प्राप्त नहीं होगा ॥ १७ ॥

यच्च यत्र भवांस्तिष्ठेत् तत्राऽन्यो रावणस्य न ।
यच्च यत्र भवान् सीदेन् महद्भिस्तद्विगर्हितम् ॥ १८ ॥

**अन्वयः**—यत्र यच्च भवान् तिष्ठेत् तत्र रावणस्य अन्यो न (तिष्ठेत्)। (किञ्च) यत्र यच्च भवान् सीदेत् तत् महद्भि विगर्हितम् ॥

**व्याख्या**—यत्र = यस्मिन्, देशे काले चेत्यर्थ यच्च, भवान् = विभीषण, तिष्ठेत् = स्थितिं कुर्यात्, तत्र = तस्मिन्, देशे कालेचेत्यर्थ । रावणस्य=दशाऽऽननस्य, अन्य =अपर न = नो तिष्ठेत्, त्वयि तिष्ठति रावणस्य मन्त्राऽर्थमन्यो नाऽवकल्पत इत्यर्थ । किञ्च—यत्र = यस्मिन्, देशे काले चेति भाव । यच्च भवान् = विभीषण, सीदेत् = अवसाद कुर्यात्, तत् = अवसादनं, महद्भि = पण्डितै, विगर्हितं=विनिन्दितम् ॥

ᪿव्युत्पत्तिᪿ तिष्ठेत्="ष्ठा गतिनिवृत्तौ" इति धातो "यच्चयत्रयो" इति अनवक्लृप्तौ (असम्भावनायाम्) लिङ् । "पाघ्राध्मे" त्यादिना तिष्ठाऽऽदेशः । सीदेत्= "षद्लृ विशरणगत्यवसादनेषु" इति धातो पूर्ववल्लिङ्, पूर्वसूत्रेणैव सीदाऽऽदेशश्च ॥

ᪿभाषाऽर्थᪿ हे महाराज ! जिस देशमें और कालमें भी आप रहते वहां पर रावणका आपसे भिन्न मन्त्र देनेके लिए कोई भी नहीं रहता था। जिस देशमे और कालमे भी आप दुखित होंगे वह विद्वानोंसे विनिन्दित होगा ॥ १८ ॥

आश्चर्यं यच्च तत्र त्वां प्रब्रूयाम वयं हितम् ।
अपि साक्षात् प्रशिष्यास्त्वं कृच्छ्रेष्विन्द्रपुरोहितम् ॥ १९ ॥

**अन्वयः**—यत्र यच्च वय त्वा हित प्रब्रूयाम (तत्) आश्चर्यम् । त्वं कृच्छ्रेषु साक्षात् इन्द्रपुरोहितम् अपि प्रशिष्या ॥

**व्याख्या**—( हे महाराज ! ) यत्र = यस्मिन्, विषय इत्यर्थ । यच्च, वयं = मन्त्रिण', त्वा = भवन्त, हित=पथ्य, प्रब्रूयाम=उपदिशेम, ( तत् = हितोपदेशनम् ) आश्चर्यम् = अद्भुतम् । त्वं=विभीषण , कृच्छ्रेषु=व्यसनेषु, साक्षात्=प्रत्यक्षम् , इन्द्रपुरोहितम् अपि=बृहस्पतिम् अपि प्रशिष्या =उपदिशे ॥

***व्युत्पत्ति*** त्वाम् = "अकथित चे"ति कर्मत्वम् । प्रब्रूयाम = प्रपूर्वकात् "ब्रूञ् व्यक्ताया वाची"ति धातो. "चित्रीकरणे चे"ति लिङ् । प्रशिष्या=प्रपूर्वकात् "शासु अनुशिष्टौ" इति धातो' अपिशब्दस्योपपदत्वात् "उताऽप्यो समर्थयोर्लिङ्" इति लिङ्, सिपि यासुट् , "शास इदङहलो " इतीत्व "शासिवसिघसीना चे"ति षत्वच॥

***भाषाऽर्थ.*** हे महाराज ! जिस विषयमे जो हमलोग आपको हितका उपदेश करेंगे वह आश्चर्य है। आप विपत्तियों में साक्षात् बृहस्पतिको भी उपदेश करेंगे ॥१९॥

कामो जनस्य जह्यास्त्व प्रमाद नैर्ऋताऽधिप ! ।
उत द्विषोऽनुशोचेयुर्विप्लवे किमु बान्धवाः ॥ २० ॥

**अन्वयः**—हे नैर्ऋताऽधिप ! त्व प्रमादं जह्या (इति) जनस्य काम । अस्मिन् विप्लवे द्विष उत अनुशोचेयु बान्धवा किमु ?

**व्याख्या**—हे नैर्ऋताऽधिप = हे राक्षसराज !, त्वं = प्रभु , प्रमादं = शोकमूला कार्यस्खलनरूपामनवधानतामित्यर्थ । जह्या = जहीहीत्यर्थ , ( इति = इत्थम् ) जनस्य = पौरलोकस्य, काम = इच्छा, अस्तीति शेष । अस्मिन् = अत्र, विप्लवे= विनाशे, द्विष उत = शत्रव अपि, अनुशोचेयु =अनुशोक कुर्यु , बान्धवा.=बन्धव', किमु = किमुत, अनुशोचेयुरेवेति भाव ॥

***व्युत्पत्ति*** प्रमादं = "प्रमादोऽनवधानता" इत्यमर । जह्या' = "ओहाक् त्याग" इति धातोः "कामप्रवेदनेऽकच्चिति" इति अकच्चिति ( कच्चिच्छब्दाप्रयोगे ) लिङ् । कामप्रवेदननामअभिप्रायाविष्करणम् । अनुशोचेयु' = अनुपूर्वकात् "शुच शोके" इति धातो उतपदेनयोगे "उताऽप्यो , समर्थयोर्लिङ्" इति लिङ् ॥

***भाषाऽर्थ.*** हे महाराज ! आप शोकमूलक प्रमादको छोड़े पौर लोगोंकी ऐसी इच्छा है । इस विनाशमें शत्रुलोग भी शोक करेंगे बान्धवोंका क्या कहना ? ॥२०॥

स भवान् भ्रातृवद्रक्षेद्यथावदखिल जनम् ।
न भवान् सम्प्रमुह्येच्चेदाश्वस्युश्च निशाचराः ॥ २१ ॥

**अन्वय.**—भवान् न सप्रमुह्येत् चेत् स भवान् भ्रातृवत् अखिल जन यथावत् रक्षेत्, निशाचराश्च आश्वस्यु ॥

**व्याख्या**—भवान् = विभीषण , न संप्रमुह्येत् = संप्रमोह न गच्छेत्, चेत् =

यदि, स = अप्रमूढ , भवान् = विभीषण., भ्रातृवत् = रावणवत्, अखिलं = समस्तं, जन = लोकं, यथावत् = यथाऽर्हं, रक्षेत् = पालयेत्, निशाचराश्च = राक्षसाश्च, आश्वस्यु = आश्वासं गच्छेयु ॥

※व्युत्पत्तिः※ सप्रमुह्येत् = सप्रपूर्वकात् "मुह वैचित्य" इति धातो. "हेतुहेतुमतोर्लिङ्" इति लिङ् , अप्रमोहस्य जनरक्षणे राक्षसाऽऽश्वासने च हेतुत्वात् यथावत्= "तदर्हम्" इति वतिप्रत्ययः। निशाचरा = निशायां चरन्तीति, "चरेष्ट" इति टप्रत्यय । आश्वस्यु = आङ्पूर्वकात् "श्वस प्राणन" इति धातो' जनरक्षणे निशाचराऽऽश्वासने च हेतुमति ( कार्ये ) लिङ्। श्वसधातोरदादित्वाच्छपो लुक्। "अश्वसेयु" इति पाठान्तरम् ॥

※भाषाऽर्थ※ हे महाराज ! आप मोहको प्राप्त नहीं होंगे तो रावणके समान होकर समस्तजनको विधिपूर्वक पालन करेंगे और राक्षस भी आश्वस्त होंगे ॥ २१ ॥

ततः स गतवान् कर्तुं भ्रातुरग्निजलक्रियाम् ।
प्रोक्तवान् कृतकर्तव्यं वचो रामोऽथ राक्षसम् ॥ २२ ॥

**अन्वयः**—ततः स भ्रातु. अग्निजलक्रिया कर्तुं गतवान्। अथ कृतकर्तव्यं राक्षस रामो वच प्रोक्तवान् ॥

**व्याख्या**—तत = मन्त्रिवचनाऽनन्तरं, सः = विभीषणः, भ्रातु = रावणस्य, अग्निजलक्रियाम् = दाहसंस्कारमुदकदानं च, कर्तुं = विधातु, गतवान् = यात । अथ = अनन्तर, कृतकर्तव्य = विहितकृत्य, राक्षस = यातुधान, विभीषणमिति भाव । राम = रामचन्द्र., वच = वचन, वक्ष्यमाणप्रकारमिति शेष । प्रोक्तवान् = अब्रवीत् ॥

※व्युत्पत्तिः※ कृतकर्तव्य = कृतं कर्तव्य येन स कृतकर्तव्यस्तम् ॥

※भाषाऽर्थ※ मन्त्रियोंके वचनके अनन्तर विभीषण भाई रावणका दाहसंस्कार और उदकदान करनेके लिए चले गये। तब पूर्वोक्त कार्यका अनुष्ठान किये हुए विभीषणको रामचन्द्रजीने निम्नस्थ वचन कहा ॥ २२ ॥

अम्भांसि रुक्मकुम्भेन सिञ्चन् मूर्ध्नि समाधिमान् ।
त्वं राजा रक्षसां लङ्कामवेक्षेथा विभीषण ! ॥ २३ ॥

**अन्वय**—रुक्मकुम्भेन मूर्ध्नि अम्भासि सिञ्चन् ( राम. प्रोक्तवान् ) "हे विभीषण ! समाधिमान् त्व रक्षसा राजा ( सन् ) लङ्काम् अवेक्षेथा ॥

**व्याख्या**—रुक्मकुम्भेन = कनककलशेन, मूर्ध्नि = शिरसि, विभीषणस्येति शेष । अम्भासि = जलानि, सिञ्चन् = अभिषिञ्चन्, "राम प्रोक्तवान्" इति पूर्व-

श्लोकस्थाभ्या पदाभ्या सम्बन्ध· । अत परमासर्गसमाप्ते रामवचनमेवाह—"हे विभीषण = हे रावणाऽनुज !, समाधिमान् = ध्यानवान् , त्व, रक्षसा = राक्षसाना, राजा=भूपाल सन् , लङ्का=लङ्काख्या नगरीम् , अवेक्षेथा =पश्ये·, परिपालयेति भाव· ॥

ॐव्युत्पत्तिःॐ सिञ्चन् = सिञ्चतीति, "षिच क्षरण" इति धातोर्लट· शत्रादेश·, "शेमुचादीनाम्" इति नुम् । अवेक्षेथा· = अवपूर्वकात् "ईक्ष दर्शने" इति धातोर्विधौ लिङ् ॥

ॐभाषाऽर्थ·ॐ सुवर्णकलशसे शिरमें जलका सिञ्चन करते हुए रामचन्द्रजीने विभीषणको कहा—"हे विभीषण ! समाधिसे सम्पन्न तुम राक्षसोंके राजा होकर लङ्काका परिपालन करो ॥ २३ ॥

क्रुद्धाननुनयेः सम्यक् धनैर्लुब्धानुपार्जयेः ।
मानिनो मानयेः काले त्रस्तान् पौलस्त्य ! सान्त्वयेः ॥ २४ ॥

अन्वयः—हे पौलस्त्य ! क्रुद्धान् सम्यक् अनुनये , लुब्धान् धनै उपार्जयेः, मानिन काले मानये त्रस्तान् सान्त्वये ॥

व्याख्या—हे पौलस्त्य = हे विभीषण !, क्रुद्धान् = कुतश्चित्कारणात् कुपितान् , सम्यक् = अकपटेन, अनुनये = प्रसादय लुब्धान् = धनलोलुपान् , धनै· = द्रव्यै , उपार्जये = दानेन वशीकुरु, "लुब्धमर्थेन गृह्णीयात्" इति नयादिति भाव· । मानिन = अभिमानिन , काले = सम्मानाऽवसरे, मानये = सत्कुरु, एवं त्रस्तान् = भीतान् , सान्त्वये = उपलालय ॥

ॐव्युत्पत्ति·ॐ पौलस्त्य = पुलस्त्यस्याऽपत्य पुमान् पौलस्त्यस्तत्सम्बुद्धौ, "तस्याऽपत्यम्" इत्यण् "तद्धितेष्वचामादे." इत्यादिवृद्धिश्च । अनुनये = अनुपूर्वात् "णीञ् प्रापण" इति धातोर्विधौ लिङ् । मानिनः = मानोऽस्ति एषा ते मानिनस्तान् , "अत इनिठनौ" इतीनि. । त्रस्तान् = "त्रसी उद्वेगे" इति धातोर्निष्ठायां क्तप्रत्ययः ॥

ॐभाषाऽर्थ·ॐ हे विभीषण ! तुम क्रुद्धोंको अच्छी रीतिसे मनाओ, लोभियोंको धन दानसे वशमे करो, अभिमानियोंको सम्मान करनेके अवसरमे सत्कार करो और रावणके वधसे भीत राक्षसोंको सान्त्वना दे दो ॥ २४ ॥

इच्छा मे परमानन्देः कथ त्व वृत्रशत्रुवत् ।
इच्छेद्धि सुहृदं सर्वो वृद्धिसस्थं यत. सुहृत् ॥ २५ ॥

अन्वय.—( हे सखे ! ) त्वं वृत्रशत्रुवत् कथम् आनन्दे· ( इति ) मे परमा इच्छा । यत· सर्व सुहृत् सुहृद वृद्धिसंस्थम् इच्छेत् हि ॥

व्याख्या—( हे सखे ! ) त्व = विभीषण , वृत्रशत्रुवत् = इन्द्रवत् , कथं =

केन प्रकारेण, आनन्दे· = समृद्धो भवे, ( इति एवम् ) मे = मम, सुहृद इति भाव । परमा = महती, इच्छा = मनोरथ, अस्तीति शेष । यत = यस्मात्कारणात्, सर्व = सकल, सुहृत् = सखा, सुहृद=सखाय, वृद्धिसस्थ = समृद्धिस्थम्, इच्छेत्= इच्छति, हि = निश्चयेन ॥

※व्युत्पत्ति※ वृत्रशत्रुवत् = वृत्रशत्रुणा तुल्य, "तेन तुल्य क्रिया चेद्वति" इति वतिप्रत्यय. । आनन्दे = आङ्पूर्वकात् "टुनदि समृद्धौ" इति धातोरिच्छार्थोपपदात् "इच्छाऽर्थेषु लिङ्लोटौ" इति लिङि सिपि रूपम् । सुहृत् = शोभन हृदय यस्य सः, "सुहृद्दुर्हृदौ मित्राऽमित्रयो" इति हृदयस्य हृद्भावो निपात्यते । वृद्धिसस्थ= वृद्धौ सस्था यस्य स वृद्धिसस्थस्तम् । इच्छेत् = "इषु इच्छायाम्" इति धातोः "इच्छाऽर्थेभ्यो विभाषा वर्तमाने" इति वर्तमाने लिङ् ॥

※भाषाऽर्थ※ हे मित्र ! तुम इन्द्रके समान कैसे समृद्ध होगे ऐसी मेरी बडी इच्छा है। क्योंकि सब मित्र अपने मित्रको समृद्धिमें अवस्थित देखना चाहता है॥२५॥

वर्धिषीष्ठाः स्वजातेषु वध्यास्त्वं रिपुसहतीः।
भूयास्त्वं गुणिनां मान्यस्तेषां स्थेया व्यवस्थितौ ॥ २६ ॥

**अन्वयः**—त्व स्वजातेषु वर्धिषीष्टा, रिपुसंहती वध्या, त्वं गुणिना मान्यो भूया तेषा व्यवस्थितौ स्थेया ॥

**व्याख्या**—( हे सखे १ ) त्वं = विभीषण, स्वजातेषु = सजातीयेषु, राक्षसेष्विति भाव । वर्धिषीष्टा· = वर्द्धस्व, रिपुसहती = शत्रुसङ्घान्, वध्या = जहि, त्वं=विभीषण, गुणिना = गुणवता, श्रुतशीलवतामिति भाव । मान्य·=माननीय, भूया = भवतात्, एवं च तेषा = गुणिना, व्यवस्थितौ = प्रतिष्ठाया स्थेया =तिष्ठतात् ॥

※व्युत्पत्ति※ वर्धिषीष्ठाः = "वृधु वर्द्धने" इति धातो "आशिषि लिङ्लोटौ" इत्याशिषि लिङ् "लिङ सीयुट्" इति सीयुट्, "सुट् तिथो" इति सुट्। रिपुसहतीः= रिपूणां संहतयो रिपुसहतयस्ता, "स्त्रिया तु सहतिर्वृन्द निकुरम्ब कदम्बकम् ।" इत्यमर· । वध्या· = "हन हिंसागत्यो" इति धातो पूर्ववदाशिषि लिङ् "हनो वध लिङि" इति वधादेश·, यासुडागम· । भूया = "भूसत्तायाम्" इति धातोराशिषि लिङ्, सिपि यासुट् । स्थेया = "ष्ठा गतिनिवृत्तौ" इति धातोराशिषि लिङ् "एर्लिङि·" इत्येकार ॥

※भाषाऽर्थ※ हे मित्र ! तुम सजातीयों (राक्षसों) में बढ़ जाओ, शत्रुसमूहोंको मार डालो, तुम गुणियोंके माननीय हो जाओ और उनकी प्रतिष्ठामें स्थित हो जाओ॥२६॥

धेयास्त्व सुहृदां प्रीति वन्दिषीष्ठा दिवौकस. ।
सोमं पेयाश्च हेयाश्च हिंस्रा हानिकरीः क्रियाः ॥ २७ ॥

**अन्वयः**—( हे सखे ! ) त्वं सुहृदां प्रीतिं धेयाः, दिवौकसो वन्दिषीष्ठाः, सोमं पेयाः हानिकरीः हिंस्राः क्रियाः हेयाः ॥

**व्याख्या**—( हे सखे ! ) त्वं = विभीषण, सुहृदां = मित्राणां, प्रीतिं = प्रणयं, धेयाः = धत्तात्, "देयाः" इति मल्लिनाथसम्मतः पाठस्तस्य दत्तादित्यर्थः, उभयत्राऽपि प्रीतिकरो भवतादिति भावः। दिवौकसः = देवान्, वन्दिषीष्ठाः = वन्दस्व। सोमं = सोमलतारसं, पेयाः = पिबतात्, सोमेन यजस्वेति भावः। हानिकरीः = अपचयहेतुकाः, प्रत्यवायकारणभूता इति भावः। हिंस्राः = हिंसनशीलाः, क्रियाः = कर्माणि, हेयाः = त्यजतात् ॥

**व्युत्पत्तिः** धेयाः = "डुधाञ् धारणपोषणयोः" इति धातोराशिषि लिङ्, "एर्लिङि" इत्येकारश्च, एवं परत्राऽपि। वन्दिषीष्ठाः = "वदि अभिवादनस्तुत्योः" इति धातो राशिषि लिङ्, सीयुट् सुडागमौ। पेयाः = "पा पाने" इति धातोः पूर्ववल्लिङ् प्रक्रिया। हानिकरीः = हानिं कुर्वन्तीति तद्धेतवो हानिकर्यस्ताः, "कृञो हेतुताच्छील्यानुलोम्येषु" इति हेत्वर्थे टप्रत्ययः, टित्वात् "टिड्ढाणञ्" त्यादिना ङीप्। हिंस्राः = "हिसि हिंसायाम्" इति धातोः "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति रप्रत्ययः ॥

**भाषाऽर्थः** हे मित्र ! तुम मित्रोंकी प्रीति करने वाले हो जाओ, देवताओंको नमस्कार करो, सोमलताके रसका पान करो ( सोम याग करो ) और हानि करने वाले हिंस्र कर्मोंका परित्याग करो ॥ २७ ॥

> अवसेयाश्च कार्याणि धर्मेण पुरवासिनाम् ।
> अनुरागं क्रिया राजन् ! सदा सर्वगतं जने ॥ २८ ॥

**अन्वयः**—हे राजन् ! पुरवासिनां कार्याणि धर्मेण अवसेयाः, जने सदा सर्वगतम् अनुरागं क्रियाः ॥

**व्याख्या**—हे राजन् = हे महाराज !, पुरवासिनां = पौराणां, कार्याणि = कर्माणि, व्यवहारानिति भावः। धर्मेण = धर्ममार्गेण, अवसेयाः = निश्चिनु जने = प्रजाजने, सदा = सर्वदा, सर्वगतं = सर्वव्यापिनं, "सर्वङ्कषम्" इति मल्लिनाथसम्मतः पाठस्तत्राऽपि नाऽर्थभेदः। अनुरागं = प्रणयं, क्रियाः = कुरुतात्, प्रजासु अवैषम्येण व्यवहरेति भावः ॥

**व्युत्पत्तिः** पुरवासिनां = पुरे वसन्तीति तच्छीलाः पुरवासिनस्तेषां, "सुप्यजातौ णिनिस्ताच्छील्ये" इति ताच्छील्ये णिनिः। अवसेयाः = अव पूर्वकात् "षोऽन्तकर्मणि" इति धातोराशिषि लिङ् "आदेच उपदेशेऽशिति" इत्यात्वम् "एर्लिङि"

इत्येकार. । सर्वंगत=सर्वं गत इति सर्वगतस्त, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्तापन्नैः" इति द्वितीयातत्पुरुषः । "सर्वङ्कषम्" इति मल्लिनाथसम्मते पाठे "सर्वकूलाऽभ्रकरीषेषु कष" इति खच्, खित्वान्मुम् च । क्रिया ="डुकृञ् करण" इति धातोराशिषि लिङ्, यासुडागम "रिङ् शयग्लिङ्क्षु" इति रिङादेश ॥

ॐभाषाऽर्थ ॐ हे राजन् ! आप पौरोंके व्यवहारोंका धर्मसे निश्चय कीजिए, प्रजाजनमें सदा सर्वव्यापी अनुरागको प्रकाशित करें ॥ २८ ॥

घानिषीष्ट त्वया मन्युर्ग्राहिषीष्ट समुन्नतिः ।
रक्षोभिर्दर्शिषीष्ठास्त्व द्रक्षीरन् भवता च ते ॥ २९ ॥

अन्वयः—( हे राजन् ! ) त्वया मन्यु घानिषीष्ट, समुन्नति ग्राहिषीष्ट । रक्षोभि. त्वं दर्शिषीष्ठा । भवता च ते द्रक्षीरन् ॥

व्याख्या—( हे राजन् ! ) त्वया = भवता, मन्यु = क्रोध , घानिषीष्ट = हन्यताम्, मुख्यशत्रुत्वादिति भाव । एवं च समुन्नति = अभ्युदय , ग्राहिषीष्ट = गृह्यताम् । रक्षोभिः = राक्षसै , त्वं=भवान् , दर्शिषीष्ठा =दृश्यस्व । भवता च = त्वया च, ते = राक्षसा , द्रक्षीरन्=दृश्यन्ताम् ॥

ॐव्युत्पत्ति ॐ त्वया = कर्मवाच्यप्रयोगे क्रियापदेन कर्तुरनुक्तत्वात् "कर्तृकरणयोस्तृतीया" इति तृतीया । मन्युः = कर्मत्वेऽपि क्रियापदेनोक्तत्वात् प्रथमा । घानिषीष्ट= "हन हिंसागत्यो." इति धातो कर्मणि आशीर्लिङि सीयुट् "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इति चिण्वदिटि वृद्धिर्घत्वं च । ग्राहिषीष्ट= "ग्रह उपादाने" इति धातो कर्मणि आशीर्लिङ, पूर्ववच्चिण्वदिट् कार्यम् । दर्शिषीष्ठा. = "दृशिर् प्रेक्षण" इति धातो पूर्ववत्कर्मणि आशीर्लिङ्, प्रक्रियादि कार्यं च । द्रक्षीरन् = पूर्वस्मादेव धातो कर्मणि लिङि सीयुट् "झस्यरन्" इति रन् , अचिण्वद्भावपक्षे रूपम् ॥

ॐभाषाऽर्थ ॐ हे राजन् ! आप क्रोधको नष्ट करे और उन्नतिका ग्रहण करें । राक्षस आपको देखें और आप उनको देखले ॥ २९ ॥

मन्यु वध्या भटवधकृत बालवृद्धस्य राजन् !
शास्त्राऽर्थज्ञाः सदसि सुधिय. सन्निधिं ते क्रियासुः ।
सरसीष्ठा सुरमुनिगते वर्त्मनि प्राज्यधर्मे
सभुत्सीष्ठा सुनयनयनैर्विद्विषामीहितानि ॥ ३० ॥

अन्वय —हे राजन् ! भटवधकृत बालवृद्धस्य मन्युं वध्या, शास्त्राऽर्थज्ञा सुधिय ते सदसि सन्निधिं क्रियासु , सुरमुनिगते प्राज्यधर्मे वर्त्मनि सरंसीष्ठा सुनयनयनै विद्विषाम् ईहितानि सम्भुत्सीष्ठा ॥

व्याख्या—हे राजन् = हे महाराज !, भटवधकृतं = वीरयोधव्यापादनजनितं, बालवृद्धस्य = माणवकस्थविरस्य, हतभटसम्बन्धभाज इति शेष । मन्युं = शोकं, वध्या = नाशय, निवारयेति भाव । शास्त्राऽर्थज्ञाः = शास्त्रऽर्थकुशला , सुधिय = विद्वास , ते = तव, सदसि = सभाया, सन्निधिं = सामीप्य, क्रियासु कुर्युः, विद्वासो नित्यं त्वत्सभासन्निहितास्तिष्ठन्त्विति भाव "न सा सभा यत्र न सन्ति वृद्धा" इति स्मरणादिति तात्पर्यम् । सुरमुनिगते = देवर्षिसेविते, प्राज्यधर्मे = प्रचुरपुण्ये, वर्त्मनि= मार्गे, संरसीष्ठा' = सम्यग्रमस्व, सुनयनयनै = शोभननीतिरूपनेत्रै , विद्विषा = शत्रूणाम् , ईहितानि = चेष्टितानि, सम्भुत्सीष्ठा = सम्यग् बुध्यस्व ॥

ॐव्युत्पत्तिॐ भटवधकृत = भटाना वधेन कृतम् । बालवृद्धस्य = बालाश्च वृद्धाश्च बालवृद्ध, तस्य "सर्वो द्वन्द्वो विभाषैकवद्भवति" इति नयेन समाहारद्वन्द्वः । वध्या' = हनधातोराशिषि लिङ् , "हनो वध लिङि" इति वधादेश' । सुधिय. = सुष्ठु ध्यायन्तीति शोभना धीर्येषामिति वेति विग्रह. । जसि "एरनेकाचोऽसयोगपूर्वस्ये"ति यणि प्राप्ते"न भूसुधियो " इति निषेध , ततः "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इतीयङादेश । सुरमुनिगते = सुराश्च मुनयश्च सुरमुनय., तैर्गत सुरमुनिगत, तस्मिन् । प्राज्यधर्मे = प्राज्या धर्मा यस्मिस्तत् प्राज्यधर्मं, तस्मिन् । अत्र समासाऽन्तविधेरनित्यत्वादनिचोऽभावः । संरसीष्ठाः = सपूर्वकात् "रमु क्रीडायाम्" इति धातोराशिषि लिङ् , थसि सीयुट्सुटौ । सुनयनयनैः = शोभना नयाः सुनया., त एव नयनानि सुनयनयनानि, तै. "मयूरव्यसकादयश्चे"ति समास. । सम्भुत्सीष्ठाः = सपूर्वकात् "बुध अवगमने" इति धातोराशिषि लिङ् , चर्त्वम् "एकाचो बशो भष् झषन्तस्य स्ध्वो " इति भष्भाव' । मन्दाक्रान्ता वृत्त, तल्लक्षण यथा—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरूचेत् ॥" इति ॥

ॐभाषाऽर्थॐ हे महाराज ! वीर योद्धाओंके वधसे उत्पन्न बालक और वृद्धोंके शोकको हटाइये, शास्त्राऽर्थको जाननेवाले विद्वान् आपकी सभामे अवस्थित हों; देवता और मुनियोंसे आचरित प्रचुर धर्मोंसे युक्त मार्गमें आप स्मरण करें और सुन्दर नीति रूप नेत्रोंसे शत्रुओंकी चेष्टाओंको अच्छी तरहसे जान ले ॥ ३० ॥

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये चतुर्थे तिङन्त काण्डे लक्षणरूपे षष्ठ. परिच्छेद (वर्गः), तथा लक्ष्यरूपे कथानके विभीषणाऽभिषेको नाम एकोनविंशतितमः सर्ग. ।

# अथ विंशः सर्गः ।

अत प्रभृति लोटमधिकृत्य तद्विलसितमाह । "लोट् चे"ति वचनाद्विध्यादिष्वर्थेषु लोट् , क्वचित्ततोऽन्यत्राऽपि दर्शयिष्यति—

समुपेत्य ततः सीतामुक्तवान् पवनाऽऽत्मजः ।
दिष्ट्या वर्धस्व वैदेहि ! हतस्त्रैलोक्यकण्टकः ॥ १ ॥

**अन्वय.**—तत पवनात्मज सीता समुपेत्य उक्तवान्—हे वैदेहि ! दिष्ट्या वर्द्धस्व, त्रैलोक्यकण्टको हत ॥

**व्याख्या**—तत = विभीषणाऽभिषेकाऽनन्तर, पवनाऽऽत्मज. = वायुसूनु , हनूमानित्यर्थ । सीता = जानकी, समुपेत्य = आसाद्य, उक्तवान् = अब्रवीत् । हे वैदेहि = हे सीते !, दिष्ट्या = सानन्दं, वर्द्धस्व = एधस्व, वर्द्धनहेतुमाह—हत इति । त्रैलोक्यकण्टक.=भुवनत्रयशल्यभूत , रावण इति भाव । हत = व्यापादितः ॥

**॥व्युत्पत्ति.॥ दिष्ट्या = "दिष्ट्या समुपजोष चेत्यानन्दे" इत्यमर. । वर्द्धस्व = "वृधु वृद्धौ" इति धातो· "लोट् चे"ति प्रार्थनायां लोट् । "सवाभ्यां वामौ" इत्येतो वकारादेशः । त्रैलोक्यकण्टकः=त्रयो लोकास्त्रैलोक्य, "चतुर्वर्णादीनां स्वाऽर्थे उपसख्यानम्" इति ष्यञ् । त्रैलोक्यस्य कण्टक. ॥**

**॥भाषाऽर्थ॥ विभीषणके अभिषेकके अनन्तर हनूमानूजीने सीताजीके पास जाकर कहा—"हे सीताजी ! आनन्दपूर्वक बढिये, त्रैलोक्यका कण्टकस्वरूप रावण मारा गया ॥ १ ॥**

अनुजानीहि हन्यन्ता मयैताः क्षुद्रमानसाः ।
रक्षिकास्तव राक्षस्यो गृहाणैतासु मत्सरम् ॥ २ ॥

**अन्वयः**—क्षुद्रमानसा तव रक्षिका एता राक्षस्यो मया हन्यन्ताम् अनुजानीहि । एतासु मत्सरं गृहाण ॥

**व्याख्या**—( हे सीते ! ) क्षुद्रमानसा =पापचित्ता , तव = भवत्या , रक्षिका = गोप्त्य , एता = इमा , राक्षस्य = रक्ष· स्त्रिय·, मया = हनूमता, हन्यन्ताम् = व्यापाद्यन्ताम् , अनुजानीहि = अनुमन्यस्व । एतासु = राक्षसीषु, मत्सरं = क्रोधं, गृहाण = आदत्स्व ॥

**॥व्युत्पत्ति.॥ क्षुद्रमानसाः = क्षुद्रं मानस यासां ता· । हन्यन्तां = "हन हिंसागत्योः" इति धातो· कर्मणि विधौ लोट् । अनुजानीहि = अनुपूर्वकात् "ज्ञा अवबोधन" इति धातो. प्रार्थनाया लोट् । गृहाण = "ग्रह उपादान" इति धातो. पूर्ववल्लोट हलः श्नः शानज्झौ" इति शानजादेशे हिलुक् ॥**

ॐभाषाऽर्थ.ॐ पापचित्तवाली आपकी रक्षा करनेवाली इन राक्षसियोंको मुझे मारना चाहिये, आप आज्ञा दीजिए। इन लोगोंमें क्रोध कीजिए ॥ २ ॥

तृणहानि दुराऽऽचाराघोररूपाऽऽशयक्रियाः ।
हिंस्रा भवतु ते बुद्धिरेतासु कुरु निष्ठुरम् ॥ ३ ॥

अन्वय'—( हे सीते ! ) ( अहम् ) दुराचारा घोररूपाशयक्रिया' ( एता ) तृणहानि । एतासु ते बुद्धि हिंस्रा भवतु । निष्ठुरं कुरु ॥

व्याख्या—( हे सीते ! ) दुराचारा = पापसमाचारा , घोररूपाशयक्रिया = भयङ्कराऽऽकाराऽभिप्रायव्यापारा , एता राक्षसीरिति शेष । तृणहानि = हनानि । एतासु = आसु, ते = तव, बुद्धि =मति, हिंस्रा = हिंसनशीला, भवतु = अस्तु । निष्ठुर=परुषभावं, कुरु=विधेहि ॥

ॐव्युत्पत्तिःॐ दुराचारा'=दुष्ट आचारो यासां, ता । घोररूपाऽऽशयक्रियाः=रूपं च आशयश्च क्रियाश्च रूपाऽऽशयक्रियाः । घोरा रूपाऽऽशयक्रिया यासां, ता' । तृणहानि = "तृह ( हिंसि ) हिंसायाम्" इति रौधादिकाद्धातोर्लोट् "रुधादिभ्य. श्नम्" इति श्नम् "आडुत्तमस्य पिच्चे"ति आट् "मेनि" इति नि । हिंस्रा = हिंसनशीला, नमिकम्पिस्म्यजसकमहिंसदीपो र" इति रप्रत्यय । निष्ठुर=भावप्रधानो निर्देश ॥

ॐभाषाऽर्थ ॐ हे सीताजी ! मै पापपूर्ण आचारवाली भयङ्कर आकार, अभिप्राय और क्रियासे युक्त इन राक्षसियोंको मार डालूगा । इन लोगोंमे आपकी हिंस्रबुद्धि हो । आप निष्ठुर भाव कीजिए ॥ ३ ॥

पश्चिम करवामैतत्प्रियं देवि ! वय तव ।
ततः प्रोक्तवती सीता वानरं करुणाऽऽशया ॥ ४ ॥

अन्वय'—हे देवि ! वय तव एतत् पश्चिम प्रियं करवाम" । तत करुणाऽऽशया सीता वानर प्रोक्तवती ॥

व्याख्या—हे देवि = हे राज्ञि !, तव=भवत्या., एतत्= इदम् , उक्तरूपमिति भाव । पश्चिमम् = अन्तिमं, प्रियम् = अभीष्टं, करवाम = कुर्याम । तत = अनन्तर हनूमद्वाक्याऽनन्तरमित्यर्थ । करुणाऽऽशया = दयाऽऽर्द्रचित्ता, सीता = जानकी, वानरं = हनूमन्त, प्रोक्तवती = प्रोवाच ॥

ॐव्युत्पत्ति ॐ वयम्=एकत्वे विवक्षितेऽपि "अस्मदो द्वयोश्चे"ति विभाषया बहुवचनम् । पश्चिमम् =अन्ते जघन्य चरममन्त्यपाश्चात्यपश्चिमम् ।" इत्यमरः । करवाम - "डुकृञ् करणे" इति धातोर्लोट् । "आडुत्तमस्य पिच्चे"ति आडागम , "लोटो लङ्वत्" इति लङ्वदतिदेशात् "नित्यङित" इति सलोपः । करुणाऽऽशया=करुणा-

ऽस्ति अस्मिन् स करुणः, "अर्श आदिभ्योऽच्" इत्यच्प्रत्यय । करुण आशयो यस्याः सा, "अभिप्रायश्छन्द आशय" इत्यमर ॥

☸भाषाऽर्थ☸ हे देवि ! हम आपका यह पिछला अभीष्ट कार्य करते हैं"। तब दयासे आर्द्रचित्तवाली सीताने वानरको कहा ॥ ४ ॥

उपशाम्यतु ते बुद्धिः पिण्डनिर्वेशकारिषु ।
लघुसत्त्वेषु दोषोऽय यत्कृतोनिहतोऽसकौ ॥ ५ ॥

अन्वयः—"( हे हनूमन् ) पिण्डनिर्वेशकारिषु लघुसत्वेषु ते बुद्धि उपशाम्यतु । अय दोषो यत्कृत , असकौ निहत ॥

व्याख्या—( हे हनुमन् ! ) पिण्डनिर्वेशकारिषु=ग्रासोपजीवनकारिषु, भृत्यवृत्तिषु लघुसत्त्वेषु = क्षुद्रजन्तुषु, राक्षसीरूपेष्विति भाव । ते=तव, बुद्धि = मति , व्यापादनतत्परेति भाव· । उपशाम्यतु = शान्ताऽस्तु । अयम् = एष , दोष = दूषणं, मत्तर्जनाऽऽदिरूपमिति भाव । यत्कृत = यद्विहित , असकौ = कुत्सितोऽसौ, रावण इति भाव । निहत = व्यापादित , कुत्सितकार्ये प्रयोजकस्य प्रभोरपराधो न तु प्रयोज्यस्य भृत्यस्येति भाव , अत आसु राक्षसीषु तव व्यापादनमति· परिहर्त्तव्येति हार्दोऽभिप्राय· ॥

☸व्युत्पत्तिः☸ पिण्डनिर्वेशकारिषु = पिण्डनिर्वेश कुर्वन्तीति तच्छीला· पिण्डनिर्वेशकारिणस्तेषु, ताच्छील्ये णिनि· । लघुसत्त्वेषु = लघवश्च ते सत्त्वा लघुसत्त्वास्तेषु, "सत्त्वमस्त्री तु जन्तुषु" इत्यमर· । उपशाम्यतु = उपपूर्वकात् "शमु उपशमे" इति धातो प्रार्थनाया लोट् , "शमामष्टाना दीर्घ श्यनि" इति दीर्घत्वम् । यत्कृत = येन कृतः । असकौ = कुत्सितोऽसौ, अद· शब्दात्सर्वनाम्न· "कुत्सिते" इत्यकच्प्रत्यय· ॥

☸भाषाऽर्थ·☸ हे हनूमन् ! भृत्यवृत्ति (नौकरी) करनेवाले क्षुद्र जन्तुओं ( राक्षसियों ) में तुम्हारी बुद्धि शान्त हो जाय । यह दोष जिससे किया गया कुत्सित वह रावण मारा गया ॥ ५ ॥

न हि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः ।
एधि कार्यकरस्त्वं मे गत्वा प्रवद राघवम् ॥ ६ ॥

अन्वयः—( हे हनूमन् ! ) "घोर प्रेष्यवध करवाणि" ( इति ) मति ते न अस्तु । त्वं मे कार्यकर एधि, गत्वा राघवं प्रवद ॥

व्याख्या—( हे हनूमन् ! ) घोर = भयङ्कर, प्रेष्यवधं = परिचारकहिसा, करवाणि = कुर्याम् , ( इति = एवम् ) मति· = बुद्धि , ते=तव, न अस्तु=न भवेत् ,

त्वं=हनूमान्, मे=मम, कार्यकर =क्रियाऽनुकूल, एधि=भव, गत्वा=यात्वा, राघवं= रामं, प्रवद-ब्रूहि, वक्ष्यमाणवचनमिति शेष ॥

**ﷺव्युत्पत्तिःﷺ** प्रेष्यवध=प्रेष्याणां वधस्तम्। करवाणि=आशसायां लोट्। अस्तु= "अस्य भुवि" इति धातोराशिषि लोट्। कार्यकर=कार्यं करोतीति अनुलोमः, "कृञोहेतुताच्छील्याऽऽनुलोम्येषु" इत्यानुलोम्ये टप्रत्ययः। एधि=असधातोः प्रार्थनायां लोट्। "सेर्ह्यपिच्चे"ति सेर्ह्यादेशे "श्नसोरल्लोप" इत्यकारलोप. "घ्वसोरेद्धावभ्यासलोपश्चे"ति सकारस्याऽन्त्यस्य एत्वे तस्याऽभाच्छास्त्रीयस्याऽसिद्धत्वे "हुझल्भ्यो हेर्धि." इति हेर्धिरादेश. ॥

**ﷺभाषाऽर्थःﷺ** हे हनूमन्! "भृत्योंकी भयङ्कर हिंसा करता हूं" ऐसी बुद्धि तुम्हारी नहीं हो। तुम मेरे कार्य करनेके लिए अनुकूल हो जाओ। जाकर रामचन्द्रजीको कहो ॥ ६ ॥

> दिदृक्षुर्मैथिली राम! पश्यतु त्वाऽविलम्बितम्।
> तथेति स प्रतिज्ञाय गत्वा राघवमुक्तवान् ॥ ७ ॥

**अन्वयः**—'हे राम! मैथिली त्वा दिदृक्षु. अविलम्बितं पश्यतु"। स तथा इति प्रतिज्ञाय राघव गत्वा उक्तवान् ॥

**व्याख्या**—हे राम=हे रामचन्द्र!, मैथिली=जानकी, सीतेति भाव। त्वा=भवन्त, दिदृक्षु=द्रष्टुमिच्छु, अविलम्बित=शीघ्र, पश्यतु=अवलोकयतु। इति प्रवदेति पूर्वश्लोकस्थाभ्या सम्बन्ध। स=हनूमान्, तथा=तेन प्रकारेण, कथयिष्यामीति शेष, इति=एव, प्रतिज्ञाय=प्रतिश्रुत्य, राघव=रामं, गत्वा=प्राप्य, उक्तवान्=अभिहितवान् ॥

**ﷺव्युत्पत्तिﷺ** त्वा="त्वामौ द्वितीयाया" इति त्वाऽऽदेश। "दिदृक्षु"रिति पदेनयोगे "कर्तृकर्मणो कृति" इति प्राप्ताया कर्मणि षष्ठया. "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति निषेधाद्द्वितीया। पश्यतु=प्रार्थनाया लोट् ॥

**ﷺभाषाऽर्थःﷺ** "हे राम! सीता आपके दर्शनकी अभिलाषिणी है, अतः शीघ्र आपका दर्शन करे" ऐसा कहो। तब हनूमानूजीने "ऐसा ही कहता हू" ऐसी प्रतिज्ञा कर रामचन्द्रजीके पास जाकर कहा ॥ ७ ॥

युग्मम्—

> उत्सुकाऽऽनीयतां देवी काकुत्स्थकुलनन्दन!।
> क्ष्मा लिखित्वा विनिश्वस्य स्वराऽऽलोक्य विभीषणम् ॥ ८ ॥
> उक्तवान् राघवः सीतामानयाऽलंकृतामिति।
> गत्वा प्रणम्य तेनोक्ता मैथिली मधुरं वचः ॥ ९ ॥

अन्वयः—"हे काकुत्स्थकुलनन्दन ! उत्सुका देवी आनीयताम्" । राघव क्ष्मा लिखित्वा विनिश्वस्य ख आलोक्य "अलङ्कृता सीताम् आनय" इति विभीषणम् उक्तवान् । तेन गत्वा प्रणम्य मैथिली मधुरं वच उक्ता ॥

व्याख्या—हे काकुत्स्थकुलनन्दन = हे पुरञ्जयवंशनन्दन !, उत्सुका = उत्कण्ठिता भवद्दर्शन इति शेष । देवी=राज्ञी, सीतेति भाव• । आनीयताम् = प्राप्यताम्, इति हनूमानब्रवीदिति शेष । राघव = राम, क्ष्मा = पृथिवीं, लिखित्वा = विलिख्य पादाङ्गुष्ठेनेति शेष । विनिश्वस्य = दीर्घमुष्णं च निःश्वस्य, ख = आकाशम्, आलोक्य = दृष्ट्वा, अलङ्कृता = भूषिता, सीता = जानकीम्, आनय = प्रापय, इति = एवं, विभीषणं = राक्षसराजम्, उक्तवान् = अब्रवीत्, एते च क्ष्मालेखनादयश्चिन्ताऽनुभावा, सीतास्वीकारे लोकाऽपवादशङ्का चिन्तोत्पादिकेति ध्येयम् । तेन = विभीषणेन, गत्वा = सीता समीपं प्राप्य, प्रणम्य = नमस्कृत्य, सीतामिति शेष, मैथिली = सीता, मधुरं = माधुर्यपूर्ण, वच• = वचनम्, वक्ष्यमाणप्रकारमिति शेष । उक्ता = अभिहिता ॥

❀व्युत्पत्ति❀ हे काकुत्स्थकुलनन्दन = ककुत्स्थस्याऽपत्य पुमान् काकुत्स्थस्तत्कुलनन्दनस्तत्संबुद्धौ । आनीयतां = कर्मणि प्रार्थनायां लोट् । ख• = "खः स्वर्गे चाऽन्तरिक्षे चे"ति विश्व• । आनय = विधौ लोट् । मैथिली = उक्तेत्यस्य गौणकर्मत्वात् "गौणो कर्मणि दुह्यादेः" इति नियमेन प्रथमा । वच• = प्रधानकर्म । उक्ता = दुह्यादित्वादप्रधाने कर्मणि क्तप्रत्ययः ॥

❀भाषाऽर्थ❀ "हे रामचन्द्रजी ! आपके दर्शनके लिए उत्कण्ठित महारानी सीताजीको मगाइये" हनूमान्‌जीने रामचन्द्रजीको ऐसा कहा । तब रामचन्द्रजीने पैरके अगूठेसे पृथ्वीका विदारण कर दीर्घ और उष्ण निश्वास लेकर आकाशको देखकर "अलङ्कृत सीताजीको ले आओ" विभीषणको ऐसी आज्ञा दी। तब विभीषणजीने अशोक वनिकामें जाकर प्रणाम कर सीताजीको मधुर वचन कहा ॥८॥९॥

जहीहि शोकं वैदेहि ! प्रीतये धेहि मानसम् ।
रावणे जहिहि द्वेष जहाहि प्रमदावनम् ॥ १० ॥

अन्वय.—"हे वैदेहि ! शोक जहीहि, प्रीतये मानसं धेहि; रावणे द्वेषं जहिहि प्रमदावन जहाहि ॥

व्याख्या—हे वैदेहि = हे मैथिलि !, शोक=पतिवियोगदु ख, जहीहि=त्यज । प्रीतये = सन्तोषाय, मानस = चित्त, धेहि = सन्धेहि । रावणे = दशानने, द्वेष=वैरं,

जहिहि = त्यज, तस्य मरणाऽन्तत्वादिति भाव । प्रमदावनम् = अशोकवनिका, जहाहि = त्यज, इतो निर्गच्छेति भाव ।

॥व्युत्पत्ति॥ जहीहि = "ओहाक् त्यागे" इति धातोर्लोट् "जहातेश्चे"ति चादी त्वम् । तथैव इत्वे—जहिहि । आत्वे च जहाहीति रूपम् । धेहि = डुधाञ् धातो प्रार्थनायां लोट्, "घ्वसोरेद्धावभ्यासलोपश्चे"ति एत्वाऽभ्यासलोपौ । रावणे = वैष यिकी सप्तमी ॥

॥भाषाऽर्थ॥ "हे मैथिलि ! पतिवियोगके दुःखको छोड़िए, सन्तोषके लिए चित्तका स्थापन कीजिए, रावणमें द्वेष आप छोड दे और अशोकवनिकाको छोड दीजिए ॥ १० ॥

स्नाह्यनुलिम्प धूपाय निवस्स्वाऽऽविध्य च स्रजम् ।
रत्नान्याऽऽमुञ्च संदीप्ते हविर्जुहुधि पावके ॥ ११ ॥

**अन्वय**—स्नाहि, अनुलिम्प, धूपाय, निवस्स्व, स्रजम् आविध्य, रत्नानि आमुञ्च, सन्दीप्ते पावके हवि जुहुधि ॥

**व्याख्या**—अथ युग्मेन सीताया कर्तव्यमाह—स्नाहीति । ( हे सीते ! ) स्नाहि = स्नान कुरु, बाह्याभ्यन्तरशुद्ध्यर्थमिति भाव । अनुलिम्प = अनुलेपन कुरु, चन्दनादिनेति भाव । धूपाय = श्रीवासादिधूपेनाऽङ्गं संस्कुर्वित्यर्थ । निवस्स्व = आच्छादय, वस्त्रमिति शेष । स्रज = माल्यम्, आविध्य = ग्रथान, रत्नानि = मण्याभरणानि, आमुञ्च = प्रतिमुञ्च, धारयेति भाव । सन्दीप्ते = प्रज्वलिते पावके=अग्नौ, हवि = आज्यादिकं, जुहुधि = जुहुतात् ॥

॥व्युत्पत्ति॥ स्नाहि = "ष्णा शौचे" इति धातो. प्रार्थनायां लोट् । शपो लुकि सेर्हिरादेशः । अनुलिम्प = अनुपूर्वकात् "लिप उपदेहे" इति तौदादिकाद्धातोर्लोट् "अतो हे." इति हेर्लुक् । धूपाय = "गुपूधूपविच्छिपणिपनिभ्य आय" इति आयप्रत्ययाऽन्तात् "धूप सन्ताप" इति धातोर्लोटि सिपि हेर्लुक् । निवस्स्व = निपूर्वकात् "वस आच्छादन" इत्यादादिकाद्धातोर्लोटि "थास से" इति सेभाव, "सवाभ्यां वामौ" इति एतो वभाव । धातुप्रत्ययसकारयो श्लिष्टता । आविध्य = आङ्पूर्बकात् "व्यध ताडन" इति दैवादिकधातोर्लोट् "ग्रहिज्यावयी"त्यादिना सम्प्रसारण हेर्लुक् च । अत्रोपसर्गवशादर्थान्तरत्वम् । जुहुधि = "हुदानाऽदनयो." इति धातोर्लोट् "हुझल्भ्यो हेर्धि" इति हेर्धि ॥

॥भाषाऽर्थ॥ "हे मैथिलि ! आप स्नान कीजिए, शरीरमें चन्दन आदिसे लेप कीजिए, श्रीवास आदि धूपसे अङ्गका सस्कार कीजिए, वस्त्र पहनिए, मालाका गुम्फन कीजिए, रत्नोंको पहनिए, प्रदीप्त अग्निमे आज्य आदि हविका हवन कीजिए ॥ ११ ॥

अद्धि त्व पञ्चगव्यं च छिन्धि संरोधजं तमः ।
आरोह शिबिकां हैमीं द्विषां जहि मनोरथान् ॥ १२ ॥

अन्वय —( हे जानकि ) त्वं पञ्चगव्यम् अद्धि, संरोधज तम छिन्धि, हैमीं शिबिकाम् आरोह द्विषा मनोरथान् जहि ॥

व्याख्या.—( हे जानकि ! ) त्व, पञ्चगव्यं = गोमयादिक पदाऽर्थपञ्चकम्, अद्धि = भक्षय । आभ्यन्तरशुद्ध्यर्थमिति भाव. । सरोधज = निरोधजन्य, तम = शोकं, छिन्धि = अपनय । हैमी = सौवर्णी, शिबिका = नरयानम्, आरोह=अधितिष्ठ । द्विषा = शत्रूणा, मनोरथान् = अभिलाषान्, जहि = उन्मूलय । अत्र प्रथमं स्नान तत पञ्चगव्यप्राशन, ततो होमस्ततोऽनुलेपनमित्यादिक्रमो द्रष्टव्य, "अर्थाच्चे"ति न्यायेन शब्दक्रमाऽपेक्षया अर्थक्रमस्य बलवत्तरत्वात् ॥

**&व्युत्पत्तिः& पञ्चगव्यं=गोर्विकारा गव्यानि, "गोपयसोर्यत्" इति यत् । पञ्चानां गव्याना समाहार. पञ्चगव्य, तत् "तद्धिताऽर्थोत्तरपदसमाहारे चे"ति समाहारे समास. तस्य "सख्यापूर्वो द्विगु" इति द्विगुसञ्ज्ञा, ततः "अकाराऽन्तोत्तरपदो द्विगु· स्त्रियामिष्ट" इति नियमेन "द्विगोः" इति सूत्रेण ङीपि प्राप्ते "पात्राद्यन्तस्य ने" ति तन्निषेध "द्विगुरेकवचनम्" इति एकवद्भाव. "स नपुंसकम्" इति नपुंसकत्वम् । अद्धि = "अद भक्षणे" इति धातोर्लोट् हेर्धिरादेशः । तम = "तम शोके गुणाऽन्तरे" इति विश्व । छिन्धि = "छिदिर् द्वैधीकरणे" इति धातोर्लोट्, सिपि हेर्धिः । हैमीं = हेम्नो विकारो हैमी, ताम् "तस्य विकार" इत्यण् "नस्तद्धिते" इति टिलोप. "टिड्ढाणञि"त्यादिना ङीप् । जहि = "हन हिंसागत्यो·" इति धातोर्लोट् सेर्हिरादेशः "हन्तेर्ज" इति जादेश सर्वत्र विधौ लोट् ॥**

**&भावार्थ·& हे मैथिलि ! आप पञ्चगव्यका उपयोग कीजिए, निरोधजन्य शोकको हटाइये, सुनहली पालकीपर आरोहण कीजिए और शत्रुओंके मनोरथोंको निर्मूल कीजिए ॥ १२ ॥**

तृणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचम् ।
भवतादधियुक्ता त्वमत ऊर्ध्वं स्ववेश्मनि ॥ १३ ॥

अन्वयः—( हे मैथिलि ! ) राजन्याना पति त्वद्वियोगोत्था शुचं तृणेढु । त्वम् अत ऊर्ध्वं स्ववेश्मनि अधियुक्ता भवतात् ॥

व्याख्या—( हे मैथिलि ! ) राजन्याना = क्षत्रियाणा, पति =स्वामी, रामचन्द्र इत्यर्थ । त्वद्वियोगोत्था=त्वद्विरहजन्या, शुचं=शोक, तृणेढु = हिनस्तु निवारयत्विति भाव । त्वं = मैथिली, अत = अस्मात्कालात्, ऊर्ध्वम् = अनन्तरं, स्ववेश्मनि = आत्मप्रासादे, अधियुक्ता=पतियुक्ता, भवतात् = भूया· ॥

❀व्युत्पत्ति❀ राजन्याना = राज्ञामपत्यानि पुमासो राजन्यास्तेषां, "राजश्वशु-राद्यत्" इति यत् "ये चाऽभावकर्मणो." इति अन प्रकृतिभाव । "मूर्द्धाऽभिषिक्तो राजन्यो बाहुज क्षत्रियो विराट् ।" इत्यमर । त्वद्वियोगोत्था = त्वद्वियोगादुत्तिष्ठतीति त्वद्वियोगोत्था, ताम् "सुपि स्थ" इति कप्रत्यय "उद. स्थास्तम्भो पूर्वस्य" इति पूर्वसवर्ण । तृणेढु = "तृह ( हिसि ) हिसायाम्" इति धातोर्लोट्, तिपि एरुत्वम् । "हो ढ" इति हस्य ढ, तकारस्य "झषस्तथोर्धोऽध" इति धत्व तत ष्टुत्वे ढलोप. । भवतात् = भूधातो "आशिषि लिङ्लोटौ" इति आशिषि लोट्, सेर्ह्यादेशे "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" इति तातङादेश ॥

❀भाषाऽर्थ❀ हे मैथिलि ! क्षत्रियोंके स्वामी रामचन्द्रजी आपके वियोगसे उत्पन्न शोकको हटावे । आप अबसे अपने प्रासादमे पतियुक्त हो जायँ ॥ १३ ॥

दीक्षस्व सह रामेण त्वरित तुरगाऽध्वरे ।
दृश्यस्व पत्या प्रीतेन प्रीता प्रेक्षस्व राघवम् ॥ १४ ॥

अन्वयः—( हे मैथिलि । ) रामेण सह त्वरित तुरगाऽध्वरे दीक्षस्व, प्रीतेन पत्या दृश्यस्व, प्रीता ( सती ) राघव प्रेक्षस्व ॥

व्याख्या—( हे मैथिलि ! ) रामेण = रामचन्द्रेण, सह=सम, त्वरितं = शीघ्रं, तुरगाऽध्वरे = अश्वमेधे, दीक्षस्व = दीक्षिता भूया । प्रीतेन = प्रसन्नेन, पत्या = भर्त्रा, रामेणेति भाव । दृश्यस्व = प्रेक्ष्यस्व । प्रीता = प्रसन्ना ( सती ), राघवं = राम, प्रेक्षस्व = पश्य ॥

❀व्युत्पत्ति❀ रामेण="सहयुक्तेऽप्रधाने" इति तृतीया । दीक्षस्व="दीक्ष मौण्ड्येज्योपनयननियमव्रताऽऽदेशेषु" इत्याशिषि लोट् । दृश्यस्व = दृशे. कर्मणि लोटि यकि "थास. से" इति से भाव, "सवाभ्यां वामौ" इति एकारस्य वाऽऽदेश । प्रेक्षस्व = निमन्त्रणे लोट् ॥

❀भाषाऽर्थ❀ हे देवि ! रामचन्द्रजीके साथ शीघ्र अश्वमेध यज्ञमे दीक्षित हो जाइए । प्रसन्न हो कर पति रामचन्द्रजी आपको देखे । आप भी प्रसन्न होती हुई रामचन्द्रजी का दर्शन कर लें ॥ १४ ॥

अय नियोगः पत्युस्ते कार्या नाऽत्र विचारणा ।
भूषयाऽङ्गं प्रमाणं चेद्रामं गन्तुं यतस्व च ॥ १५ ॥

अन्वयः—( हे देवि ! ) अय नियोग. ते पत्यु अत्र विचारणा न कार्या । प्रमाणं चेत् अङ्गं भूषय रामं गन्तुं यतस्व च ॥

व्याख्या—( हे देवि ! ) अयं=पूर्वोक्त, स्नानादिरूप, नियोग. = आज्ञा, ते= तव, पत्यु. = भर्तु, रामस्येत्यर्थ., अस्तीति शेष. । अत्र=अस्मिन्नियोगे, विचारणा=

विमर्श , न कार्या=नो कर्तव्या, नियोगोऽयं पत्युक्तो न वेति विचारोनकर्तव्य इति भाव । प्रमाण चेत्=इद रामोक्तमेवेति प्रमितिकरण यदि, तर्हि अङ्ग=शरीर, भूषय= अलङ्कुरु, राम=रामचन्द्र, गन्तु = यातु, यतस्व च = प्रयत्न कुरु च ॥

ॐव्युत्पत्तिॐ भूषय=निमन्त्रणे लोट् । यतस्व="यती प्रयत्ने" इति धातो र्निमन्त्रणे लोट् ॥

ॐभाषाऽर्थॐ हे देवि ! यह आज्ञा आपके पतिकी है, इसमें विचार नहीं करना चाहिए । आप इस उक्तिको प्रमाण मानती हों तो शरीरको अलङ्कृत करें और राम चन्द्रजी के पास जानेके लिए यत्न करें ॥ १५ ॥

मुदा सयुहि काकुत्स्थ स्वयं चाऽऽप्नुहि सम्मदम् ।
उपेह्यूर्ध्वं मुहूर्तात्त्वं देवि ! राघवसन्निधिम् ॥ १६ ॥

अन्वयः—( हे देवि ! ) काकुत्स्थ मुदा सयुहि । स्वय च सम्मदम् आप्नुहि । त्वं मुहूर्तात् ऊर्ध्वं राघवसन्निधिम् उपेहि ॥

व्याख्या—( हे देवि ! ) काकुत्स्थं = राम, मुदा = हर्षेण, संयुहि = मिश्रय, मोदयेति भाव , त्वमिति शेष । स्वयं च सम्मद = हर्षम् , आप्नुहि = प्राप्नुहि । त्व, मुहूर्तात् ऊर्ध्वं = किञ्चित्कालात् अनन्तरं, राघवसन्निधिं = रामसमीपम् , उपेहि=गच्छ अत परं बहुकालव्यवधाने रामविरक्तेराशङ्का स्यादिति भाव ॥

ॐव्युत्पत्तिॐ सयुहि=सम्पूर्वकात् "यु मिश्रणाऽमिश्रणयो" इति आदादिका द्धातोर्लोट् , शपोलुक् हेर्ङित्वान्न गुण. । सम्मद=सम्पूर्वकात् "मदी हर्षे" इति धातो "प्रमदसम्मदौ हर्षे" इति अप्प्रत्ययाऽन्तो निपात. "मुत्प्रीति' प्रमदोहर्ष प्रमोदामोद-सम्मदा ।" इत्यमर । राघवसन्निधि=सन्निधानं सन्निधि', "उपसर्गे घो कि." इति भावे कि । राघवस्य सन्निधिस्तम् । उपेहि=उपपूर्वकात् "इण् गतौ" इति धातो प्रार्थनाया लोट् ॥

ॐभाषाऽर्थॐ हे देवि ! रामचन्द्रजीको प्रसन्न कीजिए । आप स्वयम् भी हर्षको प्राप्त कीजिए । आप मुहूर्तके अनन्तर रामचन्द्रजी केपास प्राप्त हों ॥ १६ ॥

ऊर्ध्वं मुहूर्तादह्नोऽङ्ग ! स्वामिनी स्म भव क्षितेः ।
राजपत्नीनियोगस्थमनुशाधि पुरीजनम् ॥ १७ ॥

अन्वय'—अङ्ग ! अह्नो मुहूर्तात् ऊर्ध्वं क्षिते स्वामिनी भव स्म, राजपत्नी नियोगस्थ पुरीजनम् अनुशाधि ॥

व्याख्या—अङ्ग = हे देवि !, अह्न = दिनस्य, मुहूर्ताद् = किञ्चित्कालात् , ऊर्ध्वम् = अनन्तरमिति भाव । क्षिते = पृथिव्या , स्वामिनी=अधीश्वरी, भव स्म=

भवे , राजपत्नीनियोगस्थ = राज्ञीनिदेशवर्तिनं, मल्लिनाथस्तु राजपत्नी त्वं नियोगस्थमिति व्यस्तपाठमाह । पुरीजनम् = अयोध्यानगरीवासिजनम् , अनुशाधि = कर्मसु नियुङ्क्ष्व ॥

॥व्युत्पत्ति॥ अङ्ग = अव्ययसञ्ज्ञक पदमेतत्, "अथ सम्बोधनाऽर्थकाः । स्यु पाट् प्याडङ्ग है हे भो " इत्यमर । भव स्म = "स्मे लोट्" इति स्मशब्दोपपदात् ऊर्ध्वमौहूर्तिकाऽर्थात् प्राप्तकाले लोट् , भवत्या महिषीभाव' प्राप्ताऽवसर इति भाव । नियोगे तिष्ठतीति नियोगस्थ' । राजपत्न्या नियोगस्थस्तम् । अनुशाधि अनुपूर्वकात् "शासु अनुशिष्टौ" इति धातो. प्रार्थनायां लोट् "शा हौ" इति शादेश' । तस्याऽसिद्धवद्भावे "हुझल्भ्यो हेर्धिः" इति धि ।

॥भाषाऽर्थ॥ हे देवि ! दिनके कुछ मुहूर्तके अनन्तर पृथिवीकी स्वामिनी होनेका आपका अवसर है । आप महारानी की आज्ञाका पालन करनेवाले अयोध्याके प्रजाजनका अनुशासन करें ॥ १७ ॥

उत्तिष्ठस्व मते पत्युर्यतस्वाऽलङ्कृतौ तथा ।
प्रतिष्ठस्व च त द्रष्टुं द्रष्टव्य त्व महीपतिम् ॥ १८ ॥

अन्वय.—( हे देवि ! ) पत्यु मते उत्तिष्ठस्व, तथा अलङ्कृतौ यतस्व, त्वं द्रष्टव्य त महीपतिं द्रष्टुं प्रतिष्ठस्व ॥

व्याख्या—( हे देवि ! ) पत्यु = भर्तु , रामस्येत्यर्थः । मते = सम्मते विषये, आगमनरूप इति भाव । उत्तिष्ठस्व = उत्सहस्वेत्यर्थ । उत्थानमुत्साह । तथा = तेन प्रकारेण, अलङ्कृतौ = अलङ्करणे, यतस्व=यत्न कुरु । त्व, द्रष्टव्यं=दर्शनाऽर्हं, तं = पूर्वोक्त, महीपतिं = राजान, राममिति भाव । द्रष्टु = विलोकयितु, प्रतिष्ठस्व = प्रयाहि ॥

॥व्युत्पत्ति॥ उत्तिष्ठस्व = उत्पूर्वकात्स्थाधातोः "उदोऽनूर्ध्वकर्मणि" इत्यात्मनेपदम् । अलङ्कृतौ = अलङ्करणम् अलङ्कृतिस्तस्याम्, "स्त्रियां क्तिन्" इति क्तिन् । यतस्व = "यती प्रयत्ने" इति धातोर्लोट् । द्रष्टव्य = द्रष्टुमर्हो द्रष्टव्यस्त, "दृशिर् प्रेक्षणे" इति धातो' "तव्यत्तव्याऽनीयर" इति तव्यत्प्रत्यय "सृजिदृशोर्झल्यमकिति" इत्यमागम । प्रतिष्ठस्व = प्रपूर्वकात् स्थाधातोः "समवप्रविभ्य. स्थ" इत्यात्मनेपदम् । प्रार्थनायां लोट् ॥

॥भाषाऽर्थ॥ हे देवि ! पतिके अभिप्रायके विषयमे आप उत्साह करें और भूषण धारण करनेके लिए प्रयत्न करें । आप दर्शनके योग्य महाराज रामचन्द्रजीके दर्शनके लिए प्रस्थान कीजिए ॥ १८ ॥

अनुष्ठाय यथोद्दिष्टं नियोगं जनकाऽऽत्मजा ।
समारूढवती यानं पट्टांऽशुकवृताऽऽनना ॥ १९ ॥

**अन्वयः**—जनकाऽऽत्मजा यथोऽद्दिष्टं नियोगम् अनुष्ठाय पट्टाऽशुकवृताऽऽनना ( सती ) यानं समारूढवती ॥

**व्याख्या**—जनकाऽऽत्मजा = सीता, यथोद्दिष्टं = यथोक्त, नियोगं = स्नानादिकं भर्त्रादेशम्, अनुष्ठाय = कृत्वा, पट्टाऽशुकवृताऽऽनना = पट्टवस्त्रसवृतमुखी सती, यानं = शिबिका, समारूढवती = समारूढा ॥

**ॐव्युत्पत्ति ॐ** यथोद्दिष्टम् = उद्दिष्टमनतिक्रम्येति पदाऽर्थाऽनतिवृत्तिरूपे यथाऽर्थेऽव्ययीभाव. । पट्टाऽशुकवृताऽऽनना = पट्टाऽशुकेन वृतम् आनन यस्या. सा ॥

**ॐभाषाऽर्थ ॐ** सीताजीने पतिके यथोक्त स्नान आदि कार्यका अनुष्ठान कर रेशमी वस्त्रसे मुखको आच्छादित कर पालकीपर आरोहण किया ॥ १९ ॥

> लज्जाऽनता विसंयोगदु खस्मरणविह्वला ।
> साऽस्रा गत्वाऽन्तिक पत्युर्दीना रुदितवत्यसौ ॥ २० ॥

**अन्वयः**—लज्जाऽऽनता विसयोगदु खस्मरणविह्वला साऽस्रा दीना असौ पत्यु' अन्तिकं गत्वा रुदितवती ॥

**व्याख्या**—लज्जाऽऽनता = व्रीडाऽवनता, विसंयोगदु खस्मरणविह्वला = वियोग पीडास्मृतिविक्लवा, साऽस्रा = सबाष्पा, दीना = शोचनीया, असौ = सीता, पत्यु = भर्तु, रामस्येत्यर्थ । अन्तिक = समीप, गत्वा = प्राप्य, रुदितवती=परिदेवितवती ॥

**ॐव्युत्पत्ति ॐ** लज्जाऽऽनता = लज्जया आनता । विसयोगदु खस्मरणविह्वला = विसयोगस्य दु ख, तस्य स्मरण, तेन विह्वला । पत्युः = "ख्यत्यात्परस्य" इत्युः । रुदितवती = रुद धातो "निष्ठे" तिक्तवतुप्रत्यय, "उगितश्चे"ति ङीप् ॥

**ॐभाषाऽर्थ ॐ** लज्जासे अवनत होकर वियोगके दु खके स्मरणसे विह्वल, आंखोंमें आसू भरती हुई सीताजी पति ( राम ) के समीप जाकर विलाप करने लगीं ॥२०॥

> प्राप्तचारित्र्यसन्देहस्ततस्तामुक्तवान् नृपः ।
> इच्छा मे नाऽऽददे सीते ! त्वामह गम्यतामतः ॥ २१ ॥

**अन्वयः**—ततो नृपः प्राप्तचारित्र्यसन्देह. ( सन् ) ताम् उक्तवान्—"हे सीते ! मे इच्छा, त्वाम् न आददे अतः गम्यताम् ॥

**व्याख्या**—तत. = सीताऽऽगमनाऽनन्तर, नृप = राजा, राम इत्यर्थ. । प्राप्तचारित्र्यसन्देह = सीतापातिव्रत्यसन्दिग्ध. सन्, ता = सीताम्, उक्तवान् = अकथयत् । किमिति—हे सीते = हे जानकि !, मे = मम, इच्छा = काङ्क्षा, वक्ष्यमाणस्वरूपोऽभिलाषोऽस्तीति भाव । तत्स्वरूपमाह – त्वा = भवती, न आददे = नो गृह्णामि । मल्लिनाथस्तु "इच्छातो नाऽऽददे" इति पाठमाह । अत = अस्मात्

कारणात्, मम त्वत्परिग्रहेच्छाऽभावादिति भाव । गम्यता=यथेच्छं गमन क्रियताम्॥

※व्युत्पत्ति※ प्राप्तचारित्र्यसन्देह =चरित्रमेव चारित्र्य, स्वार्थे ष्यञ् । प्राप्त चारित्र्ये सन्देहो येन स । आददे=आङ्पूर्वकात् "डुदाञ् दाने" इति धातो· "इच्छाऽर्थेषु लिङ् लोटौ" इति लोटि आत्मनेपदम्, "एत ऐ" इत्येकारस्योत्तमस्यैकार । गम्यतां=गमधातोर्भावे लोट् ॥

※भाषाऽर्थ※ तब राजा रामने सीताके चरित्रमें सन्दिग्ध हो कर उन्हें कहा—"हे सीते ! मेरी इच्छा है कि तुम्हें स्वीकार नहीं करूगा, इस लिए जहा जाने की इच्छा हो चली जाओ ॥ २१ ॥

रावणाऽङ्कपरिक्लिष्टा त्वं हृल्लेखकरी मम ।
मतिं बधान सुग्रीवे राक्षसेन्द्र गृहाण वा ॥ २२ ॥

अन्वय —रावणाऽङ्कपरिक्लिष्टा त्व मम हृल्लेखकरी । सुग्रीवे मतिं बधान वा राक्षसेन्द्रं गृहाण ॥

व्याख्या—स्वस्येच्छाऽभावे हेतुमाह—रावणाङ्केत्यादि । रावणाऽङ्क परिक्लिष्टा=दशाऽऽननोत्सङ्गपरिमृदिता, त्व=सीता, मम = पत्यु, रामस्येति भाव । हृल्लेखकरी = मनोव्यथाकारिणी, जातेति शेष । अतो नेच्छामीति भाव । का तर्हि मे गतिरिति आह—मतिमित्यादि । सुग्रीवे = वानरराजे, मतिं=बुद्धि, "प्रीतिम्" इति मल्लिनाथसम्मत पाठस्तत्र प्रेमेत्यर्थ । बधान=कुर्विति भाव । वा=अथवा, राक्षसेन्द्रं = राक्षसराजं, विभीषणमिति भाव । गृहाण=स्वीकुरु ॥

※व्युत्पत्ति.※ रावणाऽङ्कपरिक्लिष्टा = रावणस्याऽङ्के परिक्लिष्टा, "उत्सङ्गचिह्नयोरङ्क" इत्यमरः। हृल्लेखकरी = हृदय लिखतीति हृल्लेखः, "कर्मण्यण्"। "हृदयस्य हृल्लेखयदण्लासेषु' इति अणि हृदयस्य हृद्भाव । हृल्लेख करोतीति, "कृञो हेतुताच्छील्याऽऽनुलोम्येषु" इति हेतावानुलोम्ये वा टप्रत्यय । टित्वात् "टिड्ढाणञ्" त्यादिना ङीप्। बधान="बन्ध बन्धने" इति धातोर्लोट् "हल· श्न शानज्झौ" श्न· शानजादेशः। गृहाण="ग्रह उपादान" इति धातोर्लोट्, पूर्ववच्छानजादेश ॥

※भाषाऽर्थ.※ रावणकी गोदमें परिमृदित तुम मेरे हृदयमें दुःख पैदा करने वाली हो गयी हो। हे सीते ! इस लिए तुम सुग्रीवमे बुद्धि करो वा राक्षसराज विभीषणको स्वीकार करो ॥ २२ ॥

अशान भरताद्भोगान् लक्ष्मणं प्रवृणीष्व वा ।
कामाद्वा याहि मुच्यन्तामाशा रामनिबन्धनाः ॥ २३ ॥

अन्वयः—( हे सीते ! ) भरतात् भोगान् अशान, वा लक्ष्मण प्रवृणीष्व ; वा कामात् याहि रामनिबन्धना आशा मुच्यन्ताम् ॥

व्याख्या—( हे सीते ! ) भरतात् = केकयीपुत्रात्, भोगान्=सुखानि, अशान = भुङ्क्ष्व, वा = अथवा, लक्ष्मण = सौमित्रिं, प्रवृणीष्व = अङ्गीकुरु । वा=अथवा, कामात् = इच्छाया', याहि = गच्छ, यथेच्छं गच्छेति भावः । रामनिबन्धना = मद्विषया , आशा = कामा मुच्यन्ताम् = त्यज्यन्ताम् ॥

ॐव्युत्पत्ति·ॐ अशान = "अश भोजने" इति धातोर्लोट्, "हल. श्न शानज्झौ" इति शानजादेशः, हेर्लुक् च । प्रवृणीष्व = प्रपूर्वकात् "वृञ् वरणे" इति क्रैयादिक-धातोर्लोट् । रामनिबन्धना' = रामो निबन्धन यासा ता. । मुच्यन्ता = "मुच्लृ मोक्षण" इति धातो' कर्मणि लोट् । सर्वत्र "प्रैषाऽतिसर्गप्राप्तकालेषु कृत्या"श्चेति अति-सर्गे ( कामचाराऽनुज्ञायाम् ) लोट् ॥

ॐभाषाऽर्थ·ॐ हे सीते ! तुम भरतसे सुखोंका उपभोग करो अथवा लक्ष्मणको स्वीकार करो वा जहाँ इच्छा है वहाँ चली जाओ । अब तुम रामके विषयमें आशा-ओंको छोड़ो ॥ २३ ॥

क च ख्यातो रघोर्वंशः क त्व परगृहोषिता ।
अन्यस्मै हृदयं देहि नाऽनभीष्टे घटामहे ॥ २४ ॥

अन्वयः—ख्यातो रघो वश क ? परगृहोषिता त्वं च क ? ( हे सीते ! ) अन्यस्मै हृदयं देहि, अनभीष्टे न घटामहे ॥

व्याख्या—ख्यात = प्रसिद्ध , निष्कलङ्कत्वेनेति भाव । रघो = तन्नाम्नो राज्ञ , वश = कुल, क = कुत्र, परगृहोषिता = अन्यगेहस्थिता, कलङ्कितेति भावः त्व च = सीता च, क = कुत्र, उभयोर्महदन्तरमतो योगो न घटत इति भाव' । अतो विषमाऽलङ्कार । हे सीते, अत अन्यस्म = अपरपुरुषाय, हृदय=चित्तं देहि= समर्पय, मत्तो जनान्तर भजेति भाव । यत —अनभीष्टे = अनभिमते विषये, न घटामहे = नो युज्यामहे, वयमिति शेषः ॥

ॐव्युत्पत्ति·ॐ ख्यात = "प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता. ।" इत्यमर. । देहि, घटामहे = उभयत्राऽपि "प्रैषाऽतिसर्गप्राप्तकालेषु कृत्याश्चे' ति अतिसर्गे ( काम-चाराऽनुज्ञायाम् ) लोट् ॥

ॐभाषाऽर्थ ॐ हे सीते ! रघुका प्रसिद्ध वश कहाँ और परगृहवाससे कलङ्कित तुम कहाँ ? इसलिए तुम दूसरे पुरुषको अपना हृदय सौंपो, हमलोग अनभीष्ट विषयमे प्रवृत्त नही होते है ॥ २४ ॥

यथेष्ट चर वैदेहि ! पन्थानः सन्तु ते शिवाः ।
कामास्तेऽन्यत्र तायन्ता विशङ्का त्यज मद्गताम् ॥ २५ ॥

**अन्वयः**—हे वैदेहि ! यथेष्टं चर, ते पन्थान शिवा सन्तु, ते कामा अन्यत्र तायन्ता मद्गता विशङ्का त्यज ॥

**व्याख्या**—हे वैदेहि = हे सीते !, यथेष्ट = यथाऽभिलषित, चर = आचर, यथेष्टचारिणी भवेति भावः । ते = तव, पन्थान = मार्गा· शिवा· = निर्विघ्ना, सन्तु = वर्तन्ताम् । ते = तव, कामा = अभिलाषा, अन्यत्र = अन्यस्मिन्, पुरुषान्तर इति भाव । तायन्ता = वर्द्धन्ता, मद्गता = मया करिष्यमाणा, विशङ्काम्= अनिष्टागमशङ्का, त्यज = मुञ्च, समयोऽय सन्देहत्यागस्येति भाव ॥

**ॐव्युत्पत्ति ॐ** चर = अतिसर्गे ( कामचाराऽनुज्ञायाम् ) लोट् । शिवा = शिवमस्ति एषा ते शिवा, "अर्श आदिभ्योऽच्" इत्यच्प्रत्ययः, "श्व श्रेयस शिव भद्र कल्याण मङ्गल शुभम् ।" इत्यमर । सन्तु = "अस भुवि" इति धातो "आशिषि लिङ्लोटौ" इत्याशिषि लोट् । तायन्ता = "तायृ सन्तानपालनयो " अतिसर्गे लोट् । त्यज = प्राप्तकाले लोट् ॥

**ॐभाषाऽर्थ ॐ** हे सीते ! यथेष्ट आचरण करो, तुम्हारे मार्ग निर्विघ्न हों, तुम दूसरे पुरुषोंमें अभिलाष बढ़ाओ मेरे विषयमें भय छोड़ो ॥ २५ ॥

तत· प्रगदिता वाक्य मैथिलाऽभिजना नृपम् ।
स्त्रीसामान्येन सम्भृता शङ्का मयि विमुच्यताम् ॥ २६ ॥

**अन्वयः**—ततो मैथिलाऽभिजना नृप वाक्य प्रगदिता—"( हे नाथ ! ) स्त्रीसामान्येन सभूता शङ्का मयि विमुच्यताम् ॥

**व्याख्या**—ततः = रामवचनाऽनन्तरं, मैथिलाऽभिजना=सीता, नृप = राजानं, राममित्यर्थ । वाक्य = वचन, वक्ष्यमाणरूपमिति भाव । प्रगदिता = प्रगदितुं प्रवृत्ता । किं तदित्याह—स्त्रीसामान्येनेति । ( हे नाथ ! ) स्त्रीसामान्येन = योषित्साधारणेन, सभूता = सञ्जाता, "स्त्रियश्चपला" इति प्रवादात्समुत्पन्नेति भावः । शङ्का= अविश्वास, मयि = मद्विषये विमुच्यता = त्यज्यताम् ॥

**ॐव्युत्पत्ति ॐ** मैथिलाऽभिजना = मैथिलोऽभिजनो यस्याऽसा । प्रगदिता = प्रपूर्वकात् "गद व्यक्तायां वाचि" इति धातो "आदि कर्मणि क्त· कर्तरि चे"ति आदि कर्मणि क्तप्रत्यय । विमुच्यता = विपूर्वकात् "मुच्लृ मोक्षण" इति धातोः कर्मणि प्रार्थनाया लोट् ॥

**ॐभाषाऽर्थ ॐ** तब सीताजी राजारामको वाक्य कहने लगीं-"हे नाथ ! "स्त्रियां चञ्चल है" इस प्रवादसे उत्पन्न अविश्वास मेरे विषयमें छोड दीजिए ॥ २६ ॥

दैवाद्बिभीहि काकुत्स्थ ! जिह्रीहि त्वं तथा जनात् ।
मिथ्या मामभिसंक्रुध्यन्नवशा शत्रुणा हृताम् ॥ २७ ॥

**अन्वय**—हे काकुत्स्थ! शत्रुणा हताम् अवशा मा मिथ्या अभिसंक्रुध्यन् दैवात् बिभीहि, तथा जनात् जिह्रीहि ॥

**व्याख्या**—हे काकुत्स्थ = हे राघव!, शत्रुणा = वैरिणा, रावणेनेत्यर्थ। हताम् = बलादपहृताम्, अतएव अवशा = विवशा, पराधीनामिति भाव। मा = सीता, मिथ्या = मृषा, अभिसंक्रुध्यन् = "असती त्वम्" इति मह्य क्रुध्यन्निति भाव। दैवात् = भाग्यात्, बिभीहि = भयं कुरु तथा = तेन प्रकारेण, जनात् = जन वीक्ष्य, जिह्रीहि = लज्जस्व, पारतन्त्र्यमात्रदोषयुक्ता सतीं मा दूषयता त्वया दैवाद्भेतव्य लोकतो ह्रेतव्य चेति भाव ॥

***व्युत्पत्ति*** माम् = अभिसमुपसर्गपूर्वकस्य क्रुधधातोर्योगे "क्रुधद्रुहोरुपसृष्टयोः कर्मे"ति सम्प्रदानत्वाऽपवादेन कर्मत्वम्। बिभीहि = "ञिभी भये" इति जौहोत्यादिकाद्धातोर्लोट्। "सेर्ह्यपिच्चे"ति हेर्ङित्वान्न गुणः। जनात् = "ल्यबलोपे कर्मण्युपसंख्यानम्" इति ल्यबलोपे पञ्चमी। जिह्रीहि = "ह्री लज्जायाम्" इति धातोर्लोट्, पूर्ववद्धेर्ङित्वान्न गुण. ॥

***भाषाऽर्थः*** हे राम! बलपूर्वक शत्रुसे अपहृत अतएव पराऽधीन मुझे "तुम असती हो" ऐसा कहकर झूठमूठ क्रोध करते हुए आप भाग्यसे डरें और लोकसे लज्जित भी हों ॥ २७ ॥

चेतसस्त्वयि वृत्तिर्मे शरीरं रक्षसा हृतम्।
विदाकुर्वन्तु सम्यञ्चो देवा' सत्यमिद वच' ॥ २८ ॥

**अन्वयः**—( हे राघव! ) त्वयि मे चेतसो वृत्ति। शरीरं रक्षसा हृतम्। सम्यञ्चो देवा इदं वच सत्य विदाङ्कुर्वन्तु ॥

**व्याख्या**—सीताऽऽत्मन सतीत्व प्रतिपादयति—चेतस इति। ( हे राघव! ) त्वयि=भवति। विषये, मे = मम, चेतस =मनस, वृत्ति -व्यापार, अस्तीति शेष। शरीरं = देह एव, रक्षसा = राक्षसेन रावणेन, हृतम् = अपहृतम्। सम्यञ्च = समवर्तिन, देवा. = सुरा. पृथिव्यादय इति भाव। इदम् = एतद्, वक्ष्यमाणरूपमिति भाव'। वच. = वाक्य, सत्य = तथ्य, विदाङ्कुर्वन्तु = विदन्तु, देवा एव मच्चरित्रपवित्रताया साक्षिण इति भाव ॥

***व्युत्पत्ति*** सम्यञ्च' = सम्यगञ्चन्तीति, सपूर्वकात् "अञ्चु गतिपूजनयो" इति धातो. "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चा चे"ति क्विन् "सम. समि" इति सम्यादेश। विदाङ्कुर्वन्तु = "विद ज्ञान" इति धातो प्रार्थनाया लोट् "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" इति विकल्पादाम्प्रत्ययादिनिपातनात्साधुत्वम् ॥

॥भाषाऽर्थ॥ हे राम ! आपमें मेरी मनोवृत्ति है, केवल मेरे शरीरका राक्षसने अपहरण किया है। समवर्ती देवतागण इस मेरे वाक्यको सत्य जान लें ॥ २८ ॥

त्वं पुनीहि पुनीहीति पुनन्वायो ! जगत्त्रयम् ।
चरन्देहेषु भूताना विद्धि मे बुद्धिविप्लवम् ॥ २९ ॥

**अन्वयः**—हे वायो ! पुनीहि पुनीहि इति जगत्त्रय पुनन् त्व भूताना देहेषु चरन् मे बुद्धिविप्लवं विद्धि ॥

**व्याख्या**—सीता साम्प्रत तानेव देवानेकैकश प्रार्थयते त्वमिति । हे वायो = हे वात !, पुनीहि पुनीहि इति = पुन पुन भृश वा पुनामि इति, जगत्त्रय = लोकत्रितय, स्वर्गमर्त्यपातालरूपमिति भाव । पुनन् = शोधयन् , त्व=वायुदेव , भूताना= प्राणिना, 'जन्तूनाम्' इति मल्लिनाथसम्मत॰ पाठ । देहेषु = शरीरेषु, चरन् = वर्तमान , मे = मम, बुद्धिविप्लव = चित्तदोष, विद्धि = जानीहि, ज्ञानोत्तर तत्फलं प्रापयेति भाव ॥

॥व्युत्पत्ति॥ पुनीहि पुनीहि इति = "पूञ् पवने" इति क्रैयादिकधातो "क्रियासमभिहारे लोड् लोटो हिस्वौ वाच तध्वमो" इति लोट् , तस्य च सर्वत्र वैकल्पिकौ सर्वलकाराऽपवादिनौ हिस्वावादेशौ, तत्र च परस्मैपदे हिरादेश, "क्रियासमभिहारे द्वे वाच्ये" इति वचनाद्द्वित्व "यथाविध्यनुप्रयोग पूर्वस्मिन्" इति "पुनन्" इत्यत्र पुनातेरनुप्रयोग । विद्धि = विद्धातोः प्रार्थनाया लोट् ॥

॥भाषाऽर्थ॥ हे वायुदेव ! वार वार वा अतिशय पवित्र करता हू ऐसा विचार कर तीन लोकोंको पवित्र करते हुए आप प्राणियोंके शरीरमें विद्यमान होते हुए मेरे चित्तके दोषको जान ले ॥ २९ ॥

खमट द्यामटोर्वीमित्यटन्त्योऽतिपावनाः ।
यूयमापो ! विजानीत मनोवृत्ति शुभा मम ॥ ३० ॥

**अन्वयः**—हे अतिपावना आप । खम् अट, द्याम् अट, उर्वीम् अट इति अटन्त्यो यूय मम मनोवृत्तिं शुभा विजानीत ॥

**व्याख्या**—हे अतिपावना = हे अतिशयशुद्धिकारिका , आप = जलानि, खम् अट = अन्तरीक्षलोकम् अट, द्याम् अट = स्वर्गम् अट, उर्वीम् अट = पृथिवीम् अट, इति = अन्तरीक्षादित्रयमटाम इत्येव, अटन्त्य =अटन कुर्वत्य ' यूयम् = आप , मम = सीताया , मनोवृत्तिं = चेतोव्यापारं शुभा = शुद्धा, विजानीत=वित्त ॥

॥व्युत्पत्ति॥ अतिपावना.=अत्यन्तं पावयन्ति ( शोधयन्ति ) इति अतिपावनाः, णिजन्तात् "पूञ् पवने" इति धातोः "कृत्यल्युटो बहुलम्" इति बहुलग्रहण-

सामर्थ्यात् कर्तरि ल्युट् । अत्र टित्त्वात् "टिड्ढाणञि"त्यादिना ङीबभावश्चिन्त्य इति मल्लिनाथ । अथवा—अत्यन्त पावन ( शोधक, शोधकत्वधर्मः यासु ता । अत्र-पक्षे "अनुपसर्जनात्" इत्यस्याऽधिकारात् पूर्वसूत्रेण ङीबभावः । खम् अट, द्याम् अट, उर्वीम् अटेति अटन्त्य. अत्र अन्तरीक्षस्वर्गपृथिवीरूपकर्मकारकभेदैरटन-क्रियाभेदादनेकक्रियोपलक्षणसमुच्चयसभवात् "समुच्चयेऽन्यतरस्याम्" इति लोट् लोटो यथा योग हिस्वौ च "समुच्चये सामान्यवचनस्ये"त्यत्र पूर्वोक्ताऽटनक्रिया-विशेषाऽनुगताऽटनक्रियासामान्यस्याऽनुप्रयोग. । विजानीत = "ज्ञा अवबोधने" इति धातो' प्रार्थनायां लोट् , थस्य च ताऽऽदेश ॥

※भाषाऽर्थ※ हे अतिशय शुद्धि करनेवाले जलदेव तुम "अन्तरीक्ष लोकमे स्वर्ग लोकमें और मर्त्यलोकमें हम भ्रमण करेगे ऐसा अभिप्राय रखकर भ्रमण करते हुए मेरी मनोवृत्तिको शुद्ध जान लो ॥ ३० ॥

जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे ! ।
अवेहि मम चारित्र नक्तदिवमविच्युतम् ॥ ३१ ॥

अन्वयः—हे वसुन्धरे ! धत्स्व धत्स्व इति जगन्ति दधती त्व मम चारित्र नक्तन्दिवम् अविच्युतम् अवेहि ॥

व्याख्या—हे वसुन्धरे = हे पृथिवि !, धत्स्व धत्स्व इति = अह पुन. पुन-र्धारयामि भृश वा धारयामीत्येव, जगन्ति=लोकान् , दधती=धारयन्ती, त्व=वसुन्धरा, मम = सीताया , चारित्र = चरित्रं, नक्तन्दिवं=रात्रिन्दिवम् , अविच्युतम्=कदाऽपि अस्खलितम् , अवेहि=जानीहि ॥

※व्युत्पत्ति.※ वसुन्धरे=वसूनि धारयतीति वसुन्धरा, तत्सम्बुद्धौ । "सञ्ज्ञायां भृतॄवृजिधारिसहितपिदम." इति खच् , "खचि ह्रस्व" इति ह्रस्वत्वम् । धत्स्व धत्स्व इति = अत्र "क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमो " इति लोट्, प्रक्रियान्तर पूर्ववद्बोध्यम् । धातोरात्मनेपदित्वाल्लोट स्वादेश । चरित्र=चरित्रमेव चारित्रं, तत् , स्वाऽर्थेऽण् । नक्तन्दिव = नक्त च दिवाचेति, "अचतुरे" त्यादिनाऽच्प्र-त्ययान्तो निपात. । अवेहि = प्रार्थनायां लोट् ॥

※भाषाऽर्थः※ हे पृथिवि ! फिर फिर वा अतिशय धरती हू ऐसा अभिप्रायकर लोकोंको धारण करती हुई तुम मेरे चरित्र ( पातिव्रत्य ) को रात दिन अस्खलित जान लो ॥ ३१ ॥

रसान्संहर दीप्यस्व ध्वान्तं जहि नभो भ्रम ।
इतीहमानस्तिग्मांऽशो ! वृत्तं ज्ञातुं घटस्व मे ॥ ३२ ॥

अन्वय.—हे तिग्माऽशो ! रसान् सहर, दीप्यस्व,ध्वान्त जहि नभो भ्रम, इति ईहमान. मे वृत्तं ज्ञातु घटस्व" ॥

**व्याख्या**—हे तिग्माऽशो = हे सूर्य ! रसान् = उदकानि, सहर = संहरामि, दीप्यस्व = दीप्ये, ध्वान्त = तिमिर, जहि=हन्मि, नभ = आकाश, भ्रम = भ्रमामि, इति = इत्थम् , ईहमान = चेष्टमान , लोकहिताऽर्थमिति शेष । त्वमिति शेष । मे=मम, वृत्तं = चरित, पातिव्रत्यरूपमिति भाव । ज्ञातुं = वेत्तुं, घटस्व = प्रवर्तस्वेत्यर्थ ॥

**%व्युत्पत्तिः%** तिग्माऽशो = तिग्मा अशवो यस्य स तिग्माशु स्तत्सम्बुद्धौ । सहर दीप्यस्व, जहि, भ्रम = प्रार्थनायां लोट् । अत्र "समुच्चयेऽन्यतरस्याम्" इति सहाराद्यनुगतसामान्यस्य ईहनस्य "समुच्चये सामान्यवचनस्ये"ति अनुप्रयोग । वृत्त= "वृत्त पद्ये चरित्रे चे"त्यमर ॥

**%भाषाऽर्थ%** हे सूर्य जलोंका सहार करता हू, प्रकाशित होता हू, अन्धकारको नष्ट करता हू, आकाशमें भ्रमण करता हू ऐसी चेष्टा करते हुए मेरे चरित्रको जाननेके लिए आप प्रवृत्त हों ॥ ३२ ॥

स्वर्गे विद्यस्व भुव्याऽऽस्स्व भुजङ्गनिलये भव ।
एवं वसन्ममाऽऽकाश ! सबुध्यस्व कृताऽकृतम् ॥ ३३ ॥

**अन्वय**—हे आकाश ! स्वर्गे विद्यस्व, भुवि आस्स्व, भुजङ्गनिलये भव, एव वसन् मम कृताऽकृत सबुध्यस्व ॥

**व्याख्या**—हे आकाश = हे पुष्कर !, स्वर्गे = सुरलोके, विद्यस्व=विद्ये, अहमिति शेष , एव परत्राऽपि । भुवि = पृथिव्याम् , आस्स्व = आसे, भुजङ्गनिलये = पाताले, भव=भवामि , एवम् = इत्थं, वसन् = तिष्ठन् , त्वमिति शेष । "सत्वम्" इति मल्लिनाथसंमत पाठस्तत्र सत् = वर्तमान, त्वम् = आकाशमित्यर्थ । मम = सीताया , कृताऽकृतं = विहितमविहित च कर्म, संबुध्यस्व=सम्यगवगच्छ ॥

**%व्युत्पत्ति%** विद्यस्व, आस्स्व, भव = अत्र "विद सत्तायाम्" "आस उपवेशने" "भू सत्तायाम्" इति धातो. "समुच्चयेऽन्यतरस्याम्" इति लोट् , लोटो यथायोग हिस्वौ च, "वसन्" इति "समुच्चये सामान्यवचनस्य" इत्यनुप्रयोग । कृताऽकृत= कृत च अकृत च, "विप्रतिषिद्ध चाऽनधिकरणवाचि" इति वैभाषिको द्वन्द्वैकवद्भाव। सबुध्यस्व = प्रार्थनाया लोट् ॥

**%भाषाऽर्थ%** हे आकाश ! "मै स्वर्गमे, पृथिवीमे और पातालमे रहता हू, ऐसा अभिप्राय कर रहते हुए आप मेरे विहित और अविहित कर्मको जान ले ॥ ३३ ॥

चितां कुरु च सौमित्रे ! व्यसनस्याऽस्य भेषजम् ।
रामस्तुष्यतु मे वाऽद्य पापां प्लुष्णातु वाऽनलः ॥ ३४ ॥

अन्वयः—हे सौमित्रे ! अस्य व्यसनस्य भेषज चिता कुरु । अद्य रामो मे तुष्यतु वा पापाम् अनल• प्लुष्णातु ॥

व्याख्या—हे सौमित्रे = हे लक्ष्मण !, अस्य=उपस्थितस्य, व्यसनस्य = दूषणस्य, लोकाऽपवादरूपस्येति भाव । भेषजम्=औषधं, प्रतिकारमित्यर्थ । चिता = काष्ठसञ्चय, कुरु=विधेहि । अद्य = अस्मिन्दिने, राम = रामचन्द्र , मे = मम, विषय इति भाव । तुष्यतु = तुष्टो भवतु, निष्पापाऽस्मि चेदिति शेष । वा=अथवा, पापा=कलङ्किनी, मामितिशेष । "पापात्" इति मल्लिनाथसंमत पाठ । अनल•= अग्नि , प्लुष्णातु = दहतु, अहं निष्पापाऽस्मि चेदनलो मा न दहतु, सपापाऽस्मि चेत्स मा दहत्विति तात्पर्यम् ॥

※व्युत्पत्ति•※ सौमित्रे = सुमित्राया अपत्य पुमान् सौमित्रिस्तत्सम्बुद्धौ, "बाह्वादिभ्यश्चे"ति इञ् । व्यसनस्य = "व्यसन विपदि भ्रंशे दोषे कामजकोपजे ।" इत्यमर । कुरु = विधौ प्रार्थनाया वा लोट् । प्लुष्णातु = "( प्रुष ) प्लुष स्नेहनमोचनपूरणेषु" इति क्रैयादिकधातोर्लोट् ॥

※भाषाऽर्थ ※ हे लक्ष्मणजी ! इस दूषणका प्रतीकाररूप चिताकी रचना कीजिए । आज मुझपर रामचन्द्रजी सन्तुष्ट हों वा पापिनी मुझे अग्निदेव जला दे॥३४॥

राघवस्य मतेनाऽथ लक्ष्मणेनाऽऽचितां चिताम् ।
दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः ॥ ३५ ॥

अन्वय•—अथ राघवस्य मतेन लक्ष्मणेन आचिता चिता दृष्ट्वा ( सीता ) प्रदक्षिणीकृत्य रामं वच प्रगदिता ॥

व्याख्या—अथ = सीताप्रार्थनाऽनन्तर, राघवस्य = रामचन्द्रस्य, मतेन=अनुज्ञया, लक्ष्मणेन = सौमित्रिणा, आचिता = रचिता, चिता = काष्ठसञ्चय, दृष्ट्वा = अवलोक्य, प्रदक्षिणीकृत्य=प्रदक्षिणं कृत्वा, राम = रामचन्द्र, वच•=वचन, प्रगदिता= प्रगदितु प्रवृत्ता, सीतेति शेष• ॥

※व्युत्पत्ति•※ राघवस्य = "मतेने"ति वर्तमानाऽर्थक्तप्रत्ययाऽन्तेन पदेन योगे "क्तस्य च वर्तमाने" इति षष्ठी । मतेन = "मतिबुद्धिपूजाऽर्थेभ्यश्चे"ति वर्तमाने क्त । प्रगदिता = प्रपूर्वकात् गदधातो• "आदि कर्मणि क्त कर्तरि चे"ति क्तप्रत्यय । दीर्घकालव्यासक्ताया• कटाद्युत्पादनक्रियाया आरम्भकालविशिष्टोऽश आदिकर्म ॥

※भाषाऽर्थ•※ सीताजी की प्रार्थनाके अनन्तर रामचन्द्रजी की आज्ञासे लक्ष्मणजी से रचित चिताको देखकर सीताने प्रदक्षिण कर रामचन्द्रजी को ऐसा वचन कहने को आरम्भ किया ॥ ३५ ॥

प्रवपाणि वपुर्वह्नौ रामाऽहं शङ्किता त्वया ।
सर्वे विदन्तु शृण्वन्तु भवन्तः सप्लवङ्गमाः ॥ ३६ ॥

अन्वयः—हे राम ! त्वया शङ्किता अहं वह्नौ वपु प्रवपाणि सप्लवङ्गमा सर्वे भवन्त शृण्वन्तु बिदन्तु च ॥

व्याख्या—हे राम = हेरामचन्द्र !, त्वया = भवता, शङ्किता=दुष्टेति सन्दिग्धा, अहं = सीता, वह्नौ=अग्नौ, वपु =शरीर, प्रवपाणि = प्रक्षिपाणि, सप्लवङ्गमा = वानर सहिता , इद पूर्वप्रार्थितदेवरक्षोगणानामप्युपलक्षणम् । सर्वे = सकला , भवन्त = श्रीमन्त , रामलक्ष्मणयोरादराऽर्थे बहुवचनमिदम् । शृण्वन्तु,=आकर्णयन्तु, विदन्तु च = जानन्तु च ॥

॥व्युत्पत्ति.॥ प्रवपाणि = प्रपूर्वकात् "डुवप् बीजसन्ताने" इति धातोरामन्त्रणे लोट् "आनि लोट्" इति णत्वम् । सप्लवङ्गमा = प्लवङ्गमै सहिता , "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभाव. । शृण्वन्तु, विदन्तु = प्रार्थनाया लोट् ॥

॥भाषाऽर्थ.॥ हे राम ! आपसे शङ्कित मै अग्निमें शरीरको फेंकती हू । वानरोंके साथ सब आप लोग सुनें और जाने भी ॥ ३६ ॥

मां दुष्टा ज्वलितवपु. प्लुषाण वह्ने ! संरक्ष क्षतमलिनां सुहृद्यथा वा ।
एषाऽहं क्रतुषु वसोर्यथाऽऽज्यधारा त्वां प्राप्ता विधिवदुदीर्णदीप्तिमालम्॥३७॥

अन्वयः—हे वह्ने ! दुष्टा ( चेत् ) मा ज्वलितवपु ( सन् ) प्लुषाण, वा क्षतमलिना ( चेत्) सुहृत् यथा सरक्ष । एषा अह क्रतुषु वसो आज्यधारा यथा उदीर्णदीप्तिमाल त्वा विधिवत् प्राप्ता ॥

व्याख्या—हे वह्ने = हे अग्ने !, दुष्टा = दूषिता, चेत् , मा = सीता, ज्वलितवपु = दीप्तशरीर सन् , प्लुषाण = दह, वा=अथवा, क्षतमलिना = विशुद्धा चेत् , "च्युतमलिनाम्" इति मल्लिनाथसम्मत पाठ । सुहृत् यथा = मित्रम् इव, सरक्ष = त्रायस्व। एषा = अतिसन्निहिता, अहं = सीता, क्रतुषु = यज्ञेषु वसो = अग्ने विष्णो र्वा, "अथ किंदेवता बसोर्धारेति ?" "अग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धारा" इति श्रुते । आज्यधारा यथा = घृतधारा इव, उदीर्णदीप्तिमालम् = उद्गत-ज्वालासमूहं, त्वा = भवन्तं, विधिवत = यथाशास्त्रं, प्राप्ता = आसादिता, यथा यज्ञेषु घृतधाराऽग्निं विष्णुं वाऽऽसादयति तथैवाऽहमपि नूनं त्वामासादयिष्यामीति सती-त्वदीप्तिप्रकाशिताया· सीताया उक्ति । अत्रोपमोत्प्रेक्षयोः संसृष्टि ॥

ॐव्युत्पत्ति.ॐ ज्वलितवपु' = ज्वलित वपुर्यस्य स । प्लुषाण = प्लुषधातोर्लोट्, "हल श्न शानज्झौ" इति श्न. शानजादेशे हेर्लुक् । क्षतमलिना = क्षत मलिनं ( मलीमस, पापमिति भाव' ) यस्या. सा, ताम् । उदीर्णदीप्तिमालम् = उदीर्णा दीप्तिमाला यस्य स उदीर्णदीप्तिमालस्तम् ॥

ॐभाषाऽर्थॐ हे अग्निदेव ! मै दुष्ट हू तो मुझे प्रदीप्त शरीर वाले आप जलाइये अथवा मैं विशुद्ध हू तो मित्र के समान हो मेरी रक्षा कीजिए। यह मैं ( सीता ) यज्ञों में अग्नि अथवा विष्णुकी घृत धाराके सदृशहो प्रदीप्त ज्वालामालाओंसे युक्त आपको विधिपूर्वक प्राप्त हो जाती हू ॥ ३७ ॥

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे सप्तम परिच्छेद ( वर्ग ) तथा लक्ष्यरूपे कथानके सीताप्रत्याख्यान नाम विंशतितम सर्ग. ॥



## अथ एकविंशः सर्गः—

अत' प्रभृति लृड्विलासमाह। तत्र हेतुहेतुमद्भावादौ लिङनिमित्ते क्रियाया अनिष्पत्तौ गम्यमानाया भूते भविष्यति च लृङ् भवति। तथा चोक्त—"लिङ्निमित्ते लृङ् क्रियाऽनिपत्तौ" इति। कुतश्चिद्वैगुण्यात् क्रियाया अनिष्पपत्तिः क्रियाऽतिपत्ति., वैगुण्य च सामग्र्यभावो विरुद्धप्रत्ययोपनिपातो वा।

समुत्क्षिप्य ततो वह्निर्मैथिलीं राममुक्तवान् ।
काकुत्स्थ ! दयिता साध्वीं त्वमाशङ्किष्यथाः कथम् ॥ १ ॥

अन्वयः— ततो वह्नि· मैथिली समुत्क्षिप्य रामम् उक्तवान्—"हे काकुत्स्थ ! त्व साध्वीं दयिता कथम् आशङ्किष्यथा ?

व्याख्या—तत = सीताया वह्निप्रवेशाऽनन्तरं, वह्नि = अग्नि मैथिलीं = सीता, समुत्क्षिप्य = हस्ताभ्यामूर्ध्वं धृत्वा राम = रामचन्द्रम्, उक्तवान्=अब्रवीत्, किमिति ?—काकुत्स्थेति। हे काकुत्स्थ=हे राम ! त्व, साध्वीं=पतिव्रता दयिता= प्रिया, सीतामित्यर्थ । कथं = केन प्रकारेण, आशङ्किष्यथा = असाध्वीति आशङ्कितवानित्यर्थ । गर्हितमेतत्कथं कृतमिति भाव । अत्र असाधुत्वशङ्काविरुद्धसाधुत्वप्रत्ययोपनिपातादसाधुत्वशङ्कनक्रियाऽतिपत्तिरिति मल्लिनाथ ॥

ॐव्युत्पत्ति ॐ काकुत्स्थ = ककुत्स्थस्याऽपत्य पुमान् काकुत्स्थस्तत्सम्बुद्धौ, तस्याऽपत्यम्" इत्यण्। आशङ्किष्यथा. = अत्र गर्हाकथशब्दयोर्लिङ्निमित्तयोः सम्भवात्

"गर्हायाम्" इत्यनुवृत्तौ "विभाषा कथमि लिङ् चे"ति लिङ प्राप्तौ "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" इति "भूते चे"ति वचनाद्भूते लृङ् ॥

❀भाषाऽर्थ·❀ सीताजीके अग्निमें प्रवेश करनेके अनन्तर अग्निदेवने सीताजी को दोनों हाथोंसे ऊपर उठाकर रामचन्द्रजीको कहा—"हे रामचन्द्र ! आपने पति व्रता प्रिया सीताजीमें कैसे आशङ्काकी ? ( यह आपने गर्हित कर्म किया ) ॥ १ ॥

नाऽभविष्यदियं शुद्धा यद्यपास्यमहं ततः ।
न चैना पक्षपातो मे धर्मादन्यत्र राघव ! ॥ २ ॥

अन्वय —अहम् एना यदि नैव अपास्यं, तत इयं शुद्धा न अभविष्यत् । हे राघव ! ( अयम् ) पक्षपातो धर्मात् अन्यत्र मे न अस्ति ॥

व्याख्या—वह्नि मैथिल्या साधुता दर्शयति—नाऽभविष्यदिति । अह=वह्नि, एना = सीता, यदि = चेत्, नैव अपास्यं = नैव अरक्षिष, तत = तस्मात्, अरक्ष णाद्धेतोरिति भाव । इयं = सीता, शुद्धा = पतिव्रतेति ज्ञातेत्यर्थ । न अभविष्यत् = नाऽभूत्, रक्षिता तु मया शुद्धेति ज्ञातेत्यर्थ । न च पक्षपातान्मया रक्षितेत्याह—पक्षपात इति । हे राघव = हे राम !, अय पक्षपात = ममता, धर्मात् = पुण्यात्, अन्यत्र = अन्यस्मिन्, अधर्म इति भाव । मे = मम, न अस्ति = न वर्तते । सीताया सतीत्वादेवाऽस्या रक्षणाय मम पक्षपात इति भाव ॥

❀व्युत्पत्ति·❀ एनां = "द्वितीयाटौस्स्वेन" इति एनादेश· । अपास्यम्, अभवि-ष्यत् = "पा रक्षणे" "भू सत्तायाम्" इति धातुभ्यां "हेतुहेतुमतोर्लिङ्" इति लिङ· प्राप्तौ "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" इति लृङ् । अत्र अरक्षणाऽशुद्धिज्ञानयोर्हे तुहेतुमद्भावो लिङ् निमित्तम् । सामग्र्यभावेनाऽशुद्धिज्ञानाऽनिष्पत्तेः क्रियाऽतिपतिश्च॥

❀भाषाऽर्थ·❀ हे राम ! मै सीताजीकी रक्षा नही करता तो ये पतिव्रताके रूपमें जानी गयी नही होतीं । अधर्ममें मेरी ममता नही होती है ॥ २ ॥

अपि तत्ररिपुः सीतां नाऽर्थयिष्यददुर्मतिः ।
क्रूरं जात्ववदिष्यच्च जात्वस्तोष्यच्छ्रियं स्वकाम् ॥ ३ ॥

अन्वयः—तत्र रिपु अदुर्मति ( यदि अभविष्यत् ) अपि सीता न आर्थयि-ष्यत्, जातु क्रूरं न अवदिष्यत् जातु स्वका श्रिय न अस्तोष्यत् ॥

व्याख्या—सर्ववृत्तसाक्षी भगवान्वह्निदेव सीताशुद्धिप्रदर्शनाऽर्थं सीतारावणयो परस्परसमक्ष यद्वृत्त तत् श्लोकद्वयेन प्रत्यपादयत्—अपीत्यादि । तत्र = तस्मिन्, समक्षभाषणसमय इति भाव । रिपु = शत्रुः, रावण इत्यर्थ । जयमङ्गलस्तु तत्र रिपु =स भवान् रिपु ( रावण ), भवच्छब्दोऽर्थाद्गम्यते, तेन "इतराभ्योऽपि

दृश्यन्त" इति त्रल् इति क्लिष्टव्याख्यानमाह । अदुर्मति = अदुष्टबुद्धि, यदि अभविष्यदिति शेष । अपि = बाढ, सीता = जानकी, न आर्थयिष्यत् = मा भजेति प्रार्थना न अकरिष्यत् । एव जातु = कदाऽपि क्रूर = कठोरं, न अवदिष्यत् = न अवक्ष्यत्, जातु = कदाचित्, स्वकाम् = आत्मीया, श्रिय = सम्पत्ति, न अस्तोष्यत् = न स्तुतवांश्च, अभविष्यत् अत सीता सतीति ज्ञातऽऽेति भाव ॥

❀व्युत्पत्ति❀ अदुर्मतिः = दुष्टा मतिर्यस्य स दुर्मति', न दुर्मति' । आर्थयिष्यत् = "अर्थ उपयाच्ञायाम्" इत्यात्मनेपदिनो धातो अर्थनमर्थ इति भावे घञ् । अर्थं करोतीति "तत्करोति तदाचष्टे" इति ण्यन्तात् बाढाऽर्थाऽपिशब्दे लिङ्निमित्ते "उताऽप्यो समर्थयोर्लिङ्" इति लिङि प्राप्ते "वोताप्यो" इति लृङ् । अजादित्वात् "आडजादीनाम्" इत्याडागम । दुर्मतित्वेन अदुर्मतित्वप्रयुक्ता प्रार्थना क्रियाऽतिपत्ति । न अवदिष्यत्, न अस्तोष्यत् = अत्र "जातुयदोर्लिङ्" इति उक्तजातुशब्दयोगोऽनवक्लृप्तिश्च लिङ्निमित्त पूर्ववत् । दुर्मतित्वात्तद्विरुद्धक्रूराऽभिवदनस्वसम्पत्तिस्तवनक्रियाऽतिपत्तौ भूते वा लृङ् ॥

❀भाषाऽर्थ.❀ हे राम ! समक्ष भाषणके समयमें शत्रु रावण दुष्ट बुद्धिवाला नही होता तो निश्चयही सीताजीसे प्रार्थना नही करता, कभी परुष भाषण नहीं करता और न कभी अपनी सम्पत्तिकी स्तुति ही करता ॥ ३ ॥

सङ्कल्प नाऽकरिष्यच्च तत्रेय शुद्धमानसा ।
सत्याऽमर्षमवाप्स्यस्त्वं राम. सीतानिबन्धनम् ॥ ४ ॥

अन्वयः—हे राम ! इय शुद्धमानसा न तत्र सङ्कल्प अकरिष्यच्च, ( इति न ) सीतानिबन्धनं सत्याऽमर्षं त्वम् अवाप्स्य ॥

व्याख्या—हे राम = हे रामचन्द्र !, इय = सीता, शुद्धमानसा = शुद्धचिता, न=नअभविष्यत्, अत, तत्र = रावणे, सङ्कल्पम् = अभिप्राय, अकरिष्यच्च - कृतवती च इति = एवं, न = न अवकल्पयामि = न सभावयामीति भाव. । एवं सति सीतानिबन्धन = सीतागोचरं, सत्याऽमर्ष = यथार्थकोप, त्व = राम, अवाप्स्य = अवाप्तवानसि, एतन्न मर्षयामीत्यर्थ ॥

❀व्युत्पत्ति'❀ शुद्धमानसा = शुद्ध मानस यस्या सा । अकरिष्यत् = अनवक्लृप्तौ ( लिङ् निमित्ते ) "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इति लृङ् । अवाप्स्य' = अमर्षे ( अक्षमायाम् ) पूर्वसूत्रेणैव लृङ् । सीताया. शुद्धमानसत्वात्सकल्पनसत्यामर्षणप्राप्ति क्रियाऽतिपत्ति' । "वोताप्यो" इति वा शब्दाऽनुवृत्तेरुभयत्र भूते वा लृङ् ॥

❀भाषाऽर्थ.❀ हे राम ! ये सीताजी शुद्ध चित्तवाली नहीं हैं और इन्होंने रावण

में अभिप्राय किया ऐसा मै सम्भावना नही करता हू। इस स्थितिमे इनके विषयमें जो आप यथार्थ कोपको प्राप्त हो गये है मै इसका सहन नही करता ॥ ४ ॥

त्वयाऽद्रक्ष्यत किं नाऽस्याः शील संवसता चिरम् ।
अदर्शिष्यन्त वा चेष्टा. कालेन बहुना न किम् ॥ ५ ॥

अन्वय —चिर सवसता त्वया अस्या. शील किं न अद्रक्ष्यत वा बहुना कालेन चेष्टा किं न अदर्शिष्यन्त ?

व्याख्या—( हे राम ! ) चिर = बहुकाल, सवसता = सवास कुर्वता, त्वया = भवता, अस्या = सीताया , शीलं = सच्चिरत्र, किं न अद्रक्ष्यत = कि न दृष्टं, किं नो ज्ञातमिति भाव । एवं च—वा=अथवा बहुना=अधिकेन, कालेन=समयेन, चेष्टा = क्रिया , कि न अदर्शिष्यन्त = नो दृष्टा. किमिति भावः । "शीलं सवसता ज्ञेयं तच्च कालेन भूयसा ।" इत्याशयाल्लिङ्गतोऽपि त्वयाऽवगतमेवेति गर्हितमेतत्कृतमित्यर्थ ॥

॥व्युत्पत्ति॥ शील = "शुचौ तु चरिते शीलम्" इत्यमर । अद्रक्ष्यत = दृशेः कर्मणि "किं वृत्ते लिङ्लृटौ" इत्युक्तयोर्गर्हानिमित्तयो लिंङ्निमित्ते क्रियाऽतिपत्तौ भूते वा लृङ्, चिण्वदिडभावपक्षे रूपम् । अदर्शिष्यन्त = दृशेस्तत्रैव चिण्वदिटि रूपम् । अत्र चिरसवासलक्षणशीलचेष्टोपलम्भकारणसम्भवात्तद्विरुद्धतदनुपलम्भ-क्रियाऽतिपत्तिः ॥

॥भाषाऽर्थ॥ हे राम ! बहुत समय तक सवास करते हुए आपने सीताका सच्चरित्र क्या नही जाना ? वा अधिक समय होनेसे भी इनकी चेष्टाएँ क्या नही देखी ? ॥ ५ ॥

यावज्जीवमशोचिष्यो नाऽहास्यश्चेदिदं तमः ।
भानुरप्यपतिष्यत्क्ष्मामक्षोभिष्यत चेदियम् ॥ ६ ॥

अन्वयः—इद तमः न अहास्य चेत् यावज्जीवम् अशोचिष्य । इयम् अक्षोभिष्यत चेत् भानु अपि क्ष्माम् अपतिष्यत् ॥

व्याख्या—इदम्=एतत् , तमः = मोह, रावणभवनवासमात्रादियं दूषितेति विपरीतज्ञानमिति भावः । न अहास्यश्चेत् = नो हास्यसि ( त्यक्ष्यसि ) चेत् , यावज्जीव = जीवनकालपर्यन्तम् , अशोचिष्य = शोचिष्यसि, अत्र तम शोकयोर्हेतुहेतुमद्भावे लिङ्निमित्त स्वोपदेशेन तम शोकोत्पत्तिप्रतिबन्धात् क्रियाऽतिपत्तौ च भविष्यदर्थे नित्यम् लृङ् । कि च, इयम् = एषा, सीतेति भाव । अक्षोभिष्यत चेत् अचलिष्यद्यदि, भानुरपि=सूर्योऽपि क्ष्माम् अपतिष्यत=भुवि निपतेदित्यर्थ , तद्वदुत्पातप्रायमस्याश्चापलमसम्भाव्यमिति भावः । अत्र भूते लृङ् ॥

❀व्युत्पत्तिः❀ अहास्य = "ओहाक् त्यागे" इति धातोर्भूते "लिङनिमित्ते लृङ् क्रियाऽतिपत्तौ" इति लृङ्। अशोचिष्य = शुचधातो पूर्ववल्लृङ्, अक्षोभिष्यत = "क्षुभ सचलन" इति धातोर्लृङ्। अपतिष्यत् = "पत्लृ पतन" इति धातोर्लृङ् ॥

❀भाषाऽर्थ❀ रावणके गृहमे रहनेसे सीता दूषिता हैं इस मोहको आप नहीं छोडेगे तो यावज्जीवन शोक करेगे। सीता चरित्रसे विचलित होंगीं तो सूर्य भी भूमिपर गिर पडेगे ॥ ६ ॥

समपत्स्यत राजेन्द्र ! स्त्रैण यद्यत्र चापलम् ।
लोकपाला इहाऽऽयास्यस्ततो नाऽमी कलिद्रुहः ॥ ७ ॥

**अन्वयः**—हे राजेन्द्र ! स्त्रैण चापल यदि अत्र समपत्स्यत, तत कलिद्रुह· अमी लोकपाला इह न आयास्यन् ॥

**व्याख्या**—हे राजेन्द्र = हे भूपेन्द्र, हे रामचन्द्रेति भाव । स्त्रैण=स्त्रीसम्बन्धि, स्त्रीषु सभावितमिति भाव । चापल = चाञ्चल्य, चारित्र्यस्खलनरूपमित्यर्थ यदि= चेत्, अत्र = इह, सीतायामित्यर्थ । समपत्स्यत = सम्पन्न, तत = तर्हि, कलिद्रुह = पापाऽसहिष्णव, अमी = एते, लोकपाला = दिक्पाला, इह = अस्मिन् स्थाने, न आयास्यन् = न आगमिष्यन्, आगताश्च तत इय सीता सतीति विश्वसिहीति भाव । अत्र चापललोकपालाऽनागमयोर्हेतुहेतुमद्भावो लिङ्निमित्तम्। आगमग्राहिप्रत्यक्षेण अनागमनक्रियाऽतिपत्ति । अत्रभूते लङ् ॥

❀व्युत्पत्ति❀ स्त्रैण = स्त्रीणामिद, "स्त्रीपुसाभ्या नञ्स्नञौ भवनात्" इति नञ्प्रत्यय । चापल = चपलस्य भाव, "हायनाऽन्तयुवादिभ्योऽण्" इति युवादिगणपठितत्वादण्, ब्राह्मणादिगणपठितत्वात् ष्यञ्च तत्र "चापल्यम्" इति रूपम्। समपत्स्यत, आयास्यन् = "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" इति लृङ्। कलिद्रुह = कलये द्रुह्यन्तीति, "सत्सूद्विषद्रुहे"त्यादिना क्विप्प्रत्ययः ॥

❀भाषाऽर्थ❀ हे राजेन्द्र राम ! स्त्रियोंमे होनेवाला चाञ्चल्य यदि सीतामें होता तो पापको न सहनेवाले इन्द्र आदि दिक्पाल यहा न आते, परन्तु वे आये हैं, इस लिए सीताजी सती हैं ऐसा आप विश्वास कीजिये ॥ ७ ॥

आश्चर्यं यच्च यत्र स्त्री कृच्छ्रेऽवत्स्यर्न्मते तव ।
त्रासादस्या विनष्टायां किं किमालप्स्यथा· फलम् ॥ ८ ॥

**अन्वय**—यच्च यत्र ( वा ) स्त्री कृच्छ्रे तव मते अवत्स्यत् ( तत् ) आश्चर्यम्। त्रासात् अस्या विनष्टाया किं किं फलम् अलप्स्यथा ?

**व्याख्या**—अन्यच्च नाऽत्र स्त्रीसामान्यबुद्धि कर्तव्येत्याह = आश्चर्यमिति । यच्च, यत्र = यस्मिन् देशे काले वा, स्त्री = योषित्, कृच्छ्रे = कष्टे, प्राणाऽपगमश-

ङ्काहेतुत्वाददतिदुष्कर इति भाव । तव = भवत , मते = अभिप्राये, अग्निप्रवेशरूप इत्यर्थ । अवर्त्स्यत्=अवर्तिष्ट, तत् आश्चर्यं=चित्रमित्यर्थ । किं च त्रासात्=भयात् , त्वयि क्रुद्ध इति शेष । अस्या=सीताया, विनष्टाया=प्रच्छन्नं मृताया, किं किं फल= किं किं परिणामम् , अलप्स्यथा =लप्स्यसे, न किञ्चिदवकल्पयामीति भाव । 'किंकिलाऽलप्स्यथा फलम्'' इति पाठान्तरप्रामादिक 'किङ्किलाऽस्त्यर्थेषु लृट्'' इत्यस्य लिङ्निमित्तत्वाऽभावात् ॥

※व्युत्पत्तिः※ अवर्त्स्यत् = "वृतु वर्तने" इति धातो· यच्चयत्रयोरन्यतरोपपदा चित्रीकरणे गम्यमाने क्रियाऽतिपत्तौ भूते लृङ् "वृद्भ्य स्यसनो·" इति परस्मैपद "न वृद्भ्यश्चतुर्भ्य" इतीडागमनिषेध । स्त्रीणा सामान्यत कृच्छ्राऽभिप्रायाऽनुवृत्ति सामग्र्यभावात्तदनुवृत्ति' क्रियाऽतिपत्ति । इय तु तत्राऽपि प्रवृत्तेति चित्रीकरणम् । आश्चर्यम् = कृच्छ्रत्वगम्यस्य चित्रीकरणस्य स्पष्टाऽर्थमाश्चर्यग्रहणम् । अलप्स्यथा = "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यत्र अपिशब्दात् "किं वृत्तेऽपि" इत्यत्र अपिशब्दात् किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तमुक्त, तस्मिन् क्रियाऽतिपत्तौ "डुलभष् प्राप्तौ" इति धातो भविष्यति नित्यम् लृङ् । मरणाऽतिरिक्तफलप्राप्तिसामग्र्यभावात्तदतिपत्ति ॥

※भाषाऽर्थ.※ जो जिस देशमे वा जिस कालमें स्त्री आपके अग्निप्रवेशरूप अभिप्रायमें रही वह आश्चर्य है। आपके क्रुद्ध होनेपर भयसे सीताके प्रच्छन्नरूपसे विनष्ट होनेपर क्या क्या फल आप पायेंगे, मै कुछ भी कल्पना नहीं कर रहा हू ॥८॥

यत्र यच्चाऽमरिष्यत्स्त्री साध्वसाद्दोषवर्जिता ।
तदसूयारते लोके तस्या वाच्याऽऽस्पद मृषा ॥ ९ ॥

अन्वय.—यच्च यत्र वा दोषवर्जिता स्त्री साध्वसात् अमरिष्यत् , तत् असूयारते लोके तस्या मृषा वाच्याऽऽस्पदम् ( अभविष्यत् ) ॥

व्याख्या—न केवलं फलाऽभाव प्रत्युताऽनिष्टफलमेव स्यादित्याह—यत्रेति । यच्च, यत्र वा = यस्मिन् देशे काले वा, दोषवर्जिता = निर्दूषणा, शुद्ध चरित्राऽपीति भाव । साध्वसात् = त्रासात् पत्यविश्वासमूलादिति भाव· । अमरिष्यत् = प्राणत्या गमकरिष्यत् , तत् = मरणम् , असूयारते = गुणेषु दोषाऽऽविष्करणपरे, लोके = जने, तस्या = मृताया , मृषा = मिथ्या, वाच्याऽऽस्पद = दोषस्थानं, दुष्टत्वादेव मृतेति मिथ्यापवादहेतुरभविष्यदिति शेष तच्च अतिगर्हितमित्यभिप्राय ॥

※व्युत्पत्तिः※ अमरिष्यत् = "मृङ् प्राणत्यागे" इति धातो "गर्हाया चे" त्यत्र यच्च यत्र शब्द उपपद गर्हा च लिङ्निमित्त तस्मिन् लिङ्निमित्ते क्रियाऽतिपत्तौ सत्या भूते वा लृङ् । अदुष्टाया· साध्वसलक्षणसामग्र्यभावान्मरणक्रियाया अतिपत्तिः

( अनिष्पत्तिः ), तदभावादपवादक्रियाऽतिपत्तिश्च । असूयारते = असूयायां ( गुणेषु दोषाऽऽविष्करणे ) रते । वाच्यास्पद = वाच्यस्याऽऽस्पदम् , आस्पदमित्यत्र "आस्पदं प्रतिष्ठायाम्" इति ससुट्को निपात ॥

❀भाषाऽर्थ❀ जो जिस देशमे वा कालमें निर्दोष स्त्री पतिके सन्देहरूप भयसे मर जाती तो गुणोंमे दोष बुद्धि करनेमे तत्पर लोकमे उस सती स्त्रीका मिथ्या दोष स्थान हो जाता ॥ ९ ॥

अमंस्यत भवान्यद्वत्तथैव च पिता तव ।
नाऽऽगमिष्यद्विमानस्थ. साक्षाद्दशरथो नृप. ॥ १० ॥

अन्वय'—भवान् यद्वत् अमस्यत तथा एव तव पिता नृपो दशरथो विमानस्थः साक्षात् न आगमिष्यत् ॥

व्याख्या—( हे राम ! ) भवान् = राम यद्वत् = यथा अमस्यत = दुष्टेय सीतेति ज्ञातवान् , तथा एव = तेन प्रकारेण एव, सीता दुष्टा स्याद्यदीति भाव । तदा तव= भवतः, पिता = जनक , नृप = महाराजः, दशरथ , विमानस्थ =व्योमयानाऽऽरूढ , साक्षात् = प्रत्यक्षेण, न आगमिष्यत् = न आगत स्यात् ॥

❀व्युत्पत्ति❀ अमस्यत, न आगमिष्यत् = अत्र दोषभवन हेतुः दशरथाऽनागमन च हेतुमत् , तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" इति भूते लृङ् । अग्निपरिशुद्धिज्ञानाद्विरुद्धप्रत्ययात्क्रियाऽतिपत्ति. ॥

❀भाषाऽर्थ❀ हे राम ! आपने जैसे यह सीता दुष्टा है ऐसा जाना है, वैसे ही सीताजी दुष्टा होती तो आपके पिता महाराज दशरथ विमानारूढ होकर प्रत्यक्ष रूपसे नहीं आये होते ॥ १० ॥

नाऽकल्पस्यत्सन्निधिं स्थाणुः शूली वृषभवाहनः ।
अन्वभाविष्यताऽन्येन मैथिली चेत्पतिव्रता ॥ ११ ॥

अन्वयः—पतिव्रता मैथिली अन्येन अन्वभाविष्यत चेत् ( तर्हि ) शूली वृषभवाहन स्थाणु सन्निधि न अकल्पस्यत् ॥

व्याख्या—( हे राम ! ) पतिव्रता = सती, मैथिली = वैदेही, सीतेत्यर्थ । अन्येन = अपरेण, त्वत्त इति शेष । अन्वभाविष्यत चेत् = उपभुक्ता चेत् , तर्हि— शूली = शूलहस्त , वृषभवाहन = वृषभाऽऽरूढ , स्थाणु = ईश्वर , सन्निधि = सन्निधानं, न अकल्पस्यत् =न कृतवान्स्यात् ॥

❀व्युत्पत्ति❀ अन्वभाविष्यत = अनुपूर्वात् भूधातो कर्मणि लृङ्, चिण्वदिटि वृद्धिः । शूली = शूलमस्याऽस्तीति "अत इनिठनौ" इति नित्ययोगे इनि । वृषभवाहन = वृषभो वाहन यस्य स' । अकल्पस्यत् = अन्तर्भावितणिजर्थोऽय प्रयोग. ।

"कृपू सामर्थ्ये" इति धातोः हेतुहेतुमद्भावे "लिङनिमित्ते लृङ क्रियाऽतिपत्तौ" इति लृङ्। अन्याऽनुभवन हेतु स्थाण्वनागमन हेतुमत्। "लुटि च क्लृप" इति चकारात्ये परस्मैपद, "तासि च क्लृप" इति चकारा निट ॥

ॐभाषाऽर्थःॐ हे राम ! पतिव्रता सीता अन्य पुरुषसे अनुभूत होती तो त्रिशूल धारी, साँड पर चढ़े हुए महादेवजी यहा पर आगमन न करते ॥ ११ ॥

आनन्दयिष्यदागम्य कथ त्वामरविन्दसत् ।
राजेन्द्र ! विश्वसूर्धाता चारित्र्ये सीतया क्षते ॥ १२ ॥

अन्वय —हे राजेन्द्र ! अरविन्दसत् विश्वसू धाता सीतया चारित्र्ये क्षते कथम् आगम्य त्वाम् आनन्दयिष्यन् ?

व्याख्या—हे राजेन्द्र = हे रामचन्द्र !, अरविन्दसत् = कमलाऽऽसन , विश्वसू = ससारस्रष्टा ,धाता = ब्रह्मा, सीतया = जानक्या, चारित्र्ये = पातिव्रत्ये, क्षते = नाशिते सति, पातिव्रत्यभङ्गनेति शेष । कथ = केन प्रकारेण, आगम्य = आगमनं कृत्वा, त्वा = भवन्त, राममित्यर्थ• । आनन्दयिष्यत् = आनन्दितवान् , गर्हितत्वादिति भाव ॥

ॐव्युत्पत्ति ॐ अरविन्दसत्, विश्वसू = अरविन्दे सीदतीति, विश्व सूत इति, "सत्सूद्विषे" त्यादिना क्विप्प्रत्यय. । आनन्दयिष्यत् = णिजन्तात् "टुनदि समृद्धौ" इति धातो• "विभाषा कथमि लिङ् चे"ति कथ शब्दो गर्हा च लिङ्निमित्त तस्मिन्क्रियाऽतिपत्तौ भूते लृङ्। चारित्रक्षत्यभावादानन्दादिक्रियाऽतिपत्ति ॥

ॐभाषाऽर्थ ॐ हे राजेन्द्र ! कमलाऽऽसन, ससारकी सृष्टि करने वाले ब्रह्माजी सीताजीके पातिव्रत्य नष्ट करनेपर कैसे आकरके आपको आनन्दित करते ? ॥ १२ ॥

प्रणमन्ब्रह्मणा प्रोक्तो राजकाऽधिपतिस्तत ।
नाऽशोत्स्यन्मैथिली लोके नाऽऽचरिष्यदिदं यदि ॥ १३ ॥

अन्वय.—ततो राजकाऽधिपति प्रणमन् ब्रह्मणा प्रोक्त—"मैथिली इद न आचरिष्यत यदि लोके न अशोत्स्यत्" ॥

व्याख्या—तत = अग्निवाक्याऽनन्तरं, राजकाऽधिपति = राजसमूहस्वामी, राम इति भाव । प्रणमन् = प्रणाम कुर्वन् , ब्रह्माणमिति शेष । ब्रह्मणा = धात्रा, प्रोक्त = अभिहित , राम इति शेष । हे राम ! मैथिली = सीता, इद वह्निप्रवेशन, न आचरिष्यत् यदि = न अकरिष्यच्चेत् , लोके = भुवने, न अशोत्स्यत् = न शुद्धा भवेत् । अत्राऽग्निप्रवेशशोधनयोर्हेतुहेतुमद्भावो लिङ्निमित्तम् । शुद्धिहेत्वग्निप्रवेशोपनिपातादशोधनक्रियाऽतिपत्ति ॥

ॐव्युत्पत्ति.ॐ राजकाऽधिपति = राज्ञां समूहो राजक, "गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्" इति वुञ्प्रत्यय, "युवोरनाकौ" इति तस्य अकादेश । आचरिष्यत्, अशोत्स्यत् = आङ्पूर्वकाच्चरधातो "शुध शौचे" इति दैवादिकाद्धातो "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" इति लृङ् ॥

ॐभाषाऽर्थ ॐ अग्निदेवके वाक्यके अनन्तर प्रणाम करते हुए राजसमूहके अधिपति रामचन्द्रजीको ब्रह्माजीने कहा—"हे राम ! सीता अग्निप्रवेशरूप इस कर्मको नहीं करती तो लोकमे शुद्ध नही होती ॥ १३ ॥

नाऽमोक्ष्याम वय शङ्कामिहाधास्यन्न चेद्भवान् ।
किं वा चित्रमिदं युक्त भवान्यदकरिष्यत ॥ १४ ॥

अन्वय.—( हे राजन् ! ) भवान् इह न अधास्यत् चेत् ( तर्हि ) वयं शङ्का न अमोक्ष्याम । भवान् युक्तम् अकरिष्यत यत् इद वा किं चित्रम् ?

व्याख्या—हे राजन् !, भवान् = राम, इह = अग्नौ, न अधास्यत् चेत् = सीता नाहितवांश्चेत्, न प्रवेशितवांश्चेदिति भाव. । तर्हि, वय, शङ्का = शुद्धेऽपि सशय न अमोक्ष्याम = नो मुञ्चेम, अतोयुक्त कृतमित्यर्थ । ब्रह्मा स्वय सर्वज्ञोऽपि लोकाऽभेदेन वयमित्याह । परमाऽर्थतस्तु लौकिका नो विश्वस्युरिति भाव ! अत्र अग्न्याधान हेतु, शङ्कामोचन च हेतुमत्, अस्मिन् लिङ्निमित्ते क्रियाऽतिपत्तौ भूते लृङ् । अनाधानक्रियायास्तद्विरुद्धाधानादतिपत्ति ! किं च—भवान् = राम, युक्तं = न्याय्यम्, अकरिष्यत = कृतवान् इति यत्, इद वा = भवत्कर्तृक युक्ताचरण वा, किं चित्र = चित्रमिति नाऽवकल्पयामीत्यर्थ । अत्र किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तम् । राज्ञो हितकरणरूपत्वात् चित्रक्रियाऽतिपत्ति । तत्र भूते वा लृङ् ॥

ॐव्युत्पत्तिॐ अधास्यत्, अमोक्ष्याम = "डुधाञ् धारणपोषणयो" "मुच्लृ मोक्षण" इति धातोश्च हेतुहेतुमद्भावे लृङ् ॥

ॐभाषाऽर्थ ॐ हे राजेन्द्र राम ! आप अग्निमे सीताको प्रविष्ट नही कराते तो, शुद्धि होनेपर भी हमलोग शङ्का नहीं छोडते, इस कारणसे आपने ठीक किया । आपने जो ठीक किया इसमें क्या आश्चर्य है ? ॥ १४ ॥

प्रावर्तिष्यन्त चेष्टाश्चेदयाथातथ्यवत्तव ।
अनुशास्ये त्वया लोके रामाऽवर्त्स्यस्तरा तत ॥ १५ ॥

अन्वय—हे राम ! तव चेष्टा अयाथातथ्यवत् प्रावर्तिष्यन्त चेत् तत त्वया अनुशास्ये लोके अवर्त्स्यस्तराम् ॥

व्याख्या—हे राम = हे रामचन्द्र !, तव = भवत, चेष्टा = व्यापारा, अया-

थातथ्यवत् = अयथार्थम् । प्रावर्तिष्यन्त चेत् = प्रवृत्ता यदि, तत = तर्हि त्वया = भवता, अनुशास्ये = अनुशासनीये, लोके = जने, अवर्त्स्यस्तराम् = अतिमात्र प्रावर्तिष्यन्त, 'यथा राजा तथा प्रजे"तिन्यायात् "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन" इति न्यायाच्चेति शेष । अत्र रामचेष्टाप्रवृत्तिलोकचेष्टाप्रवृत्त्योर्हेतुहेतुमद्भावो लिङ्निमित्तम् । असमीक्ष्यकरणोपनिपातात्समीक्ष्यकरणक्रियाऽतिपत्तौ भविष्यति लृङ् ॥

※व्युत्पत्ति.※ अयाथातथ्यवत् = तथा ( सत्यम् ) अनतिक्रम्य यथातथ, पदार्थाऽनतिवृत्तिरूपे यथार्थे अव्ययीभाव । "ह्रस्वो नपुसके प्रातिपदिकस्ये"ति ह्रस्वत्वम् । न यथातथम् अयथातथ, नञ्समास. । अयथातथ भाव अयाथातथ्य, "गुणवचनब्राह्मणादिभ्य कर्मणिचे"ति ष्यञ्प्रत्यय', "यथातथायथापुरयो पर्यायेण" इति विकल्पान्नञ पर्यायेण वृद्धि, पक्षान्तरे आयथातथ्यम् । अयाथातथ्यमस्ति यस्मिस्तत्, तद्यथा तथेति क्रियाविशेषणम् । "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप् । अवर्त्स्यस्तराम् = "वृतु वर्तन" इति धातो पूर्ववल्लृङ् । "वृद्भ्य. स्यसनो" इति परस्मैपदम् "न वृद्भ्यश्चतुर्भ्य" इतीडागमनिषेधः । "तिङश्चे"त्यातिशायनिकस्तर "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यामुप्रत्यय । "नश्छव्यप्रशान्" इति रुत्व, पूर्वस्याऽनुस्वारः ॥

※भाषाऽर्थ ※ हे राम ! आपकी चेष्टाए अयथार्थ रूपसे प्रवृत्त होंगी तो आपसे अनुशासनीय लोकमे वैसेही अतिशय प्रवृत्त होंगी ॥ १५ ॥

प्रणमन्तं ततो राममुक्तवानिति शङ्कर. ।
किं नारायणमात्मान नाऽभोत्स्यत भवानजम् ॥ १६ ॥

अन्वय:—तत शङ्कर प्रणमन्त राम वच उक्तवान्—"भवान् आत्मानम् अज नारायण कि न अभोत्स्यत ?

व्याख्या—तत = ब्रह्मवचनाऽनन्तरं, शङ्कर = महादेव , प्रणमन्त = प्रणाम कुर्वन्त, राम = रामचन्द्र, वच = वचनं, वक्ष्यमाणरूपमिति भाव । उक्तवान् = अब्रवीत् । हे राम !, भवान्, आत्मान = स्वम् , अज = जन्मरहितम् , उपलक्षणमेतत् अनादिनिधनमित्यर्थ । नारायण = विष्णु, किं न अभोत्स्यत = किं न ज्ञातवान् ? अत्र नारायणत्वाऽनवबोधक्रियायास्तद्विरुद्धबोधोत्पादनादतिपत्ति ॥

※व्युत्पत्ति ※ शङ्कर = शकरोतीति "शमिधातो सञ्ज्ञायाम्" इति टप्रत्ययाऽपवादोऽच् "ईश्वर. शर्व ईशान शङ्करश्चन्द्रशेखर ।" इत्यमर । अज = न जायत इत्य जस्तम्, "अन्येष्वपि दृश्यते" इति डप्रत्यय. । नारायण = नरस्याऽपत्यानि नारा. आप , "तस्याऽपत्यम् ' इत्यण् , बाहुल्येन ङीबभाव । नारा. ( जलानि ) अयन ( स्थानम् ) यस्य स नारायणस्त, यथाऽऽह मनु —"आपो नारा इति प्रोक्ता आपो

वै नरसूनवः । ता यदस्याऽयनं प्रोक्तं तेन नारायणः स्मृतः ॥" इति । "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।" इत्यमरः । अभोत्स्यत = "बुध अवगमने" इति धातोः पूर्ववल्लृङ् ॥

*भाषाऽर्थ* तब महादेवजीने प्रणाम करते हुए रामचन्द्रजीको ऐसा वचन कहा—हे राम ! आप अपनेको आदि और अन्तसे रहित नारायण क्या नहीं जानते है ? ॥ १६ ॥

कोऽन्योऽकर्त्स्यदिह प्राणान्दृप्तानां च सुरद्विषाम् ।
को वा विश्वजनीनेषु कर्मसु प्राघटिष्यत ॥ १७ ॥

**अन्वय.**—इह अन्यः कः दृप्तानां सुरद्विषां प्राणान् अकर्त्स्यत् ? को वा विश्वजनीनेषु कर्मसु प्राघटिष्यत ?

**व्याख्या**—इह = अस्मिन् लोके, अन्यः = इतरः, नारायणादिति शेषः । कः = जनः, दृप्तानां = दर्पयुक्तानां, सुरद्विषां = राक्षसानां, प्राणान् = असून्, अकर्त्स्यत् = अच्छेत्स्यत्, कः वा = जनः, विश्वजनीनेषु = सर्वलोकहितेषु, कर्मसु = क्रियासु, सेतुबन्धनादिकृत्येष्विति भावः । प्राघटिष्यत = चेष्टेत, "प्रायतिष्यते"ति मल्लिनाथसम्मतः पाठस्तस्य प्रयतेतेत्यर्थः, न कोऽपीति भावः ॥

*व्युत्पत्तिः* सुरद्विषां = सुरान्द्विषन्तीति सुरद्विषस्तेषां, "सत्सूद्विषे"त्यादिना क्विप्प्रत्ययः । अकर्त्स्यत् = "कृती छेदने" इति धातोः लृङ् । विश्वजनीनेषु = विश्वस्मै जनाय हितानि विश्वजनीनानि, तेषु "आत्मन्विश्वजनभोगोत्तरपदात्खः" इति खप्रत्ययः । प्राघटिष्यत = प्रपूर्वकात् "घट चेष्टायाम्" इति धातोः पूर्वसूत्रेणैव पूर्ववत् लृङ् । नारायणत्वबोधनादकर्तनाऽघटनक्रियाऽतिपत्तिः ॥

*भाषाऽर्थ* इस लोकमें नारायणसे भिन्न कौन पुरुष दर्पयुक्त राक्षसोंके प्राणोंका छेदन करता और कौन सेतुबन्ध आदि सब लोकोंके हितकारक कर्मोंमें चेष्टा करता ? ॥ १७ ॥

दैत्यक्षये महाराज ! यच्च यत्राऽघटिष्यथाः ।
समाप्तिं जातु तत्रापि किं नाऽनेष्यस्त्वमीहितम् ॥ १८ ॥

**अन्वय.**—हे महाराज ! त्वं दैत्यक्षये यत्र यच्च ईहितम् अघटिष्यथाः, जातु तत्र तत् समाप्तिम् अपि किं न अनेष्यः ?

**व्याख्या**—हे महाराज = हे राजेन्द्र, त्वं = राम, दैत्यक्षये = असुरवधे निमित्ते, यत्र = यस्मिन्, अवतारे इति शेषः । यच्च ईहितं = चेष्टितम्, अघटिष्यथाः = अनुष्ठितवानसि, जातु = कदाचित्, तत्र = अवतारे, तत् = चेष्टितम् । समाप्तिम् अपि = पूर्णताम् अपि, किं न अनेष्यः = किं न नेष्यसि ?

ॐव्युत्पत्तिः ॐ महाराज = महांश्चाऽसौ राजा महाराजस्तत्सम्बुद्धौ, "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति समासः, "आन्महतः समानाऽधिकरणजातीययोः" इत्यात्वं, "राजाऽहः सखिभ्यष्टच्" इति समासाऽन्तष्टच्। दैत्यक्षये = दितेरपत्यानि पुमांसो दैत्याः, "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यः, दैत्यपदं सुरविरोधिनामुपलक्षणं तेन राक्षसादीनामपि परामर्शः। दैत्यानां क्षये। अघटिष्यथाः अनेष्यः = "जातुयदोर्लिङ्" इति जातुयच्छब्दौ अनवक्लृप्तिश्च लिङ्निमित्तं तस्मिन्क्रियाऽतिपत्तौ भविष्यति नित्यम् लृङ्। अत्र निजरूपबाधादघटनाया अतिपत्तिः॥

ॐभाषाऽर्थ ॐ हे महाराज ! आपने दैत्योंके क्षयके निमित्त जिस अवतारमें जो चेष्टाकी उस अवतारमें उसे कभी पूर्णताको नहीं पहुचायेंगे ? ॥ १८ ॥

तातं प्रसाद्य कैकेय्या भरताय प्रपीडितम् ।
सहस्रचक्षुषं रामो निनंसुः परिदृष्टवान् ॥ १९ ॥

अन्वयः—रामो भरताय कैकेय्या प्रपीडितं तातं प्रसाद्य सहस्रचक्षुषं निनंसुः परिदृष्टवान् ॥

व्याख्या—रामः =रामचन्द्रः, भरताय = भरतराज्यार्थं, कैकेय्या = भरतमात्रा प्रपीडितं = सन्तापितं, तातं = पितरं, दशरथमित्यर्थः। प्रसाद्य = प्रसन्नं कृत्वा, कैकेयीविषयरोषत्याजनेनेति भावः। सहस्रचक्षुषं = देवेन्द्रं, निनंसुः = नन्तुमिच्छुः सन्, परिदृष्टवान् = अपश्यत् ॥

ॐव्युत्पत्ति ॐ भरताय = "तादर्थ्ये चतुर्थी वाच्या" इति चतुर्थी। सहस्रचक्षुषं = सहस्रं चक्षूंषि यस्य स सहस्रचक्षुः, तम्। निनंसुः = "णम प्रह्वत्वे शब्दे" इति धातोः सन्नन्तात् "सनाशंसभिक्ष उः" इत्युः ॥

ॐभाषाऽर्थ ॐ रामचन्द्रजीने भरतके राज्यके लिए कैकेयीसे पीडित पिताजी दशरथको प्रसन्नकर प्रणाम करनेकी इच्छा करते हुए देवराज इन्द्रका दर्शन किया ॥१९॥

प्रेता वरेण शक्रस्य प्राणन्तः कपयस्ततः ।
संजाताः फलिनाऽऽनम्ररोचिष्णुद्रुमसद्रवः ॥ २० ॥

अन्वयः—ततः प्रेताः कपयः शक्रस्य वरेण प्राणन्तः ( सन्तः ) फलिनाऽऽनम्ररोचिष्णुद्रुमसद्रवः सञ्जाताः ॥

व्याख्या—ततः=इन्द्रदर्शनाऽनन्तरं, प्रेताः =मृताः, रणे इति शेषः। कपयः = वानराः, शक्रस्य = इन्द्रस्य, वरेण = प्रसादेन, प्राणन्तः =जीवन्तः सन्तः, फलिनाऽऽनम्ररोचिष्णुद्रुमसद्रवः = फलभराऽऽनतशोभनवृक्षसदनशीलाः सञ्जाताः = संवृत्ताः ॥

ॐव्युत्पत्तिः ॐ प्राणन्तः = प्राणन्तीति, प्रपूर्वकात् "अन प्राणने" इति धातोर्लटः

शत्रादेशः "अनिते" इति नस्य णत्वम् । फलिनाऽऽनम्ररोचिष्णुद्रुमसद्वन = फलानि सन्ति एषु ते फलिना, "फलबर्हाभ्यामिनच्" इतीनचप्रत्यय । फलिना अत एव आनम्रा अत एव रोचिष्णवो ये द्रुमा, तेषु सद्वन. । सदनशीला. सद्वन." "दाधेट्सिशदसदोरु." इति सदो रुप्रत्यय. ॥

※भाषाऽर्थ·※ इन्द्रदर्शनके अनन्तर युद्धमें मरे हुए वानर इन्द्रके प्रसादसे जीवित होते हुए फलवाले अत एव झुके हुए सुन्दर वृक्षोंमें रहनेवाले हो गये ॥२०॥

> भ्रमरकुलाऽऽकुलोल्बणसुगन्धिसपुष्पतरु-
> स्तरुणमधूकसम्भवपिशङ्गिततुङ्गशिखः ।
> शिखरशिलाऽन्तरालपरिक्लृप्तजलाऽवसरः
> सरसफलश्रिय स विततान सुवेलगिरि ॥ २१ ॥

अन्वयः—भ्रमरकुलाऽऽकुलोल्बणसुगन्धिसपुष्पतरु· तरुणमधूकसम्भवपिशङ्गिततुङ्गशिख· शिखरशिलाऽन्तरालपरिक्लृप्तजलाऽवसर स सुवेलगिरि सरसफलश्रियं वितान ॥

व्याख्या—भ्रमरकुलाऽऽकुलोल्बणसुगन्धिसपुष्पतरु = अलिसमूहव्याप्ताऽत्यन्तसुरभिसकुसुमवृक्ष, तरुणमधूकसम्भवपिशङ्गिततुङ्गशिखः = प्रत्यग्रमधूकपुष्पोद्भवपिशङ्गीकृतोन्नतशिखरः, शिखरशिलाऽन्तरालपरिक्लृप्तजलाऽवसर = शृङ्गप्रस्तराऽभ्यन्तरनिष्पन्नजलप्रसर, स = प्रख्यात, सुवेलगिरि = सुवेलाऽद्रि, सरसफलश्रिय = अभिनवफलशोभा, वितान = विस्तृतवान् ॥

※व्युत्पत्ति·※ भ्रमरकुलाऽऽकुलोल्बणसुगन्धिसपुष्पतरु = भ्रमरकुलैः आकुलाः उल्बणा· सुगन्धयः, सपुष्पा तरवो यस्मिन् स· । तरुणमधूकसम्भवपिशङ्गिततुङ्गशिखः = मधूकस्य विकारा मधुकानि, "तस्य विकार" इत्यण् "पुष्पमूलेषु बहुलम्" इति लुक् । तरुणानि यानि मधूकानि, तेषा सभवेन पिशङ्गिता· तुङ्गशिखा· यस्य स । शिखरशिलाऽन्तरालपरिक्लृप्तजलाऽवसर = शिखरशिलानाम् अन्तरालेषु परिक्लृप्ता जलाऽवसरा यस्मिन् स । सरसफलश्रिय = सरसफलाना श्रियम । जलाऽवसरा इत्यत्र जलमवसरत्येभ्य इति "ऋदोरप्" इत्यप् । अत्रपादाऽन्तादियमकम् । नर्दटकवृत्त = "यदि भवतो नजौ भजजला गुरु नर्दटकम् ।" इति तल्लक्षणम् ॥

※भाषाऽर्थ·※ भ्रमरसमूहोंसे व्याप्त अत्यन्त सुगन्धिवाले पुष्पयुक्त वृक्षोंसे सपन्न नवीन मधूक पुष्पोंकी उत्पत्तिसे पीले वर्ण वाले ऊचे शिखरोंसे युक्त, शिखरोंकी शिलाओंके बाचमे उत्पन्न जलप्रसरसे युक्त सुवेलपर्वतने नवीनफलोंकी शाभाका विस्तार किया ॥ २१ ॥

**संवाद्भिः सकुसुमरेणुभि समीरैरानम्रैर्बहुफलधारिभिर्वनाऽन्तैः ।**
**श्च्योतद्भिर्मधुपटलैश्च वानराणाम् आप्यानो रिपुवधसम्भवः प्रमोदः ॥२२॥**

**अन्वयः**—वानराणा रिपुवधसभव' प्रमोद सवाद्भि सकुसुमरेणुभि समीरै बहुफलशालिभि आनम्रै वनाऽन्तै श्च्योतद्भि मधुपटलैश्च आप्यान ॥

**व्याख्या**—वानराणा = कपीना, रिपुवधसभव = शत्रुनिषूदनोत्पन्न , प्रमोद = आनन्द , सवाद्भि संचरद्भिः, सकुसुमरेणुभि = परागसहितै , सुगन्धिभिरित्यर्थ । समीरै = वायुभि , बहुफलशालिभि = अधिकफलशोभिभि , आनम्रै = अधिकाऽवनतै , वनाऽन्तै' = वनभागै , श्च्योतद्भि = स्रवद्भि , मधुपटलैश्च = क्षौद्रमण्डलैश्च, आप्यान = वृद्धिगत ॥

**ॐव्युत्पत्ति'ॐ रिपुवधसभव.** = सभवत्यस्मादिति सभव , "ऋदोरप्" इत्यप् । रिपुवध. सभवो यस्य स । सवाद्भि =सवान्तीति सवान्तस्तै सपूर्वकात् "वा गतिगन्धनयो" इति धातोर्लट शत्रादेश. । सकुसुमरेणुभि. =कुसुमरेणुभि सहितास्तै' । बहुफलशालिभि =बहुफलै. शाडन्ते ( डलयोरभेदात शालन्ते शोभन्त इत्यर्थ ) तच्छीलास्तै , ताच्छील्ये णिनिप्रत्यय । आप्यान =आङ्पूर्वकात् "( स्फायी ) ओप्यायी वृद्धौ" इति धातो कर्तरिक्त, ओदितश्चे"ति निष्ठानत्व, यकारलोप । व्यवस्थितविभाषावचनात् सोपसर्गस्य प्याय. पीभावो न भवति । प्रहर्षिणी वृत्त, "म्नौ ज्रौ गस्त्रिदशयति प्रहर्षिणीयम् ।" इति तल्लक्षणम् ॥

**ॐभाषाऽर्थ ॐ वानरोंका शत्रु वधसे उत्पन्न हर्ष बहनेवाले, परागोंसे युक्त ( अत एव सुगन्धि ) वायुसे, बहुत फलोंसे शोभित अतएव अतिशय अवनत वन भागोंसे और चूनेवाले मधुपटलोंसे भी बढ़ गया ॥ २२ ॥**

**आयान्त्यः स्वफलभरेण भङ्गुरत्वं**
**भृङ्गाऽऽलीनिचयचिता लतास्तरूणाम् ।**
**साऽऽमोदा क्षितितलसंस्थिताऽवलोप्या**
**भोक्तृणां श्रममुदय न नीतवत्यः ॥ २३ ॥**

**अन्वयः**—स्वफलभरेण भङ्गुरत्वम् आयान्त्य साऽऽमोदा भृङ्गाऽऽलीनिचयचिता क्षितितलसंस्थिताऽवलोप्या तरूणा लता भोक्तृणा श्रमम् उदयं न नीतवत्य ॥

**व्याख्या**—स्वफलभरेण = आत्मफलभारेण, भङ्गुरत्व = भङ्गशीलत्वम् , आयान्त्य = प्राप्नुवत्य , तथा फलिता इति भाव । साऽऽमोदा = मनोहरगन्धवत्य , भृङ्गालीनिचयचिता = भ्रमरपङ्क्तिसमूहव्याप्ता , क्षितितलसस्थिताऽवलोप्या = भूतलविद्यमानाऽपचेया', करप्रचेया इत्यर्थ । तरुणा = वृक्षाणा, लता' = शाखा ,

भोक्तॄणाम्=अभ्यवहर्तॄणां वानराणां, श्रमं=श्रान्तिम्, उदयम्=उद्गमं, न नीतवत्यः = न प्राप्तवत्यः, किन्तु प्रशमं निन्युरिति भावः । "विनीतवत्य इति पाठान्तरे उदयम्= उदितम्, श्रममपनिन्युरित्यर्थः ॥

&व्युत्पत्तिः& भङ्गुरत्व = "भञ्जो आमर्दने" इति धातोः "भञ्जभासमिदो घुरच्" इति घुरच्प्रत्ययः । भङ्गुराणां भावो भङ्गुरत्वं, तत् । भृङ्गालीनिचयचिता· = भृङ्गाणां माल्यस्तासां निचयस्तेन चिता· । क्षितितलसंस्थिताऽवलोप्या = क्षितेस्तलं तस्मिन् संस्थितास्तैरवलोप्या । अवलोप्तुं शक्या· अवलोप्या· । लता = "समेशाखालते" इत्यमरः उदयम् = एतेरयतेर्वापचाद्यच् । नीतवत्य· = "णीञ् प्रापणे" इति द्विकर्मका द्धातोः क्तवतुप्रत्ययः, स्त्रीत्वविवक्षायाम् "उगितश्चे"ति ङीप्प्रत्ययः ॥

&भाषाऽर्थ& अपने फलोंके भारसे भङ्गशीलताको प्राप्त होनेवाली, मनोहर गन्धयुक्त, भौरोंकी पङ्क्तियोंके समूहसे व्याप्त और भूतलमें बैठे हुए जनोंसे भी तोडी जा सकनेवाली वृक्षशाखाओंने खानेवाले वानरोंके परिश्रमको शान्त कर दिया ( हटाया ) ॥ २३ ॥

इति श्रीचन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपेऽष्टम परिच्छेदः ( वर्गः ) तथा लक्ष्यरूपे कथानके सीतासंशोधन नाम एकविंशतितमः सर्गः ॥



# अथ द्वाविंशः सर्गः ।

ततो रामो हनूमन्तमुक्तवान्हृष्टमानसम् ।
अयोध्यां श्वः प्रयातासि कपे ! भरतपालिताम् ॥ १ ॥

अन्वय·—ततो रामो हृष्टमानसं हनूमन्तम् उक्तवान्—"हे कपे ! भरतपालिताम् अयोध्यां श्वः प्रयातासि ॥

व्याख्या—ततः = सीताशुद्ध्यनन्तरं, रामः = रामचन्द्रः, हृष्टमानसं = प्रसन्नचित्तं, स्वामिकार्यस्य निष्पादितत्वादिति भावः । हनूमन्तं = वायुपुत्रम्, उक्तवान् = अब्रवीत्, हे कपे = हे हनूमन्, भरतपालितां=भरतरक्षिताम्, अयोध्यां=साकेतपुरीं, श्वः =परेद्युः, प्रयातासि=गन्तासि ॥

&व्युत्पत्ति& हृष्टमानस = हृष्टं मानसं यस्य, तम् । प्रयातासि = प्रपूर्वात् "या प्रापणे" इति धातो· "अनद्यतने लुट्" इति लुट्, "स्यतासी लृलुटो·" इति तासिप्रत्ययः, "तासस्त्योर्लोपः" इति सलोप· ॥

❀भाषाऽर्थ❀ सीताजी की शुद्धि के अनन्तर रामचन्द्रजीने प्रसन्नचित्त हनूमान् जीको कहा—"हे हनूमन्! भरतसे रक्षित अयोध्याको तुम कल पहुचोगे ॥ १ ॥

गाधितासे नभो भूयः स्फुटन्मेघघटाऽऽवलि ।
ईक्षितासेऽम्भसा पत्यु पय. शिशिरशीकरम् ॥ २ ॥

अन्वय —( हे कपे ! ) भूय स्फुटन्मेघघटाऽऽवलि नभो गाधितासे । शिशिरशीकरम् अम्भसा पत्यु पय ईक्षितासे ॥

व्याख्या—( हे कपे ! ) भूय = पुनरपि, स्फुटन्मेघघटाऽऽवलि = विशीर्यमाणबलाहकवृन्दपङ्क्ति, नभ = आकाश, गाधितासे = प्रस्थातासे, "गाहितासे" इति मल्लिनाथसम्मत पाठस्तस्य प्रवेक्ष्यसीत्यर्थ । शिशिरशीकर = शीतलाऽम्बुकणम्, अम्भसा पत्यु =समुद्रस्य पय =जलम्, ईक्षितासे=द्रष्टासि ॥

❀व्युत्पत्ति❀ स्फुटन्मेघघटाऽऽवलि = स्फुटन्त्यो मेघघटावलयो यस्मिस्तत् । गाधितासे = "गाधृ प्रतिष्ठालिप्सयो." इत्यनुदात्तेतो धातोर्लुट् । "गाहितासे" इति पाठे "गाहू विलोडने" इति धातोर्लुट् । शिशिरशीकरं = शिशिरा' शीकरा यस्मिस्तत् । "शीकरोऽम्बुकणा' स्मृता" इत्यमर. ॥

❀भाषाऽर्थ❀ हे हनूमन्! फिर भी तुम अपने गतिवेगके वायुके आघातसे विशीर्यमाणमेघपङ्क्तियोंसे युक्त आकाशमे प्रस्थान करोगे और ठण्ढे जल कणोंसे युक्त समुद्र जलको देखोगे ॥ २ ॥

सेवितासे प्लवङ्ग ! त्वं महेन्द्राऽद्रेरधित्यकाः ।
व्युत्क्रान्तवर्त्मनो भानो' सहज्योत्स्नाकुमुद्वती· ॥ ३ ॥

अन्वय — हे प्लवङ्ग ! त्व भानो व्युत्क्रान्तवर्त्मन महेन्द्राऽद्रे सहज्योत्स्नाकुमुद्वती अधित्यका· सेवितासे ॥

व्याख्या—हे प्लवङ्ग = हे वानर !, त्वं, भानो = सूर्यस्य, व्युत्क्रान्तवर्त्मन· = अतिक्रान्तमार्गस्य, औन्नत्येनेति शेष । महेन्द्राऽद्रे = महेन्द्रपर्वतस्य सहज्योत्स्नाकुमुद्वती = चन्द्रिकायुक्तकुमुदप्राया, अधित्यका = पर्वतस्योर्ध्वभूमय सेवितासे = सेविष्यसे, अनुभावितासीति भाव ॥

❀व्युत्पत्ति❀ प्लवङ्ग=प्लवेन गच्छतीति प्लवङ्गस्तत्सम्बुद्धौ, "गमे सुपि वाच्य" इति खच्, "खच्चडिद्वावाच्य" इति डित्वाट्टिलोप. । डित्वाऽभावे "प्लवङ्गम" इति रूपम् । "कपिप्लवङ्गप्लवगशाखामृगवलीमुखा' ।" इत्यमर' । व्युत्क्रान्तवर्त्मन = व्युत्क्रान्तं वर्त्म येन स व्युत्क्रान्तवर्त्मा, तस्य । "भानो" इत्यनेन सापेक्षत्वेऽपि गमकत्वात्समास । वृत्तिविग्रहयो' समानप्रकारोपस्थितिजनकत्व गमकत्वम् । सहज्योत्स्नाकुमुद्वती· = ज्योत्स्नया सहिताः सहज्योत्स्ना., "तेन सहेति तुल्ययोगे"

इति बहुव्रीहि', "वोपसर्जनस्ये"ति वैकल्पिकत्वात्सभावाऽभाव । कुमुदानि सन्ति आसु ता इति कुमुद्वत्य., "कुमुदनडवेतसेभ्योड्मतुप्" इति ड्मतुप्, टिलोपः "मादु-पधायाश्च मतोर्वोऽयवादिभ्य" इति मस्य वकार.। "कुमुद्वान्कुमुदप्राये" इत्यमर । सहज्योत्स्ना' कुमुद्वत्यो यासु ता सहज्योत्स्नाकुमुद्वत्यस्ता । अधित्यका' = "उपा-धिभ्यां त्यकन्नासन्नारूढया" इति त्यकन्प्रत्यय "भूमेरूर्ध्वमधित्यका" इत्यमर.। सेवितासे = अनद्यतने लुट् ॥

ॐभाषाऽर्थ ॐ हे हनूमान् ! तुम सूर्यके मार्गका उल्लङ्घन करने वाले महेन्द्र पर्वत की चन्द्रिका ( चाँदनी ) से युक्त कुमुदपङ्क्तियोंसे सम्पन्न अधित्यकाओं ( पर्वतकी ऊर्ध्वभूमियों ) का अनुभव करोगे ॥ ३ ॥

चन्दनद्रुमसञ्छन्ना निराकृतहिमश्रथाः ।
दर्शितारस्त्वया ताश्च मलयोपत्यका. शुभाः ॥ ४ ॥

अन्वय.—( हे कपे ! ) चन्दनद्रुमसञ्छन्ना निराकृतहिमश्रथा शुभा ता मलयोपत्यकाश्च त्वया दर्शितार ॥

व्याख्या—( हे कपे ! ) चन्दनद्रुमसञ्छन्ना = मलयजवृक्षाच्छादिता., निराकृ-तहिमश्रथा = तिरोहितचन्द्रा , शुभा = शोभना , ता =पूर्वदृष्टा , मलयोपत्यकाश्च = मलयाऽऽसन्नभूमयश्च, त्वया=भवता, दर्शितार =श्वो द्रक्ष्यन्ते ॥

ॐव्युत्पत्ति ॐ चन्दनद्रुमसञ्छन्ना =चन्दनद्रुमै' सञ्छन्नाः। निराकृतहिमश्रथा' = हिमस्यश्रथो हिमश्रथः ( हिमसार' ) "श्रन्थ विमोचनप्रतिहर्षयो" इति धातो "अवोदैधौद्मप्रश्रथहिमश्रथा." इति श्रन्थेर्घञ्नलोपौ वृद्ध्यभावश्च । निराकृतो हिम-श्रथो याभिस्ता । मलयोपत्यका.=मलयस्योपत्यका, उपाधिभ्या त्यकन्नासन्नारू-ढयो." इति त्यकन्प्रत्यय , "उपत्यकाऽद्रेरासन्ना भूमि" इत्यमर' । दर्शितार.=दृश-धातो' कर्मणि लुट् "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशा वा चिण्व-दिट् चे"ति चिण्वदिटि रूपम् ॥

ॐभाषाऽर्थ ॐ हे हनूमन् ! चन्दनवृक्षोंसे आच्छादित, चन्द्रको तिरोहित करने वाली, सुन्दर पूर्वदृष्ट मलय पर्वतकी उपत्यकाओं ( आसन्न भूमियों ) को तुम कल देखोगे ॥ ४ ॥

प्रतन्व्यः कोमला विन्ध्ये सहितार स्यदं न ते ।
लता' स्तबकशालिन्यो मधुलेहिकुलाऽऽकुला. ॥ ५ ॥

अन्वय —( हे कपे ! ) विन्ध्ये प्रतन्व्य कोमला स्तबकशालिन्यो मधुलेहि कुलाऽऽकुला लता ते स्यद न सहितार ॥

व्याख्या—( हे कपे ! ) विन्ध्ये = विन्ध्यपर्वते, प्रतन्व्यः = अतिशयकृशा ,

कोमला = मृदुला , स्तबकशालिन्य = पुष्पगुच्छमनोहरा , मधुलेहिकुलाकुला = भ्रमरसमूहव्याप्ता , लता = वल्ल्य , ते = तव, स्यदं = वेगं, न सहितार = न सहिष्यन्ते, तनुत्वात्कोमलत्वात्स्तबकशालित्वाच्चेति भाव ॥

॥व्युत्पत्तिः॥ मधुलेहिकुलाऽऽकुला = मधु लिहन्तीति तच्छीला मधुलेहिनः, ताच्छील्ये णिनि । मधुलेहिना कुल, तेन आकुला. । स्यद = स्यन्दतेऽनेनेति स्यद , तम् । "स्यन्दू प्रस्रवणे" इति धातो "स्यदोजवे" इति घञ् नलोपो वृद्ध्यभावश्च निपात्यते, "रहस्तरसी तु रय स्यद. जव" इत्यमर । सहितारः = "षह मर्षण" इति धातोर्लुट्। "तीषसहलुभरुषरिष" इति विकल्पादिडागम ॥

॥भाषाऽर्थ॥ हे हनूमान् ! विन्ध्य पर्वतमें अतिशय कृश, कोमल, फूलोंकी गुच्छोंसे मनोहर और भ्रमरसमूहसे व्याप्त लताएँ तुम्हारे वेगको नहीं सहेंगी ॥ ५ ॥

द्रष्टासि प्रीतिमानारात्सखिभिः सह सेविताम् ।
सपक्षपातं किष्किन्धां पूर्वक्रीडा स्मरन्मुहुः ॥ ६ ॥

अन्वयः—( हे कपे ! ) सखिभि सह सेविता किष्किन्धा मुहु पूर्वक्रीडा च सपक्षपात स्मरन् प्रीतिमान् ( सन् ) आरात् द्रष्टासि ॥

व्याख्या—( हे कपे ! सखिभि =सुहृद्भि , सह = समं, सेविताम् = अनुभूता, किष्किन्धा = किष्किन्धाऽऽख्या गुहा, मुहु = वार वारं, पूर्वक्रीडाम् = अत्र अत्र एव क्रीडितमिति, सपक्षपात = साऽनुराग यथा, स्मरन् = स्मरणं कुर्वन् , प्रीतिमान्= प्रीतियुक्त सन् , आरात् = दूरे समीपे वा, द्रष्टासि=द्रक्ष्यसि ॥

॥व्युत्पत्ति॥ किष्किन्धां = किमपि धत्त इति किष्किन्धा, ताम् । आतोऽनुपसर्गे क" इति क' टाप् निपातनात्किमो द्वित्व मलोप. "पारस्करप्रभृतीनि च सज्ञायाम्" इति नाम्नि ससुट्को निपात , षत्व च । सपक्षपात = पक्षपातेन सहित यथा तथेति क्रियाविशेषणम् । आरात् = "आराद्दूरसमीपयो " इत्यमर' । द्रष्टासि = "दृशिर् प्रेक्षण" इति धातोर्लुट् , "सृजिदृशोर्झल्यमकिति" इत्यमागम' ॥

॥भाषाऽर्थ॥ हे हनूमन् ! मित्रोंके साथ अनुभूत किष्किन्धाको और वारवार पहले की क्रीडाको भी अनुरागके साथ स्मरण करते हुए प्रीतिमान् होकर दूरसे वा समीपमें देखोगे ॥ ६ ॥

त्वया सन्दर्शितारौ ते माल्यवद्दण्डकावने ।
उपद्रुतश्चिर द्वन्द्वैर्ययोः क्लिशितवानहम् ॥ ७ ॥

अन्वयः—( हे कपे ! ) ते माल्यवद्दण्डकावने त्वया सन्दर्शितारौ, ययो• अहं चिरं द्वन्द्वै उपद्रुत ( सन् ) क्लिशितवान् ॥

व्याख्या—( हे कपे ! ) ते = पूर्वाऽनुभूते, माल्यवद्दण्डकावने = माल्यवत्पर्व-

तदण्डकाऽरण्ये, त्वया = भवता, सन्दर्शितारौ = सद्रक्ष्येते । ययो = पर्वतवनयो, अह, चिरं = बहुकाल, द्वन्द्वै = शीतोष्णादिदु खै, उपद्रुत = अभिभूत सन्, क्लिशितवान् = क्लेशमनुभूतवान् ॥

॥व्युत्पत्ति॥ माल्यवद्दण्डकावने = माल्यवांश्च दण्डकावन च । सन्दर्शितारौ = सपूर्वकात् दृशे कर्मणि लुटि चिण्वदिटि च "लुट प्रथमस्य डारौरस." इत्यातामो रावादेश. । द्वन्द्वै = "द्वन्द्व युग्म हिमोष्णादिमिथुन कलहे रह' ।" इति यादव । क्लिशितवान्="क्लिश उपतापे" इति धातो क्तवतुप्रत्यय., "क्लिश क्त्वानिष्ठयो" इति विकल्पादिट्, किरवान्न गुण. ॥

॥भाषाऽर्थ॥ हे हनूमन् ! पहले अनूभूत माल्यवान् पर्वत और दण्डकारण्यको तुम देखोगे, जिनमे मै बहुत समय तक शीत उष्ण आदि दु खोंसे अभिभूत होकर पीडित हुआ ॥ ७ ॥

आप्तारौ भवता रम्यावाश्रमौ हरिणाऽऽकुलौ ।
पुण्योदकद्विजाऽऽकीर्णौ सुतीक्ष्णशरभङ्गयो ॥ ८ ॥

**अन्वय.**—( हे कपे ! ) भवता रम्यौ हरिणाऽऽकुलौ पुण्योदकद्विजाकीर्णौ सुतीक्ष्णशरभङ्गयो आश्रमौ आप्तारौ ॥

**व्याख्या**—( हे कपे ! ) भवता = त्वया, रम्यौ = सुन्दरौ, हरिणाऽऽकुलौ = मृगव्याप्तौ, पुण्योदकद्विजाऽऽकीर्णौ = पवित्रजलब्राह्मणव्याप्तौ, सुतीक्ष्णशरभङ्गयो = तदाख्ययोर्मुन्यो, आश्रमौ = तपोवनवासस्थाने, आप्तारौ = प्राप्स्येते ॥

॥व्युत्पत्ति॥ पुण्योदकद्विजाऽऽकीर्णौ = पुण्यमुदक ययोस्तौ पुण्योदकौ । द्विजै. आकीर्णौ द्विजाकीर्णौ । पुण्योदकौ च तौ द्विजाकीर्णौ । आप्तारौ = आप्नोते कर्मणि लुट्, तास्यातामो रावादेश. ॥

॥भाषाऽर्थ॥ हे हनूमानूजी ! तुम सुन्दर, मृगोंसे व्याप्त, पुण्यजलवाले तथा ब्राह्मणोंसे व्याप्त सुतीक्ष्ण और शरभङ्ग मुनिके आश्रमोंको प्राप्त होगे ॥ ८ ॥

अतिक्रान्ता त्वया रम्य दु खमत्रेस्तपोवनम् ।
पवित्रचित्रकूटेऽद्रौ त्व स्थातासि कुतूहलात् ॥ ९ ॥

**अन्वय**—( हे कपे ! ) त्वया रम्यम् अत्रे तपोवनम् दु खन् अतिक्रान्ता । त्वं पवित्रचित्रकूटे अद्रौ कुतूहलात् स्थातासि ॥

**व्याख्या**—( हे कपे ! ) त्वया = भवता, रम्यं = सुन्दरम्, अत्रे = तदाख्यस्य मुने, तपोवन = तप स्थान, दु ख=कष्ट यथा तथा, अतिक्रान्ता = यास्यते, अतिरमणीयत्वादिति भाव । त्व=हनूमान्, पवित्रचित्रकूटे = प्रयते चित्रकूटाऽऽख्ये,

अद्रौ=पर्वते, कुतूहलात्=कौतुकात्, अद्भुतदर्शनरयेति शेष । स्थातासि=स्थास्यसि ॥

॥व्युत्पत्ति ॥ अतिक्रान्ता = अतिपूर्वकात् "क्रमु पादविक्षेपे" इति धातो कर्मणि लुट् "स्नुक्रमोरनात्मनेपदनिमित्ते" इत्यात्मनेपदे इट् प्रतिषेध । स्थातासि = स्था-धातोर्लुट् ॥

॥भाषाऽर्थ ॥ हे हनुमान् जो ! तुम अत्रिके सुन्दर तपोवनको दुःखके साथ लङ्घन करोगे। तुम पवित्र चित्रकूट पर्वतमे कौतुकसे रहोगे ॥ ९ ॥

ततः परं भरद्वाजो भवता दर्शिता मुनिः ।
द्रष्टारश्च जना पुण्या यमुनाऽम्बुक्षताऽहसः ॥ १० ॥

अन्वयः—तत परं भवता भरद्वाजो मुनिः दर्शिता, यमुनाऽम्बुक्षताऽहस पुण्या जनाश्च द्रष्टार ॥

व्याख्या—तत = चित्रकूटदर्शनात्, परम् = अनन्तर, भवता = त्वया, भरद्वाज = तन्नामक, मुनि = ऋषि, दर्शिता = द्रक्ष्यते । यमुनाऽम्बुक्षताऽहस = कालिन्दीजलसेवालुप्तपापा, अतएव पुण्या = पवित्रा, जनाश्च = लोकाश्च, द्रष्टार = द्रक्ष्यन्ते ॥

॥व्युत्पत्ति ॥ दर्शिता = दृशे कर्मणि लुटि तासि चिण्वदिट् । यमुनाऽम्बुक्षताऽहस = यमुनाया अम्बुना क्षतम् अहो येषा ते । "कालिन्दी सूर्यतनया यमुना शमन स्वसा ।" इत्यमरः । द्रष्टार = दृशे कर्मणि लुटि चिण्वदिडभावपक्षे रूपम् ॥

॥भाषाऽर्थ ॥ हे हनूमन् ! चित्रकूट दर्शनके अनन्तर तुम भरद्वाज मुनिको देखोगे और यमुनाजलकी सेवासे निष्पाप पवित्र जनोंको भी देख लोगे ॥ १० ॥

स्यन्त्वा स्यन्त्वा दिवः शम्भोर्मूर्ध्नि स्कन्त्वा भुव गताम् ।
गाहितासेऽथ पुण्यस्य गङ्गां मूर्तिमिव द्रुताम् ॥ ११ ॥

अन्वयः—अथ दिव स्यन्त्वा स्यन्त्वा शम्भो मूर्ध्नि स्कन्त्वा भुवं गता द्रुता पुण्यस्य मूर्तिम् इव गङ्गा गाहितासे ॥

व्याख्या—अथ = भरद्वाजदर्शनाऽनन्तरं, दिव = स्वर्गात्, स्यन्त्वा स्यन्त्वा= पुन पुन स्यन्दित्वा, स्रुत्वा स्रुत्वेत्यर्थ । शम्भो = महादेवस्य, मूर्ध्नि=शिरसि, स्कन्त्वा= गत्वा, पतित्वेत्यर्थः । भुवं = क्षिति, गता = प्राप्ता, द्रुता=द्रवरूपेण स्थिता, पुण्यस्य= धर्मस्य, मूर्तिम् इव = कायम् इव, स्थितामिति शेषः । एतादृशी गङ्गा = भागीरथी, गाहितासे = गाहिष्यसे ॥

॥व्युत्पत्तिः॥ स्यन्त्वा स्यन्त्वा = "स्यन्दू प्रस्रवण" इति धातोः "आभीक्ष्ण्ये णमुल् चे"ति चकारादाभीक्ष्ण्ये क्त्वाप्रत्यय "नित्यवीप्सयोः" इति द्वित्वम् । पौनः

पुन्य भृशाऽर्थो वा आभीक्ष्ण्यम् । स्कन्त्वा = "स्कन्दिर् गतिशोषणयो." इति धातोः क्त्वा "क्त्वि स्कन्दिस्यन्दो " इत्युभयत्र नलोपप्रतिषेध । मूर्ति = "मूर्तिः काठिन्य काययो " इत्यमर. । गाहितासे = "गाहू विलोडन" इति धातोर्लुट् ॥

ॐभाषाऽर्थःॐ हे हनूमन् ! भरद्वाज मुनिके दर्शनके अनन्तर स्वर्गसे बारवार बहकर महादेवजीके शिरमे गिरकर पृथ्वीमें प्राप्त, द्रवरूपसे विद्यमान पुण्यकी मूर्तिकी सदृश गङ्गाजीमें प्रवेश करोगे ॥ ११ ॥

तमसाया महानीलपाषाणसदृशत्विषः ।
वनाऽन्तान् बहु मन्तासे नागराऽऽक्रीडसाक्षिणः ॥ १२ ॥

अन्वयः—( हे कपे ! ) महानीलपाषाणसदृशत्विष· तमसाया· नागराऽऽक्रीडसाक्षिणो वनाऽन्तान् बहु मन्तासे ॥

व्याख्या—( हे कपे ! ) महानीलपाषाणसदृशत्विष· = इन्द्रनीलशिलातुल्यकान्ते , तमसाया = तमसानद्या , नागराऽऽक्रीडसाक्षिण = पौरविहारद्रष्टॄन् वनाऽन्तान् = अरण्यप्रदेशान् , बहु = अधिक यथा तथा, मन्तासे = मस्यसे ॥

ॐव्युत्पत्ति ॐ महानीलपाषाणसदृशत्विष·, = महानीलपाषाणेन सदृशी त्विट् यस्याः सा महानीलपाषाणसदृशत्विट् , तस्या । नागराक्रीडसाक्षिण· = नगरे भवा नागरा , "तत्र भव" इत्यण् । आक्रीडनमाक्रीड·, भावे घञ् । तस्य साक्षिणस्तान् । मन्तासे = "मन ज्ञाने" इति धातोर्लुट् । थासः "थास· से" इति से भाव , "तासस्त्योर्लोप " इति सलोप ॥

ॐभाषाऽर्थ ॐ हे हनूमन् ! इन्द्रनीलशिलाकी सदृश कान्तिवाली तमसा नदीके पौरोंकी क्रीडाके साक्षी वनप्रदेशोंको तुम अधिकरूपसे जानोगे ॥ १२ ॥

नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जराम् ।
विलोक्य सरयूं रम्या गन्ताऽयोध्या त्वया पुरी ॥ १३ ॥

अन्वय —( हे हनूमन् ! ) नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जरा रम्या सरयूं विलोक्य त्वया अयोध्यापुरी गन्ता ॥

व्याख्या—( हे हनूमन् ! ) नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जरा = पुरनारीपयोधरप्रक्षिप्तप्रक्षालितकेशरपीता, रम्या = रमणीया, सरयू = सरयूनदी विलोक्य = दृष्ट्वा, त्वया = भवता, अयोध्या = अयोध्याख्या, पुरी = नगरी, गन्ता = गस्यते ॥

ॐव्युत्पत्ति ॐ नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जरा = नगरस्त्रीणां स्तनेषु प्राङ् न्यस्ता पश्चाद्धौता·, न्यस्तधौता , "पूर्वकालैकसर्वजरत्पुराणनवकेवला· समानाधिकरणेने"ति समास· । एतादृशा ये कुङ्कुमास्तै पिञ्जरा, ताम् । गन्ता = "गम्लृ गतौ" इति धातो· कर्मणि लुट् ॥

***भाषाऽर्थ*** हे हनूमान्‌जी ! अयोध्याकी स्त्रियोंके पयोधरोंमे पहले रक्खे गये पीछे धोये गये केशरोंसे पीली और रमणीय सरयूको देखकर तुम अयोध्या नगरीको जाओगे ॥ १३ ॥

आनन्दितारस्त्वा दृष्ट्वा प्रष्टारश्चावयोः शिवम् ।
मातरः सह मैथिल्या तोष्टा च भरतः परम् ॥ १४ ॥

**अन्वय**—( हे हनूमन् ! ) मातरः त्वा दृष्ट्वा आनन्दितारः, मैथिल्या सह आवयोः शिवं प्रष्टारश्च, भरतश्च परं तोष्टा ॥

**व्याख्या**—( हे हनूमन् ! ) मातरः = जनन्यः, कौशल्यादयः इत्यर्थः । त्वा= भवन्तं, दृष्ट्वा = विलोक्य, आनन्दितारः = आनन्दिष्यन्ति । मैथिल्या = जानक्या, सीतयेत्यर्थः । सह = समम्, आवयोः = रामलक्ष्मणयोः, शिवं = कल्याण, प्रष्टारश्च= प्रक्ष्यन्ति च, भरतश्च = कैकेयीसूनुश्च, परम् = अत्यर्थम्, तोष्टा = सन्तोक्ष्यति ॥

***व्युत्पत्तिः*** आनन्दितारः=आङ्पूर्वकात् "टुनदि समृद्धौ" इति धातोर्लुट् । मैथिल्या=सहपदेन योगे "सहयुक्तेऽप्रधाने" इति तृतीया । प्रष्टारः="प्रच्छ ज्ञीप्सायाम्" इति धातोर्लुट् । तोष्टा="तुष प्रीतौ" इति धातोर्लुट् ॥

***भाषाऽर्थ*** हे हनूमान्‌जी ! कौशल्या आदि माताएँ तुम्हें देखकर आनन्दित होंगी और सीताके साथ हम दोनों भाइयोंका कुशल पूछेंगी एवम् भाई भरत भी अतिशय सन्तुष्ट होंगे ॥ १४ ॥

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम् ।
सुग्रीवं चाऽर्जितं मित्रं सर्वांश्चाऽऽगामुकान् द्रुतम् ॥ १५ ॥

**अन्वय**—( हे हनूमन् ! ) शत्रुं हतं, विभीषणम् अभिषिक्तं सुग्रीवं च अर्जितं मित्रं सर्वांश्च द्रुतम् आगामुकान् आख्यातासि ॥

**व्याख्या**—( हे हनूमन् ! ) शत्रुं = रिपुं, रावणमित्यर्थः । हतं = व्यापादितं, विभीषणं = रावणाऽनुजम्, अभिषिक्तं = लङ्काराज्ये कृताऽभिषेकं, सुग्रीवं च = कपिराजं च, अर्जितम् = उपार्जितं, मित्रं=सखायं, सर्वांश्च = सकलानस्माश्च, द्रुतं = शीघ्रम्, आगामुकान् = आगन्तॄन्, आख्यातासि=आख्यास्यसि, सर्वमेतत्त्वया आख्यातव्यमिति भावः ॥

***व्युत्पत्तिः*** आगामुकान्=आगमनशीला आगामुकास्तान् आङ्पूर्वकात् गम्लृधातोः "लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्" इत्युकञ्प्रत्ययः । आख्यातासि= आङ् पूर्वकात् "ख्या प्रकथने" इति धातोर्लुट् ॥

***भाषाऽर्थ*** हे हनूमान्‌जी ! तुम "शत्रु रावण मारा गया है, विभीषण लङ्काके

राज्यमे अभिषिक्त किये गये हैं, सुग्रीव हमारे उपार्जित मित्र हुए हैं और हम सब लोग शीघ्र आने वाले है" ऐसा कहोगे ॥ १५ ॥

गन्तारः परमा प्रीति पौरा· श्रुत्वा वचस्तव ।
ज्ञात्वैतत्सम्मुखीनश्च समेता भरतो ध्रुवम् ॥ १६ ॥

अन्वयः—पौरा तव वच श्रुत्वा परमा प्रीतिं गन्तार । एतत् ज्ञात्वा भरतश्च द्रुत सम्मुखीन ( सन् ) ध्रुव समेता ॥

व्याख्या—( हे हनूमन् ! ) पौरा = नागरिकजना , तव = भवत , वच = वचन, श्रुत्वा = आकर्ण्य, परमाम् = उत्कृष्टा, प्रीतिं = प्रसन्नता, गन्तार = गमिष्यन्ति । एतत् = इद, वृत्तमित्यर्थ । ज्ञात्वा=विदित्वा, भरतश्च = कैकेयीसूनुश्च, द्रुतं = शीघ्र, सम्मुखीन = अभिमुखः सन् , ध्रुवम् = असशय, समेता = समागमिष्यति ॥

॥व्युत्पत्ति॥ सम्मुखीन = सर्वस्य मुखस्य दर्शन , "यथामुखसम्मुखस्य दर्शनः ख" इति खप्रत्यय । समेता = समाङ् पूर्वादिण· कर्तरि लुट् ॥

॥भाषाऽर्थ॥ हे हनूमानूजी ! नागरिक लोग तुम्हारा वचन सुन कर अतिशय प्रीतिको प्राप्त करेंगे । यह सब जान कर भरत भी शीघ्र सम्मुखवर्ती होते हुए निश्चय आयेगे ॥ १६ ॥

गते त्वयि पथाऽनेन वयमप्यंहितास्महे ।
लब्धाहेऽहं धृतिं प्राप्ते भूयो भवति सम्मुखे ॥ १७ ॥

अन्वय.—( हे हनूमन् ! ) अनेन पथा त्वयि गते वयम् अपि अंहितास्महे भूयो भवति समुखे प्राप्ते अहं धृति लब्धाहे" ॥

व्याख्या—( हे हनूमन् ! ) अनेन = उक्तेन, पथा = मार्गेण त्वयि = भवति, गते = याते सति, वयम् अपि = रामादय अपि, अंहितास्महे=गमिष्याम· भूय = पुनरपि, भवति = त्वयि, सम्मुखे=अभिमुखे, प्राप्ते = आसादिते, अहं धृतिं = सन्तोष, लब्धाहे = लप्स्ये ॥

॥व्युत्पत्ति॥ अंहितास्महे="अहि गतौ" इति धातोर्लुट्, महिङि तासि टेरेत्वम्, इदित्वात् "इदितो नुम् धातो" इति नुम् च । लब्धाहे="डुलभष् प्राप्तौ" इति धातोर्लुटि टे "टित आत्मनेपदाना टेरे" इति एत्वे "ह एति" इति तासि सकारस्य हकार· "झषस्तथोर्धोऽध" इति तस्य धत्वम् ॥

॥भाषाऽर्थ॥ हे हनुमानूजी ! इस मार्गसे तुम्हारे जाने पर हमलोग भी जाएगे फिर तुम्हारे सम्मुखवर्ती होने पर मैं सन्तोष को प्राप्त करूगा" ॥ १७ ॥

गते तस्मिन्गृहीताऽर्थे राम' सुग्रीवराक्षसौ ।
उक्तवान् श्वोऽभिगन्तास्थो युवा सह मया पुरम् ॥ १८ ॥

**अन्वय.**—तस्मिन् गृहीताऽर्थे गते ( सति ) राम सुग्रीवराक्षसौ उक्तवान्—"युवा मया सह श्व पुरम् अभिगन्तास्थ ।

**व्याख्या**—तस्मिन् = हनूमति, गृहीताऽर्थे = अवधृतकार्यार्थे, गते = प्रस्थिते सति, राम = रामचन्द्र , सुग्रीवराक्षसौ = सुग्रीवविभीषणौ, उक्तवान् = अब्रवीत् , युवा = सुग्रीवविभीषणौ, मया = रामेण, सह = समं, श्व = परेऽह्नि, पुर = नगरीम् , अयोध्यामिति भाव । अभिगन्तास्थ = अभिगमिष्यथ ॥

**※व्युत्पत्ति※ मया = सहयोगे तृतीया । अभिगन्तास्थ' = अभिपूर्वकाद्गमेर्लुटि थसि तासिप्रत्यय. ॥**

**※भाषाऽर्थ'※ कार्याऽर्थको लेकर हनूमान् जी के जानेपर रामचन्द्रजीने सुग्रीव और विभीषणको कहा—"तुम दोनों मेरे साथ कल अयोध्यापुरीको जाओगे ॥ १८ ॥**

द्रष्टास्थस्तत्र तिस्रो मे मातॄस्तुष्टाऽन्तराऽऽत्मन. ।
अत्यन्तीनं सखित्व च प्राप्तास्थो भरताऽऽश्रयम् ॥ १९ ॥

**अन्वय.**—तत्र तुष्टाऽन्तराऽऽत्मन' तिस्रो मे मातॄ द्रष्टास्थ , भरताऽऽश्रयम् अत्यन्तीनं सखित्व च प्राप्तास्थ ॥

**व्याख्या**—तत्र = तस्याम्, अयोध्यानगर्यामिति भाव । तुष्टाऽन्तराऽऽत्मन.= प्रसन्नमानसा , तिस्र = त्रिसंख्यका , मे = मम, मातॄ = जननी , कौसल्याकेकयी सुमित्रा इत्यर्थ । द्रष्टास्थ = द्रक्ष्यथ । भरताऽऽश्रय = भरतविषयम् , अत्यन्तीनम्= आत्यन्तिक, सखित्व च = सख्य च, प्राप्तास्थ = प्राप्स्यथ ॥

**※व्युत्पत्ति※ तुष्टाऽन्तराऽऽत्मन =तुष्ट अन्तरात्मा यासाता तुष्टाऽन्तराऽऽत्मानस्ता । मातॄ =ऋदन्तत्वात्स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप" इति ङीपि प्राप्ते "न षट्स्वस्रादिभ्य" इति निषेध । द्रष्टास्थ'=दृशे. कर्तरि लुटि थसि तास् "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशा ष" इति षत्व च "सृजिदृशोर्झल्यमकिति" इत्यमागमश्च । भरताश्रय = भरत आश्रयो यस्य तत् भरताऽऽश्रय तत् । अत्यन्तीनम् = अत्यन्त गामि अत्यन्तीन, तत् "अवारपाराऽत्यन्ताऽनुकाम गामी" इति खप्रत्यय. । सखित्वं = सख्युर्भाव' सखित्व, तत् , त्वप्रत्यय । प्राप्तास्थ' = प्रपूर्वकादाप्नोतेर्लुटि थसि तास् ॥**

**※भाषाऽर्थ※ वहां पर सन्तुष्टचित्त मेरी तीन माताओं ( कौसल्या, कैकेयी और सुमित्रा ) को देखोगे और भरतविषयक आत्यन्तिक मित्रताको भी प्राप्त करोगे ॥१९॥**

युग्मम्—

नैव विरहदु खेन वय व्याघानितास्महे ।
श्रमोऽनुभाविता नैवं भवद्भ्या च वियोगजः ॥ २० ॥
एव युवां मम प्रीत्यै कल्प्तास्थ' कपिराक्षसौ ! ।
गन्तुं प्रयतितासाथे प्रात सह मया यदि ॥ २१ ॥

अन्वयः—हे कपिराक्षसौ ! प्रात मया सह गन्तु प्रयतितासाथे यदि, एव वय विरहदु खेन न व्याघानितास्महे, एव भवद्भ्या च वियोगज श्रम न अनुभाविता, एव युवा मम प्रीत्यै, कल्प्तास्थ" ॥

व्याख्या—हे कपिराक्षसौ = हे वानरयातुधानौ, सुग्रीवविभीषणावित्यर्थ । प्रात = प्रभाते, मया = रामेण सह = सम, गन्तु = यातु, प्रयतितासाथे यदि = प्रयतिष्येथे चेत् , एवम् = इत्थ, वय = सुहृद , विरहदु खेन = भवद्वियोगव्यथया, न व्याघानितास्महे = नो व्याहनिष्यामहे । एवम् = अनेन प्रकारेण, भवद्भ्या च = युवाभ्या च, सुग्रीवविभीषणाभ्याम् इत्यर्थ । वियोगज. = अस्मद्विरहजन्य , श्रम = क्लेश , न अनुभाविता = न अनुभविष्यते । एवम् = इत्थं, युवा = सुग्रीवविभीषणौ, मम = रामस्य, प्रीत्यै = सन्तोषाय, कल्प्तास्थ = कल्पिष्येथे, सपत्स्येथे इत्यर्थ ॥

*व्युत्पत्ति.* प्रयतितासाथे = प्रपूर्वकात् "यती प्रयत्ने" इति धातोर्लुट्, तासिप्रत्यय' । व्याघानितास्महे = व्याङ् पूर्वकात् "हन हिसागत्यो." इति धातो. कर्मणि लुटि तासिचिण्वदिटि वृद्धि. "हो हन्तेर्ञ्णिन्नेषु" इति हकारस्य घत्व च । "सयोजितास्महे" इति पाठान्तर तत्र सयोजिता भवितास्म इत्यर्थं, युजेर्ण्यन्तस्य चिण्वदिट्, इटोऽसिद्धत्वात् 'णेरनिटि' इति णिलोप । अनुभाविता=अनुपूर्वाद्भूधातो. कर्मणि लुटि पूर्ववत्तासि, चिण्वदिटि वृद्धिश्च । प्रीत्यै = कृपूधातोर्योगे "क्लृपि सपद्यमाने चे"ति चतुर्थी । कल्प्तास्थ. = "कृपू सामर्थ्ये" इति धातोर्लुट् तत्र "लुटि च क्लृप." इति वैकल्पिक परस्मैपदं "तासि च क्लृप" इतीट्प्रतिषेध "कृपो रोल" इति रेफस्य लत्व, लपरो लघूपधगुण ॥

*भाषाऽर्थ॥ हे सुग्रीवविभीषण ? प्रात कालमें आप लोग मेरे साथ जानेके लिए प्रयत्न करेंगे तो ऐसे हम लोग आप लोगोंके वियोगके दु खसे पीडित नहीं होंगे, इस प्रकारसे आप दोनों मेरे सन्तोषके लिये सपन्न होंगे ॥ २० ॥ २१ ॥

उक्तवन्तौ ततो रामं वच पौलस्त्यवानरौ ।
अनुग्रहोऽय काकुत्स्थ ! गन्तास्वो यत्त्वया सह ॥ २२ ॥

अन्वय.—तत पौलस्त्यवानरौ राम वच उक्तवन्तौ—"हे काकुत्स्थ" त्वया सह यत् गन्तास्व अयम् अनुग्रह ॥

व्याख्या—तत = रामवाक्याऽनन्तर, पौलस्त्यवानरौ=विभीषणसुग्रीवौ, राम= रामचन्द्र, वच = वचनम् , उक्तवन्तौ = अगदताम् , किमिति—हे काकुत्स्थ = हे राम !, त्वया = भवता, सह = समं, यत् , गन्तास्व = गमिष्याव , अयम् = एष , अनुग्रह = प्रसाद , भवत इति शेष ॥

❀व्युत्पत्ति ❀ गन्तास्व = गमेर्लुट् ॥

❀भाषाऽर्थ ❀ रामचन्द्रजीके वाक्यके अनन्तर विभीषण और सुग्रीवने रामचन्द्रजीको ऐसा वचन कहा—"हे राम ! आपके साथ जो हम दोनों जायेंगे यह आपका अनुग्रह है ॥ २२ ॥

अनुमन्तास्वहे नाऽऽवां भवन्त विरहं त्वया ।
अपि प्राप्य सुरेन्द्रत्वं किं नु प्रत्त त्वयाऽऽस्पदम् ॥ २३ ॥

अन्वय —( हे राम ! ) सुरेन्द्रत्व प्राप्य अपि आवा भवन्त त्वया विरह न अनुमन्तास्वहे, त्वया प्रत्तम् आस्पद किमु ?" ॥

व्याख्या—( हे राम ! ) सुरेन्द्रत्व = देवेन्द्रत्वं, प्राप्य = आसाद्य अपि,आवा= विभीषणसुग्रीवौ, भवन्तम् = उत्पद्यमान, त्वया = भवता सह, विरहं = वियोग, न अनुमन्तास्वहे=न अनुमस्यावहे, त्वया = भवता, प्रत्त=दत्तम् , आस्पद = प्रतिष्ठा, किमु = किं वक्तव्यम् , भवन्त विना स्वाराज्यमपि नाऽस्माकमभिमतं किमुत पदार्थान्तरमिति भाव ॥

❀व्युत्पत्ति.❀ भवन्त विरहमिति वर्तमानकालस्य न अनुमन्तास्वहे इति भविष्यत्कालेन सह सम्बन्धे "धातुसम्बन्धे प्रत्यया" इति साधुत्वम् । अनुमन्तास्वहे= अनुपूर्वकान्मन धातोर्लुट । प्रत्त = प्रपूर्वकाद्दाधातोः क्तप्रत्यय "अच उपसर्गात्त" इति दस्य तकारादेश । आस्पदम्="आस्पद प्रतिष्ठायाम्" इति निपातनात्सुडागम । इति लुड्विलास ॥

❀भाषाऽर्थ ❀ हे राम ! इन्द्रपदको प्राप्त करके भी हम दोनों आपके साथ होनेवाले वियोगका अनुमोदन नही करते हैं, आपसे दिये गये राज्यकी क्या बात? ॥२३॥

अथ सर्गाऽवसाने छन्दोन्तरेण प्रकीर्णकक्रियाविलसित दर्शयति—

तत. कथाभिः समतीत्य दोषामारुह्य सैन्यै सह पुष्पक ते ।
सम्प्रस्थिता वेगवशादगाधं प्रक्षोभयन्त सलिल पयोधे ॥ २४ ॥

अन्वय —तत ते कथाभि दोषा समतीत्य सैन्यै सह पुष्पकम् आरुह्य वेगवशात् अगाध पयोधे सलिल प्रक्षोभयन्त ( सन्त ) सम्प्रस्थिता ॥

व्याख्या—तत = सवादाऽनन्तरं, ते=श्रीरामसुग्रीवविभीषणादयः, कथाभि =

इष्टालापै दोषा = रात्रिं, समतीत्य = नीत्वा यापयित्वेति भाव । सैन्यैः = सैनिकैः, सह = सम, पुष्पक = पुष्पकविमानम् , आरुह्य = आरोहण कृत्वा, वेगवशात्=जव-वशात् , पुष्पकवेगवाताहतिबलादित्यर्थ । अगाधम्=अतलस्पर्शं, पयोधे =समुद्रस्य, सलिलं = जलं प्रक्षोभयन्त = प्रक्षुब्ध कुर्वन्त सन्त , संप्रस्थिता =अयोध्या प्रति प्रस्थान कृतवन्त इत्यर्थ· ॥

**ॐव्युत्पत्ति·ॐ** अगाधम् = "अगाधमतलस्पर्शे" इत्यमर· । पयोधेः = पयांसिधीयन्ते अत्र पयोधिस्तस्य, "कर्मण्यधिकरणे चे"ति किप्रत्यय· । उपजातिवृत्तम् ॥

**ॐभाषाऽर्थ ॐ** सवादके अनन्तर श्रीरामचन्द्र, सुग्रीव और विभीषण आदिने अनेक आभाषणोंसे रात विताकर सैनिकोंके साथ पुष्पक विमानपर चढ़कर वेगवश अत्यन्त गम्भीर समुद्र जलको प्रक्षुब्धकर प्रस्थान किया ॥ २४ ॥

**सेतु महेन्द्र मलय सविन्ध्य समाल्यवन्त गिरिमृष्यमूकम् ।**
**सदण्डकाऽरण्यवतीं च पम्पा राम प्रियाया· कथयन् जगाम ॥ २५ ॥**

**अन्वयः—**राम सेतु महेन्द्र सविन्ध्य मलय समाल्यवन्तम् ऋष्यमूक गिरिम् दण्डकाऽरण्यवती पम्पा च प्रियाया कथयन् जगाम ॥

**व्याख्या—**स = प्रसिद्ध , राम· = रामचन्द्र , सेतुम्=आलिं, महेन्द्र=तदाख्यं पर्वत, सविन्ध्य = विन्ध्यसहित, मलय = मलयपर्वत, समाल्यवन्तं=माल्यवत् पर्वतसहितम् , ऋष्यमूकम् = ऋष्यमूकनामक, गिरिं=पर्वतम् । दण्डकाऽरण्यवती = दण्डकारण्यसहिता, पम्पा च = तदाख्य सरश्च, प्रियाया =सीताया , कथयन् = वर्णयन् , जगाम-गत ॥

**ॐव्युत्पत्ति ॐ** सविन्ध्य = विन्ध्येन सहित सविन्ध्यस्तम् , तुल्ययोगबहुव्रीहि । उपजातिवृत्तम् ॥

**ॐभाषाऽर्थ ॐ** श्रीरामचन्द्रजीने सेतु, महेन्द्रपर्वत, विन्ध्यपर्वत, मलयपर्वत, माल्यवान् पर्वत, ऋष्यमूक पर्वत, दण्डकाऽरण्य और पम्पाका भी सीताजीसे वर्णन करते हुए गमन किया ॥ २५ ॥

**एते ते मुनिजनमण्डिता दिगन्ता शैलोऽय ललितवन स चित्रकूट· ।**
**गङ्गेय सुतनु ! विशालतीररम्या मैथिल्या रघुतनयो दिशन्ननन्द ॥ २६ ॥**

**अन्वयः—**"हे सुतनु ! एते ते मुनिजनमण्डिता दिगन्ता । अय स ललितवन· चित्रकूट शैल । विशालतीररम्या इय गङ्गा (इति) "मैथिल्या दिशन् रघुनन्दनो ननन्द ॥

**व्याख्या—**हे सुतनु = हे सुगात्रि !, सीते इत्यर्थ , एते=परिदृश्यमाना , ते= पूर्वाऽनुभूता , मुनिजनमण्डिता = ऋषिजनाऽलङ्कृता , दिगन्ता =आशाभागा ।

अय = संनिकृष्टस्थ , स॰ = पूर्वाऽनुभूत॰, लुलितवन =क्षुब्धाऽरण्य , अस्मद्वेगवशा-दिति शेष । "स्थगितपथ" इति मल्लिनाथसम्मत पाठस्तस्य आच्छादितमार्ग इत्यर्थ । क्वचिच्च "ललितवन" इति पाठान्तर तस्य सुन्दराऽरण्य इत्यर्थ । चित्र-कूटनामा, शैल॰ = पर्वत । विशालतीररम्या = महातटरमणीया, "विशालतीर्थ-रम्ये"ति मल्लिनाथसम्मत पाठ । इय = निकटस्था, गङ्गा = भागीरथी, विद्यत इति शेष । इति मैथिल्या =सीताया , दिशन्=कथयन्, रघुनन्दन =श्रीरामचन्द्र ,ननन्द= आनन्दितोऽभूत् ॥

❀व्युत्पत्ति॰❀ हे सुतनु =शोभना तनूर्यस्या सा सुतनूस्तत्सम्बुद्धौ, "यूस्त्र्याख्यौ नदी"ति नदीसञ्ज्ञकत्वात् "अम्बाऽर्थनद्योर्ह्रस्व" इति सम्बुद्धिह्रस्वत्व, "स्त्रिया मूर्ति-स्तनुस्तनू" इत्यमर॰ । लुलितवन॰ =लुलितानि वनानि यस्मिन् स । ननन्द= "टुनदि समृद्धौ" इति धातोर्लिट् । प्रहर्षिणी वृत्तम् ॥

❀भाषाऽर्थ❀ "हे सुन्दरि ! ये वे ( अनुभूत ) मुनिजनोंसे अलङ्कृत दिशाके भाग है । यह वह ( प्रसिद्ध ) हमारे वेगसे क्षुब्धवनोंसे युक्त चित्रकूट पर्वत है । वि-शाल तटोंसे रमणीय ये गङ्गाजी है" सीताजीको ऐसा कहते हुए रामचन्द्रजी आन-न्दित हुए ॥ २६ ॥

शिञ्जानभ्रमरकुलाऽऽकुलाऽग्रपुष्पाः
शीताऽम्भः प्रविलयसप्लवाऽभिलीनाः ।
एते ते सुतनु ! पुरीजनोपभोग्या
दृश्यन्ते नयनमनोरमा वनाऽन्ताः ॥ २७ ॥

**अन्वयः**—हे सुतनु ! शिञ्जानभ्रमरकुलाऽऽकुलाऽग्रपुष्पा शीताऽम्भ प्रविल-यसप्लवाऽभिलीना पुरीजनोपभोग्या नयनमनोरमा ते एते वनान्ता दृश्यन्ते ॥

**व्याख्या**—हे सुतनु = हे सुगात्रि, शिञ्जानभ्रमरकुलाऽऽकुलाग्रपुष्पा = कूजद-लिसमूहव्याप्ताऽग्रकुसुमा , शीताऽम्भ प्रविलयसंप्लवाऽभिलीना = शीतलजलकुल्या-गत्यभिव्याप्ता , पुरीजनोपभोग्या =अयोध्यावासिजनोपभोगयोग्या , नयनमनोरमा = नेत्रमानसाकर्षका , ते = पूर्वाऽनुभूता , एते = पुर स्थिता , वनाऽन्ता = अरण्यप्र-देशा , दृश्यन्ते = अवलोक्यन्ते, अयोध्यासमीप प्राप्ता स्म इत्यर्थ ॥

❀व्युत्पत्ति❀ शिञ्जानभ्रमरकुलाऽऽकुलाऽग्रपुष्पा =शिञ्जानानि यानि भ्रमरकु लानि, तैराकुलानि अग्रपुष्पाणि येषां ते । शीताऽम्भ प्रविलयसप्लवाऽभिलीना = शीताऽम्भसां प्रविलयस्तस्य सप्लवेन अभिलीना॰ । प्रविलीयतेऽस्मिन्निति प्रविलय॰ "एरच्" इत्यच् । नयनमनोरमा =नयनानि च मनासि च रमयन्तीति, "कर्मण्यण्" इत्यण् । प्रहर्षिणी वृत्तम् ॥

ॐभाषाऽर्थ ॐ हे सुन्दरि ! शब्द करनेवाले भ्रमरसमूहोंसे व्याप्त अग्रपुष्पोंसे युक्त, शीतलजलोंकी कुल्याकी गतिसे अभिव्याप्त, अयोध्यापुरीके जनोंके उपभोग्य, नेत्रों और मनके आकर्षक वे ये वनप्रदेश दिखाई दे रहे है ॥ २७ ॥

स्थान न' पूर्वजानामियमधिकमसौ प्रेयसी पूरयोध्या
दूरादालोक्यते या हुतविविधहवि'प्रीणिताऽशेषदेवा ।
सोऽय देशो रुदन्त पुरजनमखिल यत्र हित्वा प्रयातौ
आवां सीते ! वनाऽन्तं सह धृतधृतिना लक्ष्मणेन क्षपाऽन्ते॥२८॥

अन्वय.—"हे सीते ! न पूर्वजाना स्थानम् इयम् अधिक प्रेयसी अयोध्या पू' दूरात् आलोक्यते, या हुतविविधहवि प्रीणिताऽशेषदेवा । स अय देश यत्र रुदन्तम् अखिल पुरजन हित्वा आवा क्षपान्ते धृतधृतिना लक्ष्मणेन सह वनाऽन्त प्रयातौ" ॥

व्याख्या—हे सीते = हे जानकि !, न = अस्माक, पूर्वजाना = पूर्वपुरुषाणा, मनुप्रभृतीनामिति भाव । स्थान = वसति , इयम् = एषा, अधिकम् = अत्यन्त, प्रेयसी=प्रियतमा, अयोध्या=अयोध्याऽऽख्या, पू = पुरी, दूरात्=विप्रकृष्टकात् आलोक्यते = दृश्यते, उच्चप्रासादयोगादिति भाव । या = पू, हुतविविधहवि प्रीणिताऽशेषदेवा = आहुतीकृताऽनेकहव्यतर्पितसमस्तसुरा अस्तीति शेष । स =पूर्वाऽनुभूत , अय = संनिकृष्टस्थ , देश = जनपद , यत्र = यस्मिन्देशे, रुदन्तं = रोदन कुर्वन्तम्, अखिलं = समस्त पुरजन = नगरजनं, हित्वा = त्यक्त्वा, आवा, क्षपाऽन्ते=निशाऽवसाने, धृतधृतिना = धृतसन्तोषेण, लक्ष्मणेन = सौमित्रिणा, सह = सम, वनाऽन्तम् = अरण्यप्रदेश, प्रयातौ = प्रगतौ ॥

ॐव्युत्पत्ति ॐ प्रेयसी = अतिशयेन प्रिया, "द्विवचनविभज्योपपदे तरबीयसुनौ" इति ईयसुन्प्रत्यय. । "प्रियस्थिरे"त्यादिना प्रियस्य प्रादेश । हुतविविधहवि. प्रीणिताऽशेषदेवा = हुतानि यानि विविधानि हवींषि, तै प्रीणिता अशेषा देवा यस्या सा । धृतधृतिना = धृता धृतिर्येन स धृतधृतिस्तेन । स्रग्धरा वृत्त, "म्रभ्नैर्याना त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।" इति तल्लक्षणम् ॥

ॐभाषाऽर्थःॐ हे सीते ! मुनि आदि हमारे पूर्वजोंके स्थान यह अतिशय प्रेयसी अयोध्यापुरी दूरसे देखी जारही है, जो हवन किये गये अनेक हवियोंसे सपूर्ण देवताओंको तृप्त करनेवाली है । वह यह देश है जहां पर रोते हुए सब नागरिकजन को छोडकर हम दोनों रातके अन्तमें सन्तोष करनेवाले लक्ष्मणके साथ वनप्रदेशको चले गये थे" ॥ २८ ॥

तूर्याणामथ निःस्वनेन सकलं लोक समापूरयन्
विक्रान्तैः करिणां गिरीन्द्रसदृशा क्ष्मां कम्पयन्सर्वतः ।
साऽऽनन्दाऽश्रुविलोचन प्रकृतिभि सार्धं सहाऽन्तः पुर
सम्प्राप्तो भरत· समारुतिरल नम्र समं मातृभिः ॥ २६ ॥

अन्वयः—अथ तूर्याणा नि स्वनेन सकल लोक समापूरयन् गिरीन्द्रसदृशा करिणा विक्रान्तै सर्वत क्ष्मा कम्पयन् साऽऽनन्दाऽश्रुविलोचनो भरत प्रकृतिभि सार्द्धं सहाऽन्त पुर समारुति मातृभि सम सप्राप्त ( सन् ) अल नम्र (अभूत्) ॥

व्याख्या—अथ = रामवचनाऽनन्तर, तूर्याणा = वाद्याना, नि स्वनेन=शब्देन, सकल = समस्त, लोक = भुवन, समापूरयन् = व्याप्नुवन्, गिरीन्द्रसदृशा = सुमेरुकल्पाना, करिणा = हस्तिना, विक्रान्तै = पादन्यासै, सर्वत = सर्वत्र, क्ष्मा = पृथिवी, कम्पयन् = क्ष्मापयन्, साऽऽनन्दाऽश्रुविलोचन = आनन्दबाष्पयुक्तनयन, भरत = कैकेयीतनय, प्रकृतिभि = प्रजाभि अमात्यैश्च, सार्द्धं = सह, सहाऽन्त पुर =साऽवरोध, अन्त पुरस्त्रीजनसहित इत्यर्थ । समारुति = हनूमत्सहित, मातृभि = जननीभि, कौशल्यादिभिरिति भावः । सम = सह, संप्राप्त = समासादित सन्, अलम्=अत्यर्थम्, अतिभक्त्येतिशेष । नम्र =प्रणत·, अभूदिति शेष ॥

॥व्युत्पत्ति·॥ गिरीन्द्रसदृशा – गिरीन्द्रै सदृशो गिरीन्द्रसदृशस्तेषां, "त्यदादिषु दृशोऽनालोचने कञ्चे"ति चकाराक्किन् । कम्पयन् = कम्पयतीति, णिजन्तात्कपिधातो र्लटः शत्रादेश "क्ष्मापयन्" इति मल्लिनाथसम्मत· पाठस्तत्र "क्ष्मायी विधूनने" इति धातोर्ण्यन्ताल्लट शत्रादेश· "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्याता पुङ् णौ" इति पुगागम·, यकारलोप । साऽऽनन्दाऽश्रुविलोचन =आनन्दस्य अश्रूणि आनन्दाऽश्रूणि, तै· सहिते साऽऽनन्दाश्रुणी, तादृशे विलोचने यस्य स· । सहाऽन्त पुर =अन्त·पुरेण सहित·, "तेन सहेति तुल्ययोगे" इति बहुव्रीहि· । समारुति =मारुतिना सहित, पूर्वसूत्रेण बहुव्रीहि·, "वोपसर्जनस्ये"ति सहस्य वैकल्पिक सभावः । मातृभि =समपदेन योगे "सहयुक्तेऽप्रधाने" इति तृतीया । शार्दूलविक्रीडित वृत्त, "सूर्याऽश्वैर्मसजस्तता· सगुरव· शार्दूलविक्रीडितम् ।" इति तल्लक्षणम् ॥

॥भाषाऽर्थ·॥ रामचन्द्रजीके वचनके अनन्तर वाद्योंके शब्दसे सपूर्ण लोकको व्याप्त करते हुए सुमेरुपर्वतके तुल्य हाथियोंके पादन्यासोंसे सर्वत्र पृथ्वीको कम्पित करते हुए और हर्षाऽश्रुसे पूर्ण नेत्रोंवाले भरतजी प्रजाओं और मन्त्रियोंके साथ प्राप्त होकर अतिशय भक्तिसे प्रणत हुए ॥ २९ ॥

**अथ ससम्भ्रमपौरजनाऽऽवृतो भरतपाणिधृतोज्ज्वलचामरः ।**
**गुरुजनद्विजवन्द्यभिनन्दितः प्रविशति स्म पुरं रघुनन्दनः ॥ ३० ॥**

अन्वयः—अथ रघुनन्दनः ससम्भ्रमपौरजनाऽऽवृतो भरतपाणिधृतोज्ज्वलचामरो गुरुजनद्विजवन्द्यभिनन्दित॰ ( सन् ) पुर प्रविशति स्म ॥

व्याख्या—अथ = भरतसम्प्राप्त्यनन्तर, रघुनन्दन॰ = रामचन्द्रः, ससम्भ्रम-पौरजनाऽऽवृत॰ = ससत्वरनागरिकजनपरिवारित, भरतपाणिधृतोज्ज्वलचामर = भरतकरगृहीतनिर्मलप्रकीर्णक, गुरुजनद्विजवन्द्यभिनन्दित = मात्रादिपूज्यजनविप्र-स्तुतिपाठकप्रशंसित सन्, पुर=नगरीम्, अयोध्यामित्यर्थ । प्रविशतिस्म=प्रविष्ट ॥

**॥व्युत्पत्तिः॥ ससम्भ्रमपौरजनाऽऽवृत॰ = सम्भ्रमेण सहिता ससम्भ्रमा, तादृशा ये पौरजनास्तैरावृतः । भरतपाणिधृतोज्ज्वलचामर = भरतपाणिना धृतम् उज्ज्वल चामर यस्य स । "धृतम्" इत्यत्र "धुतम्" इति मल्लिनाथसम्मत॰ पाठस्तस्य कम्पितमित्यर्थ । "चामर तु प्रकीर्णकम्" इत्यमर॰ । गुरुजनद्विजवन्द्यभिनन्दित॰ = गुरुजनाश्च द्विजाश्च वन्दिनश्च गुरुजनद्विजवन्दिनस्तैरभिनन्दित । प्रविशतिस्म = स्मयोगे "लट् स्मे" इति भूते लट् । द्रुतविलम्बित वृत्त, "द्रुतविलम्बितमाह नभौ भरौ ।" इति तल्लक्षणम् ॥**

**॥भाषाऽर्थ॥ भरतजीके आनेके अनन्तर रामचन्द्रजीने शीघ्रता करने वाले नागरिक जनोंसे परिवारित हो कर भरतके हाथसे गृहीत उज्ज्वल चामर से सेवित हो कर और माता आदि गुरुजन, ब्राह्मण और स्तुतिपाठकों से प्रशंसित होते हुए अयोध्यापुरीमे प्रवेश किया ॥ ३० ॥**

**प्रविधाय धृति परा जनानां युवराजं भरत ततोऽभिषिच्य ।**
**जघटे तुरगाऽध्वरेण यष्टु कृतसम्भारविधिः पतिः प्रजानाम् ॥ ३१ ॥**

अन्वयः—तत प्रजाना पति जनाना परा धृतिं प्रविधाय भरतं युवराजम् अभिषिच्य कृतसम्भारविधि तुरगाऽध्वरेण यष्टु जघटे ॥

व्याख्या—तत = पुरप्रवेशाऽनन्तरं, प्रजाना = जनाना, पति = स्वामी, राजा राम इति भाव । जनाना = प्रजाना, पराम् = उत्कृष्टा, धृति = प्रीति, प्रविधाय = सम्पाद्य, भरत = केकयीसूनु, युवराज = युवराजपदभाजम्, अभिषिच्य = अभि-षिक्तं कृत्वा, भरत युवराज कृत्वेति भाव॰ । कृतसम्भारविधि = विहितसामग्री विधान सन्, सञ्चितयज्ञोचितोपकरण सन् इति भाव, तुरगाऽध्वरेण = अश्वमेध-यागेन, "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" इति जातावेकवचनम् । अश्व-

मेधयज्ञैरित्यर्थ, "अश्वमेधशतैरिष्ट्वा ब्रह्मलोक गमिष्यति ।" इति वाल्मीकिमुनिवचनात् । यष्टु = याग कर्तु, जघटे = चेष्टितवान्, प्रवृत्त इत्यर्थ ।

❀व्युत्पत्ति❀ कृतसम्भारविधि = कृत. सम्भारविधिर्येन स. । तुरगाऽध्वरेण = तुरगप्रयोज्योऽध्वरस्तुरगाध्वरस्तेन, "शाकपार्थिवादीना सिद्धय उत्तरपदलोपस्योप सख्यानम्" इति मध्यमपदलोपी समासः । जघटे="घट चेष्टायाम्" इति धातोर्लिट् ॥

❀भाषाऽर्थ❀ तब प्रजाओंके पालक रामने प्रजाजनोंकी उत्कृष्ट प्रीतिका सपादन कर भरतको युवराज बनाकर यज्ञके उपकरणोंका सञ्चय कर अश्वमेध यज्ञ करनेके लिए चेष्टा की ॥ ३१ ॥

नायकाऽभ्युदयान्त महाकाव्यमिति नयेन ग्रन्थ परिसमाप्य तत्राऽऽदरप्रयोजक वाक्य दर्शयति—

इदमधिगतमुक्तिमार्गचित्रं विवदिषता वदतां च सन्निबन्धात् ।
जनयति विजय सदा जनानां युधि सुसमाहितमैश्वर यथाऽस्त्रम्॥३२॥

अन्वयः—उक्तिमार्गचित्र सुसमाहितम् इदम् अविगतं ( सत् ) युधि अधिगतमुक्तिमार्गचित्र सुसमाहितम् ऐश्वरम् अस्त्र यथा सन्निबन्धात् विवदिषता वदता च जनाना सदा विजय जनयति ॥

व्याख्या—उक्तिमार्गचित्रं = भणितिभङ्गयद्भुत, सुसमाहित = गुणाऽलङ्कारपरिष्कृतम्, इद = महाकाव्यम्, अधिगत=परिशीलित सत्, युधि = सग्रामे, अविगतमुक्तिमार्गचित्रम् = अवगतमोचनप्रकाराऽद्भुत सुसमाहित = धनुषि सुसहितम्, ऐश्वरम्=ईश्वरस्येदम, अस्त्रम्=आयुध, पाशुपताऽस्त्रमिति भाव. । यथा=इव, सन्निबन्धात्= काव्यपक्षे-सम्यग्गुम्फनात्, पाशुपताऽस्त्रपक्षे-सम्यङ्मात्रयोजनाद्धेतो । विवदिषता= काव्यपक्षे—वक्तुमिच्छता, पाशुपताऽस्त्रपक्षे युद्धे विचित्रं प्रयोक्तुमिच्छता, वदता च = वक्तुप्रवर्तमानाना च जनाना=पुरुषाणा, सदा = सर्वदा, विजय = काव्यपक्षे—वादजयं, पाशुपताऽस्त्रपक्षे-युद्धजय, जनयति = उत्पादयति ॥

❀व्युत्पत्ति❀ उक्तिमार्गचित्रम् = उक्तिमार्गै. । चित्रम् । अधिगतमुक्तिमार्ग चित्रम् = अधिगतो मुक्तिमार्गो येन तत् अधिगतमुक्तिमार्गं, तच्च तच्चित्रम् । ऐश्वरम् = ईश्वरस्येदम्, "तस्येदम्" इत्यण् । सन्निबन्धात्=सम्यक् निबन्ध सन्निबन्धस्त. स्मात्, "कुगतिप्रादय" इति समास. । जनयति = "जनी प्रादुर्भावे" इति धातोर्णौ "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्योणे" इति परस्मैपदम् । श्लेषसङ्कीर्णोपमा । पुष्पिताग्रावृत्तम्—"अयुजि नयुगरेफतो यकारो युजिनजौ जरगाश्च पुष्पिताग्रा इति ।

❀भाषाऽर्थ❀ उक्तिके वैचित्र्यसे अद्भुत, गुणों और अलङ्कारोंसे परिष्कृत, भट्टि काव्यनामक यह महाकाव्य परिशीलित होता हुआ सग्राममें जाने गये छोड़नेके

प्रकारोंसे अद्भुत, धनुषमे सन्धान किये गये पाशुपत अस्त्रके सदृश उत्तमरूपसे योजन करनेसे ( काव्यपक्षमे ) उत्तमगुम्फन करनेसे सग्रामकी इच्छा करने वाले और बोलने वाले जनों को सदा विजयको उत्पन्न करता है ॥ ३२ ॥

दीपतुल्य' प्रबन्धोऽय शब्दलक्षणचक्षुषाम् ।
हस्ताऽमर्ष इवाऽन्धाना भवेद्व्याकरणादृते ॥ ३३ ॥

व्याख्या—अय प्रबन्ध शब्दलक्षणचक्षुषा दीपतुल्य, व्याकरणात् ऋते अन्धाना हस्ताऽमर्ष इव भवेत् ॥

व्याख्या—अस्य महाकाव्यस्याऽध्ययनाऽधिकारिता निरूपयति—दीपतुल्य इति । अय = सन्निकृष्टस्थ, प्रबन्ध =काव्यरूपसन्दर्भ रावणवधाऽपरनामक भट्टिकाव्यमिति भाव । शब्दलक्षणचक्षुषा = व्याकरणनेत्राणा, वैयाकरणानामित्यर्थ । दीपतुल्यः = प्रदीपसदृश, "दीपकल्प" इति मल्लिनाथसम्मत पाठ । प्रबन्धोऽय वैयाकरणाना सचक्षुषा दीप इवोपकारक इति भाव । उक्तमर्थ व्यतिरेकेण प्रदर्शयति—हस्ताऽमर्ष इति । व्याकरणात् ऋते = शब्दशास्त्रं विना, अन्धाना = नेत्रविकलाना, हस्ताऽमर्ष इव = करपरामर्श इव, "हस्ताऽऽदर्श" इति मल्लिनाथसम्मत पाठस्तत्र करस्थदर्पण इवेत्यर्थ । भवेत् = स्यात् । यथाऽन्धाना परामृश्यमानाना घटपटादीना अवयवसस्थानमात्रपरिज्ञान न स्वरूपपरिज्ञानमेवमस्य प्रबन्धस्याऽपि अवैयाकरणाना न स्वरूपपरिज्ञानं भवेदिति भाव ॥

❀व्युत्पत्तिः❀ शब्दलक्षणचक्षुषा = शब्दलक्षणम् ( व्याकरणम् ) एव चक्षुर्येषा ते शब्दलक्षणचक्षुषस्तेषाम् । व्याकरणात् = ऋतेपदेन योगे "अन्यारादितरर्तेदिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी ॥

❀भाषाऽर्थ❀ यह प्रबन्ध वैयाकरणोंके लिए दीपके तुल्य है, यह व्याकरणके विना अन्धोंको हस्तपरामर्शके तुल्य होगा ॥ ३३ ॥

व्याख्यागम्यमिद काव्यमुत्सव' सुधियामलम् ।
हता दुर्मेधसश्चाऽस्मिन् विद्वत्प्रियतया मया ॥ ३४ ॥

अन्वय—इद काव्य व्याख्यागम्य, सुधियाम् अलम् उत्सव । मया विद्वत्प्रियतया अस्मिन् दुर्मेधसो हता ॥

व्याख्या—अस्य महाकाव्यस्य सर्वसौलभ्याऽभाव प्रतिपादयति—व्याख्यागम्यमिति । इद = सन्निकृष्टस्थं, काव्यं = भट्टिकाव्य, व्याख्यागम्यं = व्याख्यानवेद्यं, गुरुमुखादेव ज्ञेयमिति भाव । अत सुधिया = विदुषा, वैयाकरणानामित्यर्थ, अलम् = अत्यन्तम्, उत्सव = क्षण, आनन्द इति भाव । मया = भट्टिनामकसूरिणा, वि-

द्वत्प्रियतया=विपश्चिल्लुब्धतयेत्यर्थ । अस्मिन् = महाकाव्ये, दुर्मेधस =दुर्बुद्धय', मूढा' व्याकरणाऽनभिज्ञा इति भाव । हता = उपेक्षिता', विदुषामेवात्र प्रवेशोऽस्तु मा भूदविदुषामिति मत्वेति तात्पर्यम् ॥

❀व्युत्पत्ति❀ सुधियां = शोभना धीर्येषा ते सुधियस्तेषाम् । विद्वत्प्रियतया = विद्वांस प्रिया यस्य स विद्वत्प्रियस्तस्य भावस्तत्ता, तया । दुर्मेधस = दुष्टा मेधा येषा ते, "नित्यमसिच्प्रजामेधयो" इति "नञ्दु सुभ्य इत्येव" इति समासाऽन्तोऽसिच्प्रत्यय. ॥

❀भाषाऽर्थ❀ यह काव्य (भट्टिकाव्य) केवल व्याख्यासे वेद्य है अत विद्वानों मे लुब्ध होनेसे इस काव्यमे दुर्बुद्धियों (अवैयाकरणों) को अनुगृहीत नही किया है ॥ ३४ ॥

काव्यमिद विहित मया वलभ्या श्रीधरसेननरेन्द्रपालितायाम् ।
कीर्तिरतो भवतान्नृपस्य तस्य प्रेमकर' क्षितिपो यतः प्रजानाम् ॥३५॥

अन्वयः—मया श्रीधरसूनुनरेन्द्रपालिताया वलभ्याम् इद काव्य विहितम् । अत तस्य नृपस्य कीर्ति भवतात् , यत' ( स )। क्षितिप प्रजाना प्रेमकर ॥

व्याख्या—मया = भट्टिकविना, श्रीधरसूनुनरेन्द्रपालिताया = श्रीधरपुत्रनरेन्द्र भूपरक्षिताया, वलभ्या = वलभीनामपुर्याम् , इद = सन्निकृष्टस्थं, काव्यं = महाकाव्य, रावणवधपर्याय भट्टिकाव्य, विहित = रचितम् । अत = अस्मात्कारणात् , तस्य = पूर्वोक्तस्य, नृपस्य = राज्ञ , नरेन्द्रभूपालस्येति भाव । कीर्ति = यश , भवतात् = भूयात् , यत = यस्मात्कारणात् , स = पूर्वोक्तः, क्षितिप =राजा, प्रजाना=जनाना, प्रेमकर' = स्नेहाऽनुकूल' ॥

❀व्युत्पत्ति❀ श्रीधरसूनुनरेन्द्रपालितायाम्=श्रीधरसूनुश्चाऽसौ नरेन्द्र', तेन पालितायाम् । भवतात्=भूधातोः "आशिषि लिङ्लोटौ" इति आशिषि लोट् "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" इति तातङ् । प्रेमकर =प्रेमकरोतीति तदनुलोम , "कृञोहेतुताच्छील्याऽनुलोम्येषु" इत्यानुलोम्ये टप्रत्यय ॥

❀भाषाऽर्थ❀ मैने श्रीधर महाराजके पुत्र नरेन्द्रमहाराजसे रक्षित वलभीमे इस काव्यको बनाया है, इस लिए पूर्वोक्त महाराजकी कीर्ति रहे क्योंकि वे महाराज प्रजाओंके प्रेमके अनुकूल है ॥ ३५ ॥

इति श्रीभट्टिकाव्ये द्वाविंशतितम सर्ग' ।
समाप्तमिद भट्टिकृत महाकाव्यम् ।

इति श्रीशेषराजशर्मप्रणीतया चन्द्रकलाव्याख्यया मण्डिते श्रीभट्टिकाव्ये द्वाविंश' सर्ग ।
ॐ तत्सत् श्रीरामाऽर्पणमस्तु ॥



